काव्यमाला. २४.



महामहोपाध्यायश्रीगोविन्दप्रणीतः

# काव्यप्रदीपः ।

तत्सदुपाख्यवैद्यनाथविरचितया टीकया समेतः ।



जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना पणशीकरोपाह्व-
लक्ष्मणशर्मात्मजवासुदेवशर्मणा च
संशोधितः ।

(तृतीयावृत्तिः ।)

स च
मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितः ।

१९३३

# महामहोपाध्यायश्रीगोविन्दः.



अयं ठक्कुरोपनामको विद्वद्वरश्रीगोविन्दो मिथिलायां श्रीरविकरवंशे जन्म लेभे इति तद्देशप्रसिद्धपञ्जीकारपुस्तकेषु समुपलभ्यते. अधुनापि गोविन्दवंशोद्भवा मिथिलान्तर्गत–'भटसीमरि'ग्रामे निवसन्तीत्यपि तत्पुस्तकेभ्य एव ज्ञायते. समयस्त्वनिश्चित एव केवलमेतदनुमीयते यत्काव्यप्रकाशव्याख्या नरसिंहमनीषाभिधा ताराभक्तिसुधार्णवश्चेति ग्रन्थद्वयं नरसिंहठक्कुरप्रणीतमुपलभ्यते. स च नरसिंहठक्कुरः १६६८ मिते विक्रमाब्दे निर्णयसिन्धुनिर्मातुः काव्यप्रकाशटीकाकर्तुश्च कमलाकरभट्टादर्वाचीन इति तद्ग्रन्थपर्यालोचनया प्रतीयते. एतेन नरसिंहः ख्रिस्ताब्दीयषोडशशतकोत्तरभागसमुद्भूतः स्यादित्यनुमीयते स च नरसिंहो गोविन्दात्पञ्चम इति गोविन्दोऽपि ख्रिस्ताब्दीयपञ्चदशशतकोत्तरभागासन्नकाले विद्यमान आसीदिति वक्तुं युज्यते अथ च कमलाकरभट्टप्रणीतकाव्यप्रकाशटीकायां प्रदीपकारस्य नाम समुपलभ्यते. कमलाकरश्च १६१२ मिते ख्रिस्ताब्दे निर्णयसिन्धुं जग्रन्थेति ख्रिस्ताब्दीयषोडशशतकान्तिमभागतः कथमपि नार्वाचीनः प्रदीपकारो गोविन्द इति सुव्यक्तमेव

काव्यप्रदीपस्यास्य टीकाद्वयमुपलभ्यते नागेशभट्टप्रणीता उद्योताभिधा, तत्सद्गुपाख्यवैद्यनाथभट्टप्रणीता प्रभा चेति. उद्योतोऽस्माभिस्त्रुटित एव लब्ध इति केवलं प्रभैव मुद्रिता अयं प्रभाप्रणेता वैद्यनाथः स्वकृतोदाहरणचन्द्रिकासमाप्तौ 'वियद्वेदमुनिक्ष्माभि( १७४० )र्मितेऽब्दे कार्तिके सिते । बुधाष्टम्यामिमं ग्रन्थं वैद्यनाथोऽभ्यपूरयत् ॥' इति स्वसमयं स्वयमेव दर्शितवान्.

तत्रास्मन्मुद्रणाधारतां गतानि पुस्तकान्येतानि—

क—जयपुरराजगुरुभट्टलक्ष्मीदत्तसूनुभट्टश्रीदत्तानां प्रायः शुद्धं १७९२ विक्रमाब्दे केनचन व्रजनाथनाम्ना लिखितं १५० पत्रात्मकं प्रभासमेतकाव्यप्रदीपपुस्तकम्.

ख—जयपुरराजगुरुपर्वणीकरोपनामकनारायणभट्टानां काव्यप्रदीपमूलं शुद्धं ८४ पत्रात्मकं १७७१ विक्रमाब्दे श्यामभट्टतनूजशिवरामेण लिखितम्. प्रभापुस्तकं च तेषामेवानतिशुद्धं १८५७ संवत्सरे लिखितं १६८ पत्रात्मकम्. एतत्पुस्तकद्वयं समुदितं ख-नाम्ना व्यवहृतम्

ग—जयपुरमहाराजाश्रितगोपीनाथभट्टाचार्याणां नातिशुद्धं नवीनं ३०३ पत्रात्मकं मूलमात्रम्.

एवमुदाहरणचन्द्रिकापुस्तकान्यपि त्रीणि समासादितानि. तत्रैकं जयपुरमहाराजाश्रितमिथिलाभिजन-तार्किकवर-श्रीसुन्दरशर्मणाम्. शुद्धम्.

अपरं जयपुरसंस्कृतपाठशालायां साहित्याध्यापकानां पण्डितगोपीनाथशर्मणां शुद्धं प्राचीनं च.

अन्यत् पूर्वोक्तगोपीनाथभट्टाचार्याणामेव नवीनं नातिशुद्धं चेति.

पूर्वोक्ततार्किकवरश्रीसुन्दरशर्मभिः स्वदेशस्थपञ्जीकारपुस्तकं साक्षाद्विलोक्य गोविन्दठक्कुरस्य वंशवृक्षः प्रहित इति तेषाम्, कारवारदेशीयसारस्वतभूसुरमङ्गेशरावशर्मभिश्च प्रदीपस्य शोधनपत्रमनुक्रमणी च भूयांसं श्रममूरीकृत्य निर्माय प्रहितेति तेषां चोपकृतिं सप्रश्रयमङ्गीकुर्म इति शिवम्.




१. पुरुषपरीक्षाप्रणेतुर्विद्यापतेरयं भिन्नः.

# काव्यप्रदीपस्य सूचीपत्रम् ।


| विषयः । प्रथमोल्लासः । | पृष्ठम् । |
|---|---|
| मङ्गलाचरणम् ... ... | २ |
| काव्यफलानि... ... ... | ५ |
| काव्योद्भवकारणानि ... ... | ६ |
| काव्यलक्षणम् ... ... | ८ |
| काव्यभेदाः सलक्षणाः ... | ११ |
| उत्तमकाव्यलक्षणम् ... ... | १२ |
| मध्यमकाव्यलक्षणम् ... ... | १५ |
| अवरकाव्यलक्षणम् .. ... | १६ |
| **द्वितीयोल्लासः ।** | |
| शब्दभेदा. ... ... ... | १७ |
| अर्थभेदा. ... ... ... | १७ |
| तात्पर्यार्थः ... ... ... | १७ |
| अर्थव्यञ्जकता ... ... | १८ |
| वाचकशब्दलक्षणम् ... ... | २० |
| सकेतनिर्णय.... ... ... | २३ |
| अभिधालक्षणम् ... ... | २५ |
| लक्षणालक्षणम् ... ... | २६ |
| लक्षणाभेदाः ... ... ... | २८ |
| उपादानलक्षणा ... ... | २८ |
| लक्षणलक्षणा ... ... ... | २८ |
| सारोपा लक्षणा ... ... | ३१ |
| साध्यवसानलक्षणा ... ... | ३१ |
| शुद्धा लक्षणा ... ... ... | ३२ |
| गौणी लक्षणा... ... ... | ३२ |
| लक्षणायाः षड्विधत्वम् ... | ३५ |
| व्यञ्जनाकृतं लक्षणायास्त्रिविधत्वम् | ३६ |
| लाक्षणिकशब्दलक्षणम् ... | ३८ |
| व्यञ्जनाभेदा .. ... ... | ३९ |
| लक्षणामूलव्यञ्जनालक्षणम् ... | ३९ |
| अभिधामूलव्यञ्जनालक्षणम् .. | ४२ |
| अर्थोपस्थापका. (अभिधानियामका) | ४३ |

| विषयः । | पृष्ठम् । |
|---|---|
| व्यञ्जकशब्दलक्षणम् ... ... | ४७ |
| व्यञ्जकोऽर्थः ... ... ... | ४७ |
| **तृतीयोल्लासः ।** | |
| अर्थव्यञ्जकतालक्षणम् . | ४८ |
| व्यक्ति(व्यञ्जना)लक्षणम् ... | ४८ |
| व्यक्त्युदाहरणानि ... ... | ४९ |
| अर्थव्यञ्जकत्वे शब्दः सहकारी | ५५ |
| **चतुर्थोल्लासः ।** | |
| ध्वनिभेदाः ... ... ... | ५६ |
| अविवक्षितवाच्य ... ... | ५७ |
| विवक्षितान्यपरवाच्यः ... | ५९ |
| अलक्ष्यक्रमव्यङ्ग्यः ... ... | ५९ |
| रसलक्षणम् ... ... ... | ६० |
| रसविषये भरतमतम्... ... | ६३ |
| रसविषये श्रीशङ्कुकमतम् ... | ६३ |
| रसविषये भट्टलोल्लटादिमतम्... | ६४ |
| रसविषये भट्टनायकमतम् ... | ६५ |
| रसविषये आचार्याभिनवगुप्तमतम् | ६७ |
| रसभेदा ... ... ... | ७४ |
| शृङ्गाररसलक्षणम् ... ... | ७५ |
| शृङ्गाररसभेदा. सोदाहरणा... | ७५ |
| हास्यरसलक्षणम् ... ... | ८० |
| करुणरसलक्षणम् ... ... | ८० |
| रौद्ररसलक्षणम् ... ... | ८१ |
| वीररसलक्षणं भेदाश्च... ... | ८२ |
| भयानकरसलक्षणम् ... ... | ८३ |
| वीभत्सरसलक्षणम् ... ... | ८३ |
| अद्भुतरसलक्षणम् ... ... | ८४ |
| स्थायिभावाः ... ... ... | ८५ |
| व्यभिचारिभावभेदा ... ... | ८५ |
| व्यभिचारिभावलक्षणानि ... | ८५ |

| विषयः । | पृष्ठम् । |
|---|---|


संचारिभावलक्षणम् ... ... ८९
शान्तरसलक्षणम् ... ... ९०
रसवद्भावः ... ... ... ९१
रसाभास ... ... ... ९३
भावाभासः ... ... ... ९४
भावशान्तिः ... ... ... ९४
भावोदयः ... ... ... ९५
भावसंधिः ... ... ... ९५
भावशबलता ... ... ... ९६
भावशान्त्यादीनामङ्गित्वम् ... ९७
संलक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदा ९७
शब्दशक्त्युद्भवध्वनिः ... ९८
शब्दशक्त्युद्भवालंकारध्वनिः... ९९
शब्दशक्त्युद्भववस्तुमात्रध्वनिः १००
अर्थशक्त्युद्भवध्वनिप्रभेदा ... १०१
अर्थशक्त्युद्भव. स्वतःसंभवी सभेदः १०१
अर्थशक्त्युद्भवः कविप्रौढोक्तिसिद्धः सभेदः ... ... ... १०५
अर्थशक्त्युद्भवः कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धः सभेदः ... १०७
शब्दार्थोभयशक्तिमूलो ध्वनिः १०९
ध्वनिभेदपरिगणनम् ... ... १०९
वाक्यगतध्वनिः ... ... ११०
पदगतध्वनिः... ... ... ११०
शब्दशक्तिमूलध्वनौ अलंकारादिव्यक्त्युदाहरणानि ... ... ११४
प्रबन्धगतध्वनिः ... ... १२०
रसादीनां पदैकदेशरचनावर्णगतत्वम् १२२
रसादीना प्रबन्धगतत्वम् ... १३०
शुद्धध्वनिभेदसंख्या ... ... १३०
ध्वनेः संसृष्टिसंकरौ तयोः संख्या च १३१
ध्वनिभेदसमष्टिः ... ... १३१


## पञ्चमोल्लासः ।


गुणीभूतव्यङ्ग्यभेदाः ... ... १३३
अगूढव्यङ्ग्यम् ... ... १३३
अपराङ्गव्यङ्ग्यम् ... ... १३५
वाच्यसिद्ध्यङ्गव्यङ्ग्यम्... ... १३८
अस्फुटाङ्गव्यङ्ग्यम् ... ... १४३
संदिग्धप्राधान्यव्यङ्ग्यम् ... १४३
तुल्यप्राधान्यव्यङ्ग्यम्... ... १४३
काक्वाक्षिप्तव्यङ्ग्यम् ... ... १४४
असुन्दरव्यङ्ग्यम् ... ... १४४
गुणीभूतव्यङ्ग्यस्य ध्वनिवत्प्रभेदाः १४५
ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टिसंकरौ ... ... ... १४५
ध्वनिभेदसंकलनहेतुकं त्रैविध्यम् १४६
व्यञ्जनावृत्तिसंस्थापनम् ... १४६


## षष्ठोल्लासः ।


शब्दचित्रार्थचित्रयोः स्वरूपम् १६६
शब्दचित्रोदाहरणम् ... ... १६७
अर्थचित्रोदाहरणम् ... ... १६८


## सप्तमोल्लासः ।


दोषलक्षणम् ... ... ... १६९
दोषविभागः ... ... ... १७१
पददोषविभागः ... ... १७१
श्रुतिकटुता ... ... ... १७१
च्युतसंस्कारः... ... ... १७२
अप्रयुक्तत्वम् ... ... ... १७३
असमर्थत्वम् ... ... ... १७३
निहतार्थत्वम् ... ... ... १७४
अनुचितार्थता ... ... १७४
निरर्थकता ... ... ... १७५
अवाचकता ... ... ... १७५
अश्लीलता ... ... ... १७७
संदिग्धता ... ... ... १७९
अप्रतीतत्वम् ... ... ... १७९
ग्राम्यत्वम् ... ... ... १८०
नेयार्थत्वम् ... ... ... १८०

| विषयः । | पृष्ठम् । |
|---|---|
| क्लिष्टत्वम् | १८१ |
| अविमृष्टविधेयांशता | १८१ |
| विरुद्धमतिकारिता | १८५ |
| समासगतश्रुतिकटुत्वम् | १८६ |
| पदगतदोषाणां वाक्ये पादशेऽपि संभवः | १८६ |
| वाक्यगतं श्रुतिकटु | १८७ |
| वाक्यगतं अप्रयुक्तम् | १८८ |
| वाक्यगतं निहतार्थम् | १८८ |
| वाक्यगतं अनुचितार्थम् | १८८ |
| वाक्यगतं अवाचकत्वम् | १८९ |
| वाक्यगतं अश्लीलत्वम् | १८९ |
| वाक्यगतं जुगुप्सात्वम् | १८९ |
| वाक्यगतं अमङ्गलार्थत्वम् | १९० |
| वाक्यगतं संदिग्धत्वम् | १९० |
| वाक्यगतं अप्रतीतत्वम् | १९० |
| वाक्यगतं ग्राम्यध्वम् | १९१ |
| वाक्यगतं नेयार्थत्वम् | १९१ |
| वाक्यगतं क्लिष्टत्वम् | १९२ |
| वाक्यगतं अविमृष्टविधेयांशत्वम् | १९२ |
| यत्तदोः साकाङ्क्षत्वविचारः | १९४ |
| विरुद्धमतिकृत् | १९९ |
| पदैकदेशगतदोषाणामुदाहरणानि | २०० |
| वाक्यमात्रदोषलक्षणम् | २०४ |
| प्रतिकूलवर्णत्वम् | २०४ |
| उपहतलुप्तविसर्गत्वम् | २०६ |
| विसंधित्वम् | २०६ |
| हतवृत्तत्वम् | २०८ |
| यतिभङ्गः | २०९ |
| न्यूनपदत्वम् | २११ |
| अधिकपदत्वम् | २११ |
| कथितपदत्वम् | २१२ |
| पतत्प्रकर्षत्वम् | २१३ |
| समाप्तपुनरात्तत्वम् | २१३ |
| अर्धान्तरैकवाचकत्वम् | २१४ |
| अभवन्मतयोगत्वम् | २१५ |
| अनभिहितवाच्यत्वम् | २२० |
| अस्थानस्थपदत्वम् | २२२ |
| अस्थानस्थसमासत्वम् | २२३ |
| संकीर्णत्वम् | २२४ |
| गर्भितत्वम् | २२४ |
| प्रसिद्धिहतत्वम् | २२५ |
| भग्नप्रक्रमत्वम् | २२६ |
| अक्रमत्वम् | २३० |
| अमतपरार्थत्वम् | २३२ |
| अर्थदोषलक्षणानि | २३२ |
| अपुष्टत्वम् | २३२ |
| कष्टत्वम् | २३४ |
| व्याहतत्वम् | २३५ |
| पुनरुक्तत्वम् | २३६ |
| दुष्क्रमत्वम् | २३६ |
| ग्राम्यत्वम् | २३७ |
| संदिग्धत्वम् | २३७ |
| निर्हेतुत्वम् | २३७ |
| प्रसिद्धिविरुद्धत्वम् | २३८ |
| विद्याविरुद्धत्वम् | २३९ |
| अर्थशास्त्रविरुद्धत्वम् | २४० |
| कामशास्त्रविरुद्धत्वम् | २४० |
| योगशास्त्रविरुद्धत्वम् | २४० |
| अनवीकृतत्वम् | २४१ |
| सनियमपरिवृत्तत्वम् | २४१ |
| अनियमपरिवृत्तत्वम् | २४२ |
| विशेषपरिवृत्तत्वम् | २४३ |
| अविशेषपरिवृत्तत्वम् | २४४ |
| सामान्यपरिवृत्तत्वम् | २४४ |
| साकाङ्क्षत्वम् | २४४ |
| अपदयुक्तत्वम् | २४५ |
| सहचरभिन्नत्वम् | २४६ |
| प्रकाशितविरुद्धत्वम् | २४६ |
| विध्ययुक्तत्वम् | २४७ |

| विषयः। | पृष्ठम्। |
| --- | --- |
| अनुवादायुक्तत्वम् ... ... | २४८ |
| त्यक्तपुनःस्वीकृतत्वम् ... ... | २४९ |
| अश्लीलत्वम् ... ... ... | २४९ |
| पौनरुक्त्यस्य काव्यदोषत्वम् ... | २४९ |
| निर्हेतुत्वस्य प्रसिद्धार्थेऽदोषत्वम् | २५२ |
| अनुकरणे सर्वेषामदोषत्वम् ... | २५२ |
| वक्राद्यौचित्याद्दोषस्यापि क्वचिद्गुणत्वम् ... ... ... | २५२ |
| दोषस्य क्वचिददुष्टता ... ... | २५३ |
| कष्टत्वस्य गुणत्वम् ... ... | २५३ |
| अप्रयुक्तनिहतार्थयोरदुष्टत्वम् ... | २५५ |
| अश्लीलत्वस्य गुणत्वम् ... | २५६ |
| संदिग्धत्वस्य गुणत्वम् ... | २५७ |
| अप्रतीतत्वस्य गुणत्वम् ... | २५७ |
| ग्राम्यत्वस्य गुणत्वम् ... ... | २५८ |
| न्यूनपदत्वस्य गुणत्वम् ... | २५९ |
| अधिकपदत्वस्य गुणत्वम् ... | २६० |
| कथितपदत्वस्य गुणत्वम् ... | २६० |
| पतत्प्रकर्षत्वस्य गुणत्वम् ... | २६१ |
| समाप्तपुनरात्तत्वस्य न गुणत्वं नापि दोषत्वम् ... ... ... | २६१ |
| अपदस्थसमासत्वस्य गुणत्वम् | २६१ |
| गर्भितत्वस्य गुणत्वम् ... ... | २६१ |
| रसदोषाः ... ... ... | २६२ |
| व्यभिचारिण. स्वशब्दवाच्यत्वम् | २६२ |
| रसस्य स्वशब्दवाच्यत्वम् ... | २६३ |
| स्थायिनः स्वशब्दवाच्यत्वम् ... | २६४ |
| अनुभावस्य कष्टकल्पना ... | २६४ |
| विभावस्य कष्टकल्पना ... | २६४ |
| प्रतिकूलविभावादिग्रहः ... | २६५ |
| पुन पुनर्दीप्तिः ... ... | २६५ |
| अकाण्डे प्रथनम् ... ... | २६६ |
| अकाण्डे च्छेद ... ... | २६६ |
| अङ्गस्यातिविस्तृतिः ... ... | २६६ |

| विषयः। | पृष्ठम् |
| --- | --- |
| अङ्गिनोऽननुसंधानम् ... ... | २६६ |
| प्रकृतिविपर्ययः ... ... | २६६ |
| अनङ्गस्याभिधानम् ... ... | २६७ |
| संचारिण. स्वपदवाच्यत्वमदोषः | २६७ |
| विरुद्धरससंचारिभावादीनां बाध्यतयोक्तिर्गुणः ... ... | २६७ |
| विरुद्धयोरपि रसयोरेकत्र निवेशप्रकारः ... ... ... | २६७ |


## अष्टमोल्लासः।


| | |
| --- | --- |
| गुणलक्षणम् ... ... ... | २७४ |
| गुणाना रसधर्मत्वम् ... ... | २७५ |
| अलकारलक्षणम् ... ... | २७६ |
| गुणालंकारयो. प्रभेदः ... | २७८ |
| परकृतगुणालंकारलक्षणखण्डनम् | २७८ |
| गुणविभागः ... ... ... | २७९ |
| माधुर्यगुणलक्षणम् ... ... | २७९ |
| ओजोगुणलक्षणम् ... ... | २७९ |
| प्रसादगुणलक्षणम् ... ... | २८० |
| वामनाद्युक्तदशगुणमतविचारः | २८२ |
| माधुर्यव्यञ्जकाः ... ... | २८३ |
| ओजोव्यञ्जकाः ... ... | २८४ |
| प्रसादव्यञ्जकाः ... ... | २८४ |
| क्वचिद्रचनाया वैपरीत्यम् ... | २८४ |


## नवमोल्लासः।


| | |
| --- | --- |
| वक्रोक्तिः ... ... ... | २८६ |
| अनुप्रासः ... ... ... | २८८ |
| वृत्तिः ... ... ... ... | २८८ |
| छेकानुप्रास. ... ... ... | २८९ |
| वृत्त्यनुप्रासः ... ... ... | २८९ |
| उपनागरिका रीतिः ... ... | २८९ |
| परुषा रीतिः ... ... ... | २८९ |
| कोमला रीतिः ... ... | २८९ |
| उपनागरिकादीनां यथाक्रमं वैदर्भीत्यादि नामानि ... | २८९ |

| विषयः। | पृष्ठम्। |
|---|---|
| लाटानुप्रासः सभेदः ... ... ... | २८९ |
| यमकं सविभागम् ... ... | २९१ |
| श्लेषः सभेदः ... ... ... | २९२ |
| श्लेषस्य नवमो भेदः ... ... | २९३ |
| श्लेषविचारः ... ... ... | २९४ |
| चित्रालंकारः ... ... ... | ३०३ |
| खड्गबन्धः ... ... ... ... | ३०३ |
| मुरजबन्धः ... ... ... | ३०४ |
| पद्मबन्धः ... ... ... | ३०५ |
| सर्वतोभद्रः ... ... ... | ३०५ |
| पुनरुक्तवदाभासः ... ... | ३०६ |
| **दशमोल्लासः।** | |
| उपमा ... ... ... ... | ३०८ |
| पूर्णोपमा ... ... ... | ३०९ |
| लुप्तोपमा ... ... ... | ३०९ |
| श्रौती उपमा ... ... ... | ३०९ |
| आर्थी उपमा ... ... ... | ३०९ |
| उपमाविचार ... ... ... | ३०९ |
| धर्मलोपे उपमा ... ... | ३१३ |
| उपमानलोपे उपमा ... ... | ३१४ |
| इवादिलोपे उपमा ... ... | ३१५ |
| धर्मवाद्युभयलोपे उपमा ... | ३१६ |
| धर्मोपमानलोपे उपमा ... | ३१६ |
| उपमेये वादिलोपे उपमा ... | ३१७ |
| धर्मोपमाने वादिलोपे उपमा ... | ३१७ |
| उपमाया पञ्चविंशतिविधत्वम् | ३१८ |
| मालोपमा ... ... ... | ३१९ |
| रशनोपमा ... ... ... | ३१९ |
| अनन्वय ... ... ... | ३२१ |
| उपमेयोपमा ... ... ... | ३२२ |
| उत्प्रेक्षा ... ... ... | ३२३ |
| ससंदेहः ... ... ... | ३२४ |
| रूपकम् ... ... .. | ३२६ |
| समस्तवस्तुविषयं रूपकम् ... | ३२७ |

| विषयः। | पृष्ठम्। |
|---|---|
| एकदेशविवर्तिरूपकम् ... ... | ३२८ |
| साङ्गरूपकम् ... ... ... | ३२८ |
| निरङ्गरूपकम् ... ... ... | ३२८ |
| मालारूपकम् ... ... ... | ३२९ |
| परम्परितरूपकम् ... ... | ३२९ |
| रशनारूपकम् ... ... ... | ३३१ |
| अपह्नुतिः ... ... ... | ३३२ |
| श्लेषः ( अर्थगतः ) ... ... | ३३३ |
| समासोक्तिः ... ... ... | ३३४ |
| निदर्शना ... ... ... | ३३५ |
| अप्रस्तुतप्रशंसा ... ... | ३३७ |
| अतिशयोक्तिः ... ... | ३४१ |
| प्रतिवस्तूपमा ... ... ... | ३४२ |
| दृष्टान्तः ... ... ... | ३४३ |
| कारकदीपकम् ... ... | ३४४ |
| मालादीपकम् ... ... ... | ३४५ |
| तुल्ययोगिता ... ... ... | ३४६ |
| व्यतिरेकः ... ... ... | ३४६ |
| आक्षेप ... ... ... | ३४७ |
| विभावना ... ... ... | ३५० |
| विशेषोक्तिः ... ... ... | ३५० |
| यथासख्यम् ... ... ... | ३५१ |
| अर्थान्तरन्यासः ... ... | ३५२ |
| विरोध. ... ... ... | ३५३ |
| स्वभावोक्तिः ... .. ... | ३५६ |
| व्याजस्तुतिः ... ... ... | ३५७ |
| सहोक्ति .. ... ... | ३५७ |
| विनोक्ति ... ... ... | ३५८ |
| परिवृत्तिः ... ... ... | ३५९ |
| भाविकम् ... ... ... | ३५९ |
| काव्यलिङ्गम् ... ... ... | ३६० |
| पर्यायोक्तम् ... ... ... | ३६१ |
| उदात्तम् ... ... ... | ३६२ |
| समुच्चयः ... ... ... | ३६३ |

| विषयः। | पृष्ठम्। |
|---|---|
| पर्यायः ... ... ... | ३६६ |
| अनुमानम् ... ... ... | ३६८ |
| परिकरः ... ... ... | ३६९ |
| व्याजोक्तिः ... ... ... | ३६९ |
| परिसंख्या ... ... ... | ३७० |
| कारणमाला ... ... ... | ३७१ |
| अन्योन्यम् ... ... ... | ३७२ |
| उत्तरम् ... ... ... | ३७३ |
| सूक्ष्मम् ... ... ... | ३७४ |
| सारः ... ... ... ... | ३७४ |
| असंगतिः ... ... ... | ३७५ |
| विरोधादसंगतेर्भेदः ... ... | ३७५ |
| समाधिः ... ... ... | ३७६ |
| समम् ... ... ... | ३७६ |
| विषमम् ... ... ... | ३७७ |
| अधिकम् ... ... ... | ३७८ |
| प्रत्यनीकम् ... ... ... | ३७९ |
| मीलितम् ... ... ... | ३८० |
| एकावली ... ... ... | ३८० |
| स्मरणम् ... ... ... | ३८१ |
| भ्रान्तिमान् ... ... ... | ३८२ |
| प्रतीपम् ... ... ... | ३८३ |
| सामान्यम् ... ... ... | ३८४ |
| विशेषः ... ... .. | ३८५ |
| तद्गुणः ... ... ... | ३८७ |

| विषयः। | पृष्ठम्। |
|---|---|
| अतद्गुणः ... ... ... | ३८७ |
| व्याघातः ... ... ... | ३८८ |
| संसृष्टिः ... ... ... | ३८८ |
| अङ्गाङ्गिभावसंकरः ... ... | ३८९ |
| संदेहसंकरः ... ... ... | ३९० |
| संदेहसंकरस्थलनिर्णयः ... | ३९० |
| एकाश्रयानुप्रवेशसंकरः ... | ३९१ |
| अलंकाराणां शब्दार्थगतत्वनियमः | ३९२ |
| अलंकारदोषाः पृथङ्न सन्ति ... | ३९३ |
| अनुप्रासदोषाः। तेषामुक्तेष्वन्तर्भावः | ३९४ |
| यमकदोषः। तस्योक्तेऽन्तर्भावः | ३९५ |
| उपमादोषाः। तेषामुक्तेऽन्तर्भावश्च | ३९५ |
| उपमायां क्वचिल्लिङ्गवचनादिभेदस्यादुष्टता ... ... | ३९६ |
| कालादिभेदे उपमाया दुष्टताव्यवस्थापनम् ... ... | ३९७ |
| उपमायामपरौ दोषौ तयोरुक्तेऽन्तर्भावश्च ... ... ... | ३९८ |
| उत्प्रेक्षादोष तस्योक्तेऽन्तर्भावश्च | ४०० |
| अर्थान्तरन्यासदोषः ... ... | ४०१ |
| समासोक्तिदोषः तस्योक्तेऽन्तर्भावश्च | ४०१ |
| अप्रस्तुतप्रशंसादोष. । तस्योक्तेऽन्तर्भावश्च ... ... ... | ४०२ |
| ग्रन्थसमाप्तिः ... ... ... | ४०३ |

# काव्यमाला ।

## महामहोपाध्यायश्रीगोविन्दप्रणीतः

## काव्यप्रदीपः ।

तत्सदुपाख्यवैद्यनाथविरचितया प्रभया समेतः ।

### प्रथम उल्लासः ।

सोनोदेव्याः प्रथमतनयः केशवस्यात्मजन्मा
श्रीगोविन्दो रुचिकरकवेः स्नेहपात्रं कनीयान् ।
श्रीमन्नारायणचरणयोः सम्यगाधाय चित्तं
नत्वा सारस्वतमपि महः काव्यतत्त्वं व्यनक्ति ॥

वचनसंदर्भविशेषरूपस्य ग्रन्थस्य प्रारिप्सितत्वेन स्तोतुमुचितायाः सेव्यमा-

---

य सर्वदैवतगणेषु महानुपेन्द्रब्रह्मादिभि सततपूजितपादपद्म. ।
स स्वर्धुनीविमलवारितरङ्गभङ्गैरस्माकमाशु शमयत्वशुभं महेश. ॥

गुरुपादसरोजानि प्रणम्य च गजाननम् ।
काव्यप्रदीपसद्व्याख्या प्रभाख्यां वितनोम्यहम् ॥

प्रेक्षावत्प्रवृत्तये स्वपित्रादिनामपूर्वकं मङ्गलमाचरन्नेवाभिधेयं दर्शयति—**सोनो-देव्या इति** । रुचिरकवि· सपत्नभ्रातेति ज्ञेयम् । अन्यथा प्रथमतनयः कनीयानिति न सगच्छेत् । तस्माद्वैमात्रेयो रुचिकरकवि· । अयं तु स्वमातुर्ज्येष्ठ एवेति ज्ञेयम् । व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय ग्रन्थादिनिबद्धपद्यं व्याख्यातुमवतारयन्नेव तदवतारिका वृत्तिं ताटस्थ्येन व्याचष्टे—**वचनेत्यादि** । उच्यते प्रतिपाद्यतेऽर्थो यैस्तानि वचनानि वाक्यानि तेषां संदर्भो रचनम् । सदर्भ्यमाणानि वाक्यानीति यावत् । 'कृदभिहित' इति न्यायात् । विशेषश्चाविवक्षितार्थप्रतिपत्त्यनुकूलत्वे सति निबद्धत्वम् । इत्थ च यावतां सभूय विवक्षितैकार्थप्रतिपादकत्वं तावतामेकग्रन्थत्वम् । महाग्रन्थाना च विशिष्टमहावाक्यार्थप्रतिपादकतयैकग्रन्थत्वम्, तत्तदवान्तरपूर्वपक्ष-सिद्धान्ताद्यर्थभेदेन नानाग्रन्थत्वं चाविरुद्धमिति विभावनीयम् । एकैकस्मिंस्तु वाक्ये ग्रन्थव्यवहारस्तान्त्रिकासमततया हस्तादौ शरीरादिव्यवहारवद्गौण इति दिक् । ग्रन्थस्य लक्षणान्तराणि तद्दूषणानि च प्रकृतानुपयोगाद्विस्तरभयाच्च न दर्शितानि । प्रारिप्सि-तत्वेनेत्यनेन वृत्तौ ग्रन्थारम्भ इत्यनन्तरं चिकीर्षित इति शेषो दर्शितः । समुचित-त्वस्य क्रियाविशेषापेक्षापूरणाय स्तोतुमिति । वाग्देवताया ग्रन्थारम्भे स्तुत्यर्हत्वं

नायाश्च वाग्देव्या आस्पदभूतां कविभारतीं तदभिन्नत्वेनाध्यवसितां प्रारिप्सित-प्रतिबन्धकदुरितशान्तये ग्रन्थकृत्संस्तौति—

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥**

नियम्यन्ते सौरभादयो धर्मा अनेनेति नियतिरसाधारणः पद्मत्वादिरूपो धर्मोऽदृष्टं वा । ह्लादैकमयीमिति ह्लादेनैकमयीमेकस्वभावाम् । ह्लादमात्रस्वभावा-

---

सुप्रसिद्धम् । एतत्स्फोरणायैवादौ ग्रन्थस्वरूपकथनम् । इष्टेत्यस्य व्याख्यानं सेव्यमानाया इति । 'यज देवपूजासंगतिकरणदानेषु' इत्यनुशासनाद्यजेः पूजार्थत्वेन 'मति-बुद्धि-' इत्यनेन वर्तमाने क्तप्रत्ययादुक्तार्थलाभः । श्लोके कविपदसमभिव्याहृतस्य भारतीपदस्य काव्ये प्रसिद्धिबाहुल्येन तस्यैव स्तुतिविषयत्वप्रतीतेः कविवाङ्निर्मितिरिति स्वोक्तिविरोधाच्च वृत्तौ देवतामित्ययुक्तमित्याशङ्क्य तदभिन्नत्वेनेत्याद्युक्तम् । केवलं कविभारतीस्तुतेर्मङ्गलाप्रयोजकतया भारतीपदश्लेषापादितवाग्देवताभेदवत्त्वेनाध्यवसिताया एव स्तुतौ श्लोकतात्पर्यमिति सूचयितुं देवतामित्युपचारेण वृत्तिकृतोक्तमित्याशयः । दुरितान्तेन विघ्नस्य रूपमुक्तं वृत्तौ । ग्रन्थकृदिति स्वस्यैव मम्मटभट्टाख्यस्य कारिकाकर्तुर्निर्देशः । स्वनामाग्रहणं तु धीरोदात्तस्वभावतया गुण एव । भरतसंहितायाः कासांचित्कारिकाणां दर्शनात्स एव ग्रन्थकृदिति तु न युक्तम् । चतुर्थे—'कारणान्यथ कार्याणि सहकारीणि-' इत्यादि कारिकार्थे 'तदुक्तं भरतेन' इति भरतसंमतिप्रदर्शनस्यासंगतित्वापत्तेः । भरतसंहितागतानां कासांचिल्लिखनं प्रामाणिकत्वद्योतनायेति सर्वमनवद्यम् । अनयैव दिशा सर्वमवयवशो वृत्तिव्याख्यानमस्मद्ग्रन्थादवगन्तव्यम् । अस्माभिस्तु विस्तरभीतेः क्वचित्क्वचिदेव प्रकाशयिष्यते । **नियम्यन्त इति** । स्वाविनाभावित्वेन व्यवस्थाप्यन्त इत्यर्थः । सौरभपदं तद्विशेषपरम् । आदिपदेनाह्लादकत्वविशेषादिपरिग्रहः । असाधारणः पद्मेतरमुखादिव्यावृत्तः । स्वस्यैव साधारण्ये इतरव्यवस्थापकत्वायोगादिदमुक्तम् । तथा च नियतिकृतस्तन्निरूपितो यो नियमो व्याप्तिस्तद्रहितामिति श्लोकार्थः । कान्तामुखेऽपि कविप्रतिभानिर्मितसौरभविशेषादेः सत्त्वादिति रूढेर्बलवत्त्वादाह—**अदृष्टं वेति** । अत्राप्यदृष्टकृतो नियमः पद्मादावेव सौरभविशेषादिरित्यादिरूप एव । तथामुष्मिकस्वर्गादिजनकादृष्टविशेषकृतश्च नियमः स्वर्गादियोग्यशरीरान्तरोत्पादनद्वारैव स्वर्गोपधायकत्वरूपः । तद्राहित्यं च 'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि' इत्यादि कविनिर्मितौ बोध्यम् । ह्लादैकशब्दयोः कर्मधारये एकशब्दस्य 'पूर्वकालैक-' इत्यादिना समासे पूर्वनिपाते एकह्लादेत्यापत्तेरन्यथा व्याचष्टे—**ह्लादेनेति** । धान्येन धनमयो ग्राम इतिवदभेदे तृतीया । एकशब्दो मात्रार्थे । स्वार्थे मयट् । ततश्चायं पर्यवसितोऽर्थ इत्याह—**ह्लादमात्रेति** । मात्रपदेन दुःखमोहयोर्व्यवच्छेदः । इदं च सुखदुःखमोहस्वभावेतिव्यतिरेकप्रदर्शकसांख्यसिद्धान्तानुसारि वृत्तिग्रन्थानुरोधात्कार्यकारणयोरभेदमाश्रित्योक्तम् । ह्लादमात्रप्रचुरामिति तु परमार्थः । कविवर्ण्यमानवियोगशोकादेरप्यलौकिकानन्दहेतुत्वात् । यत्तु 'विशेषणविशेष्यभावे कामचारात् ह्लादरूपं यदेकमित्येक-

मिति यावत् । अनन्यपरतन्त्रामिति । कवेस्तत्प्रतिभायाश्चान्यो य आत्मनः परस्तदायत्तत्वरहिताम् । परतन्त्रशब्द एवायत्तवचन इति कश्चित् । नवरसरुचिरामिति कर्मधारयः । वृत्तौ 'षड्रसा न च हृद्यैव तैः' इति व्यतिरेकद्वयदर्शनात् । न चैवं 'हृद्यैव तैः' इति हेतूपदर्शनवैयर्थ्यम् । तैस्तिक्तादिसाधारणैः षड्रसैरुपलक्षिता यतोऽतो न च हृद्यैवेति तदर्थत्वात् । अस्तु वा तृतीयातत्पुरुष एव । न चैवं नवरसीति रूपप्रसङ्गः । त्रिगुणसचिव इत्यादिवदुपपत्तेः । न च वृत्तिविरोधः । नवरसरुचिरत्वरूपविशिष्टधर्मव्यतिरेकस्तत्रत्यरसेषु नवत्वाभावेनायोगव्यवच्छेदिहृद्यत्वप्रयोजकत्वविरहेण चेति वृत्तिप्रतिपाद्यत्वात् । निर्मितिमादधतीति[2] तृणोलपन्यायेन सामान्यविशेषभावेनान्वयान्न पुनरुक्तिः । अत्र निर्माणव्यतिरेकमुखेन चतुर्मुखात्कविभारत्याख्यव्यतिरेकालंकारो व्यङ्ग्यः । तथा

---

स्यैव विशेष्यत्वात्कर्मधारयेऽपि नैकह्लादेति प्रयोग.' इति कैश्चिदुक्तं तदयुक्तम् । पूर्वकालैक-' इति सूत्रस्य पूर्वनिपातनियमार्थत्वेन तथा प्रयोगापत्तेरनिवार्यत्वात् । न्वन्यत्वपरत्वयोर्भारतीमात्रनिरूपितत्वविवक्षायामन्यतरपदस्य वैयर्थ्यम्, भारतीभिन्नकवितत्प्रतिभासापेक्षत्वेनासभवश्चेत्यतो व्याचष्टे—**कवेरिति** । आत्मनो भारत्याः । यद्यपि शब्दार्थोभयात्मककाव्यरूपाया निर्मितौ शब्दांशे उपादानाद्यधीनत्वमस्त्येव, तथाप्यनिर्वचनीयार्थांशे तत्त्रितयातिरिक्तसमवायिकारणाद्यधीनत्वव्यतिरेको विवक्षित इति भावः । 'परतन्त्रः पराधीनः' इति कोषवाक्यात्परायत्तवचन. परतन्त्रशब्द', नायत्तवचनः । भारतीभिन्नकवितत्प्रतिभाधीनत्वेनासंभवश्चेत्यस्वरसः कश्चिदित्यनेन सूचित. । **कर्मधारय इति** । नव रसा यस्या सा नवरसा सा चासौ रुचिरा चेत्येवं बहुव्रीहिगर्भ इत्यर्थ· । नवरसै रुचिरेति तृतीयातत्पुरुषत्यागेनोक्तकर्मधारयाङ्गीकारे बीजमाह—**वृत्ताविति** । न चेति चकारेण व्यतिरेकद्वित्वावगतेरित्यर्थ । **न चैवमिति** । नियतहृद्यत्वमात्रव्यतिरेककथने तैरिति व्यर्थम्, प्रत्युत विशिष्टव्यतिरेकबोधकतया विरुद्धार्थकमेवेत्यर्थः । तैरिति न करणे तृतीया । किंतूपलक्षणे । अतो न विशिष्टव्यतिरेके तात्पर्यमिति नोक्तदोष इत्याह—**तैरिति** । इतीति षष्ठ्यन्तम् । इतीत्यस्य तदर्थत्वादित्यर्थ । एवमपि तैरित्यस्य हेतुगर्भत्वादनुपयोग इत्यस्वरसादाह—**अस्तु वेति** । एवं द्विगुत्वे सति त्रिगुणेति त्रिशब्दस्य त्र्यवयवकपरत्वेन द्विगुत्वाभावाद्यथारूपप्रसङ्गो नेत्यर्थः । **न चेति** । व्यतिरेकद्वयप्रदर्शकप्रकाशविरोधश्च नेत्यर्थ· । कथं तत्राह—**नवेति** । विशेषणविशेष्ययोर्व्यतिरेकद्वयस्य प्रदर्शनं विशिष्टव्यतिरेके द्वयोरपि प्रयोजकत्वमस्तीति प्रदर्शयितुमित्यर्थ । उत्तमकाव्यत्वसिद्धये वाच्यातिशयव्यङ्ग्यं दर्शयति—**अत्रेति** । कविभारतीनिर्माणस्य मुखाद्यात्मकचन्द्रादेर्ब्रह्मनिर्माणात्प्रसिद्धे चन्द्रादेर्व्यतिरेक आधिक्यम् । 'उपमानाद्यदन्यस्य व्यतिरेक' इति दशमे व्यतिरेकालंकारतया वक्ष्यते । स च विशेषणैरेव स्फुट इति तद्द्वारा निर्मात्र्या भारत्या ब्रह्मापेक्षया व्यतिरेकालंकारो व्यङ्ग्यः । शिल्पोत्कर्षेण शिल्पिनोऽपि तत्प्रतीते । **शक्त्येति** । कारणतारूपयेत्यर्थः ।

---

१ 'हृद्यैव तैरिति' ग. २ 'निर्मिति' इत्यादि 'पुनरुक्ति·' इत्यन्त ग पुस्तके नास्ति.

हि—नियतेः शक्त्या नियतरूपा सुखदुःखमोहात्मकसत्त्वरजस्तमोलक्षणगुणत्रयात्मकत्वाद्विश्वस्य सुखदुःखमोहस्वभावा, परमाण्वादि यत्समवायिकारणं तदीयश्च यः स्पन्दस्तत्प्रभृतिसहकारिपरतन्त्रा, मधुरादिषड्रसा च, न च मनोरमैव, तैः निर्मितित्वादिसादृश्यवती च ब्रह्मणो निर्मितिरिति सुप्रसिद्धमेव । एतद्विलक्षणनियतिकृतनियमरहितत्वादिधर्मवत्त्वेन तु कविभारती निर्दिष्टेति व्यक्तो व्यतिरेकः । [1]यदेतादृशनिर्मितिशालिनी, अत एव जयत्युत्कर्षेण वर्तते, न तु वर्तता मित्यर्थः । तथा सत्युत्कर्षस्यासिद्धत्वेन नमस्काराक्षेपकत्वानुपपत्तेः । नन्वेतादृशे गुरुकर्मणि प्रेक्षावतामिष्टदेवताप्रणतिरवश्यं दृश्यते युक्तिमती च । तदनेन स्तुतिमात्रमाचरता यन्न कृता तदवलेपादज्ञाद्वा । उभयथाप्यनवधेयवचनता प्रसक्ता । अथ कृतैव, तत्किं स्तुतिवन्नोपनिबद्धा विशेषाभावात्सैव वा किं नोपनिबद्धेति चेत्, उच्यते—न खलु नतिमात्रोपनिबन्धे स्तुतिर्निबद्धा भवति । स्तुतिनिबन्धे त्वर्थान्नतिरपि निबद्धैव । यतो जयत्यर्थेन वक्तुर्विषयस्य च वैशिष्ट्यान्नमस्कार आक्षिप्यते । तेन त्वां प्रत्यस्मि प्रणत इति लभ्यते । यत्तु 'उत्तमकाव्यवंसिद्धये व्यङ्ग्यं दर्शयति जयत्यर्थेन चेत्यादि' इति वृत्त्यवतारणं तदयुक्तम् । प्रणामरूपव्यङ्ग्यस्यानतिशयितत्वेन ध्वनित्वाप्रयोजकत्वात् । तदर्थं चातिशयिनो व्यतिरेकाल[2]ंकारस्यैवोपन्यासौचित्यादिति ॥

इहाभिधेयं ग्रन्थरूपमङ्गिनः काव्यस्य फलेन सफलमिति प्रेक्षावत्प्रवृत्त्यर्थं प्रतिपादयितुमाह—

---

अथवा व्याप्यव्यापकभावरूपयेत्यर्थः । नियतरूपा पद्मत्ववत्यवश्यं सौरभविशेषः पद्मत्ववत्येव च स इति च नियमवती । भारतीनिर्मितौ तु नैवम् । कान्तामुखसंनिधौ पद्मे तदभाववर्णनात्, मुखेऽपि तद्वर्णनाच्चेति भावः । **विश्वस्येति** । एकस्या एव कामिन्याः कंचित्प्रति सुखात्मकसत्त्वसमुद्भूतत्वम्, सपत्नीं प्रति दुःखात्मकरजःसमुद्भूतत्वम्, स्वमलभमानं प्रति तमोरूपमोहसमुद्भूतत्वमिति रीत्या सर्वपदार्थानां सुखदुःखमोहात्मकत्वमिति सांख्यमतानुसारेणेदम् । भारतीनिर्मितौ तु रसाद्यभावेऽप्यलंकारकृताह्लाद एवेति भावः । अतएव नवरसरुचिरामित्यनेन न पौनरुक्त्यम् । ब्रह्मनिर्मितेरुपमानसिद्ध्यर्थमाह—**सादृश्यवती चेति** । कविभारतीनिर्मितिरिति वक्तव्ये कविभारतीत्युक्तिर्भारतीकल्पिताया अनिर्वाच्याया निर्मितेर्भारत्यात्मकत्वमेवेत्यभिप्रायेण । काव्यरूपाया भारत्या उत्कर्षस्याशंसनीयतया तात्पर्यविषयत्वभ्रमनिरासायाह—**नन्विति** । वक्तुर्विषयस्य चेति । विषयः प्रतिपाद्यो देवतारूप. । वैशिष्ट्यमुपास्योपासकत्वरूपम् । आक्षिप्यते व्यज्यते । नन्वस्मदादीन्प्रति तद्व्यञ्जने वक्तुः किमायातमत आह—**तेनेति** । इति वक्तृगतं ज्ञानं श्रोतृभिर्व्यञ्जनया गम्यत इत्यर्थ. ॥

ननु प्रकृतग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं सप्रयोजनत्वं वाच्यम्, न तु तदुपेक्ष्य काव्यप्रयोजनकथनं युक्तमित्याशङ्कामपाकर्तुमाह—**इहेति** । अभिधेयं 'शक्तिर्निपुणता–'

---

१ 'यदा इतीदृश' क. २ 'लंकारस्य चोपन्यासौ' क.

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ २ ॥**

अत्र कृत्-वित्-युज्-शब्दा भावे क्विबन्ताः । काव्यं लोकोत्तरवर्णनानिपुणस्वरूपस्य कवेरसाधारणं तादृग्वर्णनात्मकं कर्म । तत्कवेस्तावत्कालिदासादीनामिव यशः, श्रीहर्षादेरपादानाद्धावकादीनामिव धनम्, मयूरशर्मादीनामिवानर्थनिवारणं च करोति । सहृदयस्य तु काव्यश्रवणानन्तरमेव सकलप्रयोजनेषूत्तमं स्थायिभावास्वादनसमुद्भूतं वेद्यान्तरसंपर्कशून्यं रसास्वादरूपमानन्दम्, राजादिगतपृथिवीपालनादिसमुचिताचारपरिज्ञानम्, रामादिवद्वर्तनमिष्टसाधनं न तु रावणादिवदित्युपदेशं च निर्मिमीते । काव्यास्वादनकाले कवेरपि सहृदयान्तःपातितया रसास्वादः । ननूपदेशार्थं नीतिशास्त्राण्येव सन्ति किं तत्र काव्येनेत्यत उक्तं कान्तासंमिततयेति । शब्दस्तावत्त्रिधा—प्रभुसंमितः, सुहृत्संमितः, कान्तासंमितश्च । तत्राद्यः शब्दप्रधानो वेदादिः शासनाप्राधान्येन विधिलक्षणः । स हि प्रभुरिव 'त्वमेवं कुरु' इति समाज्ञापयति । ततश्च नियुक्तः संध्यावन्दनादौ निष्फलेऽपि प्रवर्तते । द्वितीयस्त्वर्थतात्पर्यवान्सिद्धार्थरूपः

---

इत्यादि वक्ष्यमाणग्रन्थरूपम् । तथा चाङ्गस्य स्वतन्त्रफलाभावात्प्रधानफलकथनमङ्गभूतग्रन्थस्य फलवत्त्वबोधार्थमेवेति न निष्फलत्वं ग्रन्थस्य, न वा काव्यफलकथनस्येति भावः । यथाश्रुतेऽभिधेयस्य प्रयोजनमाहेति वाच्ये सप्रयोजनमित्याहेतीतिशब्दानर्थक्यमपि बोध्यम् । **क्विबन्ता इति** । तादर्थ्ये चतुर्थ्य इत्यपि ज्ञेयम् । **लोकोत्तरेति** । चमत्कृतिजनकेत्यर्थः । मुखादेश्चन्द्राद्यात्मकत्वेन वर्णनायाश्च शब्दार्थाश्रयत्वात्तयोरपि तद्विशिष्टतया कविकर्मत्वमविरुद्धमिति वक्ष्यमाणलक्षणासंगतिः । अस्य लक्ष्यतावच्छेदकत्वाच्च न तद्वैयर्थ्यमिति बोध्यम् । यश इत्यादेः करोतीत्यनेनान्वयः । श्रीहर्षाख्यस्य राज्ञो नाम्ना रत्नावलीनाटिकां कृत्वा धावकाख्यकविर्बहुधनं लेभे इति प्रसिद्धम् । तथा मयूरकविः सूर्यशतकेन कुष्ठान्निस्तीर्ण इत्यपि । अनर्थः पापं तत्फलं च शिवेतरपदार्थः । सद्य परपदार्थावाह—**अनन्तरमेवेत्यादिः** । उत्तमत्वं च सुखस्य स्वतःपुमर्थत्वात् । अन्येषां तु सुखसाधनत्वादपकृष्टत्वम् । वक्ष्यमाणस्वरूपस्य रसस्य प्रागसिद्धत्वेनास्वादनरूपत्वेन च तदास्वादनासंभवात्तस्यैव चानन्दत्वेन तत्समुद्भूतत्वासंभवादाह—**स्थायीति** । तथा च रस्यत इति व्युत्पत्त्या रसपदं रत्यादिस्थायिभावपरमिति भावः । विभावादीनामप्यास्वादविषयत्वेऽपि प्राधान्यात्स्थायिमात्रोपादानम् । आस्वादनं चैषा मुहुर्मुहुर्विभावनम् । रसरूप आस्वादो रसास्वादः । समितशब्दस्तुल्यपर्यायः । **शब्दस्तावदिति** । उपदेशकशब्द इत्यर्थः । **शब्दप्रधान इति** । विधिरूपशब्दबलादेव प्रवर्तक इति तदनुसारेणैव फलरूपार्थलाभः, न तु फलवशेन तदन्यथात्वकल्पनेति शब्दप्राधान्यम् । तदाहुः—'न विधौ परः शब्दार्थः' इति लाक्षणिकोऽर्थ इत्यर्थः । **शासनेति** । प्रवर्तनारूपशब्दभावनेत्यर्थः । **निष्फलेऽपीति** । स्वर्गादिफलरहितेऽपीत्यर्थः । प्रत्यवायपरिहारस्य तत्रापि फल-

पुराणेतिहासादिः । स हि सुहृदिव 'एवं कृते इदमिष्टं भवति, एवं च कृते इदमनिष्टम्' इत्येतावन्मात्रं बोधयति, न त्वाज्ञापयति । तृतीयस्तु ताभ्यां विलक्षणो रसप्रधानः काव्यलक्षणः । तत्र हि रसाङ्गभूतो यो व्यापारो विभावादिसंयोजनात्मा व्यञ्जनारूपो वा तन्निष्पाद्यरसादिव्यक्तिनिष्पादकतया शब्दार्थयोर्द्वयोरपि गुणत्वाद्रसस्यैव प्राधान्यम् । स च कान्तासंमितत्वेनोपदेशं करोति । तेनैतदुक्तं भवति—ये सुकुमारमतयोऽतिसुखिस्वभावा राजकुमारादयो नीरसे नीतिशास्त्रे प्रवर्तयितुमशक्यास्तान्काव्यं कान्तेव सरसतापादनेनाभिमुखीकृत्योपदेशं ग्राहयति–गुडजिह्विकया शिशूनिवौषधम् । यदाहुः—

'स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥'

यत एतावदिष्टविशिष्टं काव्यम्, अतः सर्वथा तद्धेतुरुपादेयः ॥

नन्वेवमप्यभिधेये किमायातम्, किं च हेतुमज्ञात्वा तदुपादानं कथं स्यादित्यपेक्षायां काव्याङ्गशिक्षारूपतया काव्याङ्गत्वं ग्रन्थस्य प्रतिपादयन्नेव कारणान्तरमप्याह—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

शक्तिः कवित्वबीजभूतो देवताप्रसादादिजन्मा संस्कारविशेषः प्रतिभाव्यपदेश्यः । तस्याः कारणतायां किं मानमिति चेत्, निपुणतादिकारणान्तरसद्भावेऽप्यनुपहसनीयकाव्यप्रसरस्य कार्यस्य व्यतिरेकः । स च विशेष्यस्य काव्य-

---

त्वोपगमात् । अर्थस्तात्पर्यवानिष्टानिष्टार्थबोधनमात्रपरः । सिद्धो विधेयोऽर्थो यस्य तद्रूप इत्यर्थ. । रसप्रधानो रसप्रतीत्युद्देशकः । विभावादीनां संयोजनं समूहालम्बनम् । अथवा प्रभुसंमिते शब्दप्राधान्याच्छक्यार्थपरत्वम् । पुराणादावर्थवादरूपतया लाक्षणिकार्थपरत्वम् । काव्ये तु रसरूपव्यङ्ग्यप्राधान्याद्व्यञ्जनैव रसाङ्गभूतव्यापारो ग्राह्य इत्याह—**व्यञ्जनारूपो वेति** । शब्दार्थयोर्व्यञ्जनास्वरूपनिष्पादकत्वाभावाद्व्यञ्जनाफलोपकार्याङ्गत्वं तयोरित्याह—**तन्निष्पाद्येति** । कान्तासाम्यमाह—**सरसतेति** । कान्तारसो लौकिकशृङ्गारः । काव्ये त्वलौकिको मुख्यः । अभिमुखीकृत्य आस्वादने सादरीकृत्य । कान्तोपदेशस्तु स्वसमीहितवसनालंकारादिसंपादनरूपः । काव्योपदेशस्तु रामादिवदिति प्रागेवोक्त. । कारिकातात्पर्यार्थमाह—**यत इति** ॥

अभिधेये प्रकृतग्रन्थे । संस्कारोऽदृष्टं तद्विशेषः । विशेषमेवाह—**प्रतिभेति** । काव्यघटनानुकूलशब्दार्थोपस्थितिः प्रतिभा । तया कार्येण विशेषतो व्यवहार्यः । तद्धेतुभूत इति यावत् । **तस्या इति** । शक्तेरित्यर्थः । व्युत्पत्त्यभ्यासाप्रतिभोत्पत्त्या काव्यसंभवादिति भावः । समाधत्ते—**निपुणतादीति** । तथा च निपुणतादिजन्यप्रतिभायामप्यनुपहसनीयत्वविशिष्टकाव्यानुत्पत्तेस्तदवच्छिन्ने शक्तेरेव हेतुत्वमित्यर्थः । एवं च शक्तिजन्यतावच्छेदकं प्रतिभागतं वैजात्यं विजातीयकाव्यजन-

प्रसरस्य, विशेषणस्यानुपहसनीयत्वस्य वा व्यतिरेकात्सर्वत्राविशिष्टः । न चैवं कारणान्तरं किंचिदायातु न तु शक्तिरिति वाच्यम् । प्रसिद्धातिरेकिण्येव तद्धेतौ शक्तिव्यपदेशात् । लोकः स्थावरजङ्गमात्मकलोकस्य वृत्तम् । योगादुपचाराद्वा । धर्मिमात्रपरामर्शस्य व्युत्पत्त्यनाधायकत्वात् । शास्त्रं छन्दःशास्त्रादि । काव्यं महाकविप्रणीतं रघुवंशादि । आदिग्रहणादितिहासादि । तेषां विमर्शनाद्व्युत्पत्तिर्निपुणता । काव्यज्ञशिक्षा काव्यं कर्तुं रसानुगुणतया प्रबन्धादौ घटयितुं च ये जानन्ति तदुपदेशः । तया करणे योजने च पौनःपुन्येन प्रवृत्तिरभ्यासः । इतिशब्दो मिलितोपस्थापनाय । अन्यथा तद्वैयर्थ्यमेव स्यात् । तथा च काव्यस्योद्भव उत्कृष्टोत्पत्तिः । तत्रा कार्येण मिलितानामुपधानम् । दण्डचक्रादीनामिव घटेन । न तु मिलितत्वेन कारणतैवेति भ्रमः कार्यः ॥

---

कतावच्छेदकमिति न व्यभिचारः । यां विनेति । प्रकाशस्याप्यनुपहसनीयत्वविशिष्टकाव्ये शक्तेर्व्यतिरेकव्यभिचाराभावप्रतिपादने तात्पर्यमनेनोक्तम् । कारणान्तरं विजातीयव्युत्पत्तिरूपम् । **न तु शक्तिरिति** । उक्तादृष्टरूपेत्यर्थ । **प्रसिद्धेति** । तथा च तदेव शक्तिपदार्थोऽस्त्वित्यर्थ. । शक्नोत्यनया काव्यं कर्तुमिति व्युत्पत्तेः । वस्तुतस्तदवच्छिन्ने उक्तादृष्टमेव हेतुरिति तन्निराकर्तुं शक्यमिति भावः । रसादिविषयकवासनाविशेषस्तु निपुणतैवेति[2] न सा शक्तिपदार्थ इति ज्ञेयम् । केचिच्च यां विनेति ग्रन्थं शक्तिद्वयाभिप्रायेण व्याचक्षते—यां निर्माणशक्तिं विना काव्यं न प्रसरेन्न भवेत् । या च वोद्धृशक्तिं विना निर्माणशक्त्या प्रसृतमप्युपहसनीयं स्यात् । चमत्कृतेरसपत्तेरिति । तदयुक्तम् । अस्येति प्रकृतकाव्यपरामर्शात्कारणशक्तेरेव वक्तव्यतया वोद्धृशक्तिकथनस्यासगतत्वात् शक्तिद्वयपरत्वे शब्दस्वारस्यभङ्गाच्च । समुल्लासे चेत्यनेनानुपहसनीयत्वस्यैव कथनादिति । योगाल्लोक्यत इति लोकव्युत्पत्तेः । रूढिप्राबल्यादाह—**उपचाराद्वेति** । उपचारो लक्षणा । **छन्दःशास्त्रादीति** । आदिना प्रकाशोक्तव्याकरणादिपरिग्रहः । **इतिहासादीति** । आदिना पुराणबृहत्कथादिसंग्रह । विमर्शनात्पुनःपुन. श्रवणात् । व्युत्पत्तिस्तत्तदर्थरसादिगोचरः सस्कार· । **रसानुगुणतयेति** । यो रसः प्रक्रान्तस्तदानुगुण्येन वर्णनात्मकं काव्यं तत्प्रक्रमे निवेशनीयम्, न तद्विरोधि । अन्यथा रसव्याघातापत्तेरित्यर्थः । इदं च योजनाज्ञानं दोषाभावादिवैशिष्ट्यप्रयोजकतया काव्यहेतु· । **मिलितेति** । शक्त्यादिसमुदितेत्यर्थ· । वैयर्थ्यमुपलक्षणम् । हेतुरित्येकवचनानुपपत्ते । तथा च समुदायाभिप्रायमेकवचनम् । हेतुत्वं च फलोपधायकत्वरूपं त्रिष्वेकरूपमित्यभिप्राय इत्याह—**तथेत्यादि** । उपधानं प्रयोजकत्वरूप. संबन्धः । दण्डेत्यादिदृष्टान्तेन तृणारण्यादिवद्वैकल्पिकहेतुत्वनिरास· । तेषामन्योन्यनिरपेक्षतया कार्योत्पत्तिप्रयोजकत्वेन समुदायस्य तथात्वविरहादिति । कारणतैव स्वरूपयोग्यतैव । मानाभावाद्दण्डादिष्वपि तथात्वापत्तेश्चेति भाव· ॥

---

१. 'तथा' सर्वेषु पुस्तकेषु. २. 'इति' ख पुस्तके नास्ति.

एवं कारणमुक्त्वा काव्यस्य लक्षणमाह—

**तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।**

निर्दोषत्वादिविशेषणविशिष्टौ शब्दार्थौ तत्काव्यमिति व्यवहर्तव्यौ । गुणस्य रसनिष्ठत्वेऽपि तद्व्यञ्जकपरं गुणपदम् । न त्वलंकारेऽतिव्याप्तिः । सालंकारत्वविशेषणानुपादानादिति न वाच्यम् । यतः क्वापीत्यनेनैतदुक्तम्—यत्सर्वत्र सालंकारौ शब्दार्थौ काव्यम्, क्वचित्स्फुटालंकारविरहेऽपि न काव्यत्वहानिः, नञोऽल्पार्थत्वात् । अल्पत्वस्य चात्रास्फुटत्व एव विश्रामात् । नीरसेऽप्यस्फुटालंकारे काव्यत्वमिष्टमेवेति ऋजुः पन्थाः । वयं तु पश्यामः—नीरसे स्फुटालंकारविरहिणि न काव्यत्वम् । यतो रसादिरलंकाराश्च द्वयं चमत्कारहेतुः । तथा च यत्र रसादीनामवस्थानं न तत्र स्फुटालंकारापेक्षा, अत एव ध्वनिकारेणोक्तम्—"अत एव रसानुगुणार्थविशेषनिबन्धनमलंकारविरहेऽपि छायातिशयं पुष्णाति । यथा—

'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥'

---

**लक्षणमिति** । लक्ष्यते इतरव्यावृत्ततया ज्ञायतेऽनेन लक्ष्यपदार्थ इति लक्षणम् । अनेन स्वं रूप्यतेऽनेनेति स्वरूपपदं प्रकाशस्थं व्याख्यातम् । तथा हि चमत्कृतिजनकीभूतं वर्णनं काव्यमित्युक्ते चमत्कृतिजनकतावच्छेदकरूपस्येष्टतावच्छेदकस्याज्ञानम् । तत्र प्रवृत्त्ययोगात् । तत्कथनं काव्यशिक्षारूपे ग्रन्थे क्रियत इत्यर्थः । प्रागुक्तस्य वर्णनात्मकलक्ष्यतावच्छेदकस्य शब्दार्थोभयाश्रितत्वात् । कविप्रौढोक्तिकल्पितत्वस्य चार्थ एव सद्भावात् । अर्थचित्रस्याभ्यर्हितत्वाच्च अर्थविशिष्टशब्दस्यैव तत्त्वानौचित्यादुभयोपादानम् । तत्र च 'नामरूपे' इत्यादौ वेदे, 'वागर्थाविव' इत्यादौ लौकिके प्रयोगे शब्दप्राथम्यात् शब्दोद्भवत्वाच्चार्थस्य शब्दप्राथम्यम् । तत्र शब्दप्रयोजनावैचित्र्ये शब्दः काव्यम् । अर्थप्रयोजनावैचित्र्येऽर्थः । उभयवैचित्र्ये द्वयमपि । न तु काव्यत्वमुभयपर्याप्तम् । योजनारूपस्यालंकारादिवैशिष्ट्यरूपस्य वा व्यासज्यवृत्तित्वायोगात् । 'एको न द्वौ' इतिवच्छ्लोकवाक्यं न काव्यमिति व्यवहारापत्तेश्च । उभयवैचित्र्ये काव्यद्वयमिति व्यवहारः स्यादिति चेन्न । विजातीयैकचमत्कृतिजनकत्वेनैकत्वस्यैव व्यवहारात् । 'काव्यमुच्चैः पठ्यते', 'काव्यं श्रुतमर्थो न ज्ञातः' इत्यादि व्यवहारश्च शब्दांशे नोपपन्न एव । अर्थमात्रवैचित्र्ये तु काव्यशब्दस्य शब्दमात्रपरतयोपपन्नः । 'काव्यं बुद्धम्' इत्यादिव्यवहारश्चार्थस्य काव्यत्वसाधको ज्ञेय इत्यलं विस्तरेण । **गुणस्येति** । जातावेकवचनम् । 'ये रसस्याङ्गिनो धर्माः' इत्यष्टमे रसनिष्ठत्वं गुणानां वक्ष्यते । **तद्व्यञ्जकेति** । 'मूर्ध्नि वर्गान्त्यगाः' इत्यादि वक्ष्यमाणवर्णयोजनापरमित्यर्थः । अतो नासभवः, नापि नीरसेऽव्याप्तिरिति भावः । **ऋजुरिति** । चमत्कृतिजनकत्वाभावात्काव्यत्वमयुक्तमित्यस्वरसोऽत्र सूचितः । 'अत एव' इत्या-

---

१. 'क्वचित्तु' ख-ग. २. 'श्लोकवाक्यं' ख. ३. 'बुद्ध' ख.

इत्यादौ । अत्र ह्यद्भुतरसानुगुणमेकचुलके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति ।" इति । नीरसे तु यदि न स्फुटोऽलंकारः स्यात्तत्किंकृतश्चमत्कारः स्यात् । चमत्कारसारं च काव्यमित्यवश्यं स्फुटालंकारापेक्षा । अनलंकृती पुनः क्वापी-त्यनेनाप्यस्फुटालंकारस्य क्वचिदेव काव्यत्वम्, यत्र रसादिः स्फुटः । न तु सर्व-त्रेत्येतदेव प्रतिपाद्यते । तस्मात्सालंकारत्वमात्रं न विशेषणम् । किं तु स्फुटालं-काररसान्यतरवत्त्वम् । न चैवमपि रसवत्यनलंकारे काव्यत्वप्रसङ्गो दोषाय, इष्टापत्तेः । यथोदाहृते 'मुनिर्जयति' इत्यादौ । यदि श्रद्धाजाड्येन तत्रापि न काव्यत्वक्षमा, तदा सालंकारत्वे सतीत्यपि पूरणीयमिति ।

स्फुटालंकारविरहे काव्यत्वं यथा—

'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥'

अत्र रूपकादीनामसंभव एव । अस्मीत्यस्य विभक्तिविपरिणामादस्तु दीप-

---

रभ्य 'मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति' इत्यन्तो ध्वनिग्रन्थः । छाया कान्तिः । चमत्कृतिरिति यावत् । एतदेवेति । अन्यथा हि सालंकाराविल्येव ब्रूयादिति भाव । उदाहरणं वृत्तौ तदर्थश्चोदाहरणचन्द्रिकायामस्मत्कृताया सविस्तरं द्रष्टव्य. ।

---

१. 'इति' ख-पुस्तके नास्ति. २. 'स्वाधीनपतिका काचिदसकृदुपभुक्तेष्वपि वरोप-करणादिषूत्कण्ठोत्पत्त्या तेषामत्यन्तोपादेयता सूचयन्ती सखीमाह—यः कौमारेति । अत्र हिशब्दस्य यद्यपीत्यर्थकतया अस्तिक्रियाध्याहारेण च य. कौमारहरो वरः स एव यद्यप्यस्ति, चैत्रक्षपास्ता एव यद्यपि सन्ति, उन्मीलितमालतीसुरभय. प्रौढा. कदम्बानिलास्ते च यद्यपि सन्ति, अस्मि च सैव यद्यप्यस्मि, तथापि तत्र रेवारोधसि तत्र वेतसीतरुतले तत्र सुरत-व्यापारलीलाविधौ चेत समुत्कण्ठत इत्यन्वय. । कौमार बाल्य परमरसिकतया तदवस्था-यामपि सभोगेच्छोत्पादनेन हृतवाञ्चोरितवानिति कौमारहरः । ततश्चाकृत्रिमप्रेमपात्रताप्रक-टनेनानुरागदार्ढ्यध्वननम् । व्रियते प्रियत्वेन स्वयमङ्गीक्रियत इति वरः । तेनोभयानुरा-गलाभ. । स एव । उपभुक्तान्यो नेत्यर्थ । चैत्रस्य क्षपा रात्रयस्ता एवेति पूर्ववत् । उन्मीलिता विकसिता या मालती तया सुरभय. शोभनगन्धा. । मालती च वासन्तीलता । न तु जातिः, चैत्रे तस्या असभवात् । प्रौढा रत्युद्दीपनादिप्रागल्भ्यशालिनः । अतो मन्द-त्वेऽप्यविरोध. । कदम्बस्य धूलीकदम्बाख्यपुष्पविशेषस्य सबन्धिनः, सर्वदिक्संचारित्वेन कदम्बाकारा वा अनिला वायव. । वसन्ते कदम्बान्तरस्यासभवात् । चोऽवधारणे । अत एवेत्यर्थ । अत्र च प्रौढा इति श्लिष्टविशेषणबलान्मालत्यनिलयोर्नायिकानायकत्वप्रतीति । चकारोऽप्यर्थो भिन्नक्रमः । अस्मीत्यहमर्थकमव्ययम् । अन्यथा सैवेत्यस्योद्देश्यालाभात् । सैवेत्यस्योत्कण्ठाहेत्ववस्थान्तर न प्राप्तेत्यर्थ. । तथापि एतेषामसकृदुपभोगेऽपि । तत्रेत्युपभुक्त इत्यर्थक सप्तम्यन्तं त्रितयेऽप्यन्वेति । तेन सुरतलीलाविधिरपि नान्यादृशो येन क्रीडास्था-नैक्येऽप्युत्कण्ठा स्यादिति व्यज्यते । रेवाया नर्मदाया रोधसि तीरे । वेतसीलता विशालतया

कमिति चेन्न। असीत्यस्याहमर्थकान्ययत्वात्। अत्रास्मि करोमीतिवत्क्रियापदत्वेऽपि न दीपकत्वम्। तदन्वयिनां सर्वेषामेव प्राकरणिकत्वात्। दीपकस्य तु प्राकरणिकाप्राकरणिकविषयत्वात्। सादृश्याप्रतीतेश्च न तुल्ययोगिता। समुच्चयोऽपि वक्ष्यमाणलक्षणो न संभवत्येव। अतादृशश्च न चारुत्वहेतुः। विशेषोक्तिविभावने विद्यमाने अपि न स्फुटे। कथमिति चेत्, इत्थम्—विशेषोक्तिस्तावत्कारणसत्त्वेऽपि कार्याभाववचनम्। अत्र चानुत्कण्ठाकारणं वरोपकरणयोरुपभुक्तता। तत्सत्त्वे यद्यप्यनुत्कण्ठाभाव उत्कण्ठारूपो निर्दिष्ट एव, तथापि नानुत्कण्ठाभावत्वेन, किं तूत्कण्ठात्वेनैव। तस्मादस्फुटत्वमस्याः। यदि चेतोऽनुत्कण्ठितं नेत्यभिधीयेत तदा स्फुटत्वं भवेत्। एवं कारणाभावेऽपि कार्योत्पत्तिवचनं विभावना। अत्र चोत्कण्ठाकारणं वरोपकरणयोरतत्ता। तदभावश्च यद्यप्युक्त एव तथापि नातत्ताविरहत्वेन, किं तु तत्तारूपेणैव। अभावाभावस्य तत्त्वात्। अतोऽस्या अस्फुटत्वमेव। न च स एवेत्येवकारेणातत्ताभावप्रतीतेरतत्ताभावत्वेन प्रतीतौ कथमस्फुटत्वमिति वाच्यम्। विशेषणसंगतेनैवकारेण विशेष्ये विशेषणायोगस्य व्यवच्छेदो हि प्रत्याय्यते, न तु विशेषणाभावाभाव एवाहत्य। पर्यवसानं तु तत्रेत्यस्फुटत्वमेव। एवं विशेष्यसंगतेनाप्येवकारेण विशेष्यभिन्ने विशेषणाभाव एव नाहत्य प्रत्याय्यते, किं तु विशेषणयोगाभाव

---

इवाद्यभावेनोपमाया असंभवः स्पष्ट इति रूपकादीनामित्युक्तम्। **अत्रास्मीति**। अन्यत्र 'यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः' इति वक्ष्यमाणोदाहरणवदित्यर्थः। **सादृश्येति**। तद्गमकतयैव तस्याश्चमत्कारित्वेनालंकारत्वादित्यर्थः। **वक्ष्यमाणेति**। एकस्मिन्कार्येऽनेककारणोक्तिरित्येके। गुणक्रियायौगपद्यात्मा चापरो वक्ष्यते। स तु नात्रेत्यर्थः। अतत्तानुपभुक्तता। विशेषणायोगस्य विशेषणसंबन्धाभावस्य[1]। **एवं विशेष्येति**। वस्तुतस्तु तत्तैवात्र विशेषणमिति प्रसङ्गाद्विशेष्यसंग-

---

लतान्तराश्रयत्वेन च तरुः। तद्वेष्टितो वान्यस्तरुः। तस्य तलमधोदेशस्तस्मिन्। सुरतानुकूलव्यापाररूपा या लीला कुसुमाभरणादिप्रसाधनादिरूपा स्मिताश्लेषचुम्बनादिरूपा वा तस्या विधौ संपादने चेतोऽन्तःकरणं समुत्कण्ठत उत्सुकं भवतीत्यर्थः। अत्र वरोपकरणादीनामनुपभुक्तत्वस्य प्रसिद्धस्य कारणस्याभावेऽपि तत्कार्यस्योत्कण्ठारूपस्योत्पत्तिकथनरूपा विभावनालंकारः। वरोपकरणादीनामत्यन्तोपादेयत्वस्याप्रसिद्धस्य कारणस्य विभावनात्। अस्फुटत्वं चानुपभुक्तत्वाभावेनाकथनात्। एवमसकृदुपभुक्तत्वरूपकारणसत्त्वेऽप्यनुत्कण्ठारूपकार्यस्याभावकथनाद्विशेषोक्तिरप्यलंकारः। पूर्वत्रानुपभुक्तत्वरूपकारणाभावत्वेनाकथनादिहाप्यनुत्कण्ठारूपकार्याभावेनाकथनादस्फुटालंकारोदाहरणत्वम्। पार्यन्तिकास्वादहेतुश्चात्र विप्रलम्भः। स्वाधीनपतिकाया अपि क्रीडास्थानाप्राप्त्यादिना सुरतप्रतिबन्धे तत्संभवात्। सविसर्गगुरुरेफानुप्रासो विप्रलम्भीयमाधुर्याननुगुणत्वादचमत्कारित्वेनास्फुटः। एवं चैत्रक्षपाः प्रौढा इत्येतन्मध्यगतत्वादुन्मीलितमालतीत्यस्याप्यस्फुटतेति।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'विशेषणासंबन्धा-' ग.

एवाहत्य । पर्यवसानं तु तत्रेत्यस्फुटत्वमेव । एवं विशेष्यसंगतेनाप्येवकारेण विशेष्यभिन्ने विशेषणभाव एव नाहत्य प्रत्याय्यते, किं तु विशेषणयोगाभाव इति द्रष्टव्यम् । अत एव 'शङ्खः पाण्डुर एव' इत्यादौ 'नापाण्डुरः', 'पार्थ एव धनुर्धरः' इत्यादौ च 'नान्यो धनुर्धरः' इत्यादिः कदाचित्स्फुटत्वार्थं प्रयुज्यते । दण्ड्यप्याह—'त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केनचित्' इति । अन्यथा पुनरुक्तिस्तत्र स्यादिति । अनयोरस्फुटत्वे च संदेहरूपसंकरोऽप्यनयोरस्फुट इति विभावनीयम् । शृङ्गाररूपरसस्य स्फुटत्वाद्रसवदलंकारः स्फुट इति चेन्न । रसस्यात्र प्राधान्यात् । अप्राधान्य एव तस्यालंकारत्वोपगमात् ।

अर्वाचीनास्तु—"यथोक्तस्य काव्यलक्षणत्वे काव्यपदं निर्विषयं प्रविरलविषयं वा स्यात् । दोषाणां दुर्वारत्वात् । तस्मात् 'वाक्यं रसात्मकं काव्यम्' इति तल्लक्षणम् । तथा च दुष्टेऽपि रसान्वये काव्यत्वमस्त्येव । परं त्वपकर्षमात्रम् । तदुक्तम्—

'कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ॥' इति ।

एवं चालंकारादिसत्त्वे उत्कर्षमात्रम् । नीरसे तु चित्रादौ काव्यव्यवहारो गौणः" इत्याहुः ॥

अथास्य भेदांस्तल्लक्षणानि चाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥ ४ ॥**

---

तैवकारार्थप्रदर्शनं बोध्यम् । **संदेहेति** । वरोपकरणादेरत्यन्तरमणीयताया रसोद्बोधजनिकाया उभयथापि सिद्धिरिति भावः । **रसवदलंकार इति** । वस्त्वलंकाररसरूपस्य त्रिविधस्यापि व्यङ्ग्यस्य वाच्योपस्कारकतयालंकारत्वमेवेति भामहोद्भटप्रभृतिचिरंतनालंकारिकमतेनेयं शङ्का । अर्वाचीना इत्यस्वरससूचनम् । तद्बीजं तु—वस्त्वलंकारप्रधानेषु काव्येषूक्तलक्षणस्याव्याप्तिः । न चेष्टापत्तिः । महाकविसंप्रदायभङ्गप्रसङ्गात् । लक्ष्यानुसारेण हि लक्षणव्यवस्था, न तु वैपरीत्येन । वर्णितानि च महाकविभिर्जलप्रवाहवेगादीनि कपिबालादिचरितानि चेति । यत्तु दोषरहितं काव्यं दुर्लभमिति 'न्यक्कारो ह्ययं' इत्यादौ, 'तथाभूतां दृष्ट्वा' इत्यादौ काव्यत्वं सर्वानुभवसिद्धं नोपपद्यत इति, तत्रोच्यते—दोषत्वं ह्युद्देश्यप्रतीतिप्रतिबन्धकत्वम् । तच्चानुभवबलात्तत्तद्व्यङ्ग्यवाच्यवैचित्र्यप्रतीतिविरहविशिष्टदोषस्य तद्भानस्य चेति 'न्यक्कारः' इत्यादौ विशिष्टाभावसंभवान्न काव्यत्वक्षतिः । यस्य च न व्यङ्ग्यवैचित्र्यप्रतीतिस्तं प्रति दुष्टत्वाभिप्रायेण तदुदाहरणम् । अत एव 'वक्त्राद्यौचित्यवशाद्दोषोऽपि गुण क्वचित्' इति[१] वक्ष्यते । तथा अप्रतीतत्वं तच्छास्त्रज्ञं प्रत्यदोषः, अन्यं प्रति तु दोष इति 'कीटानुविद्ध—' इत्यस्यापि रसादिवैचित्र्ये दुष्टस्यापि काव्यत्वम् । विशिष्टदोषविरहादिति तात्पर्यमिति दिक् ॥

**अथेति** । सामान्ये ज्ञाते विशेषजिज्ञासोदयादिति भावः । प्रकाशे भेदपदं भाव-

---

१ साहित्यदर्पणकारादय इत्यर्थः.　२. 'कीटादिविद्ध' क.

इदं काव्यं वाच्यादतिशयिन्यधिकचमत्कारकारिणि व्यङ्ग्ये उत्तमम् । पटादिभिः पदैः स्फोटरूपं शब्दब्रह्म व्यज्यते । तस्मादभिव्यक्तादर्थप्रत्ययः । तादृशस्य स्फोटव्यञ्जकस्य पटादिशब्दस्य ध्वनिरिति संज्ञेति वैयाकरणानां सिद्धान्तसरणिः । अतः प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद्गुणीभूतवाच्यं यद्व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्योत्तमकाव्यस्य बुधैर्ध्वनिपण्डितैर्ध्वनिरिति संज्ञा कृता । यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

---

करणव्युत्पत्तिभ्यां विभागविशेषलक्षणोभयपरं व्याख्यातम् । उत्तमस्य ध्वनिसंज्ञायां हेतुमाह—**पटादिभिरिति** । पटशब्देन पूर्वपूर्ववर्णसंस्कारसहकृतोऽन्त्यवर्ण एवोच्यते । पद्यतेऽनेनेति व्युत्पत्तेः । **स्फोटेति** । स्फुटयत्यर्थमिति स्फोटः । स च तावद्वर्णोपाध्यनुगतब्रह्मरूप इत्यर्थः । तदभिव्यक्तिश्च तद्विषयाज्ञाननिवृत्तिः । **मुख्यार्थ-**

---

१. 'युगलस्योत्तम' ख-ग. २ 'नायकानयनाय प्रेषिता त संभुज्यागता दूतीं प्रति विदग्धोत्तमनायिका स्नानकार्यत्वप्रतिपादनमुखेन संभोगचिह्नान्युद्घाटयितुमाह—**निःशेषेति** । अयि मिथ्यावादिनि बान्धवजनस्याज्ञातपीडागमे दूति, इतो वापीं स्नातु गतासि न पुनस्तस्याधमस्यान्तिकम् । यतस्तव स्तनतटं निःशेषच्युतचन्दनमित्याद्यन्वयः । मिथ्यावादिनि मया गत्वा बहुधा प्रसादितोऽपि नागत इति मिथ्याभाषणशीले । बान्धवजनस्य मद्रूपस्याज्ञातः स्वार्थपरायणतयानाकलितः पीडाया आगम आगमनं यया तथाविधे । दूति, न तु सखि । तेन मिथ्याभाषणशीलत्वस्य योग्यता व्यज्यते । इतो ममान्तिकाद्वापीं प्रति स्नानाय गतासि । स्नानकालानतिक्रमलोभात् । पुनरिति पुनरेवार्थे । नैवेत्यर्थः । तस्य बहुधा कृतापराधस्य । अत एवाधमस्य परवेदनानभिज्ञतया दुःखप्रयोजककर्मशीलस्य । अन्तिकं समीपं गतासीत्यनुषङ्गः । उक्तार्थे साधकमाह—**निःशेषेत्यादि** । तवेत्यस्य स्तनतटादिभिः सर्वैरन्वयः । यतस्तव स्तनयोस्तटं प्रान्तसमदेशः । निःशेषं च्युतं स्खलितं चन्दनं यस्मात्तथाभूतम् । न तु स्तनसंध्यादि । वापीगतबहुलयुवजनत्रपापारवश्यादसद्व्यलज्जाग्रस्वस्तिकाकृतिभुजलतायुगलेन तटस्यैवोन्नततया मुहुः परामर्शात् । अत एव च्युतमित्युक्तम्, न तु क्षालितमिति । युवजनसंमर्देन तत्राप्यनवकाशात् । व्यङ्ग्यपक्षे तु—मर्दनाधिक्यात्तटमेव तथाभूतमिति व्यक्तमेव । एवमधरो निर्मृष्टरागः निःशेषं मृष्टो रागो यस्य स तथा । उत्तानत्वेन बहुलजलसंबन्धात् । न तूत्तरोष्ठः । न्युब्जतया तत्संबन्धमान्द्यात् । व्यङ्ग्यपक्षे तु—चुम्बनकृतं तथात्वमिति । किं च, नेत्रे दूरमुपरिभाग एवानञ्जनेऽञ्जनरहिते । स्नानकाले मुद्रणान्मध्ये जलसंसर्गाभावात् । व्यङ्ग्यपक्षेऽपि प्रान्त एव चुम्बनविधानादनञ्जनत्वम् । तथा इयं तव तनुस्तन्वी कृशा । अत एव शीतवशात्पुलकिता पुलका रोमोद्गमाः संजाता अस्याः सा तथाभूता । व्यङ्ग्यपक्षे तु—सुरतरससरणात्पुलकोद्गमः । एवं विदग्धाया गूढ-

अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते । नन्वत्र मुख्यार्थबाधाद्विपरीतलक्षणया तदन्तिकमेव गतासीति लक्ष्यमेव युज्यते, न तु व्यङ्ग्यम् । अन्यथा 'साहेन्ती' इत्यादिवक्ष्यमाणलक्षणामूलव्यञ्जनोदाहरणेऽपि विपरीतलक्षणा न स्यात् । विशेषाभावादिति । अत्र केचित्—'सत्यमत्र विपरीतलक्षणा । वृत्तिग्रन्थस्तु तदन्तिकमेव गतासीत्यत्र लक्ष्यत इति शेषकल्पनया योजनीयः । व्यज्यत इति रन्तुमित्यनेनैवान्वीयते' इत्याहुः । परमार्थतस्तु न खलु मुख्यान्वयायोग्यत्वं स्वरूपसल्लक्षणायां बीजम्, किं तु ज्ञातम् । तथा च यत्र सख्यादेः प्रसाध्य(ध्य) कामुकासंभोगः प्रमाणान्तरेण श्रोतुः प्रतीतिमुपगतस्तत्र मुख्यार्थबाधादस्तु लक्षणा । तदभिप्रायेणैव 'साहेन्ती सहि सुहअं', 'उपकृतं बहु नाम' इत्युदाहृतम् । यत्र तु प्रमाणान्तरं न तज्ज्ञापकमवतरति तद्वाक्यजनितप्रत्ययमहिम्नैव तु तत्प्रत्ययस्तत्र कथं लक्षणा । बाधाभावात् । उत्पन्नेऽपि वाक्यार्थबोधे भवन्नपि बाधोऽकिंचित्कर एव । तदभिप्रायेण वापीं स्नातुमित्युदाहृतम् । अत एवोक्तं 'अधमपदेन व्यज्यते' इति । अत एव च यत्र सख्यादेस्तादृशत्वं न प्रमाणान्तरेणावगतं तत्र न 'साहेन्ती' इत्यादौ विपरीतलक्षणा, व्यङ्ग्यार्थप्रतीतिर्वा । वापीं स्नातुमित्यादौ तु बाधानवतारेऽप्यधमपदार्थपर्यालोचनाया यथोक्तव्यङ्ग्यं प्रतीयत एव । इत्येव प्राधान्यमधमपदस्य ।

---

**बाधादिति** । वापीस्नानगमनरूपवाच्यार्थबाधादित्यर्थः । अध्याहारोऽन्वयक्लेशो व्यङ्ग्यस्य लक्षणामूलत्वादधमपदेनेत्युक्तेरसामञ्जस्यं चेत्यरुचि केचिदित्यत्र बोध्या । प्रसाध्यो(ध्यो) नायिकाभिमुखीकार्यः । तज्ज्ञापक बाधकज्ञापकम् । **बाधाभावादिति** । वाक्यार्थबोधात्प्रागित्यादि । अत एव एवमभिप्रायादेव । अन्यथा लक्षणयैव प्रयोजनीभूतव्यङ्ग्यप्रतीतेरिति भावः । अत एव ज्ञातस्यैव बाधस्य लक्षणाबीजत्वादेव । तादृगत्वं कामुकोपभुक्तत्वम् । इत्येव प्राधान्यं इतरनिरपेक्षनियतव्यञ्जकत्वरूपम् ।

---

तात्पर्यवाचोयुक्त्या साधारणेष्वेतेषु वाक्यार्थेष्ववगतेषु विदग्धोत्तमनायिकात्वदु शीलत्वादिरूप-वक्तृबोद्धव्यवैशिष्ट्यबलादधमपदार्थो दुःखप्रयोजककर्मशीलत्वरूपः साधारणो वाच्यतादशाया तादृशकर्मान्तरशीलत्वरूपेणावस्थितो व्यञ्जनया दूतीसंभोगरूपतादृशकर्मशीलत्वाकारेण पर्यवस्यति । अत एव झटिति व्यङ्ग्यबोधकत्वादधमपदस्य प्राधान्यम् । वक्तृबोद्धव्यवैशिष्ट्यबलेन विशेषाकारेण पर्यवसाने विलम्बाभावात् । चन्दनच्यवनादीना तु स्नानकार्यतया निबद्धाना योग्यतया संभोगाङ्गभूताश्लेषचुम्बनादिकार्यताप्रतिसंधाने सति तद्व्यञ्जनद्वारा संभोगगमकत्वमिति विशेषः । अत्र च त्वय्यकृतशाया यद्वान्धवबुद्ध्या विश्वसिमि, यच्च तत्रैवंविधे दृढमनुरक्तासि तद्युक्तमेव ममैवंविधविविधवञ्चनाजनितपरितापपात्रत्वमितीर्ष्याहेतुकविप्रलम्भसञ्चारिनिर्वेदध्वनिः । तदनुगुणश्च दूतीसंभोगः । चन्दनच्यवनादीनां च वाच्यानां व्यङ्ग्याना च परिरम्भचुम्बनाद्यनुभावाना संभोगोत्कर्षद्वारेणेर्ष्योत्तेजकाना निर्वेदोत्कर्षत्वमिति ।' इत्युदाहरणचन्द्रिकासंक्षेपः ।

तस्मात् 'साहेन्ती' इत्यादौ यदि व्यञ्जना तदा लक्षणामूलैव। वापीं स्नातुमित्यादौ तु न नियमः॥

## अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।

अतादृशि वाच्यादनतिशायिनि अतिशयितचमत्कारानाधायके व्यङ्ग्ये मध्यमं काव्यम्। तद्गुणीभूतव्यङ्ग्यम्। कथितमित्यनुषज्यते। अत्र व्यङ्ग्ये स्फुटव्यङ्ग्य इत्यर्थः। तेन नाधमकाव्यातिव्याप्तिरिति केषांचिन्मतमयुक्तम्। 'अगूढमपरस्याङ्गं' इत्यादिना गुणीभूतव्यङ्ग्यप्रभेदत्वेन प्रतिपिपादयिष्यमाणस्यास्फुटव्यङ्ग्यस्यासंग्रहापत्तेः। किं त्वस्फुटतरातिरिक्तव्यङ्ग्यपरं व्यङ्ग्यपदम्। गुणीभूतव्यङ्ग्ये चास्फुटमात्रं व्यङ्ग्यम्। अधमकाव्ये त्वस्फुटतरम्, तद्विरह एव वेति न काचिदनुपपत्तिः। उदाहरणम्—

'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥'

अत्र वञ्जुललतागृहे दत्तसंकेता तरुणी न गतेति व्यङ्ग्यम्। तच्च गुणीभूतम्। तदपेक्षया वाच्यस्यैव चमत्कारित्वात्। यतः पश्यन्त्या नितरां मुखच्छाया मलिना भवतीत्यनेन दर्शनकाल एव तत्कार्यं मालिन्यं तस्यातिशयः संतन्यमानता चेति वाच्यं प्रतीयत इति।

## शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्॥ ५॥

---

एतेन प्राधान्येनेत्यधमपदेनान्वितमिति दर्शितम्। **लक्षणामूलैवेति**। गमकान्तराभावादित्यर्थः। **न नियम इति**। लक्षणानवतारेऽप्यधमपदेनैव व्यञ्जनसंभवादिति भावः॥

**वाच्यस्यैवेति**। व्यङ्ग्य तु न तत्सिद्ध्यङ्गम्। वाच्यमेव तु विप्रलम्भपोषकतया चमत्कारे प्रधानमिति भावः। संतन्यमानता चिरकालानुवृत्तिः। सा च भवतीति

---

१. 'चास्फुटव्यङ्ग्यमात्रं व्यङ्ग्यम्' ख. २ 'ग्रामतरुणं मुहुः पश्यन्त्यास्तरुण्या मुखच्छाया नितरां मलिना भवतीत्यन्वयः। ग्रामे एक तरुणम्। तेन दुर्लभत्वसूचनम्। मुहुर्वारंवारम्। जनताभयेन दर्शने सातत्यासंभवात् पश्यन्त्या भवतीति वर्तमाननिर्देशाभ्यां दर्शनमलिनीभावयोरविरामः सूच्यते। जनकीभूतदर्शनसमकालतया कार्यस्य मुखच्छायामालिन्यस्य कथनादतिशयोक्तिरलंकारः। तरुण्या इति द्वयोस्तरुणत्वोक्त्या परस्परानुरागोत्कर्षो व्यज्यते। छाया कान्तिः। नितरामतिशयेन। नवेत्यादि मलिनीभावोपपादकं तरुणविशेषणम्। नवा नूतना वञ्जुलस्याशोकस्य मञ्जरी तया सनाथो युक्तः करो यस्य तथाभूतम्। एवं च संकेतनिकेतनचिह्नहस्तनायकदर्शनकृतमालिन्यं विषादरूपव्यभिचारिभावोत्कर्षव्यञ्जनमुखेन विप्रलम्भाभासं पुष्णातीति तदेवातिशयम्, न तु तद्व्यङ्ग्य संकेतस्थानागमनमिति गुणीभूतव्यङ्ग्योदाहरणत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र चित्रमित्यध्याहार्यम्। तेनाऽव्यङ्ग्यं काव्यमवरमधमम्। तच्चित्रमिति कथितमित्यर्थः। अव्यङ्ग्यं अस्फुटतरातिरिक्तव्यङ्ग्यरहितम्। तादृशं चास्फुटतर व्यङ्ग्यसद्भावे व्यङ्ग्यमात्राभावे वा चित्रं गुणालंकारयोगि। शब्दचित्रं यथा—

'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः।
भिन्द्यादुद्यदुदारदर्दुरदरी दीर्घादरिद्रद्रुम-
द्रोहोद्रेकमयोर्मिमेदुरमदा मन्दाकिनी मन्दताम्॥'

वृत्त्यनुप्रासोऽत्र शब्दालंकारः। ननु कथमेतदव्यङ्ग्यमुच्यते। मन्दाकिनीविषयायाः प्रीतेरभिव्यक्तेः। किं च नास्त्येव स काव्यार्थो यस्य न व्यञ्जकत्वम्। अन्ततो विभावत्वेनापीति चेत्, सत्यम्। किं तु तदव्यङ्ग्यमस्फुटतरम्।

---

वर्तमाननिर्देशात्, मुहुर्मलिना भवतीत्यन्वयाच्चेति ज्ञेयम्। **अध्याहार्यमिति**। चित्रसामान्योक्त्यनन्तरमेव तद्विभागकथनौचित्यादिति भाव.। **वृत्तीति**। 'छेकवृत्तिगतो द्विधा' इति नवमेऽनुप्रासद्वैविध्योक्तेरयं वृत्त्यनुप्रास उच्यत इत्यर्थ·। **विभावत्वेनापीति**। चमत्कारनैयत्येनाद्भुतस्यालम्बनत्वे तद्व्यञ्जकत्वस्यावश्यभावादित्यर्थ। **अस्फुटतरमिति**। उद्भटानुप्रासचमत्कारेण पुर स्फूर्तिकेन व्यङ्ग्यस्या-

---

१ 'मन्दाकिनी वो मन्दतामह्नाय भिन्द्यादिति योजना। मन्दाकिनी स्वर्गङ्गा। मन्दस्य भावो मन्दताज्ञानम्। पापमित्यन्ये। पापेनापकृष्टतामित्यपरे। अह्नाय झटिति भिन्द्यान्नाशयत्विल्याशी। सजातीयान्तरादुत्कर्षप्रतिपादक मन्दाकिनीविशेषणमाह—स्वच्छन्देत्यादि। स्वच्छन्दमुच्छलदच्छ कच्छकुहरे छातेतरद्यदम्बु तस्य च्छटया मूर्च्छन्मोहो येषा तैर्महर्षिभिर्हर्षेण विहिते स्नानाह्निके यस्यामिति विग्रह। स्वच्छन्दं स्ववशम्। न तु वातादिपरतन्त्रम्। तेन जलबाहुल्याद्गाम्भीर्याभिव्यक्ति। स्वस्य च्छन्दोऽभिप्राय इच्छा यत्र तथोच्छलदिति क्रियाविशेषण वा। स्वस्य छन्देनोच्छलदिति वा। अच्छ निर्मलम्। कच्छस्य जलप्रायदेशस्य कुहरे तरङ्गकृते बिले छाताद्दुर्बलादितरत्। वेगातिशयेन बलवदित्यर्थः। इतरान्तमम्बुच्छटाविशेषणम्। अम्बुनश्छटा परम्परा। मूर्च्छन्नश्यन्मोहोऽज्ञानम्। अत एव हर्ष। स्नातस्य प्राधान्यात्पृथगुपन्यास·। यद्वाह्निकबहिर्भूतस्यापि स्नानस्य लाभाय सः। एवं महर्षिसेवितत्वेन तीर्थान्तराद्व्यतिरेक प्रतिपाद्य नद्यन्तरादुत्कर्ष स्वभावकृत प्रतिपादयितु पुनर्विशिनष्टि—उद्यदित्यादिना। उद्यन्त· प्रकाशमाना उदारा महान्तो दर्दुरा भेका यासु एवंविधा दर्यः कंदरा यस्या सा तथाभूता। तरङ्गाभिघातैरुपरिभागभञ्जेन तासा प्रकाशनात्। तथा दीर्घा आयता अदरिद्राः शाखादिबाहुल्येनाकृशा ये द्रुमास्तेषा मदन्यो दीर्घ इति द्वेषाद्रोहः पातन तेनोद्रेक आधिक्य तन्मयास्तद्युक्ता ऊर्मयस्तरङ्गास्त एव मेदुरो निबिडो मदो गर्वो यस्या· सा तथा। 'महोर्मि' इति पाठे तेनोद्रेको येषामेवंविधा ये महोर्मय इति व्याख्येयम्। अनुप्रासोऽत्र शब्दालकार काव्यजीवातुः। अत एव शब्दचित्रोदाहरणम्। सतोऽपि व्यङ्ग्यस्य मन्दाकिनीविषयरतिभावस्य मुखतश्चमत्कारित्वाभावेनास्फुटत्वात्।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'तराम्भश्छटा' ग.

यद्वा तत्र न कवेस्तात्पर्यम् । अनुप्रासमात्र एव तस्य संरम्भात् । तात्पर्यविषयीभूतव्यङ्ग्यविरहवत्त्वमेवाव्यङ्ग्यपदेन विवक्षितम् । यदुक्तं ध्वनिकृता—

'रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो यः स चित्रविषयो मतः ॥' इति ।

अत्र पक्षे मध्यमकाव्यलक्षणे व्यङ्ग्यपदं विवक्षितव्यङ्ग्यपरं द्रष्टव्यम् । अर्थचित्रं यथा—

'विनिर्गतं[1] मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥'

अत्रोत्प्रेक्षार्थालंकारः । परं तु रसादौ कथं तात्पर्यविरहोऽस्फुटतरत्वं वा तत्र ज्ञायते । हयग्रीवस्य वर्णनीयतया तत्प्रभावस्य स्फुटं प्रतीतेः । मदीयं तु पद्यमुदाहरणीयम्—

'मध्येव्योम स्फुरति सुमनोधन्विनः शाणचक्रं
मन्दाकिन्या विपुलपुलिनाभ्यागतो राजहंसः ।
अह्नश्छेदे त्वरितचरणन्यासमाकाशलक्ष्म्याः
संसर्पन्त्याः श्रवणपतितं पुण्डरीकं मृगाङ्कः ॥'

अत्र रूपकमर्थालंकारः । तन्मात्रे तात्पर्यम्, न तु रसादौ ॥

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे काव्यलक्षणनिर्णयः प्रथम उल्लासः ॥

---

च्छादनादिति भावः । विवदमानं प्रति परिहारान्तरमाह—**यद्वेति** । चमत्कारित्वेन न तात्पर्यमित्यर्थः । संरम्भ उद्यमः । वस्तुतस्तु चमत्कृतेऽपि व्यङ्ग्ये कदाचित्कवेरतात्पर्यसंभवादतिप्रसङ्ग इति प्रथम एव पक्षः साधुरिति बोध्यम् । **रसादाविति** । हयग्रीवगते वीररसे तद्विषयस्तुतौ वेत्यर्थः । वीररसस्य हयग्रीव आलम्बनमिति केषाञ्चिदुक्तेरभिप्रायं न विद्मः । इन्द्राद्यालम्बनो हि हयग्रीवगतो वीररस इति वक्तुमुचितम् । **मध्य इति** । व्योममध्य इत्यर्थः । शाणचक्रं शस्त्रतैक्ष्ण्यजनकपाषाणचक्रम् । पुलिने तीरेऽभ्यागत इत्यर्थः । छेदे समाप्तौ । रूपकं मालारूपकम् ॥
इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृतायां प्रदीपप्रभायां प्रथम उल्लासः ॥

---

१. 'हयग्रीवाख्यो दैत्यो विष्णुना हत इति कथाश्रिते हयग्रीववधे नाटके (काश्मीरकमेण्ठकविप्रणीते महाकाव्ये) हयग्रीववर्णनप्रस्तावे पद्यमेतत् । यं प्रकृतं हयग्रीवं शत्रूणां मानं द्यति खण्डयति, मित्राणां ददातीति मानदस्तथाभूतम् । आत्मनो मन्दिराद्गृहात्, न तु नगरात् । यदृच्छया स्वेच्छयापि, न तु युयुत्सया । विनिर्गतं निःसृतम्, न तु प्रस्थितम् । उपश्रुत्य कर्णाकर्णिकया श्रुत्वा, न तु दूतमुखात् । ससंभ्रमेण सभयेनेन्द्रेण अव्याहतैश्वर्येण दौवारिकाह्वानविलम्बासहतया स्वयमेव द्रुतं शीघ्रं पातिता यथाकथञ्चिन्निक्षिप्ता, न तु विस्रब्धं निहिता अर्गला द्वारपिधानकाष्ठं यस्यां सा तथाविधा अमरावती भिया निमीलिते संकुचिते अक्षिणी यया सा तथाभूतेव भवतीत्यन्वयः । उपश्रुत्येति पातनक्रियया समान-

द्वितीय उल्लासः ।

अथ काव्यलक्षणपदार्थेषु स्वरूपलक्षणादिभिर्विवेक्तव्येषु शब्दार्थयोः प्राधान्यात्प्रथमं तयोः स्वरूपं निरूपयिष्यन्विभागमाह—

**स्याद्वाचिको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

शास्त्रे व्यञ्जकः शब्दो न प्रसिद्ध इत्यत उक्तमत्रेति । अत्रेति काव्ये ।

शब्दस्वरूपमप्रतिपाद्यैव लाघवादर्थं विभजते—

**वाच्यादयस्तदर्थाः स्युस्तात्पर्यार्थोऽपि केषुचित् ॥ १ ॥**

वाच्यादयो वाच्यलक्ष्यव्यङ्ग्या क्रमेण तेषां वाचकादीनामर्थाः स्युः । केषुचिन्न्यायादिनयेषु । न तु मीमांसकादिमतेष्वपि । लाघवात्पदानां पदार्थमात्रे शक्ति, न त्वन्वयांशेऽपि । गौरवादन्यलभ्यत्वाच्च । तदंशो हि तात्पर्यार्थो वाच्याद्यर्थविलक्षणशरीर आकाङ्क्षायोग्यतासत्तिवशादपदार्थोऽपि प्रतीयते । न चापदार्थप्रतीतावतिप्रसङ्गः । स्वरूपसतः शक्यान्वयत्वस्य नियामकत्वात् । इत्यभिहितान्वयवादिनां मतम् ।

अन्वयरूपे वाक्यार्थेऽपि पदार्थानां शक्तिः । व्यवहारेणान्वितस्यैवोपस्थापनात्तत्रैव शक्तिग्रहात् । किं चान्वयभागस्याशक्यत्वेऽनुभवविषयत्वं न स्यात् । तद्विषये शक्यत्वस्य प्रयोजकत्वात् । अशक्यस्याप्यनुभवप्रवेशेऽतिप्रसङ्गात् । इत्यन्विताभिधानवादिनां मतम् ।

---

**अथेति** । काव्यलक्षणतद्विशेषकथनानन्तरमित्यर्थ । पदार्थेषु दोषाभावादिषु । स्वरूपं विभाग । आदिना दोषगुणादिव्यवस्थादिसग्रह । प्राधान्याद्विशेष्यत्वरूपात् । स्वं रूप्यतेऽनेनेति स्वरूपं लक्षणम् । विभागोत्तरं लक्षणाभिधानस्य सांप्रदायिकत्वादिति भाव. । **लाघवादिति** । विभागप्रकरणैक्ये लाघवादित्यर्थ. । **न्यायादीति** । आदिना वैशेषिकभाट्टनयसंग्रह. । मीमासका' प्राभाकरा अभिमता । तात्पर्यार्थं निरूपयति—**लाघवादित्यादिना** । अन्यलभ्यत्वमेव दर्शयति—**तदंशो हीति** । तात्पर्यस्यार्थो विषय । वाच्याद्यर्थविलक्षणं संसर्गतारूपं शरीरं यस्य स । **अतिप्रसङ्ग इति** । पदवृत्त्यविषयस्यापि शाब्दबोधविषयत्वे कथचिदुपस्थितस्य गगनादेरपि तद्विषयत्वापत्तिरित्यर्थ । **शक्यान्वयत्वस्येति** । वृत्तिविषयान्वयस्येत्यर्थ । नियामकत्वात् वृत्त्यविषयस्य शाब्दबोधविषयतायां प्रयोजकत्वात् । तथा चाकाशादेरतथात्वान्न शाब्दधीविषयत्वमित्यर्थः । नन्वन्वितस्योपस्थितावप्यन्वयस्यान्यलभ्यत्वात्केवलपदार्थ एव शक्तिग्रहः स्यादत आह—**किं चेति ।** शक्यत्वस्येति वृत्तिविषयत्वोपलक्षणम् । तथा च तच्छाब्दत्वावच्छिन्नं प्रति वृत्त्या

---

फर्तृकत्वमाश्रित्य बोध्यम् । अत्रामरावतीति स्त्रीप्रत्ययकृतस्त्रीत्वाध्यवसायमूलोत्प्रेक्षार्थालंकारश्चमत्कारविश्रामभूमिरित्यर्थचित्रोदाहरणत्वम् । वीररसस्य तु मुखतश्चमत्कारित्वाभावान्नीरसत्वम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'शक्तिव्यवहारेण' क.

व्यञ्जकत्वं न केवलं शब्दस्य, किं तु तदर्थस्यापि । तत्रापि नैकतरस्य, किं तु सर्वस्यापीत्यभिधादिवैधर्म्यसिद्ध्ये प्रतिपादयति—

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

अत्र वाच्यस्य यथा—

'माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमे अ ण वासरो ठाई ॥'

अत्र वाच्येनैवार्थेन वक्तृवैशिष्ट्यात्स्वैरविहारार्थित्वम्, गृहोपकरणत्वादिना चावश्यविधेयत्वादिकं व्यज्यते ।

तदीयपदज्ञानत्वेन हेतुत्वात्संसर्गेऽपि शक्तिरावश्यकीत्यर्थः । अत्र प्रकारताविशेष्यतान्यतरसंबन्धेन शाब्दबोधे वृत्तिविषयत्वम् । संसर्गतया तस्मिन्नाकाङ्क्षादिसहकृततात्पर्यमात्रं प्रयोजकमित्येतावतानतिप्रसङ्गादन्यलभ्ये संसर्गे न शक्तिकल्पनं युक्तमित्यस्वरसः । स च 'वादिनः' इत्येकवचनेन प्रकाशे ध्वनित इति ज्ञेयम् । यत्तु पदेनैवान्वयग्रहे वाक्यवैफल्यम्, अगृहीतग्राहित्वरूपप्रामाण्यायोगश्चेति दूषणं तदलग्नकम् । इतरान्वितत्वेन पदादुपस्थितावपि घटाद्यन्वितत्वादिना बोधस्य वाक्यलभ्यत्वात्तद्वैयर्थ्याप्रसक्तेः प्रामाण्योपपत्तेश्चेति दिक् । **अर्थस्यापीति** । अनेन व्यञ्जकत्वमपीति कारिकास्थोऽपिशब्दोऽर्थानामपीति योजितः । **वैधर्म्येति** । अभिधालक्षणयोः शब्दमात्रगतत्वात्, लक्षणाया अर्थगतत्वनयेऽपि व्यङ्ग्यगतत्वाभावादिति भावः । इदमुपलक्षणम् । अर्थगतव्यञ्जकत्वानुक्तौ न्यूनतापत्तेः । अग्रे—'अर्थव्यञ्जकतोच्यते' इत्यादिना तन्निरूपणस्यासङ्गतत्वापत्तेश्चेत्यपि ज्ञेयम् । यद्यप्यर्थव्यञ्जकत्वं शब्दव्यञ्जकतोदाहरणानन्तरमुदाहरिष्यते तथाप्यत्रासंभावनापरिहाराय संक्षेपत उदाहरणं द्रष्टव्यम् । **माए इति** । 'मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया । तद्भण किं करणीयमेवमेव न वासरः स्थायी ॥' इति संस्कृतम् । **वाच्येनैवेति** । यथाश्रुतवाक्यार्थेनेत्यर्थः । गुरुमते तस्यापि वाच्यत्वान्मतान्तरे तात्प-

---

१. 'काचिदुपनायकसंगमार्थिनी शाकेन्धनाद्यानयनव्याजेन बहिर्गन्तुं मातरं प्रत्याह—माए इति । भो मातः, गृहसंबन्ध्युपकरणम् । उपक्रियतेऽनेनेत्युपकरणमन्नेन्धनशाकादिसामग्री । अद्य खलु निश्चितं नास्तीति त्वया साधितं प्रतिपादितम् । तस्मात्किं करणीयं कर्तव्यं भण वद । आज्ञापयेति यावत् । यतो वासरो दिवस एवमेव अधुना दृश्यमानावस्थ एव स्थायी स्थिरो नेति वाक्यार्थः । अत्र मातरित्यनेनालङ्घनीयाज्ञत्वम् । गृहेत्यनेनावश्यकत्वम् । उपकरणमित्यनेनान्यथासिद्धिपरिहारः । सकलस्य प्रतिवेशिगृहादपि लाभासंभवात् । अद्येत्यनेनाद्यैव सपाद्यत्वम् । साधितमित्यनेन सत्त्वशङ्काराहित्यम् । त्वयेत्यनेन स्वकल्पनाविरहः । तच्छब्देन हेत्वर्थेनावश्यवक्तव्यत्वम् । भणेत्यनेन स्वप्रेरणम् । एवमेवेत्यनेन दिवसावसाने त्वत्प्रेरणयापि कुलाङ्गनया मया न गन्तव्यमिति, त्वरया प्रेरयेति वा द्योत्यते । वाक्यार्थेन तु वक्तृवैशिष्ट्यादुपपतिसमागमार्थित्वमिति वाक्यार्थस्य व्यञ्जकत्व उदाहरणम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

लक्ष्यस्य यथा—

'साहेन्ती सहि सुहअं खणे खणे दूमिआसि मज्जकए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥'

अत्रापकारिण्यां बाधावतारान्मुख्यार्थः श्रोत्रा प्रत्येतुं न शक्यत इति सद्भावस्नेहकरणीयविसदृशं मत्प्रियरमणेन शत्रुत्वाचरणरूपं विरचितमिति मुख्यविपरीतं लक्ष्यते । तेन च कामुकविषयसापराधत्वप्रकाशनं व्यङ्ग्यम् ।

व्यङ्ग्यस्य यथा—

'उअ णिच्चलणिप्फन्दा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्ति व्व ॥'

---

र्थार्थत्वेऽपि वाच्यघटितत्वेन वाच्यस्यापि व्यञ्जकत्वानपायात् । एवं च तात्पर्यार्थस्य व्यञ्जकत्वमप्युदाहृतमेवेति न न्यूनत्वशङ्कापि । वस्तुतस्त्वन्वयस्यावाच्यत्वेऽप्यन्वितस्य वाच्यत्वान्न विरोधः । वक्त्री कामिनी । तस्या वैशिष्ट्यमवस्थाविशेषः । केवलवाच्यस्यापि व्यञ्जकत्वमिहैव दर्शयति—**गृहेति** । आदिपदेनाथेत्यादिपदार्थसंग्रहः । **साहेन्तीति** । 'साधयन्ती सखि सुभग क्षणे क्षणे दूनासि मत्कृते । सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥' इति संस्कृतम् । **अत्रेति** । सद्भावस्नेहाभ्यां यत्करणीयं तद्विसदृशत्वेन लक्षणा । तत्स्वरूपं मत्प्रियेत्यादिपर्यवसितं दर्शितम् । न तु तेन रूपेण बोध इति ज्ञेयम् । तेन लक्ष्येण । सापराधत्वं च दूतीरमणकर्तृत्वमेव । अथवा दूतीरमणं लक्ष्यान्तर्गतमेव । व्यङ्ग्यं तु कामुकः सापराध इति नायिकाया ज्ञानं रोषमूलं सहृदयान्प्रति । त्वया सदृशमेवाचरितमिति भङ्ग्या दूत्यास्तव नापराधः, किं तु नायकस्यैवेति वा । 'पश्य निश्चलनिःस्पन्दा बिसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥' इति । निश्चलद्वयं

---

१. 'प्रियानुनयार्थं प्रहिता तमुपभुज्यागतां सखीं प्रति नायिकाया इयमुक्तिः । हे सखि, मत्कृते मदर्थं सुभग सुन्दरं नायकं साधयन्ती आत्मवशं कुर्वती अनुनयन्ती वा । 'साहयन्ती' इति पाठेऽपि साधयन्तीत्येवार्थः । क्षणे क्षणे दूनासि खिन्नासि । त्वया तावत् त्वया तु सद्भावः साधुत्वं विश्वासो वा । स्नेहः प्रसिद्धः । ताभ्यां करणीयं कार्यं तत्सदृशं ताभ्यां चादृशं कार्यं तादृशं विरचितम् । फलं तु दैवायत्तमिति मुख्यार्थः । अत्र ज्ञातापकारायां मुख्यार्थबाधप्रतिसंधानात्सदृशपदेन विसदृशं लक्ष्यते । तच्च मत्प्रियरमणेन शत्रुत्वाचरणरूपम् । एवं च मत्कृते इत्यस्य स्वकृते इति, दूनासीत्यस्य च हृष्टासीत्यर्थः । अथ वा मत्कृते क्षणमपि न दूनासीत्यर्थः । तेन च नायकः सापराध इति रोषमूलं नायिकाया ज्ञानं सामाजिकान्प्रति व्यज्यत इति लक्ष्यार्थस्य व्यञ्जकत्वे उदाहरणम् । इत्युदाहरणचन्द्रिकासंक्षेपः'. २. 'खने' क-ग. ३. 'सब्भाव' क-ग ४. 'उअ इत्यव्ययं पश्येत्यर्थे । कांचिदुपनायकं प्रति वदति । बिसिनी कमलिनी । तस्याः पत्रे बलाका प्रसिद्धः पक्षिविशेषः शोभते त्वं पश्येति वाक्यार्थस्य कर्मत्वेनान्वयः । संनिहितसूचनाय विशिनष्टि—निश्चलेत्यादि । निश्चला चासौ निःस्पन्देति कर्मधारयः । चलनं शरी-

अत्र निःस्पन्दत्वेनाश्वस्तत्वम्, तेन निर्जनत्वम्, अतः संकेतस्थानमेतदिति कयाचित्कंचित्संकेतस्थानाभिलाषिणं प्रति व्यञ्जनया प्रतिपाद्यते। अथवा निःस्पन्दत्वेनाश्वस्तत्वम्, तेन जनागमनाभावः, अतो न त्वमत्रागत इति मिथ्यावदसीति कयाचिद्दत्तसंकेता त्वं नागता अहं त्वागत इति वादिनं प्रति व्यज्यते—

एवमर्थं विभज्य वाचकादीनां स्वरूपं क्रमेणाह—

## साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ॥ २ ॥

अभिधत्ते प्रतिपादयतीत्यर्थः। अतो न विशेषणान्तरवैयर्थ्यम्। संकेतितं गृहीतसंकेतम्। इदं चेष्टायां साक्षादर्थप्रतिपादिकायामतिव्याप्तिवारणाय, माधुर्यादिव्यञ्जकस्पर्शादिवर्णेऽतिव्याप्तिवारणाय वा। न च साक्षादित्यधिकम्। 'यन्नामा यत्र चैत्यादिर्विषयोऽपि स तादृशः' इत्यादिव्यवहितसंकेतसत्त्वेऽपि चैत्रादिनामकचैत्यादियोगिनि विषये प्रतिपाद्ये चैत्रादिपदेऽतिव्याप्तिवारकत्वात् तत्र शक्यसंकेतव्यवहितसंकेतत्वात्। न च तत्र शक्तिरेवेति सम्यक्। तद्योगिनि तत्पदप्रयोगस्य लक्षणयैवोपपत्तेः। नच साक्षात्संकेतवान्वाचक इत्येतावतैव स्वस्थत्वे अभिधत्ते इत्यस्य वैयर्थ्यम्। संयोगादिनाभिधायां नियमितायां वाच्यार्थव्यञ्जकतादशायामतिव्याप्तेर्वारणीयत्वात्। न च तथापि तत्रातिव्याप्ति-

---

दर्शयति—**अत्रेत्यादिना**। **विशेषणान्तरेति**। अभिधया प्रतिपादयतीत्युक्तौ साक्षात्संकेतितमित्यस्य वैयर्थ्यं स्यादित्यर्थः। **इदं चेति**। यद्यप्यनया चेष्टयायमर्थो बोद्धव्य इति संकेतस्तत्राप्यस्ति तथाप्यस्माच्छब्दादित्येवंशब्दघटितसंकेतस्यात्र निवेशान्न दोष। ननु प्रकृतत्वादेव शब्दत्वरूपविशेषणलाभान्न चेष्टायामतिव्याप्तिरत आह—**माधुर्यादीति**। 'मूर्ध्नि वर्गान्त्यगा स्पर्शाः' इत्यादिना वर्णविशेषाणा माधुर्यादिगुणव्यञ्जकत्वस्य वक्ष्यमाणत्वादिति भाव। **यन्नामेति**। वटादिनाम प्रधानवृक्षो यत्र स विषयो देशोऽपि तन्नामेत्यर्थः। **तत्रेति**। चैत्यादियोगिनि देश इत्यर्थः। **न चेति**। चैत्रादिपदाद्ग्रामविशेषत्वेन प्रतीते। अन्यथा तद्वृक्षनाशे तत्प्रतीत्यनापत्तेरित्याशय। भूतपूर्वशक्यसंबन्धेनापि प्रतीत्युत्पत्तेर्न शक्तिकल्पनेत्याह—**तद्योगिनीति**। चैत्रादिनामकचैत्यादियोगिनीत्यर्थः। **वाच्येति**। वाच्यार्थान्तरेत्यर्थः।

---

रक्रिया स्थानान्तरप्रापिका। स्पन्दस्त्ववयवक्रिया तदप्रापिका। 'स्पदि किंचिच्चलने' इति धात्वनुसारात्। निर्मले स्वच्छे मरकतस्य नीलमणेर्भाजने स्थिता शङ्खस्य शुक्तिः शङ्खघटित शुक्तिसदृश चन्दनादिनिधानपात्रम्। न तु मुक्ताशुक्तिः। तस्या बलाकावर्णसदृशवर्णत्वाभावात्। शङ्खशुक्तिपदस्य तत्रासामर्थ्याच्च। एव चाचेतनोपमयात्यन्तिकक्षोभाभाव· सूच्यते। पार्यन्तिकचमत्कारस्थानं तु सभोगविप्रलम्भभेदेन व्यङ्ग्यद्वय प्रकाशे व्यक्तम् 'व्यङ्ग्यार्थस्य व्यञ्जकत्वेनोदाहरणम्।' इत्युदाहरणचन्द्रिकासक्षेप·.

१. 'निष्पन्द' क·ख. २. 'निष्पन्द' क·ख. ३. 'सकेतितम्' क. ४. 'चैत्यादिनामक' ख·ग. ५. 'चैत्यादिपदे' ख·ग.

रेवेति वाच्यम्। यस्य शब्दस्य यत्राव्यवहितसंकेतग्रहो यदर्थग्रह उपयुज्यते स तदर्थवाचक इति हि लक्षणार्थः। अथ संकेतग्रहस्य शब्दसहकारितायां किं मानमिति चेत्, अगृहीतसंकेतस्य शब्दादर्थप्रत्ययाभावः। इदं च 'यत्राव्यवधानेन संकेतो गृह्यते' इत्यादि वृत्तिदर्शनात्संकेतविशेषणतया साक्षात्पदं व्याख्यातम्। वस्तुतस्तु संयोगादिनाभिधायां नियमितायां यत्र शक्यान्तरध्वननं तत्र वाचकत्वं मा प्रसाङ्क्षीदित्यभिधानक्रियाविशेषणं साक्षादिति। तत्र तु वाक्यार्थप्रतीतिव्यवधानेन तत्प्रतीतिरित्यप्रसङ्गः। न च संकेतितपदवैयर्थ्यम्। लक्ष्यप्रतीतावपि वाच्यप्रतीतिव्यवधानाभावात्। स्पर्शादिवर्णानां साक्षादेव माधुर्यादिव्यञ्जकत्वाच्च।

भास्करस्तु—"लक्ष्यस्याप्यन्विताभिधाननये संकेतितत्वात्तत्रातिव्याप्तिवारणाय साक्षादिति विशेषणम्। तदनभ्युपगमे तु 'साक्षादभिधत्ते', 'संकेतितमभिधत्ते' इति लक्षणद्वयम्। न चाद्यस्य चेष्टायामतिव्याप्तिः। शब्दत्वस्य प्रकरणादेव लाभात्" इत्याह। तत्तु 'साक्षात्संकेतो गृह्यते' इत्यादि वृत्तौ साक्षात्वस्य संकेतित[1]विशेषणतया व्याख्यानेन विरोधादुपेक्षणीयम्। किंच प्रथमे माधुर्यादिव्यञ्जकस्पर्शादिवर्णेष्वतिव्याप्तिः। तेषां साक्षादेव शृङ्गारादिव्यञ्जकत्वात्। द्वितीयं तु वाच्य एव व्यङ्ग्यतादशायामतिव्याप्तम्। न च तत्रेष्टापत्तिः। सकेतवान्वाचक इत्यस्यैव तदा सम्यक्त्वेन शेषवैयर्थ्यात्॥

**संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा।**

नन्वयं विभागोऽनुपपन्नः। जात्यादेरसंकेतितत्वात्। आद्यसंकेतग्रहस्य व्यवहारमात्राधीनतया प्रवृत्तिनिवृत्तियोग्यायां व्यक्तावेव तदौचित्यादिति। मैवम्। किं हि व्यक्तिषु सर्वासु संकेतग्रहो व्यवहाराङ्गम्, उत यस्यांकस्यांचित्।

---

यत्र यस्मिन्काले। एवं तत्रेत्यत्रापि। ननु साक्षादिति व्यर्थम्। यन्नामेत्यादिवाक्यस्य पूर्वपूर्वप्रयोगाधीननिरूढलक्षणाबोधकत्वेन सकेताग्राहकत्वात्। तस्यानादिवृद्धपरम्परयैवावगमाच्छास्त्राधीनत्वात् सवन्धस्याशास्त्रहेतुत्वादिति न्यायात्। अत एव क्वचिदपभ्रष्टशब्दे सकेतस्यानादित्वाभावान्न तत्रातिव्याप्तिः। न चैव प्राकृतकाव्यविलोप। तत्र मूलशब्दानुसारेणैव तत्त्वात्। पूर्वपूर्वसकेतस्य तत्रापि सत्त्वाद्वा। इत्थ चानादिसकेतस्यैव सहकारित्वान्न क्वाप्यतिप्रसङ्ग इत्यरुचेराह—**इदं चेति**। सकेतितमिति तु माधुर्यादिव्यञ्जकवर्णातिव्याप्तिवारणायेत्युक्तमेव। **अन्विताभिधानेति**। इतरान्वितत्वेन सकेतग्रहे इतरत्वेन लक्ष्यस्यापि विषयत्वादिति भाव। **शृङ्गारादीति**। शृङ्गारशब्दो माधुर्यादिगुणपर। **प्रवृत्तीति**। दोहनादीष्टसाधनत्व हि प्रवृत्तियोग्यत्वम्, शृङ्गाघातायनिष्टसाधनत्व च निवृत्तियोग्यत्वं गोव्यक्तावेव, न तु जाताविल्यर्थ। जात्यादिरित्यादिपदेन गुणक्रियासंज्ञाना संग्रहः। **सर्वास्विति**। सर्वासु गोव्यक्तिष्वित्यर्थ.। व्यवहाराङ्गं गोपदजन्यशाब्दबोधाङ्गम्।

---

1. 'सकेतविशेषण' क.

नाद्यः। आनन्त्यात्। नान्त्यः। व्यभिचारप्रसङ्गात्। यतोऽगृहीतसंकेतगोपिण्ड इव घटादेरपि गोपदात्प्रतीतिः प्रसक्ता। अगृहीतसंकेतत्वस्य तुल्यत्वात्। किंच न यत्र संकेतग्रहस्तस्यापि प्रतीतिरिति व्यभिचाराच्च व्यक्तौ संकेतः। अपि च व्यक्तिसंकेतपक्षे 'गौः' 'शुक्लः' 'चलः' 'डित्थः' इत्यादिशब्दानामर्थभेदो न प्राप्नोति। किमेवमनिष्टमिति चेत्, सहप्रयोगानुपपत्तिः। तस्मादुपाधावेव संकेतः। स च द्विविधः—स्वभावतो वस्तुवृत्तिर्घटत्वादिः, वक्तुर्यदृच्छया संनिवेशितो नामरूपः। तत्राद्यो द्विविधः—सिद्धः, साध्यश्चेति। सिद्धोऽपि द्वेधा—पदार्थस्य प्राणप्रदः, विशेषाधानहेतुश्च। प्राणप्रदत्वं च यावत्स्थितिसंबन्धित्वम्। यद्यपि शुक्लत्वादेर्नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव संबन्धित्वम्, तथापि तस्य संबन्धः कदाचिदपैत्यपि, न तु गोत्वादेरिति विशेषः। तत्र प्राणप्रदो जातिः। उक्तं हि वाक्यपदीये—'नहि गौः स्वरूपेण गौः, नाप्यगौः। गोत्वाभिसंबन्धात्तु गौः' इति। अस्यार्थः—'गौः स्वरूपेण न गोव्यवहारस्य, नाप्यगोव्यवहारस्य विषयः। गोत्वाभिसंबन्धात्तु गोव्यवहारस्य विषयः' इति। तथा च प्राणप्रदत्वमस्य सिद्धमिति। विशेषाधानहेतुस्तु गुणः। गोत्वादिना

---

**यस्यांकस्यांचिदिति**। संकेतग्रहो व्यवहाराङ्गमित्यनुषज्यते। **आनन्त्यादिति**। गवादिव्यक्तीनामनन्तत्वेनोपस्थापकाभावात्सामान्यलक्षणप्रत्यासत्तौ च मानाभावान्नायपक्षसंभव इत्यर्थः। **व्यभिचारेति**। [1]संकेतितस्यैव शाब्दबोध इति नियमाभावप्रसङ्गादित्यर्थः। इष्टापत्तिमाशङ्क्य निरस्यति—**यत इति**। गोपदजन्यशाब्दबुद्धौ यत्किंचिद्गोव्यक्तिसंकेतग्रहो हेतुरिति नोक्तदोष इत्यत आह—**किं चेति**। संकेताविषयगोपिण्डस्यापि प्रतीतेर्व्यभिचार इत्यर्थः। एवं च 'व्यभिचाराच्च' इति प्रकाशग्रन्थः प्रकारद्वयेन व्याख्यात इति बोध्यम्। ननु गोत्वादिप्रकारकसंकेतग्रहस्तत्प्रकारकशाब्दबोधे हेतुरित्युक्तौ न कोऽपि दोष इत्यत आह—**अपि चेति**। व्यक्तिसंकेतपक्षे व्यक्तिमात्रसंकेतपक्षे। न प्राप्नोति न संभवति। तर्हि जातिविशिष्टव्यक्तौ शक्तिरस्त्वित्याशङ्क्याह—**तस्मादिति**। नागृहीतविशेषणान्यायादिति भावः। यदृच्छया स्वेच्छया संकेतरूपया संनिवेशितः कल्पितो डित्थादिनामरूपः। **यावत्स्थितीति**। पदार्थस्य स्थितिर्व्यवहारयोग्यता। तावत्पर्यन्तं तत्प्रयोजकतया संबन्धित्वमित्यर्थः। यथाश्रुतार्थस्य वाक्यपदीयग्रन्थानुक्तत्वेन 'उक्तं हि' इत्याद्यसंगतेः। **शुक्लत्वादेरिति**। शुक्लादिगुणस्येत्यर्थः। गुणिपरशुक्लपदाद्भावप्रत्ययात्। कदाचित्पाकाद्यवस्थायाम्। गौर्न गौरिति यथाश्रुतासंगतेस्तदर्थमाह—**अस्यार्थ इति**। स्वरूपेण व्यक्तिमात्रेण। **नापीति**। एतच्च दृष्टान्तत्वेनोक्तम्। यथानभिव्यक्तस्वरूपमात्रे वैधर्म्याग्रहादगौरिति न व्यवहारः, तथा गौरित्यपीत्यर्थः। अन्यथा गवि अगोव्यवहारस्य गोत्वसंबन्धाप्रयुक्तत्वेनासंगतेः। विशेषाधानमितरव्यावृत्तिबोधः। लब्धसत्ताकं प्राप्तव्यवहारयोग्यताकम्। [2]विशिष्यते इतरेभ्यो व्यावर्त्यते। अनेन

---

१. 'संकेताविषयगोपिण्डस्यापि प्रतीतेर्व्यभिचार इत्यर्थः' ख. २. 'विशेष्यते' ख-ग.

लब्धसत्ताकं हि वस्तु शुक्लत्वादिना विशिष्यते। साध्यस्तु पूर्वापरीभूतैकदेशत्वेन विवक्षितः क्रियारूपश्छेदनादिः। यदुक्तम्—

'यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥' इति ॥

वक्तृयदृच्छासंनिवेशितस्तु शब्दरूपः। डित्थादिशब्दानां प्रथमवर्णप्रतीत्या किंचित्प्रकाशितमन्त्यवर्णबुद्ध्या निःशेषतो ग्राह्यं नानावर्णात्मकघटादिपदवद्वर्णक्रमशून्यं स्फोटाख्यं शब्दस्वरूपं डित्थादिष्वर्थेषूपाधित्वेन वक्त्रा यदृच्छया कल्प्यत इति संज्ञारूपयदृच्छात्मको डित्थादिशब्दः।

---

प्रकाशगतस्य 'शुक्लादिना' इत्यस्य विशिष्यत इत्यनेनान्वयो दर्शित। **पूर्वेति**। पूर्वापरीभूता एकदेशा कुठारोद्यमननिपतनादिव्यापारा यस्य तत्त्वेन विवक्षित.। द्वैधीभवनफलकोद्यमनादिव्यापारसमूहो हि च्छिदिधातुवाच्य. कल्प्यत इति तद्घटकव्यापाराणा तदेकदेशत्वं काल्पनिकमेवेत्यर्थ। **यावदिति**। वाक्यपदीयकारिकेयम्। सिद्धं तथा असिद्धं भावि वा यावद्व्यापारवृन्दं साध्यत्वेनाकारेण पचतीत्याख्यातात्प्रतीयते सा क्रियेत्यन्वय। सिद्धमसिद्धं वेत्यत्र हेतु—**आश्रितेति**। आश्रितं क्रमरूपं येन तत्त्वादित्यर्थ। **प्रथमेति**। पूर्वपूर्ववर्णप्रतीत्या किंचित्किंचित्प्रकाशितमित्यर्थ। **अन्त्यवर्णेति**। पूर्वपूर्ववर्णानुभवजनितसंस्कारसचिवयेत्यर्थ.। न च स्फोटस्य निरवयवत्वात्किंचिदित्यनुपपन्नमिति वाच्यम्। किंचित्त्वस्याभिव्यक्तिगतस्योपपत्ते। आलोकतारतम्येन घटाभिव्यक्तितारतम्यवत्। बहुभिर्दर्शनै रत्नतत्त्वाभिव्यक्तिवच्च। तदुक्तम्—'सामस्त्येन तु तद्व्यक्ति सर्वान्ते मणितत्त्ववत्' इति। नानेति व्यतिरेकदृष्टान्तेनाखण्डत्वमुक्तम्। तदाहु—'एकैकवर्णासामर्थ्यान्मेलकानुपपत्तित। एकबुद्धेर्नदीदीनसाम्यात्स्फोट स च द्विधा ॥' इति। एकैकवर्णस्यार्थप्रत्यायनासामर्थ्यात् नानावर्णात्मकपदस्य चोत्तरोत्तरवर्णग्रहे पूर्वपूर्ववर्णनाशेन प्रत्यक्षायोगादनेकपुरुषोच्चारिताना समूहालम्बनस्य च वर्णक्रमाविषयत्वेन जरा राजेत्युभयसाम्यात्स्फोट स्वीक्रियते। स च पदवाक्यभेदाद्द्विविध इत्यर्थ। **शब्दस्वरूपमिति**। वर्णातिरिक्तपदरूपम्। एकपदमिति प्रतीतेर्विषय। अवयवातिरिक्तपटाद्यवयविवदित्यर्थ। तथा चाखण्डपदशक्तिरेव तादृशपदविशिष्टशाब्दधीहेतुर्जात्यादिशक्तिवदिति भाव। यदृच्छात्मकत्वं च यदृच्छाकल्पितत्वाद्बोध्यम्। एवं मीमांसकमते स्वशब्दस्य द्रव्यत्वाद्द्रव्यशब्दत्वमपीति। स्वलक्षण शुद्ध वस्तु। **बुद्ध्येति**। यस्य बुद्ध्या निःशेषतो ग्राह्य तड्डित्थादीना स्वरूपमित्यन्वयः। उपाधेः कस्याप्यग्रहणादिति भाव। अत एव जातिप्रतीत्यनन्तरमाक्षेपादिना व्यक्तिप्रतीतिरिति गवादिपदे य क्रमस्तच्छून्यम्। नन्वत्र जात्यादिवदिह सञ्ज्ञाया एवोपाधित्वात्कथमेतदत आह—**उपाधित्वेनेति**। तथा च पदार्थविशेषणत्वरूपमुपाधित्वेन सञ्ज्ञाया इत्यर्थ। तदाह—**उपाध्यन्तरमिति**। व्याख्यातादन्यदित्यर्थ.।

---

१. 'वैशिष्यते' ख-ग. २. 'विशेष्यते' ख-ग.

चण्डीदासस्तु—'अन्त्यं स्वलक्षणं बुद्ध्या निःशेषतो ग्राह्यं यस्य तत् जातिप्रतीत्यनन्तरं व्यक्तिप्रतीतिरिति क्रमशून्यं च डित्थादीनां शब्दानां स्वरूपं डित्थादिष्वर्थेपूपाधित्वेन पदार्थोपस्थित्यनुकूलतया संकेत्यते। उपाध्यन्तरं तेषां नास्ति। किं तु धर्मिमात्रं ततः प्रतीयते' इति वृत्त्यर्थमाह। तच्च भाष्यविरुद्धम्। तत्र शब्दस्यैवोपाधित्वेन व्यवस्थापनात्। डित्थादिशब्दाड्डित्थादिनामायमिति प्रतीतेः। एवं हि 'गौः' 'शुक्लः' 'चलः' 'डित्थः' इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः[1]। नन्वेवं परमाण्वादिशब्दानां जातिशब्दत्वं स्यात्, न गुणशब्दत्वम्। परमाण्वादीनां प्राणप्रदत्वेन जातित्वादिति चेत्, सत्यम्। जातिशब्दा एव ते। वैशेषिकनयानुसारेण च[2] तत्र गुणशब्दव्यवहारः। ननु पटादिनिष्ठानां शुक्लादिगुणानाम्, गुडतण्डुलादिनिष्ठानां पाकादिक्रियाणां च भेदस्य प्रत्यक्षतः सिद्धौ व्यक्तिसंकेतपक्षोक्तदोषः समान इति चेत्, न गुणादीनां स्वरूपत एकरूपाणामाश्रयभेदाद्भेद इव लक्ष्यते। यथैकस्यैव मुखस्य खड्गमुकुराद्यालम्बनभेदात्।

अपरे तु—'हिमपयःशङ्खादिषु शुक्लादिगुणः परमार्थतो भिन्न एव। पाकाच्छुक्लं रूपं नष्टं श्याममुत्पन्नमिति प्रतीतेः। न चेयं भ्रान्तिः। बाधकाभावात्। न चोत्पादविनाशौ समवायस्य प्रतीयेते इति युक्तम्। तदनुल्लेखात्। तथा[4] चानुगतप्रत्ययानुरोधेन तत्रापि शुक्लादिजातिः। लाघवाच्च तत्रैव संकेत इत्यभ्युपेयम्। एवं गुडतण्डुलपाकादिष्वपि पाकत्वादिकम्। तथा तारत्वादिविरुद्धधर्माध्यासाद्बालवृद्धाद्युदीरितडित्थादिशब्देष्विव डित्थाद्यर्थेष्वपि बालाद्यवस्थापरिणतनानापरिमाणरूपविरुद्धधर्माध्यासाद्भिन्नेषु डित्थत्वादिकं जातिः। सैव च डित्थादिपदशक्या। एकत्वात्। इत्यङ्गीकर्तव्यम्। एतेन बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च, प्रतिक्षणं भिद्यमाने डित्थाद्यर्थे वा डित्थादित्वमस्ति

---

उक्तरूपोपाधित्वाङ्गीकारान्न विरोध इत्याशङ्क्याह—**डित्थादीति**। एवंविधोपाधित्वस्य भाष्याभिमतत्वे मानमाह—**एवं हीति**। एवंविधोपाध्यभिप्रायेण हि भाष्यकार इत्यूचे इत्यध्याहारः। तथा च चतुर्विधप्रवृत्तिनिमित्तभूतोपाधिभिर्गवादीनां विषयविभागवचनं भाष्यकारस्य तादृशोपाधित्वे संज्ञाशब्दस्य मानमिति भावः। परमाण्वादिशब्दानामित्यत्रादिशब्देन परममहच्छब्दादिपरिग्रहः। परमाण्वादीनामणुपरिमाणादीनाम्। अत्रादिपदात्परममहत्परिमाणादिग्रहः। असङ्कुक्तजातित्वस्य वैशेषिकाभिमतगुणत्वेन न विरोध इत्याह—**सत्यमिति**। उक्तदोषः आनन्त्यव्यभिचाररूपः। **एकरूपेति**। लाघवसहकृतप्रत्यभिज्ञावशेनाभेदसिद्धिरिति भावः। आलम्बनं प्रतिबिम्बाश्रयः। **तदनुल्लेखादिति**। नाशप्रतियोगित्वेन समवायस्याविषयीकरणादित्यर्थः। एतच्च शुक्लतरं शुक्लतममिति तारतम्यप्रतीतेरप्युपलक्षणम्। **अनुगतप्रत्ययेति**। अनुगतशब्दस्योपाभिधानस्य प्रत्ययद्वारत्वार्थानुगमसाधकत्वात्पृथगनुक्तिः। एवमनुगतप्रत्ययेन पाकत्वादिकमित्यस्य जातिरित्यग्रत-

---

१. 'भाष्यकाराः' ग. २. 'तु' क. ३. 'शुद्धत्वादि' क. ४. 'यथा' क.

इति व्याख्यातम् । इवार्थेन वाशब्देन च शब्दस्य स्थानविनिमयात् । यद्वा सर्वेष्वेव वाक्येषु सामान्यमस्तीत्यत्र तद्वाक्यतात्पर्यम् । अथवा भाष्यकारमते डित्थादिशब्द एवोपाधिरिति तन्मतेऽपि शब्दस्य नानात्वात्तन्निष्ठा जातिरेव शक्याङ्गीकार्येति तत्तात्पर्यम् । तस्मात्सर्वशब्दानां जातिरेव संकेतविषयः' इत्याहुः । येषां मते संज्ञाशब्दानां शब्दो नोपाधिस्तेषां मते आकाशादिशब्दानां कथं जातौ संकेत इति चिन्त्यम् ।

नैयायिकादयस्तु—'न व्यक्तिमात्रं शक्यम्, न वा जातिमात्रम् । आद्ये आनन्त्याद्व्यभिचाराच्च । अन्त्ये व्यक्तिप्रतीत्यभावप्रसङ्गात् । न चाक्षेपाद्व्यक्तिप्रतीतिः । तस्माद्विशिष्ट एव संकेतः । न चानन्त्यादशक्यता व्यभिचारो वा । गोत्वादिसामान्यलक्षणया सर्वव्यक्तीनामुपस्थितौ सर्वत्र संकेतग्रहसौकर्यात्' इत्यातिष्ठन्ते ।

सौगतास्तु—'व्यक्तावानन्त्यादिदोषाद्भावस्य च देशकालानुगमाभावात्तदनुगतायामतद्व्यावृत्तौ संकेतः' इत्यादिमतानि प्रकृतानुपयोगान्न सूत्रकृता दर्शितानि ।

ननु वाच्यलक्ष्यव्यङ्ग्याः पदार्था इति विभागोऽनुपपन्नः । मुख्यत्वेन प्रसिद्धस्य तुरीयस्यापि भावादित्यत आह—

**स मुख्योऽर्थः**

साक्षात्संकेतित एवार्थो मुख्यत्वेन प्रसिद्ध इत्यर्थः ।

---

नेनान्वयः । डित्थादिपदशक्येत्यत्रादिपदेन चैत्रादिपदसंग्रहः । **व्याख्यातमिति ।** साक्षादर्थगतजातिं विहाय शब्दगतजातौ शक्तिकल्पनानौचित्येन यथाश्रुतासंगतेरिति भावः । वाशब्दस्येवार्थत्वस्य स्थानविनिमयस्य च क्लिष्टा कल्पनेत्यरुचेराह—**यद्वेति ।** 'वाच्येषु' इति पाठः । डित्थशब्दं शृणोमीत्यादौ शब्दस्यैव वाच्यत्वात्तद्गतैव जातिस्तदर्थ इति भावः । अत्रापि संदर्भास्वारस्यादाह—**अथवेति । येषामिति ।** चण्डीदासादीनामित्यर्थः । आनन्त्यव्यभिचाराभावाद्धि संज्ञाशब्दस्योपाधित्वं तेनाङ्गीकृतम् । तत एव हेतोरिहाप्युपाध्यभावे क्विगता जातिः स्यात् । आकाशस्यैकत्वादुपाधेश्चानङ्गीकारात् । तथा च सर्वेषामित्यसंगतं स्यादिति भावः । व्यक्तिमात्रे शक्तिरिति पक्षे सर्वत्र व्यक्तौ, क्वचिद्वा । आद्ये आनन्त्यात् । अन्त्ये व्यभिचारादिति । **न चेति ।** अनुमानस्यार्थापत्तेर्वा आक्षेपपदार्थस्यानवतारेऽपि व्यक्तिप्रतीते, आक्षेपनियमेऽपि वृत्त्यनुपस्थितत्वेन शाब्दप्रतीत्ययोगाच्चेति भावः । विशिष्टशक्तिपक्षेऽपि सर्वत्र, क्वचिद्वेति विकल्पाभिप्रायेण दोषद्वयमाशङ्क्याद्यपक्षाङ्गीकारेण समाधत्ते—**सामान्येति ।** सर्वत्र व्यक्तौ । सौकर्यात् संकेतग्रहसौकर्यात् । भावस्य जात्यादिरूपस्य । **देशेति ।** भावमात्रस्य क्षणिकत्वादिति भावः । अतद्व्यावृत्तौ अघटव्यावृत्तौ । **प्रकृतेति ।** प्रामाणिकोक्तमतानुसारेणैव प्रकृतार्थविभागसिद्धौ

---

१. 'शब्देनोपाधि.' ग.

कथमसौ तथेत्यत आह—

**तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ ३ ॥**

अस्य शब्दस्य तत्रार्थे योऽभिधारूपो व्यापारः स मुख्यो यत उच्यते इत्यर्थः। यद्वा अभिधाव्यवहारस्य नाभिधा समयाभावादित्यादौ दर्शनात्तां लक्षयति—तत्र मुख्य इत्यादि। तत्र यो व्यापारः सोऽभिधेत्युच्यत इत्यर्थः। मुख्यत्वोत्कीर्तनं च वक्ष्यमाणस्य लक्षणायास्तद्बाधपुरःसरत्वस्योपपत्तये।

यत्तु—'मुख्यार्थबाधे तद्योग इत्यादि कारिकोपयुक्ततया वाच्यस्य संज्ञान्तरं करोति, स मुख्य इत्यादि' इति सूत्रावतारणं तदयुक्तम्। वाच्यार्थबाधे तद्योग इत्येवमेव तत्रोपपत्तौ तदर्थं संज्ञान्तरकरणस्य गौरवेणानौचित्यात्।

वाचकं निरूप्य लाक्षणिकं लक्षयितुं लक्षणां लक्षयति—

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥ ४ ॥**

रूढिः प्रसिद्धिः। प्रयोजनं व्यङ्ग्यार्थप्रतिपादनरूपम्। क्रिया व्यापारः। अत्रान्योऽर्थो यल्लक्ष्यते सा लक्षणेति लक्षणम्। लक्ष्यते प्रतिपाद्यत इत्यर्थः। अतो नात्माश्रयः। मुख्यार्थबाधः शक्यसंबन्धो रूढिप्रयोजनान्यतरच्चेति हेतुत्रयवचनम्। व्यञ्जनायां शक्तिस्मृतौ चातिव्याप्तिवारणाय तद्योग इति लक्षणेऽपि प्रवेशनीयम्। योगस्य च हेतुत्वं विवक्षितम्। अतो न मुख्यार्थसंबन्धि-

---

मतान्तरकथनानुपयोगादिति भावः। उपयोगे सति ग्रन्थगौरवस्यादोषत्वात्तदुपेक्षणम्। **अभिधारूप इति।** साक्षात्संकेतितार्थप्रतीत्यनुकूलः शब्दव्यापारोऽभिधा। स च पदज्ञानम्, तद्गोचरः संस्कारो वा। तदुक्तं न्यायरत्नमालायां पार्थसारथिमिश्रैः—'कस्तर्ह्यस्य व्यापारः। स्वज्ञानमेव, तज्जनितो वा संस्कारः तद्योगी शब्दोऽर्थप्रतीतिं जनयति' इति। **अभिधेति।** शब्दस्य व्यापारो य उक्तः स क इति प्रश्नः। तदुत्तरं स्वज्ञानमेवेत्यादि। मुख्यः प्रथमप्रत्यायकः। प्रथमं प्रतीयमानत्वेनैवार्थस्य मुख्यत्वोपपत्तेर्यत इत्यध्याहारक्लेशाच्च पक्षान्तरमाह—**यद्वेति।** तत्र साक्षात्संकेतिते। **तद्बाधेति।** मुख्यासंभवे हि तदन्याङ्गीकार इति न्यायादिति भावः। **हेतुत्रयेति।** 'लक्षणान्तर्गतत्वे हि हेत्वभावान्न लक्षणा' इत्यत्र लक्षणाहेतुत्वं वक्ष्यमाणमसंगतं स्यादिति भावः। अन्यतरच्चेत्यनेनाथशब्दोऽथवेत्यर्थको दर्शितः। प्रयोजनस्यापि स्वेच्छाद्वारा साधनप्रयोजकत्वाद्धेतुत्वम्। **व्यञ्जनायामिति।** 'उपकृतं—' इत्यादि व्यङ्ग्यापकारातिशयादिबोध इत्यर्थः। अतिशयादेरुपकारादिमुख्यार्थासंबन्धान्नातिव्याप्तिः। **मुख्यार्थसंबन्धीति।** गङ्गादिसंबन्धिपावनत्वादिबोध इत्यर्थः। अपिशब्देन शक्तिस्मृतिसमुच्चयः। शक्तेर्मुख्यार्थसंबन्धित्वेऽपि तत्स्मृतेर्मुख्यार्थसंबन्धज्ञानाजन्यत्वात्। न च तात्पर्यविरहान्नातिप्रसङ्ग इति वाच्यम्। तात्पर्यग्रहेऽप्युक्तोपस्थितिरूपवृत्त्यभावे घटः कर्मत्वमित्यादित इव शाब्दबो-

---

१. 'इत्यर्थतो नात्माश्रयः' ख-ग. २. 'घटकर्मत्व' ग.

व्यञ्जनायामप्यतिव्याप्तिः । मुख्यस्याप्यभिधारूपमुख्यार्थसंबन्धेन प्रतिपादनं संभवतीति तद्वारणायान्य इत्युक्तम् । अन्योऽमुख्यः । यदिति गुणीभूतलक्षणक्रियामात्रपरामर्शः । तेन 'शक्यसंबन्धेनाशक्यप्रतिपत्तिर्लक्षणा' इति प्राचीनमतेनैतल्लक्षणम् । 'तद्धेतुः शक्यसंबन्धो लक्षणा' इति परमार्थः । प्रतिपत्तिहेतुर्हि वृत्तिः, न तु प्रतिपत्तिरेव । यत्तु यदित्यस्य यत इत्यर्थकतया संबन्धपरतयैव सूत्रव्याख्यानं तदयुक्तम् । 'नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा' इत्यत्र 'मुख्यार्थबाधादित्रयं हेतुः' इति व्याख्यानविरोधात् । नहि संबन्धरूपत्वे लक्षणायाः संबन्धो हेतुर्घटते । ननु प्रतिपादनं चेल्लक्षणा तर्हि शब्दधर्मः । गङ्गादिशब्दानां नीरादिकमुपस्थाप्य विरामे नीराद्यर्थेनैव संबन्धेन तीराद्यर्थप्रतिपादनादित्यत आह—आरोपिता क्रियेति । शक्यव्यवहितलक्ष्यार्थविषयत्वाच्छब्दे आरोपित एव स व्यापारः । वस्तुतोऽर्थनिष्ठ एवेत्यर्थः । तदेतदुक्तम्— 'सान्तरार्थनिष्ठः' इति । रूढितो यथा—'कर्मणि कुशलः' इत्यादौ । अत्र दर्भ-

---

धानुदयात् वृत्तेस्तात्पर्यनिर्वाहकत्वात् । मुख्यार्थबोधश्च शब्दतावच्छेदकरूपेण तात्पर्यविषयान्वयबाध । तेन 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ न व्यभिचारः । न च तदभावेऽपि गङ्गादिपदात्तीराद्युपस्थितिः । मुख्यार्थोपस्थितेरेव गङ्गापदस्योपक्षीणतया विरम्य व्यापारायोगात् तत्र तीराद्युपस्थिते. पदव्यापाराकल्पनात् । अतो न व्यभिचारः । एवं रूढिप्रयोजनयोरभावस्थलेऽप्यशक्योपस्थिते शब्दवृत्तित्वाकल्पनान्न व्यभिचार । तथाभूतोपस्थितावेव तद्धेतुत्वोपगमादिति दिक् । लक्षणं निष्कृष्य दर्शयति—**तेनेति** । प्रतिपत्तिरित्यनन्तरं शब्दव्यापार इत्यध्याहार्यम् । वक्ष्यमाणास्वरसादाह—**तद्धेतुरिति** । अशक्यप्रतिपत्तिहेतुरित्यर्थ । एवं चैतन्मतेऽशक्यप्रतिपत्त्यनुकूलत्वेन शक्यसंबन्धग्रहे मुख्यार्थबाधादे प्रयोजकत्वाल्लक्षणाबीजत्वप्रसिद्धिरिति ज्ञेयम् । प्राचीनमतेऽस्वरसबीजमाह—**प्रतिपत्तिहेतुर्हीति** । वस्तुतस्तु संकेतग्राह्यमर्थप्रतिपादकत्वमभिधावृत्ति, न तु संकेत एव । नाभिधा समयाभावादिति वक्ष्यमाणत्वम् । एवं च यथापूर्वगृहीतमर्थप्रतिपादकत्वमुत्तरोत्तरार्थप्रतिपत्तिहेतुः, तथा शक्यसंबन्धेनाशक्यार्थप्रतिपादकत्वमपि लाघवन्यायादिगृहीतं तत्प्रतिपत्तिहेतुरिति न कश्चिद्दोष । तदुक्तं वृत्तिवार्तिकेऽप्यप्पय्यदीक्षितै —'मुख्यार्थसंबन्धेन शब्दस्य प्रतिपादकत्वं लक्षणा' इत्यलं विस्तरेण । **नन्विति** । प्रतिपादनमशक्यार्थप्रतिपादकत्वम् । संबन्धेन स्वसंबन्धेन सामीप्यादिना । तथा च शब्दस्य मुख्यार्थोपस्थानेनोपक्षीणत्वादर्थ एव लक्षक इत्यर्थ । सत्यम् । मुख्यार्थगतमेवाशक्यार्थप्रतिपादकत्वम् । परंतु मुख्यार्थबाधेन शब्दस्य तद्विषयत्वायोगात्तद्वारा लक्ष्यार्थपरत्वात्तन्निर्वाहार्थं शब्दव्यापारत्वं तस्य कल्प्यते । अन्यथा लक्ष्यस्य शब्दानुपस्थितस्य शाब्दबोधविषयत्वानुपपत्तेरित्याशयेन समाधत्ते—**शक्यव्यवहितेति** । इदमेव सान्तरेत्यनेनोक्तमित्याह—**तदेतदुक्तमिति** । सान्तर शक्यव्यवहितो योऽर्थो लक्ष्यार्थस्तन्निष्ठः । तद्विषय इत्यर्थ । 'सर्वं वाक्यं कार्यनिष्ठं' इति गुरूक्तिवत् । तथा च शब्दस्य लक्ष्यार्थविषयत्वं लक्षणाधीनमित्यत. शब्दे लक्षणारोप इति भाव । एवं च स्वप्रयोजकशक्तिमत्त्वरूपपरम्परासंबन्धेन शब्दवृत्तित्वादारोपितत्वोक्तिरिति ज्ञेयम् । **कर्मणीति** ।

ग्रहणायोग्यत्वान्मुख्यार्थबाधः । विवेचकत्वं च संबन्धः । एवमन्यत्राप्यूह्यम् । तथा च तैलङ्गादिजनपदशब्दा जने, त्वक्शब्दस्त्वगिन्द्रिये । प्रयोजनाद्यथा 'गङ्गायां घोषः' इत्यादौ । अत्र हि गङ्गातीरे घोष इति मुख्यशब्दात्तादृशं पावनत्वं प्रतीयते यादृशं 'गङ्गायां घोषः' इति लाक्षणिकात् ।

लक्षणा तावद्द्विविधा—शुद्धा, गौणी च । तत्राद्या द्विविधा—उपादानलक्षणा, लक्षणलक्षणा च । ते अपि प्रत्येकं सारोपा साध्यवसाना चेति द्विविधे इति शुद्धाभेदाश्चत्वारः । गौणी तु द्वेधा—सारोपा, साध्यवसाना च । इति षड्विधत्वं लक्षणायाः कारिकात्रयेण प्रतिपादयति—

**स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ ५ ॥**

स्वसिद्धये स्वार्थस्यान्वयप्रवेशसिद्धये । पराक्षेपः परलक्षणम् । स्वार्थापरित्यागेन परार्थलक्षणमुपादानमित्यर्थः । अतः 'काकेभ्यो दधि रक्ष्यताम्' इत्यस्य न तृतीयभेदत्वम् । एवं परार्थं स्वसमर्पणं परस्यान्वयप्रवेशसिद्ध्यर्थं स्वसमर्पणं। स्वार्थसमर्पणं स्वार्थपरित्यागः । स्वार्थपरित्यागेन परार्थलक्षणं लक्षणमित्यर्थः । एताभ्यामुपाधिभ्यां शुद्धैव द्विविधोक्ता, न तु गौण्यपीत्यर्थः । एते एवान्यत्र जहत्स्वार्थाजहत्स्वार्थे इत्युच्येते । ननु शुद्धैवेत्यनुपपन्नम् । गौण्या अपि तथात्वसंभवात् । तथा हि—'गौर्वाहीकः' इत्यादौ लक्षणलक्षणा तावत्स्फुटैव । उपादानलक्षणा तु गोवाहीकोभयविषये गाव एते समानीयन्तामित्यादाविति चेत्,

---

चित्रकर्मणीत्यर्थः । न च मुख्यार्थबोधाप्रतिसंधानेऽपि झटिति तत्क्षबोधात्तत्र शक्तिरेव । अन्यथा मण्डपपदस्यापि गृहादौ शक्त्यभावप्रसङ्ग इति वाच्यम् । कृतावयवशक्तिकस्यान्यत्र लक्षणयैवोपपत्तावतिरिक्तशक्तिकल्पनाया अन्याय्यत्वात् । मण्डपादिपदस्यापि गृहादौ निरूढलक्षणाङ्गीकारात् । न चैवं पङ्कजादिष्वप्येवमापत्तौ योगरूढिविलोपापत्ति । तत्र योगार्थविशिष्टरूढ्यर्थस्यैव नियतोपस्थित्या रूढिकल्पनेन वैषम्यात् । मुख्यार्थबाधप्रतिसंधानमपि व्युत्पन्नानामस्त्येव । कदाचिच्छक्तिभ्रमाद्बोधे तदभावेऽपि न क्षतिः । **तैलङ्गादीति** । न च विनिगमकाभावः । जनेषु प्रवृत्तिनिमित्तस्यैकस्यासंभवात् । एवमिन्द्रियमजानतोऽपि त्वचि त्वक्पदप्रयोगात्तत्रैव शक्तिरिति दिक् । तादृशं साक्षाद्गङ्गागतम् । 'लक्षणा तेन षड्विधा' इति वक्ष्यमाणषड्विधत्वस्य प्रकारं कारिकास्वरससिद्धं विशदीकृत्य दर्शयितुमाह—**लक्षणेति** । ते अपि उपादानलक्षणालक्षणलक्षणे अपि । अन्वयप्रवेशसिद्धये समभिव्याहृतपदार्थान्वयबोधविषयत्वसिद्धये । स्वार्थापरित्यागेन स्वार्थसाहित्येन । स्वार्थपरित्यागेन स्वार्थस्य समभिव्याहृतपदार्थान्वयत्यागेन । परार्थलक्षणं परार्थोपस्थापनम् । एवं च समभिव्याहृतपदार्थान्वयित्वेन स्वार्थविवक्षया तत्साहित्येनाविकार्थोपस्थापनमुपादानम् । तत्त्वेन स्वार्थत्यागेनेतरार्थोपस्थापन लक्षणमिति फलितम् । **अन्यत्रेति** । शास्त्र इत्यर्थः । **स्फुटैवेति** । गोवाहीकोभयानुगतजाड्यमान्द्यादिविशिष्टलक्षणया जडो वाहीक इत्यन्वये

मेवम्। अत्रोपचारबीजं संबन्धः सादृश्यमन्यो वा । आद्ये शक्यासादृश्यस्य शक्यावृत्तितया कथं शक्यस्यापि लक्ष्यता। येनोपादानलक्षणा स्यात्। अन्त्ये कथं गौणी । सादृश्यसंबन्धप्रयुक्तलक्षणाया एव गौणीत्वात् । तत्रोपादानलक्षणा यथा—'कुन्ताः प्रविशन्ति' 'यष्टीः प्रवेशय' इत्यादौ। अत्र कुन्तादयः स्वतोऽसंभवत्प्रवेशास्तत्सिद्धये स्वसंयोगिपुरुषाँल्लक्षयन्ति । यथा च 'काकेभ्यो दधि रक्ष्यताम्' इत्यादि संग्रहस्तथोक्तम्। अन्ये पुनर्जातिपदार्थवादिन उपादानलक्षणामन्यामुदाहरन्ति यथा—'गौरनुबन्ध्यः' इति श्रुत्या प्रतिपादितमनुबन्धनं गोपदार्थस्य जातेर्मम कथं स्यादिति जात्या अवच्छेदकतया कथंचित्स्वान्वयसिद्धये व्यक्तिर्लक्ष्यते। ननु व्यक्तिरभिधेयैव, न तु लक्ष्येति चेत्, न। व्यक्तौ केवलायामेवाभिधा, जातिविशिष्टायां वा । आद्ये आनन्त्यव्यभिचारौ। अन्त्ये नागृहीतविशेषणान्यायेन जातावेवाभिधा। व्यक्तिप्रतीतेराक्षेपादेव संभवात् । तदुक्तम्—'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इति । तदेतदपेशलम्। प्रयोजनस्य रूढेर्वा तृतीयलक्षणाहेतोरभावात्। जातिव्यक्तिपदार्थौदासीन्येन हि लोकप्रसिद्धिमाश्रित्य रूढिविचारः। कथं तर्हि भट्टमते व्यक्तिप्र-

---

गोरप्रवेशादिति भावः। अशक्ये शब्दप्रयोग उपचारः । **शक्यावृत्तितयेति**। सादृश्यस्य भेदगर्भत्वादिति भावः । **अन्त्य इति**। साहित्यादिसंबन्धेन गोयुक्तलक्षणे गवामप्यानयनान्वयादुपादानसत्त्वेऽपि गौणीत्वं नेत्यर्थः। न च सादृश्यसंबन्धेनैव गोसदृशत्वेन वाहीकलक्षणायां सादृश्यप्रतियोगितया गोरप्युपादानमस्तीति शङ्क्यम्। एवमपि वाहीकपदार्थेनान्वयाभावेन निरुक्तोपादानत्वविरहात्। अत एव 'कुन्तायुधानानय' 'कुन्तान्भोजय' इत्यादौ नोपादानत्वमिति बोध्यम्। **स्वत इति**। इतरविशेषणत्वं विनेत्यर्थः । **असंभवदिति** । असंभवत्तात्पर्यविषयप्रवेशान्वया इत्यर्थः । अन्यथा पुरुषमात्रोपलक्षणत्वे तु लक्षणत्वमेवेति ज्ञेयम्। अत्र च प्रयोजनं कुन्तबाहुल्यप्रतीति । कुन्तगततैक्ष्ण्यस्य वा पुरुषेषु प्रतीतिः। 'श्वेतो धावति' इति निरूढोपादानलक्षणा ज्ञेया । इयमेव विशेष्यवाचकसमानाधिकरणपुरुषादिपदयोगे सारोपा। तदनुपादाने तु साध्यवसानेति द्रष्टव्यम्। लक्षणलक्षणा तु सारोपा साध्यवसाना च 'आयुर्घृतम्' इत्याद्युदाहरणेषु वक्ष्यते। **आक्षेपादेवेति**। आक्षेपश्च शक्यसंबन्धेनोपस्थितिर्लक्षणात्मिकैव विवक्षिता। 'स्वसिद्धये पराक्षेपः' इतिवत्। ननु प्रयोजनाभावेऽपि रूढि कुतो नेत्याशङ्क्याह—**जातीति**। औदासीन्येन परित्यागेन। गवादिपदानामुत्सर्गतो व्यक्तिसाहित्येनैव जातिबोधकत्वेन तत्र लोकप्रसिद्धेरनपेक्षणात्। कादाचित्कबोध एव हि रूढिवशेन लाक्षणिक उच्यते। यथा त्वगादिपदैरिन्द्रियादिबोध इति भावः। **आक्षेपादिति** । अर्थापत्तेरनुमानाद्वेत्यर्थः। एवं चाक्षेपसहकृताद्गोपदाद्गोत्वविशिष्टबोध । नियतोपस्थितेराक्षेपलभ्यतया वृत्त्यभावेऽपि क्षतिविरहात् । न चाप्रकृत्यर्थतया प्रत्ययार्थान्वयानुपपत्तिः । प्रकृतितात्पर्यविषय एव

---

१. 'सिद्ध्यर्थं' ख. २ 'शब्दप्रवेश.' ख. ३. 'संबन्धवत्' ग. ४. 'पुरुषे' ग. ५. 'आक्षेपालभ्य' ग.

तीतिः । जात्या आक्षेपात् । व्यक्तिं विना तस्या अभावात् । यथा क्रियतामित्यत्र क्रियया कर्तुः, कुर्वित्यत्र कर्मणः ।

अपरे तु—"पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्यमभोजी पीन इतिवत्पीनत्वान्वयप्रयोजकस्य भोजित्वस्याप्रतीत्या योग्यतामलभमानमन्वयं बोधयति । तेन तत्सिद्धये रात्रिभोजनं लक्ष्यते । तथा च दिवा न भुङ्क्त इति मुख्यमर्थमादायैव तल्लक्षणेत्युपादानलक्षणेयम्" इत्याहुः । तदप्यसम्यक् । शब्दाध्याहारनये श्रुतार्थापत्तेः, अर्थाध्याहारनयेऽर्थापत्तेरेव रात्रिभोजनप्रत्ययेन लक्षणानङ्गीकारात् । लक्षणलक्षणा तु 'गङ्गायां घोषः' इत्यादौ । अत्र तटादेर्घोषाधिकरणत्वसिद्धये गङ्गादिशब्दाः स्वार्थमर्पयन्ति । स्वार्थं परित्यज्य तत्रैव वर्तन्ते । उभयरूपा चेयमुदाहृता शुद्धा, न गौणी[1] । उपचारमिश्रा हि गौणीत्युच्यते । उपचारश्च सादृश्यसंबन्धेन प्रवृत्तिः । सादृश्यातिशयमहिम्ना[2] भिन्नताप्रतीतिस्थगनं वा । न चोक्तयोस्तत्संभवः ।

केचित्पुनराचक्षते—"उपचारामिश्रत्वं न शुद्धाया[3] मिश्रातो भेदकम्, किं तु तटस्थत्वम् । तच्च लक्षकस्य मुख्यार्थस्य लक्ष्यस्य च भेदाप्रतीतिः[4] । तथाहि 'गौर्वाहीकः' 'गौरयम्' इत्यादौ भेदेऽपि शक्यलक्ष्ययोरभेदः प्रतीयते, न तु 'गङ्गायां घोषः' इत्यादौ । तत्र भेदमात्रप्रतीतेः" इति ।

अन्ये तु—"गङ्गायां घोषः' 'यष्टीः प्रवेशय' इत्यनयोरेव परस्परभेदहेतुस्तटस्थत्वम् । गङ्गायामित्यत्र तत्सत्त्वात् । यष्टीरित्यत्र तदभावात्" इति मन्यन्ते ।

---

तदङ्गीकारात् । यत्र तु नाविनाभावस्तत्रोपस्थित्यर्थं लक्षणाङ्गीकार इत्याशयः । अत एव प्रकाशकृद्वक्ष्यति 'अविनाभावे चाक्षेपेणैव सिद्धे' इति । अविनाभावेनाक्षेपे दृष्टान्तमाह—**यथेति** । 'प्रविश पिण्डीम्' इति शब्दाध्याहारस्य विषय इति वैषम्याच्चोपन्यस्तम् । प्रकाशे त्वाक्षेपसामान्यमात्रेणोक्तमिति ज्ञेयम् । **तत्सिद्धय इति** । अन्वयप्रयोजकरूपवत्त्वरूपयोग्यताज्ञानायेत्यर्थः । **शब्देति** । भट्टादिमत इत्यर्थः । श्रुतार्थापत्तिः श्रुतार्थकल्पनम् । तच्च न शब्दाध्याहारं विनेति तत्सिद्धिः । अर्थमात्राध्याहार इति गुरुनये त्वर्थकल्पनमात्रमित्यर्थः । न च देवदत्तादिपदस्यैव रात्रिभोजनविशिष्टस्वार्थे लक्षणास्तु, न तु शब्दकल्पनेति वाच्यम् । नियमतो मुख्यार्थबोध[5]प्रतिसंधानाद्यभावेऽपि द्वारमित्यादौ शब्दाध्याहारस्यार्थाध्याहारस्य च कॢप्तत्वेन वारयितुमशक्यत्वादिति संक्षेपः । शुद्धैवेति व्याचष्टे—**उभयरूपा चेति** । ननु 'कुन्ताः प्रविशन्ति' इत्यादौ सादृश्यसंबन्धेन कुन्तधरोपस्थित्या कुन्तधरान्वयबुद्धिसंभवात्तत्र गौणीत्वं स्यादत आह—**सादृश्यातिशयेति** । एवं च यत्र साधारणगुणप्रकारिकोपस्थितिस्तत्रैव भेदप्रतीतिस्थगनाद्गौणत्वम्, नान्यत्रेति नोक्तदोष इति भावः । अनयोरिति प्रकाशग्रन्थस्य प्रकारान्तरेण व्याख्यानमनुसृत्याह—

---

१. गौणीत्यस्मादनन्तरं 'उपचारामिश्रणात्' इति ख-ग-पुस्तकयोरधिकमस्ति. २. 'महिम्ना भिन्नयोर्भेदप्रतीति' ख-ग. ३. 'शुद्धाया' क. ४. 'भेदप्रतीतिः' क. ५. 'बाध' ग.

तदुभयमप्यसत्। अस्ति हि गङ्गादिपदैस्तीरादिप्रतिपादने गङ्गादिनिष्ठपावनत्वादिरूपप्रतिपिपादयिषितप्रयोजनप्रत्ययः। तत्र गङ्गात्वादितितीरे एव बीजम्, न तु तीरत्वादिप्रतीतिरेव। 'तीरे घोषः' इत्यत्रापि तत्प्रतीतिप्रसङ्गात्। अथ गङ्गाशब्देन तटप्रतिपादने गङ्गासंबन्धस्तत्र प्रतीयते। तदेव च तद्बीजमिति चेत्, न। एवं हि 'गङ्गातटे घोषः' इति मुख्यशब्दप्रयोगेऽपि तत्प्रतीतिः स्यात्। तत्संबन्धप्रतीतौ विशेषाभावात्। अथ बाधे जागरूकः कथं गङ्गाशब्दादिभिर्गङ्गात्वादिकं तीरे बोध्यत इति चेत्, उच्यते। शब्देन लक्ष्येऽर्थे प्रतिपादिते तत्र मुख्याभेदो व्यञ्जनया प्रतिपाद्यते। तदेतदुक्तम्—'तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः' इति। अत्र प्रतिपादने इति सतिसप्तम्या प्रत्ययस्यानन्तर्यं बोध्यते। न च व्यञ्जने बोधः प्रतिबन्धक इति काव्यविदां पन्थाः। वक्ष्यति हि—'सारोपसाध्यवसानयोर्गौणभेदयोर्भेदेऽप्यभेदावगमः सर्वथैवाभेदप्रतीतिश्च फलम्' इति। किं बहुना बाधित एव पावनत्वादिविशेषस्तटादौ प्रतीयते। यत्सूत्रयिष्यति—'योगः फलेन नो' इति। नन्वेवं कथं गौण्यामेवाभेदप्रत्ययं प्रयोजनं वक्ष्यति, शुद्धभेदयोस्तु प्रयोजनान्तरमिति चेत्, न। गौण्यां तन्मात्रस्य प्रयोजनत्वात्। शुद्धभेदयोस्तु मुख्यस्य प्रयोजनान्तरस्यापि भावात्। न तु शुद्धायाम्। अभेदप्रत्ययस्याभावादिति संक्षेपः।

गौणीभेदौ लक्षयन्नेव विभजते—

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।**

अन्या अर्थाद्गौणी आरोपाध्यवसानाभ्यां भिद्यते, न तूपादानलक्षणाभ्यामिति तुशब्दार्थः। विषयी आरोप्यमाणो गवादिः, विषय आरोपस्य वाहीकादिश्च यत्र तथा अनपह्नुतभेदौ सामानाधिकरण्येनोक्तौ शब्दप्रतिपाद्यौ सा लक्षणा सारोपा। विषयविषयिणोर्भेदेनोपन्यासस्यात्रारोपपदार्थत्वात्।

**विषय्यन्तःकृतेऽन्यस्मिन्सा स्यात्साध्यवसानिका॥ ६॥**

---

**अन्ये त्विति।** **अथेति।** प्रतिपादन इत्यनन्तरं कर्तव्य इति शेष। लक्षणायाः शक्यसंबन्धात्मकत्वादिति भाव। तदेवेत्यस्य विधेयबीजविशेषणत्वान्न लिङ्गानुपपत्ति। **एवं हीति।** मुख्यशब्दप्रयोगावन्न प्रतीयते तदनन्यलभ्यत्वाल्लक्षणाप्रयोजनम्, नान्यदिति भाव। वैयञ्जनिकबोधे न बाधो विरोधीत्यत्र संमतिमाह—**वक्ष्यति हीति।** प्रकाशकृदिति शेष। सूत्रसंमतिमपि दर्शयितुमाह—**किं बहुनेति।** पावनत्वादिविशेषो गङ्गागतपावनत्वादिरूप। **मुख्यस्येति।** उद्देश्यतया चमत्कारितया च प्रधानस्येत्यर्थ। **अर्थादिति।** पूर्वं शुद्धाभिधानसामर्थ्यादित्यर्थ। यत्र यादृशलक्षणास्थले। अतीतत्वाविवक्षां दर्शयति—**शब्दप्रतिपाद्याविति।** ननु सारोपेत्यस्यारोपयुक्तेत्यर्थ। न च स्वमते वाहीके गोरारोपो लक्षणाविषय। बाधात्। अन्यथा लक्षणाया एवासंभवात्। नापि लक्षणाफलीभूता-

विषयिणा आरोप्यमाणेनान्यस्मिन्नारोपविषयेऽन्तः कृते निगीर्णे। भेदेनानुपस्थित इति यावत्। विषयिमात्रं यत्र निर्दिश्यते, न तु विषयोऽपि सा साध्यवसाना। विषयिणा विषयतिरोभावकस्यात्राध्यवसानपदार्थत्वात्।

एतौ भेदौ शुद्धभेदेऽपि भवत इति प्रतिपादयन्नेव शुद्धाया गौण्याश्च लक्षणमाह—

**भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ**

इमावारोपाध्यवसानरूपौ भेदौ। तौ यदि सादृश्यसंबन्धात्तदा गौणौ। अथ संबन्धान्तरात्तदा शुद्धौ। तत्र सादृश्याद्यथा—'गौर्वाहीकः' इति सारोपः। 'गौरयम्' इति साध्यवसानः। यद्यपि वाहीकस्य वाहीकत्वेन, इदंतया वोपस्थितौ सारोपत्वमेवोचितम्, तथापीदंत्वस्यारोप्यविशेषणतया तदुदाहरणं द्रष्टव्यम्। अतएव वक्ष्यते अनिश्चयरूपसंकरावसरे—"नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति' इत्यत्रैतदिति बिम्बविशेषणतया किमियमतिशयोक्तिः, किं वैतदिति वक्त्रं निर्दिश्य बिम्बमित्यारोपाद्रूपकम्" इति।

अत्र केचित्—'गोशब्दस्य मुख्यतो गोत्वं प्रवृत्तिनिमित्तम्, लक्षणया तु गोशब्दार्थगतं जाड्यमान्द्यादि तथा भवतीति गोशब्देन जडत्वेन रूपेण वाहीक उच्यते।' इति। तदयुक्तम्। अशक्यस्याशक्यवृत्तेश्च धर्मस्याप्रवृत्तिनिमित्तत्वात्। शक्यत्वे शक्यवृत्तित्वे स्वभिन्नशक्यानधिकरणत्वस्य तत्त्वात्।

---

रोपसाहित्यमर्थः। 'आयुर्घृतम्' इत्यादिशुद्धसारोपायां तदसंभवादित्याशङ्क्याह—**विषयेति**। तथा चारोपपदार्थस्य मुख्यस्याभावेऽपि न क्षतिरिति भावः। विषयिवाचकपदेनैव विषयप्रतिपादनं विषयीकृतस्तिरस्कारोऽध्यवसानमिति निष्कृष्याह—**विषयिणेत्यादिना**। अत्र गौणसारोपोदाहरणे॥ मुख्यतः शक्त्या तथा प्रवृत्तिनिमित्तम्। न च तस्य वाहीकावृत्तित्वात्कथं तद्विशिष्टतया वाहीकबोध इति वाच्यम्। आरोपेण प्रवृत्तिनिमित्तत्वाङ्गीकारात्। अतएव सारोपत्वमप्युपपन्नमिति भाव। तथा च जाड्यवदभिन्नो वाहीक इति शक्तिलक्षणाभ्यां बोध इति। अशक्यवृत्तेर्गोपदशक्यत्वाभिमतवाहीकवृत्तिभिन्नस्य। एतदेव प्रवृत्तिनिमित्तलक्षणासंभवेनोपपादयितुं तल्लक्षणमाह—**शक्यत्व इत्यादि**। द्वे अपि सतिसप्तम्यौ। भवति हि गोत्वं गोपदशक्यम्। गोपदशक्यगोवृत्तिस्वभिन्नगोपदशक्यानधिकरणं चेति लक्षणसमन्वय। स्वपदं प्रवृत्तिनिमित्तत्वाभिमतपरम्। गगनघटादिपदेषु शब्दाश्रयत्वद्रव्यत्वादिवारणायाद्यम्। गवादिपदेष्ववयवसंयोगविशेषवृत्तित्वं रूपाकृते', पश्वादिपदेषु लोमत्वादेश्च वारणाय द्वितीयम्। तदर्थश्च शक्यतावच्छेदकतानियामकसाक्षात्संबन्धेन शक्तिमुख्यविशेष्यवृत्तित्वम्। तेनाकृतिनिष्ठजातिविशेषस्य लोमत्वादेश्च निरासः। आकृतेर्लोमादेश्च मुख्यविशेष्यत्वाभावात्। आकृतेरपि स्वसमवायिसमवेतत्वसंबन्धेन गवादिवृत्तित्वात्तद्वारणाय साक्षादिति। कालि-

अपरे तु—'न गवादिशब्देन वाहीकादिः प्रतिपाद्यते । किं तु गवादिगतस्य जाड्यादिगुणस्याभिन्नतया वाहिकादिगता जाड्यादयो गुणा एव लक्ष्यन्ते' इत्याहुः । तदप्यसम्यक् ।

इदं पुनरत्र तत्त्वम्—साधारणं जाड्यमान्द्यादि लक्ष्यतावच्छेदकमाश्रित्य वाहीकादिर्लक्ष्यत इति । तेन 'जडो वाहीक.' इत्यादि वाक्यार्थो भवति । तदुक्तमन्यत्र—

'मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ।
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥' इति ।

लक्ष्यमाणगुणैरिति लक्ष्यमाणा ये गुणा जाड्यादयस्तैरेव यदि योगः शक्यसंबन्धस्तदा गौणी वृत्तिरिति । अविनाभावश्चात्र संबन्धमात्रमभिमतम् । न तु

---

कादिना तद्वृत्तित्वाच्छक्यतावच्छेदकता नियामिकेति दध्यादिपदे दधिवारणाय तृतीयम् । दध्न स्वभिन्नदधिपदशक्यदधित्वाधिकरणत्वात् । ज्ञानविषयवाचिवस्तुपदशक्यतावच्छेदकज्ञानविषयत्वस्य स्वात्मकशक्याधिकरणत्वात्स्वभिन्नेति । न चैवमपि स्वभिन्नवाच्यत्वाद्यधिकरणत्वादव्याप्तिरिति वाच्यम् । शक्यपदेन शक्तिजन्यबोधप्रकारविवक्षणात् । वाच्यत्वादेर्वस्तुपदशक्तिजन्यबोधप्रकारत्वाभावात् । अधिकरणत्वं च शक्यवृत्तिताघटकपूर्वोक्तसंबन्धेनेति न पशुपदप्रवृत्तिनिमित्तलाङ्गूलस्य तादृशलोमाद्यधिकरणत्वेऽपि क्षतिः । शक्यतावच्छेदकतानियामकसमवेतत्वसंबन्धेन लाङ्गूलस्य लोमानधिकरणत्वात् संयोगस्य चातथात्वात् । न चैवमपि सदादिपदे स्वातिरिक्तशक्योपस्थितिप्रकाराप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धि. । स्वत्वस्य प्रतियोगिकोटिनिवेशेन स्वभिन्नशक्योपस्थितिप्रकारीभूताधिकरणं यद्यत्तत्तद्भेदकूटनिवेशेनाप्रसिद्धेरभावात् । एवं च शक्यत्वे सति शक्यतावच्छेदकताघटकसाक्षात्संबन्धेन शक्तिमुख्यविशेष्यवृत्तित्वे च सति स्वभिन्नशक्योपस्थितिप्रकारीभूताधिकरणं यद्यत्तत्तद्भेदकूटवत्त्वमिति लक्षणं पर्यवसन्नमित्यलमतिविस्तरेण । अत्र च वाहीके गोपदशक्तौ सकेताद्यभावान्न किंचित्प्रमाणमिति दूषणं स्फुटत्वान्नोक्तमिति ज्ञेयम् । **अभिन्नतयेति** । सजातीयतयेत्यर्थ. । बाधितार्थस्य लक्ष्यत्वायोगात् । तथा च गोजाड्यसजातीयजाड्यवान्वाहीक इति बोध इति भाव. । **सामानाधिकरण्येति** । एकधर्मिबोधकत्वाभावादिति भाव· । एवं नामार्थयोर्भेदेनान्वयानुपपत्तिरप्यूह्या । तृतीयमतस्य सिद्धान्तत्वबोधनायाह—**तत्त्वमिति** । साधारणं जाड्यमान्द्यत्वाद्यवच्छिन्नम् । अत्र संमतिमाह—**तदुक्तमिति** । अन्यत्र भट्टवार्तिके । गुणैर्योगात्संबन्धाद्या वृत्तिर्गोशब्दस्य वाहीकार्थोपस्थापकता तस्या गौणतेष्टेत्यर्थ । प्रथममते गुणयोगाभाव मध्यमे गुण एव वृत्ति , न तु तद्योगाद्वाहीक इति तयोर्नाभिमतत्वम् । लक्ष्यतावच्छेदकीभूतगुणरूपसंबन्धाद्वृत्तिर्गौणीति व्याचष्टे—**लक्ष्यमाणा ये इति** ।

---

१. 'मानान्तर-' इत्याद्यर्धं ख-ग-पुस्तकयोर्नास्ति.

अत्र वदन्ति—'गौर्वाहीक.' 'मुखं चन्द्र.' इत्यादिषु क्लृप्ताकाङ्क्षावशादभेदान्वयेनोपपत्तौ न लक्षणा युक्ता। बाधनिश्चयस्याहार्यज्ञान इव शाब्देऽप्यविरोधात्। अत एव 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति प्राचां प्रवादः। न चैवं 'वह्निना सिञ्चेत्' इत्यतोऽपि बोधापत्तिरिति वाच्यम्। योग्यताज्ञानाभावात्। 'मुखं चन्द्र.' इत्यादौ त्विष्टचमत्कृतिप्रयोजकताज्ञानादिच्छेत्याहार्ययोग्यताज्ञानसंपत्तिः। अतएव शाब्दे योग्यताज्ञानस्य हेतुत्वमपि संगतम्। अस्तु वान्वयबोध एवाहार्य.। बाधप्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वनिवेशे शाब्दे योग्यताज्ञानहेतुत्वकल्पने च गौरवप्रसङ्गस्यापरिहारात्। किंच लक्षणापक्षे 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' 'पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकाया.' इत्यादौ क्रमेणोपमारूपकयोरुपमितविशेषणसमासाधीनयोः स्वीकारे लक्ष्मीकर्तृकालिङ्गनमञ्जीरशिञ्जितयोरन्वयानुपपत्तिर्व्यवस्थापिका रूपकोपमयोः प्राचीनोक्ता न संगच्छते। आद्यपद्ये उपमायामिव रूपकेऽपि सदृशलक्षणया नारायणसदृशप्रतीतौ लक्ष्मीकर्तृकालिङ्गनानुपपत्तिसाम्येन रूपकनिर्णायकत्वानुपपत्तेः। द्वितीयपद्येऽपि रूपकेऽपि बाधकाभावेन तन्निवर्तकताया असंभवात्। अपि च लक्षणा किं समानधर्मत्वेन, आह्लादकत्वादिना वाङ्गीक्रियते। आद्ये सादृश्यस्य शब्दोपात्तत्वादुपमानत्वापत्ति.। नहि सादृश्यस्य वाच्यतायामेवोपमा। 'कमलसुहृन्मुखम्' इत्यादावपि तस्या सर्वसमतत्वात्। अन्त्ये 'आह्लादयति मुखेन्दु' इत्यादौ पौनरुक्त्यापत्ति। न चात्राह्लादकत्वातिरिक्तधर्म एव लक्ष्यतावच्छेदक इति वाच्यम्। तदस्फुरणेऽपि सहृदयाना चमत्कारोदयादनुभवविरोधाच्च। न चायमुपमितसमास एवेति वाच्यम्। सामान्यधर्माप्रयोग एव तदनुशासनात्। तस्मात् 'चन्द्राभिन्नं मुखम्' इत्याद्याकारक एव तत्र बोध इति न लक्षणाप्रसङ्ग इति। अत्रेदमाकूतम्—अस्ति तावच्चमत्कारिसमानधर्मोपस्थितावेव रूपकप्रतीतिश्चमत्कारश्चेति सहृदयसाक्षिकम्। तत्र मुखचन्द्रादौ समानधर्म. प्रसिद्ध इति स एव लक्षणया प्रतीयते, न पृथङ्नियमेन शब्देनोपादीयते। 'भारतं नाकमण्डलम्' इत्यादौ तु तदप्रसिद्धेः। 'सुपर्वालंकृतं' इत्यादिशब्दोपादानापेक्ष एव रूपकप्रत्यय इत्येतावान्विशेष इति चन्द्रसमानधर्मत्वेन सादृश्यविशिष्टे लक्षणैव। आहार्याभेदबोधस्तु समानधर्मास्फुरणेऽपि संभवतीति चमत्कारानुपपत्ति। न च तस्या बुद्धौ तज्जन्यचमत्कारे वा साधर्म्यज्ञानं हेतुरिति वाच्यम्। तेन विनापि तदुत्पत्तेर्व्यभिचारात्। साधर्म्यज्ञानादेव चमत्कारसंभवेनाभेदबोधस्याप्रयोजकत्वाच्च। अथ 'नायं सिंहसदृश किं तु सिंह' इत्यस्यानुपपत्तिरिति न सादृश्यबोधो रूपके चेत्, न। भेदघटितसादृश्यनिषेधेन ताद्रूप्यप्रतीत्यर्थं तदघटितसादृश्यलक्षणया तथा प्रयोगोपपत्ते। अत एव रूपकस्योपमात्वापादनमपि प्रत्युक्तम्। उपमाया भेदघटितत्वात्। वक्ष्यति हि दशमे—'सादृश्यमुपमा भेदे' इति। तथा—'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति चान्यैरुक्तम्। राजनारायणमित्युत्तरपदार्थप्रधानविशेषणसमासे राजाभिन्ननारायणसदृशस्य लक्षणया व्यञ्जनया च नारायणत्वेन बोधाल्लक्ष्मीकर्तृकालिङ्गनोपपत्ति। उपमितसमासेन नारायणसदृशराजप्रतीतौ तु राजत्वेनावगतेन तदुपपत्तिरिति व्यवस्थासंगति। कथं तर्हि 'जडो वाहीक.' इत्या-

व्याप्तिः । 'मञ्चाः क्रोशन्ति' इत्यादावभावात् । दशावेशविशिष्टस्य तत्रापि सत्त्वेवेति चेत्, तर्हि आक्षेपादेव व्यापकप्रतीतिरस्तु किं लक्षणयेत्युक्तं 'गौरनुबन्ध्यः' इत्यत्र। संबन्धान्तरात्सारोपो यथा—'आयुर्घृतम्' इति । साध्यवसानो यथा—'आयुरेवेदम्' इति । एवमादौ सादृश्यादन्यो यः कार्यकारणभावादिः संबन्धस्तत्पूर्वके आरोपाध्यवसाने अत्र गौणभेदे सारोपे भेदेऽपि ताद्रूप्यप्रतीतिः । साध्यवसाने सर्वथैवाभेदावगमः प्रयोजनम् । शुद्धभेदे सारोपे अन्यवैलक्षण्येन कार्यकारित्वादेः । साध्यवसाने त्वव्यभिचारेण कार्यकारित्वादेः प्रतीतिः फलम् । तदुभयं चाभेदप्रतीतिपूर्वकमित्युक्तम् । क्वचित्तत्प्रयोजनकत्वेनोपचारः । यथा इन्द्रार्था स्थूणा इन्द्रः । क्वचित्स्वस्वामिभावात् । यथा राजकीयः पुरुषो राजा । क्वचिदवयवावयविभावात् । यथा कर्मधारये अग्रहस्त इत्यत्रावयवेऽग्रमात्रे हस्तोपचारः । क्वचित्तदीयकर्मशालित्वात् । यथा अतक्षा तक्षा ।

**लक्षणा तेन षड्विधा ॥ ७ ॥**

---

कारकबोधकथनमिति चेत्, पौनरुक्त्याप्रसङ्गेन विशेषरूपेण लक्षणया बाधकाभावादिति ज्ञेयम् । **दशेति** । क्रोशनकालीनस्य मञ्चादेरित्यर्थ । तत्रापि मञ्चा क्रोशन्तीत्यादावपि । **व्यापकेति** । तादात्म्येन क्रोशनकालीनमञ्चाना व्यापका ये पुरुषास्तत्प्रतीतिरित्यर्थ । कारिकायामभिधेयमविनाभूतं यस्येति बहुव्रीहिर्बोध्यः । **सारोप इति** । लक्षणाभेद इति शेष. । आयुर्जीवनम् । तेन तज्जनकत्वविशिष्ट लक्ष्यते । तेनायुर्जनकाभिन्नं घृतमिति बोध । मुख्यार्थस्य घृतपदार्थान्वयविरहाल्लक्षणलक्षणेयं सारोपा । आयुरेवेदमित्यपि इदंत्वस्य विधेयविशेषणतया साध्यवसाना च । उपादानलक्षणा तु शुद्धा, कुन्ता इत्यादौ सारोपा साध्यवसाना च पूर्व दर्शितेति । उक्तोदाहरणेषु क्रमेण लक्षणाप्रयोजनान्याह—**अत्रेति** । एषूदाहरणेपु मध्य इत्यर्थ । भेदेऽपि वाहीकादिपदप्रयोगाद्भेदे भासमानेऽपि । ताद्रूप्यं तादात्म्यम् । सर्वथैव वाहीकादिपदानुपादानेन भेदामिश्रितः । **अन्यवैलक्षण्येनेति** । जनकान्तरवैलक्षण्येन नियतकार्योपधायकतारूपेणेत्यर्थ । उपलक्षणे तृतीया । उक्तप्रयोजनयोरनन्यलभ्यत्वमाह—**तदुभयं चेति** । अभेदप्रतीतौ हि कारणसत्ताया कार्यसत्त्वावगते कार्योपधानावगतिः । साध्यवसाने तु भेदस्यात्यन्ततिरोधानाद्व्यभिचारसंदेहोऽपि नैवेत्यव्यभिचारेण जनकत्वावगतिरिति भाव । **उक्तमिति** । गङ्गायामित्यादौ तटे गङ्गात्वप्रतीत्यनन्तरमेव शैत्यादिप्रत्यय इत्येतत्कथनावसरे शङ्कापूर्वकमुक्तमित्यर्थ. । अत्र च तदर्थवाचकपदस्यान्यत्र प्रयोगस्तद्धर्मप्रतिपत्त्यर्थ इत्युत्सर्ग एव बीजम् । **तत्प्रयोजनकत्वेनेति** । तदिन्द्रादि प्रयोजन यस्य स्थूणादेरित्यर्थ । इन्द्रस्य च तत्र ध्येयतया पूज्यतया च प्रयोजनत्वम्। उपचारो लक्षणया सामानाधिकरण्येन प्रयोग । षष्ठीसमासे हस्ताग्रमित्यापत्तेराह—**कर्मधारय इति** । तक्षेति जातिविशेषविशिष्टवाचकम्। तेन लक्षणोपपत्ति । क्रमेण नमस्यत्वानतिक्रमणीयत्वकार्यसमर्थत्वकर्मावैगुण्यप्रयोजनानि ज्ञेयानि । अत्र

---

१ 'सर्वथैव भेदावगम ' क.

उपादानलक्षणरूपशुद्धभेदाभ्यां सह। रूढिप्रयोजनाभ्यां भेदे संभवत्यपि न ते विभाजकत्वेनोक्ते, किं तु हेतुत्वेनेति न तत्कृतो भेदो गणितः। अत एव च पश्चात् 'व्यङ्ग्येन रहिता' इत्यादिना तत्कृतं भेदं दर्शयिष्यति। अन्यथा पुनरुक्तिप्रसङ्गात्। एवं च यथोक्तव्याख्यानेन षड्विधत्वे निर्व्यूढे यत् 'षड्विधेति'। रूढिप्रयोजनोपादानलक्षणारोपाध्यवसानरूपैः षड्भिरुपाधिभिः कल्पिता विधाः प्रकारा यस्यामिति षड्विधा' इति चण्डीदासव्याख्यानं तत् 'शुद्धैव सा द्विधा'। सारोपान्या तु' इति एवतुशब्दयोरनालोचनविजृम्भितत्वादनादेयम्[1]।

एवमारोपादिकृतं प्रकारषट्कं प्रतिपाद्य व्यञ्जनकृतं प्रकारत्रयमाह—

**व्यङ्ग्येन रहिता रूढौ सहिता च प्रयोजने।**

लक्षणेत्यनुवर्तते। ननु प्रयोजनस्थले कथं व्यङ्ग्यसाहित्यनियम इति चेत्, प्रयोजनस्य व्यञ्जनामात्रगम्यत्वात्, तदिदमुक्तम्—'प्रयोजनं हि व्यञ्जनाव्यापारगम्यमेव' इति।

यत्तु—'ननु लक्ष्यप्रयोजनयोर्द्वयोरपि लक्षणयैव प्रतीतौ किमत्र व्यञ्जनयेत्यत आह—प्रयोजनं हीति।' इति तत्फक्किकावतारणं तदज्ञानविजृम्भितम्। अत्र व्यञ्जनस्थापनस्याप्रस्तुतत्वात्, तत्प्रकरणे च 'व्यञ्जनात्रापरा क्रिया' इति सूत्रेणैव प्रतिपादनात्।

**तच्च गूढमगूढं वा**

तदिति व्यङ्ग्यम्। लक्षणाभेदप्रयोजक आरोपादिर्यथा भिद्यते तथा तत्प्रयोजकं व्यङ्ग्यमपीति चैस्यार्थः। वाशब्दः समुच्चये। काव्यभावनापरिपक्वबुद्धिः सहृदयः। तन्मात्रवेद्यं गूढम्। तदितरवेद्यमगूढम्। तत्र गूढं यथा—

'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।

---

चण्डीदासेन सारोपसाध्यवसानयोरिवोपादानलक्षणयोरपि शुद्धगौणभेदेन चतुर्विधत्वात्षड्विधेत्यसंगतमित्यभिप्रेत्य षड्भिरुपाधिभिः कल्पिता विधाः प्रकारा यस्यामिति व्याख्यातं तद्दूषयति—**एवतुशब्दयोरिति**। एवं चोपादानलक्षणभेदयोश्चातुर्विध्याभावान्न षडधिकभेदापत्तिरिति यथाश्रुतमेव साध्वित्यर्थः। रूढिप्रयोजनाभ्यां भेदाधिक्यं तु न दोषाय। तत्कृतभेदस्येहानुक्तेः। अग्र एव च वक्ष्यमाणत्वादित्युक्तमेवेति। **व्यञ्जनकृतमिति**। व्यङ्ग्यराहित्येऽपि प्रतियोगिनिरूप्यतया व्यञ्जनप्रयुक्तत्वं बोध्यम्। चशब्दवाशब्दयोरुभयोरानर्थक्यमतो व्याचष्टे—**लक्षणाभेदेति**। तथा च अप्यर्थश्चकार इत्यर्थः। अव्यवस्थितविकल्पायोगादाह—**वाशब्द इति**। **मुखमिति**। असंसंबन्धी बन्ध सुरतबन्धविशेषः। तत्र समर्थमित्यर्थः। शेषमु-

---

१ 'तस्यार्थः' क. २. 'इन्दुवदनायास्तनौ शरीरे तरुणिम्न उद्गम आविर्भावो मोदते स्वकार्यजननेऽनियन्त्रितोऽस्तीत्यर्थः। प्रकृत्यैवेयमिन्दुवदना। तत्राप्येवंविधं यौवनविजृम्भणमिति कष्टमापतितं विदग्धयुवजनस्यैवं खेदो वर्ततेत्यनेन प्रतिपाद्यते। अहो रमणीयतातिः

उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥'

अत्र विकासः पुष्पधर्मः स्मितेऽनुपपन्न इति प्रसृतत्वं लक्षयता विकसितपदेन लोकोत्तररमणीयतातिशयो व्यज्यते । स च गूढः । एवं वशितसमुच्छलितापास्तसंस्थामुकुलितोद्धुरमोदतेशब्दैरायतत्वोल्लसितत्वानेकविषयसंचारित्वोद्भिन्नत्वयोग्यत्वानियन्त्रितत्वानि लक्षयद्भिर्युक्तानुरागित्वसकलवशीकारित्वानुरागातिशयालिङ्गनयोग्यत्वरमणीयत्वस्पृहणीयत्वानि गूढानि व्यज्यन्ते ।

---

शय इति विस्मयो वा । भाग्येन परमोत्सवस्थानमुपसपन्न युवजननयनानामिति हर्षो वा । 'बतामन्त्रणसंतोषखेदानुक्रोशविस्मये' इति नानार्थकोषात् । कथमित्यपेक्षायामाह—मुखमिति । यतो मुख विकसित प्रसृत स्मितं 'ईषद्विकासिनयनं स्मित स्यात्स्पन्दिताधरम्' इत्युक्तलक्षणहास्यविशेषरूप यत्र तथाभूतम् । एवं प्रेक्षित प्रेक्षणम् । भावे क्तः । वशितो वशीकृतः स्वायत्तीकृत । स्वसंबद्ध इति यावत् । वक्रिमा वक्रत्वं येन तथाभूतम् । तथा गतिर्गमन समुच्छलिता धारारूपेण प्रादुर्भूता विभ्रमा विलासा यस्या सा तथाभूता । मतिर्बुद्धिः अपास्ता त्यक्ता संस्था परिमितविषयस्थत्वं यया । अनेकविषयसंचारिणीति यावत् । उरो वक्षःस्थल मुकुलितौ मुकुलाकारावुद्भिन्नौ वा स्तनौ यत्र तथाविधम् । एव जघनमसस्य बन्धो विभक्ततासपादन तेनोद्धुरमुत्कृष्टम् । पीनमिति यावत् । असंसबन्धी बन्धः सुरतविशेषस्तत्र समर्थमिति वा । तथा चासाधारणस्मिताद्युन्मेषः स्फुटमेव यौवनमोदमवगमयतीति भावः । अत्र च विकासस्य पुष्पधर्मस्य स्मिते, वशीकरणस्य चेतनधर्मस्य वक्रिमणि, समुच्छलनस्य मूर्तधर्मस्य विभ्रमे, संस्थाया मर्यादायास्त्यागस्य चेतनधर्मस्य मतौ, मुकुलितत्वस्य पुष्पधर्मस्य स्तनयो', उद्धुरत्वस्योन्मुखत्वस्य चेतनधर्मस्य जघने, मोदस्य हर्षस्य चाचेतने यौवनोद्गमे बाधितत्वाद्विकसितत्वादिपदैः स्ववाच्यसबन्धाश्रयणेनोपदर्शितपदार्था लक्ष्यन्ते । तत्र विकासस्य पुष्पप्रसृतत्वस्य प्रसृतत्वमात्रेण सामान्यविशेषभाव· सबन्धः । मनोहारित्वं व्यङ्ग्यम् । एव वशित्वस्य संबन्धत्वेन सामानाधिकरण्य संबन्ध· । पूर्वं मौग्ध्यात्सर्वत्र वक्रता प्रेक्षितस्यासीत् । इदानी त्वभिमत एवेति युक्तानुरागित्व व्यङ्ग्यम् । समुच्छलनस्य प्रादुर्भूतत्वेन सामानाधिकरण्य सबन्ध । सकलवशीकारित्व व्यङ्ग्यम् । तथा मर्यादात्यागस्याप्यपरिमितविषयत्वेनैकाधिकरण्य संबन्ध· । अनुरागातिशयो व्यङ्ग्यः । तस्य तादृशमतिप्रयोजकत्वात् । मुकुलितत्वस्य पुष्पसंस्थानस्य तादृशसंस्थानमात्रेण सामान्यविशेषभावः संबन्धः । उद्भिन्नत्वेन तु सामानाधिकरण्यम् । आलिङ्गनयोग्यत्वं व्यङ्ग्यम् । एवमुन्मुखत्वरूपस्योद्धुरत्वस्योत्कृष्टत्वेन कार्यकारणभाव सबन्धः । उत्कर्षस्योन्मुखत्वहेतुत्वात् । रमणीयत्व व्यङ्ग्यम् । एव मोदस्यानियन्त्रितत्वेन समं हेतुहेतुमद्भावः संबन्धः । मोदस्यानियन्त्रितत्वे हेतुत्वात् । स्पृहणीयत्व च व्यङ्ग्यमिति । एतानि च काव्यभावनापरिपक्वबुद्धे' सहृदयस्यैव प्रकाशन्ते ।' इत्युदाहरणचन्द्रिकासंक्षेपः ।

१. 'मोदनशब्दै' क.

यथा वा मम—

'चकोरीपाण्डित्यं मलिनयति दृग्भङ्गिमहिमा
हिमांशोरद्वैतं कवलयति वक्त्रं मृगदृशः।
तमोवैदग्ध्यानि स्थगयति कचः किं च वचनं
कुहूकण्ठीकण्ठध्वनिमधुरिमाणं तिरयति॥'

अत्र क्रियापदानामात्यन्तिकविच्छायत्वादिव्यङ्ग्यानि गूढानि।

अगूढं यथा—

'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि॥'

अत्रोपदेशकत्वं शब्दविशेषप्रयोक्तृत्वं मदेऽनुपपन्नमित्याविष्कारं लक्षयता उपदिशतिपदेनानायासेन शिक्षादानमभिव्यज्यते। तच्च सहृदयासहृदययोरुभयोरप्यभिधेयवत्प्रकाशते।

**तदेषा कथिता त्रिधा॥ ८॥**

तत्तस्मात्त्रिधा—अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या चेति।

एवं लक्षणां निरूप्य तया लाक्षणिकं लक्षयति—

**तद्भूर्लाक्षणिकः**

'स्याद्वाचिको लाक्षणिकः' इति सूत्रस्थः शब्द इत्यनुषज्यते। तद्भूस्तस्या लक्षणाया आश्रयः।

---

दाहरणचन्द्रिकायां द्रष्टव्यम्। **चकोरीति**। दृशोः भङ्ग्यश्चालनदर्शनप्रकाराः तेषां महिमा हृद्यत्वादिरूपश्चकोरीणां पाण्डित्यं मनोहारितारूप मलिनीकरोति विच्छायं करोति। तथा अद्वैतमद्वितीयतां कवलयति ग्रसति। कचः केशपाशस्तमोवैदग्ध्यानि अतिश्यामत्वादीनि स्थगयत्याच्छादयति। स्वसंनिधौ तेषामप्रतिभासात्। कुहूकण्ठी कोकिला। तिरयत्यन्तर्हितं करोतीत्यर्थः। **विच्छायत्वादीति**। आदिना ग्रसनलक्ष्याया निवृत्तेरात्यन्तिकत्वम्, स्थगनलक्ष्यस्याप्रतिभासस्यात्यन्तिकत्वम्, तथा तिरोधानलक्ष्यस्य तस्यात्यन्तिकत्वं च संगृह्यते। **श्रीपरिचयादिति**। परिचयो-

१. 'जडा अनभिज्ञा अपि जनाः श्रियो लक्ष्म्याः परिचयात्सधर्षाद्विदग्धाना चतुराणा यानि चरितानि चेष्टितानि तेषामभिज्ञा ज्ञातारो भवन्ति। अत्र दृष्टान्तः—उपदिशतीत्यादि। यथा यौवनस्य मदो गर्व एव। हर्षभर इति यावत्। स एव कामिनीना स्त्रीणा ललितानि 'सुकुमारतयाङ्गाना विन्यासो ललित भवेत्' इत्युक्तलक्षणललितप्रभृतीन्विलासविब्बोकादीन्हावान्। बहुवचनस्याद्यर्थत्वात्। उपदिशति अज्ञातानि ज्ञापयति। अत्र शब्दकरणकाज्ञातज्ञापनस्योपदेशपदार्थस्य वक्तृधर्मत्वेन यौवनमदे बाधात्सामान्यविशेषभावसंबन्धेनाज्ञातज्ञापनमात्र लक्ष्यते। ललितज्ञानेऽनायासो व्यङ्ग्यः। प्रयोजनं सहृदयासहृदयवेद्यमित्यगूढव्यङ्ग्योदाहरणम्। उपदेशादनायासेन ज्ञानमित्यस्य प्रसिद्धत्वात्।' इत्युदाहरणचन्द्रिकासक्षेपः।

अथ व्यञ्जकशब्दलक्षणाय व्यञ्जना निरूपणीया । सा च द्वेधा—शब्दनिष्ठा, अर्थनिष्ठा च । तत्रान्त्या शब्दलक्षणेऽनुपयुक्तेत्यग्रे विवेचनीया । आद्या तु द्वेधा—अभिधामूला, लक्षणामूला च । तत्र यद्यप्यभिधायाः प्राथम्यादुपजीव्यत्वाच्च तन्मूला प्रथमं निरूपयितुमुचिता । तथापि सुप्रसिद्धत्वाल्लक्षणायाः प्रकृतत्वाच्च तन्मूलामेव प्रथमं निरूपयति—

**तत्र व्यापारो व्यञ्जनात्मकः ।**

तत्र लाक्षणिकशब्दे । व्यापारो व्यङ्ग्यप्रकाशानुकूलः ।

लक्षणादिनैव तत्प्रतीतौ किं तयेत्यत आह—

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ ९ ॥**

**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

यस्य पावनत्वादेः फलस्य प्रतीयते लक्षणाश्रयशब्दप्रयोगस्तत्फलं तस्मादेव शब्दाद्गम्यते, न तु प्रमाणान्तरात् । व्याप्तिस्मृत्यादेरनपेक्षणात् । न च तत्र शब्दस्य व्यञ्जनं विना अन्या क्रिया व्यापारः । तथा हि ।

**नाभिधा समयाभावात्**

पावनत्वादौ फले संकेतग्रहाभावात् । अभिधा हि संकेतग्रहसहायैवोपयुज्यते, न तु स्वरूपसतीति वक्ष्यते ।

**हेत्वभावान्न लक्षणा ॥ १० ॥**

मुख्यार्थबाधस्तद्योगो रूढिप्रयोजनान्यतरदिति त्रयं लक्षणाहेतुः ।

तदभावमेवोपपादयति—

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।**

**न प्रयोजनमेतस्मिन्**

यथा गङ्गाशब्दस्य तीरं मुख्योऽर्थः । तत्र च बाधः । तीरे च तत्संबन्धः । तीरस्य च लक्षणयोपस्थापनम्[1], मुख्यशब्देन प्रतिपादयितुमशक्यस्य पावनत्वादेः प्रतीतिश्च प्रयोजनमिति गङ्गाशब्देन तटं लक्ष्यते । तद्वद्यदि तटमपि मुख्यं स्यात्तत्र च बाधो भवेत्, प्रयोजनस्य च गङ्गादिगतपावनत्वादिविशेषस्य तटेन संबन्धः स्यात्, लक्षणया प्रयोजनप्रतिपादनस्य च प्रयोजनान्तरं संभवेत्, तदा गङ्गाशब्दः प्रयोजनं लक्षयेत् । न चैतदेकमप्यत्रेत्यर्थः ।

---

भिनवसंबन्धः । ललितं 'सुकुमारतयाङ्गानां विन्यासो ललितं भवेत्' इत्युक्तलक्षणहावविशेषः । **सुप्रसिद्धत्वादिति** । लक्षणाप्रयोजननिर्वाहकतया सुबोधत्वादित्यर्थ. । ननु गङ्गात्वरूपव्याप्यज्ञानात्पावनत्वादेरनुमितस्य तटे समारोपोऽस्त्वित्यत आह—**व्याप्तीत्यादि** । आदिना सन्निकर्षपरिग्रहः । ननु बोध्यार्थतात्पर्यविषयानुपपत्त्यात्मको हेतुरस्त्येवेत्यत उक्तं प्रयोजनस्य चेति कथंचित्परम्परासबन्धसत्त्वा-

१. 'उपस्थापने' क.

न केवलं मुख्यार्थबाधादीनामभावमात्रम्, किं तु तेषामपेक्षापि नेत्याह—

**न च शब्दः स्खलद्गतिः ॥ ११ ॥**

मुख्यार्थबाधादित्रयमपेक्ष्य बोधकत्वं स्खलद्गतित्वम्। एवं 'नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः' इत्यादिवृत्तौ 'बाधादिकमनपेक्ष्य' इति शेषो द्रष्टव्यः। 'समर्थः' इति पाठे तु 'बाधादित्रयमपेक्ष्यैव' इति शेषः।

नन्वस्ति प्रयोजनेऽपि लक्ष्ये प्रयोजनान्तरमिति किं[1] व्यञ्जनयेति चेद्वैयात्याद्यदि ब्रूयात्तत्राह—

**एवमप्यनवस्था स्याद्या मूलक्षयकारिणी।**

मूलं प्रकृतार्थप्रतीतिः।

ननु पावनत्वादिविशिष्टमेव तीरं लक्ष्यतामिति किं व्यञ्जनया। न चै प्रयोजनस्यापि लक्ष्यकोटौ प्रवेशाल्लक्षणाप्रयोजनं नास्तीति वाच्यम्। 'गङ्गातः घोषः' इत्यतोऽधिकस्यार्थस्य प्रतीतेरेव प्रयोजनत्वादित्यत आह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १२ ॥**

कुत इत्याकाङ्क्षायामाह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।**

ननु विषयफलयोर्भेद इति सूत्रार्थः स चायुक्तः। फलत्वं हि जन्यत्वं व जन्यप्रतीतिविषयत्वं वा। आद्ये पावनत्वादौ तदभावः। तज्ज्ञाने विषयाद्भेद एव। अन्त्ये 'प्रत्यक्षादेर्नीलादिविषयः। फलं तु प्रकटता संवित्तिर्वा' इति वृत्तिविरोधः। प्रकटताज्ञानस्य प्रत्यक्षजन्यत्वाभावात्। न च जन्यज्ञाप्यसाधा

---

दाह—**लक्षणयेति**। वैयात्यात् धार्ष्ट्यात्। **प्रकृतार्थेति**। सप्रयोजनलक्षणाया प्रयोजनलक्षणाधीनत्वात्तत्परम्परायां विषयान्तरसंचारेण यत्र विच्छेदस्तत्र तत्पूर्व लक्षणानिवृत्त्या मूलभूतलाक्षणिकार्थप्रतीतिक्षतिरित्यर्थः। **आद्य इति**। स्वजन्य स्वविषययोर्भेद इत्यर्थपर्यवसाने पावनत्वस्य स्वजन्यत्वाभावात्तज्ज्ञानमेव तथा तस्य च विषयाद्भेदोऽस्त्येवेति न पावनत्वविशिष्टलक्षणानुपपत्तिरित्यर्थः। एवं च मृद्घटो पादानमिति प्रत्यक्षजन्ये घटे तद्विषयभेदाभावाद्व्यभिचारोऽपि ज्ञेयः। **अन्त्य इति**। स्वजन्यप्रतीतिविषयस्य स्वविषयाद्भिन्नत्वनियम इत्यर्थः। एवं च लक्षणादन्यज्ञानविषयत्वेन तत्फलस्य शैत्यपावनत्वादेर्लक्षणाविषयत्वं न युक्तमित्यर्थः। प्रकटता ज्ञानजन्या ज्ञाततापरनामधेया भाट्टमते। संवित्तिरनुव्यवसायो न्यायमते। अज्ञानावरणभङ्गाख्याभिव्यक्तिर्वेदान्तिनये। **विरोध इति**। प्रकटतायाः फलत्वाभिधानविरोध इत्यर्थः। तदाह—**प्रकटतेति**। विशेषणज्ञानजन्यविशिष्टप्रतीतिविषये विशेषणे फले विशेषणज्ञानविषयत्वसत्त्वाद्व्यभिचारश्चेत्यपि बोध्यम्। ननु क्वचिज्जन्यं क्वचित्तु ज्ञाप्यं फलपदेनोच्यत इति नानुपपत्तिरत आह—**न चेति**। उभयानुगतै-

---

१. 'किं व्यञ्जनयेति' क-पुस्तके नास्ति.

रणमेकं साध्यत्वमस्तीति । अत्र ब्रूमः—ज्ञानस्य जनकीभूतो विषयो यथा ज्ञानादन्यस्तथा फलमपि तस्य स्वतो भिन्नम् । कारणस्येव कार्यस्यापि भिन्नकालत्वनियमात् । शैत्यादौ तु क्वचित्फलपदमौपचारिकं दृश्यते । तथा च लक्ष्यज्ञानमेव यदि शैत्यज्ञानं तदा प्रयोजनं न स्यादित्यर्थः । ननु लक्ष्यप्रतीतेर्न शैत्यप्रतीतिः फलम्, किं तु शक्यसंबन्धरूपलक्षणायाः । तथा च न किंचिद्दूषणमिति । अत्राहुः—

अन्वयानुपपत्त्या हि लक्षणा प्रसरन्ती यावदन्वयोपपादकं तावदेव विषयीकरोति, न त्वनुपपादकमपीति कथं तटे पावनत्वमपि विषयीकुर्यात् । नन्वन्वयानुपपत्त्या कल्प्यमानापि सानुद्देश्यमपि शैत्यं विषयीकरोति । यथा तापोपशमायोपादीयमानं चन्दनं शैत्यमपि जनयतीति चेत्, न । चन्दनस्य संनिधिमात्रेण शैत्यजनकत्वम् । लक्षणायास्त्वनुपपत्तिप्रसारितयेति वैषम्यात् ।

यत्तूक्तं यथाश्रुते चण्डीदासेन—'ज्ञानस्य विषयातिरिक्तं फलमात्रं वा विवक्षितम्, ज्ञेयगतं वा । आद्ये प्रकृतेऽप्यस्ति गोस्वामिगतप्रतीतिः । अन्त्ये प्रयोजनज्ञान एवाव्यभिचारः[1] । तेन हि गोस्वामिसंतोषमात्रं जन्यते । न तु तद्गतं[2] किंचिदिति । तस्माद्धेतुफलयोस्तटप्रतीतिफलप्रतीत्योर्भिन्नकालत्वेनाभिन्नव्यापारविषयत्वमसमीचीनमेवेति व्यञ्जनासिद्धिरित्यत्र तात्पर्यम्' इति । तदबोधविजृम्भितम् । नह्यनेन सूत्रेण यथाश्रुतेनापि ज्ञानत्वस्य विषयान्यफलत्वव्याप्यत्वं प्रतिपाद्यते, किं तु ज्ञानफलत्वस्य विषयान्यत्वव्याप्यत्वम् । तथा च शैत्यादेर्लक्षणाजन्यप्रतीतिविषयत्वे तत्प्रयोजनं न स्यादित्यर्थे दोषानवकाशः ।

वयं तु ब्रूमः—विशिष्टं लक्ष्यं तदा भवेद्यदि विशिष्टत्वं लक्ष्यतावच्छेदकं पूर्वप्रतीतं संभवेत् । न त्वेवम् । पावनत्वादिविशेषवैशिष्ट्यस्य तटे प्रमाणान्तरागोचरत्वात् तत्र तस्याभावात् । यदुक्तवान्—'योगः फलेन नो' इति । अथ पावनत्वादिसामान्यवैशिष्ट्यमेव लक्ष्यतावच्छेदकमस्तु । तस्य प्रतीतत्वादिति

---

कप्रवृत्तिनिमित्ताभावान्नोभयं फलपदार्थ इत्यर्थः । **यथेति** । सूत्रे हिशब्दः प्रसिद्ध्यर्थतया दृष्टान्तार्थक इति भावः । शैत्यादेः फलस्य ज्ञानभेदोऽस्त्येवेत्यत आह— **औपचारिकमिति** । तथा च तज्ज्ञानमेव फलमित्यर्थः । **तावदेवेति** । न च तात्पर्यविषयान्वयोपपादकतया लक्षणविषयत्वं दुर्वारमिति वाच्यम् । यत्र पावनत्वादिप्रकारेण तटे घोषान्वयबोधो भवत्विति न तात्पर्यम्, किं तु तटे घोषान्वयबोधोत्तरं पावनत्वादिबुद्धिः स्यादित्येव तत्र लक्षणाजन्यबोधस्य पावनत्वादिविषयताया असंभवेन व्यञ्जनाया आवश्यकत्वात् । अनुपपत्त्या प्रसारिणी तच्छीला तत्तयेत्यर्थः । यथाश्रुते विषयफलयोर्भेद इत्यर्थः । दोषानवकाश उक्तविकल्पप्रयुक्तदोषाप्रसङ्गः । **प्रमाणान्तरेति** । ननु भ्रमात्मकात्पावनत्वादिप्रकारेण तटे प्रवाहसंबन्धज्ञानात्तेन रूपेण तटोपस्थित्या तत्प्रकारेण भ्रमात्मकशाब्दबोध उपपद्यत इति चेत्,

---

१. 'एव व्यभिचारः' क. २. 'तद्गते' क.

चेत्, तर्हि पावनत्वादिविशेषो न प्रतीयेतेति। किं बहुना, गौर्वाहीक इत्यत्र गवाभिन्नजडस्य लक्ष्यत्वे सैवान्वयानुपपत्तिः।

उपसंहरति—

**विशिष्टे लक्षणा नैवं**

एवं उक्तयुक्त्या।

**विशेषाः स्युस्तु लक्षिते ॥ १३ ॥**

तदादौ लक्षिते सति पावनत्वादयो विशेषाः प्रतीतिविषयाः स्युः। ते च प्रसिद्धातिरिक्तव्यापारगम्या एव। स च व्यापारो व्यञ्जनध्वननादिशब्दवाच्यो ऽवश्यमेषितव्यः। कथमन्यथा विशेषप्रतीतिरिरिति। एवं लक्षणामूलव्यञ्जकत्वमुक्तम्। अभिधामूलं त्वाह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १४ ॥**

अनेकार्थस्य शब्दस्य वाचकत्वे संयोगाद्यैर्नियन्त्रिते सति अवाच्यार्थधीहेतुव्यापारोऽञ्जनम्। व्यञ्जनमित्यर्थः। अनेकार्थोऽनेकाभिधानशक्तिः। अर्थभेदेन शब्दभेद इति नये तु अर्थान्तराभिधानशक्तशब्देन सदृशस्तदभेदभ्रमविषयो वा। वाचकत्वमभिधा। अवाच्यार्थस्तदाभिधाव्यापाराविषयः। नियन्त्रणं नियमनमेकतरमात्रस्मरणानुकूलत्वम्। यदाहुः—'शब्दार्थस्यानवच्छेदे विशेष-

---

सत्यम्। तथापि यत्र पावनत्वाद्यग्रहात्तटत्वेनैव प्रवाहसंबन्धग्रहस्तत्र लक्षणया भ्रमात्मकतादृशशाब्दबोधासंभवादनुभवसिद्धतादृशबोधार्थं व्यञ्जनाङ्गीकारस्यावश्यकत्वात्। बाधनिश्चयकाले भ्रमायोगाच्च। व्यञ्जनाजन्यबोधे तु न बाधो विरोधीति न काचिदनुपपत्ति। सैव लक्षणामूलैव। तथा च निष्फला लक्षणेति भावः। **विशेषा इति**। तीरादिव्यावृत्ता. केवलं गङ्गागता इत्यर्थः। लक्षित इत्यधिकरणसप्तम्यङ्गीकारे लक्षणजन्यबोधविषयत्वभ्रमः स्यादतः सतीति। एवं च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतो व्यापारो व्यञ्जनेति लक्षणं बोध्यम्। सदृशत्वेऽपि भेदग्रहेऽन्यत्राभिधाया अप्रसक्तेस्तन्नियन्त्रणायोगादाह—**तदभेदेति**। **एकतरमात्रेति**। अनेकार्थशक्तिज्ञानजन्यतदर्थस्मृतौ संयोगादिज्ञानं हेतुरिति भावः। द्वितीयार्थस्मृतौ संयोगादिज्ञानम्, तज्जन्यप्रथमार्थतात्पर्यज्ञानं वा प्रतिबन्धकमिति तु युक्तम्। आद्यपक्षे संयोगादिनियामकाभावे आराद्देवदत्तोऽस्तीत्यादौ दूरसमीपरूपार्थद्वयसंदेहानुपपत्ते। कारणाभावेनैकतरस्याप्यनुपस्थितेरपि। श्लेषे तु 'येन ध्वस्तमनोभवेन' इत्यादौ द्वयोरपि प्रकृतयोरविरोधाद्बोध इति द्रष्टव्यम्। अथैकार्थबोधनेन विरामात्कथं तस्य पदस्य व्यञ्जकत्वमपीति चेत्, न। प्रथमार्थप्रतीतेर्व्यापारत्वात्। अतएव 'अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः' इत्यनुपदमेव वक्ष्यति। स्वव्याख्याने वक्ष्यमाणहरिकारिकासंमतिमाह—**यदाहुरिति**। अनवच्छेदे अनेकत्वे

स्मृतिहेतवः।' इति। एतेन 'नियमनमेतस्मिन्नेवार्थे वक्तुस्तात्पर्यमिति तात्पर्यग्रहः' इत्यबोधप्रलापः। संयोगाद्यैरित्याद्यपदसंग्राह्यं विप्रयोगादि। यदुक्तमभियुक्तैः—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥' इति।

तत्र संयोगः प्रसिद्धार्थस्य गुणविशेषरूपः संबन्धः। तेनाभिधानियमनम्। यथा 'सशङ्खचक्रो हरिः' इत्यत्र शङ्खादिसंयोगेनानेकार्थस्य हरिशब्दस्याच्युतेऽभिधा नियम्यते। अन्यहरिपदार्थे तत्संयोगाभावात्।

विप्रयोगस्तादृशसंबन्धध्वंसः। तेन यथा—'अशङ्खचक्रो हरिः' इत्युच्यते। ध्वंसस्य प्रतियोगिपूर्वकत्वात्।

साहचर्यं सहचरता। तेन यथा—'रामलक्ष्मणौ' इति रामपदस्य लक्ष्मणसाहचर्येण दाशरथौ।

---

एतद्विरोधेन व्याख्यान्तरं दूषयति—**एतेनेति**। ननु यत्र प्रकृतापेक्षयाप्रकृतार्थे प्रसिद्धिबाहुल्य तत्र प्रकरणमुल्लङ्घ्य प्रसिद्धार्थस्यैव प्रथमं स्मृते प्रकृतशाब्दबोधनियमायावश्यं तात्पर्यनिश्चयस्य हेतुत्वमङ्गीकार्यमित्येकतरमात्रस्मृतिकल्पनं तदितरार्थस्मृतिप्रतिबन्धकल्पनं च व्यर्थमेवेति तात्पर्यनिर्णायकत्वमेव युक्तमिति कथमबोधप्रलाप इति चेत्, न। नहि वयं सर्वत्रेतरार्थस्मृत्यभावनियमं वदाम किंतु यत्र प्रसिद्धिबाहुल्यादेरभावस्तत्रोत्सर्गतः संयुक्ताद्यर्थोपस्थितिरेवेति सहृदयसाक्षिकम्। नहि साहचर्यज्ञस्य रामलक्ष्मणावित्यतो राघवातिरिक्तोपस्थिति, न वा भोजनप्रकरणे सैन्धवशब्दश्रवणाल्लवणातिरिक्ताश्वोपस्थितिर्झटिति जायते। अपि तु राघवादेरेव तथेत्यनुभवबलात्सयोगादेरितरार्थोपस्थितिप्रतिबन्धकत्वमिति प्राचामाशयात्। स्मृशब्दस्य तात्पर्यनिश्चयपरत्वेऽतिक्लिष्टतापत्ते। अप्पय्यदीक्षितास्तु—'नानार्थस्थलेऽपि न सर्वत्र व्यञ्जनोल्लासः। किं तु चमत्कारिणि विषय एव। तत्र च यत्कारणं श्रोतृगतप्रतिभाविशेषाद्यङ्गीकार्यं तस्य नियन्त्रितशक्त्युल्लासकत्वमेवास्त्विति न क्वापि शक्तिविषये व्यञ्जनाङ्गीकारो युक्त। किं त्वप्रकृतार्थप्रतीतिमूलक उपमादावेव' इत्याहु। इति कृतं पल्लवितेन। संयोगादीन्व्याचक्षाणस्तदुदाहरणान्याह—**तत्रेत्यादिना**। प्रसिद्धार्थस्य तदर्थमात्रवृत्तितया प्रसिद्धस्यार्थस्य। न तु वस्तुतः शक्यान्तरव्यावृत्तस्य। इन्द्रादावपि हरिपदार्थे तत्सभवात्। **तत्संयोगाभावादिति**। प्रसिद्धशङ्खादिसंयोगाभावादित्यर्थ। यद्वा शङ्खचक्रसंयोगस्य वस्तुत शक्यान्तरव्यावृत्तत्वमेवाभिमतम्। प्रसिद्धेति तु सदृशस्यैव सतः प्रसिद्धिरभिधानियन्त्रणोपयोगितयोक्तेति बोध्यम्। **संबन्धध्वंस इति**। एवं चाशङ्खचक्र इत्यत्र शङ्ख-

---

१. 'नियमे तस्मिन्' ख. २. 'सर्वहृदय' ख. ३. 'मूलकम्' ख.

विरोधः सहानवस्थानम्, वध्यघातकभावश्च । तेन यथा—'छायातपौ' इति छायापदस्यातपाभावे । विरोधिनोः कयोश्चित्तत्त्वोपमायां 'रामार्जुनगतिस्तयोः' इत्यत्र यथा रामार्जुनपदयोर्भार्गवकार्तवीर्ययोः ।

अर्थः प्रयोजनम् । तेन यथा—'स्थाणुं भज भवच्छिदे' इत्यत्र भवच्छेदनरूपप्रयोजनवशात्स्थाणुशब्दस्य हरे ।

प्रकरणं वक्तृश्रोतृबुद्धिस्थता । तेन यथा—'सर्वं जानाति देवः' इत्यत्र देवशब्दस्य राजनि । यत्तु 'युष्मदर्थे' इति व्याख्या तस्या अपि प्रकृते राजादावित्यर्थः । किं वा संबोध्ये राजादावित्यर्थः । संबोध्यस्यैव युष्मदर्थत्वात् ।

लिङ्गं संयोगातिरिक्तसंबन्धेन परपक्षव्यावृत्तो धर्मः। तेन यथा—'कुपितो मकरध्वजः' इत्यत्र मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसंबन्धवता कोपेन मकरध्वजशब्दस्य कामे । यत्तु 'लिङ्गं चिह्नम्' इति, तन्न । कोपस्य कामचिह्नत्वाभावात् । असाधारणधर्मस्य चिह्नत्वात् । सशङ्खचक्र इत्यत्रातिव्याप्तिप्रसङ्गाच्च ।

शब्दस्यान्यस्य संनिधिर्नियतार्थकशब्दान्तरसामानाधिकरण्यम् । अतो 'भवच्छिदे' इत्यादावप्रसङ्गः । न च 'सशङ्खचक्रो हरिः' इत्यत्रातिव्याप्तिः । शङ्खचक्रसामानाधिकरण्याभावात् । यद्वा हरौ शङ्खचक्रे इति संयोगोदाहरणतात्पर्यम् । तेन यथा—'देवस्य त्रिपुराराते:' इत्यत्र त्रिपुरारातिशब्दसामानाधिकरण्याद्देवशब्दस्य शंभुरूपेऽमरे । अन्यस्य देवशब्दार्थस्य राज्ञस्त्रिपुरारातित्वाभावत् । यत्तु 'देवतान्तरस्यातथाभावाच्छंभौ शक्तिनियमनम्' इति, तन्न युक्तम् । देवतान्तरे देवशब्दस्य शक्तिभेदाभावादुदाहरणासामञ्जस्यापत्तेः ।

---

चक्रपदं तत्संयोगपरम्, नञ्पदं च नाशपरम् । नाशस्य प्रतियोग्यधिकरणनियतत्वाद्धरावभिधानियामकत्वसंभवात् । अत्यन्ताभावस्तु सिंहादिसाधारण इति नोपात्त इति ज्ञेयम् । अच्युत इत्यनन्तरमभिधा नियम्यत इत्यनुषज्यते । एवमग्रेऽपि । तत्त्वोपमायां विरोधित्वेनोपमायां विवक्षितायामित्यर्थ. । तथाच विरोध्यर्थतात्पर्यग्रहात्तथात्वेन पूर्वावगतयोरेवोपस्थितिरित्यर्थ. । एतेन, 'अव्यवस्थितार्थत्वात्परात्पश्र्ययदुष्टत्वं विरोधज्ञानस्य' इति दूषणमलग्नकं वेदितव्यम् । **संयोगातिरिक्तेति ।** शङ्खचक्रव्यावृत्त्यर्थम् । न च तत्रार्थान्तरव्यावृत्तत्वाभावान्नातिव्याप्तिरिति ... कोपस्यापि समुद्रेऽपि सत्त्वेन प्रसिद्ध्यैव कामलिङ्गताया आश्रयणीयत्वेन ... तत्प्रसक्तेरित्याशयात् । चक्रशङ्खादेरर्थान्तरव्यावृत्तत्वपक्षे तु न कश्चि... ...क्यान्तरव्यावृत्तप्रसिद्ध्यैव चिह्नत्वमस्तित्यत आह—**सशङ्खेति ।** ...गातिरिक्तेति स्वोक्तमेव सम्यगिति भाव. । **अत इति ।** ... **शङ्खचक्रेति ।** शङ्खचक्रशब्दो हि नियतार्थकः । तेन ...मित्यर्थः । एवमपि सशङ्खचक्रशब्दसामानाधिकर...

मात्रे। ... द्वितीयार्थे... युक्तम् । अ... पार्थद्वयसंदेहानुपपत्त... मनोभवेन' इत्यादौ द्वयो... विरामात्कथं तस्य पदस्य व्यञ्... अतएव 'अर्थोऽपि व्यञ्जकस्तत्र सह...

...ख्याने वक्ष्यमाणहरिकारिकासंमतिमदत्तः' क. २. 'यच्च' क.

सामर्थ्यं कारणत्वम् । तेन यथा—'मधुना मत्तः कोकिलः' इति । अत्र मधुशब्दस्य वसन्ते । अन्यस्य मधुशब्दार्थस्य कोकिलामादनासामर्थ्यात् ।

औचिती अर्हता । तया यथा—'पातु वो दयितामुखम्' इति । अत्रोत्कण्ठितमनोरथसाधनौचित्येन मुखशब्दस्य सांमुख्ये । न तूपायादौ । यद्यप्यत्रापि सामर्थ्यं संभवत्येव तथापि मधुनेत्यत्र तृतीययेव तद्बोधाभावेऽप्यौचितीमात्रज्ञानादेव शक्तिनियमनमसंकीर्णमिति ।

देशेन यथा—'भात्यत्र परमेश्वरः' इति । अत्रात्रेति[1] राजधानीरूपाद्देशात्परमेश्वरपदस्य राजनि ।

कालेन यथा—'चित्रभानुर्विभाति' इति । अत्र चित्रभानुपदस्य दिवा दिवाकरे, रजन्यामाशुशुक्षणौ ।

व्यक्तिर्लिङ्गं पुंस्त्वादि । तया यथा—'मित्रं भाति' इति । अत्र नपुंसकरूपाल्लिङ्गान्मित्रपदस्य सुहृदि । 'मित्रो भाति' इत्यत्र पुंलिङ्गात्सूर्ये ।

स्वरस्तूदात्तादिर्वेदे बाहुल्येनार्थप्रतीतिकृद्दृश्यते । यथा 'इन्द्रशत्रो वर्धस्व' इति । अत्रेन्द्रशत्रो इत्यस्यान्तोदात्तत्वे षष्ठीतत्पुरुषव्यक्ताविन्द्रस्य शातनकर्मत्वं लभ्यते । पूर्वपदान्तोदात्तत्वे च इन्द्रः शातयिता यस्येति बहुव्रीहिलाभादिन्द्रस्य शातनकर्तृत्वं लभ्यते । काव्ये तु नैवं बाहुल्यम् । ननु 'दृष्टे प्रसीद' इत्यादौ स्वरेण संबोधनं प्रकाश्यते तेन चार्थविशेषेऽभिधा नियम्यते, न तु साक्षात्स्वरेणैव । काकुस्थले तु[2] न नानार्थाभिधानियमनं[3] किं त्वपदार्थस्यैव व्यञ्जनम्[4] । यद्वा स्वरशब्देनोदात्तादिरयं विवक्षितम् । अतः काव्ये स्वरस्याभिधानियामकत्वं नास्त्येवेति व्यर्थं बाहुल्येनेति विशेषणमिति । मैवम् । 'सुधाकरसुहृद्वक्त्रं दृष्टिः पङ्कजवैरिणी' इत्यादाविन्द्रशत्रुरिति न्यायेनाभिधानियमनस्य काव्येऽपि दुर्वारत्वात् ।

स्वरादय इत्यादिग्रहणादभिनयापदेशौ गृह्येते । अन्ये चोक्तान्तर्भूताः । अभिनयश्च साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया । तया यथा—

---

ण्यमस्त्येवेत्यत आह—यद्वेति । तेन शब्दान्तरसंबन्धिना । उपायादाविति । तस्यापि मुखपदवाच्यत्वात् । 'मुखं निःसारणे वक्त्रे प्रारम्भोपाययोरपि' इति कोषात् । ननु सीतारामावित्यत्र दाम्पत्यसंबन्धस्य, रामदशरथावित्यत्र जन्यजनकभावस्य, रामहनूमन्तावित्यत्र स्वामिभृत्यभावस्य, रामायोध्ये इत्यत्र स्वस्वामिभावस्य चाभिधानियामकत्वात्कथमुक्तानामेव तदुक्तमत आह—अन्ये चेति । उक्तसाहचर्य एवान्तर्भूता इत्यर्थः । साहचर्यं हि परस्परसंबन्धित्वम् । तत्सर्वत्राविशिष्टम् । न चैवं सशङ्खचक्र इत्यत्रापि तदापत्तिः । शङ्खचक्रसंयोगेनैव शब्दोपात्तेन तत्राभिधानियमनात् । धार्यधारकभावस्यातथात्वेन विलम्बितत्वात्तत्र साहचर्यस्य सत्त्वेऽप्य

---

१. 'अत्रेति' ख-ग. २. 'भाति' ग ३. 'तु नार्थाभिधाननियमनं किं तु' ग; 'न नार्थाभिधानियमनं किं त्व' ख. ४. 'अव्यञ्जनम्' क.

'एँद्दहमेत्तावत्था एद्दहमेत्तेहिँ अच्छिवत्तेहिं ।
एँद्दहमेत्तावत्था एद्दहमेत्तेहिँ दिअएहिं ॥'

अत्र विकसितमुकुलिताभिनयविशेषसाहित्येन स्तनस्य पीनत्वमुकुलितत्वाद्यर्थविशेषेऽभिधा नियम्यते । एवं शेषपादत्रयेऽपि ।

अपदेशोऽभिमतनिर्देशः । तेन यथा—

'ईतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥'

अत्रापदेशेनेदंशब्दस्याभिधा वक्तरि नियम्यते ।

इत्थं संयोगादिनार्थान्तराभिधायकत्वे निवारितेऽपि यदनेकार्थशब्देन क्वचिदर्थान्तरस्य प्रतिपादनं तत्र नाभिधा शब्दस्य व्यापारः । नियमनात्तस्याः । नापि लक्षणा । मुख्यार्थबाधादिविरहात् । किं त्वञ्जनं त्वञ्जनमेव व्यापारः । यथा—

भँद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।

---

१. "सौन्दर्यातिशयशालिन्या नयनगोचरमगताया गुणश्रवणमात्रजनितानुरागेण नायकेनावस्थाया पृष्टायां दूत्या इयमुक्तिः—'एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् । एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥' इति संस्कृतम् । परिमाणे दघ्नप्रत्ययः । एतावत्परिमाणावामलकादिपरिमाणौ स्तनौ यस्याः सा । एवमेतावत्परिमाणं ययोस्ते एतावन्मात्रे विवक्षितकमलदलादिपरिमाणे ताभ्यामक्षिपत्राभ्यां नयनदलाभ्याम् । उपलक्षितेत्यर्थः । उपलक्षणे तृतीयानुशासनात् । तथा एतावन्मद्विवक्षितपरिमाणं दीर्घादि यस्यास्तथाभूतावस्था स्वरूपं यस्याः सा । एवमेतावद्बुद्धिस्थं परिमाणं संख्या येषां तथाविधैर्दिवसैर्लक्षणया संवत्सरैरुपलक्षिता । परिच्छिन्नेति यावत् । वर्षकथनस्यैव प्रायशो लोकव्यवहारसिद्धत्वात् । दिवसैरिति करणे वा तृतीया । अत्र मुकुलाकारहस्ताभिनयेन स्तनपरिमाणविशेषे, पद्मदलाकृतिना तेन नेत्रपरिमाणविशेषे, उच्चतापुष्टिप्रदर्शकेन तद्विशेषे, अङ्गुल्यङ्कधारणादिरूपेण च दिवससंख्याविशेषे बुद्धिस्थमात्रशक्त्या एतावच्छब्दा नियमितशक्तयः ।" इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'एआवत्थं पत्ता' क. ३. 'कुमारसंभवे द्वितीयसर्गे ५५ श्लोकोऽयम्, काव्यप्रकाशे, नैवोदाहृतः, उदाहरणचन्द्रिकाया च न व्याख्यातः. ४. 'यस्य प्रकृतस्य राज्ञः करो हस्तः सततं निरन्तरं दानस्य वितरणस्य संबन्धि यदम्बु तस्य सेकेन सुभगः शोभनोऽभूदित्यन्वयः । कीदृशस्य यस्य । भद्रः शोभन आत्मा स्वरूपमन्तःकरणं वा यस्य तथाभूतस्य । तथा दुरधिरोहानाधृष्या तनुः शरीरं यस्य तथाभूतस्य । एवं विशाले महति वंशे कुले उन्नतिर्महत्त्वं यस्य तथाविधस्य । विशालस्य वंशस्योन्नतिर्यस्मादिति वा । तथा कृतः शिलीमुखानां बाणानां संग्रहः समीचीनो ग्रहोऽभ्यासदार्ढ्यं येन तस्य । तथानुपप्लुतावाधिता गतिर्ज्ञानं यस्य तथाभूतस्य । गतिर्यानं वा । यद्वानुपप्लुताना निर्दुष्टाना गतिर्हितकता । पराञ्शत्रून्वारयतीति परवारणस्तस्यारूपस्येति राजपक्षे । गजपक्षे तु—यस्य परवारणस्य श्रेष्ठकरिविशेषस्य ।

यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥'

अत्र प्रकरणेन भद्रात्मन इत्यादिपदानां राज्ञि तदन्वययोग्ये चार्थेऽभिधानियन्त्रणेऽपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः।

ननूपमानोपमेयभावकल्पनाविरहाच्छब्दश्लेषतो भेदेऽपि 'योऽसकृत्परगोत्राणां–' इत्याद्यर्थश्लेषतः कुतोऽस्य भेदः। अर्थश्लेषे चोभयत्र शक्तिरेव, न व्यञ्जनेति चेत्, उच्यते। यत्रोभयोरर्थयोस्तात्पर्यं स श्लेषः। यत्र त्वेकस्मिन्नेव तत्, सामग्रीमहिम्ना तु द्वितीयार्थप्रतीतिः सा व्यञ्जनेति।

एवं व्यञ्जनां निरूप्य तया शब्दं लक्षयति—

## तद्युक्तो व्यञ्जकः शब्दः

अञ्जनमिति[1] प्रस्तुतत्वेऽप्यर्थगत्या तच्छब्देन व्यञ्जनं परामृश्यते। तेन व्यञ्जनयुक्तो व्यञ्जक इति संपद्यते। अन्यथाञ्जनयुक्तोऽञ्जक इति स्यात्। तदेतदुक्तमञ्जनयुक्तो व्यञ्जनयुक्तः।

ननूक्तस्थलेष्वर्थस्याव्यञ्जकत्वे कथं[3] शब्दार्थयुगलरूपस्य[4] काव्यस्य ध्वनित्वं स्यादित्यत आह—

---

नुपन्यासात्। तर्हि विरोधोऽपि साहचर्येणैव गतार्थ इति तस्य पृथक्कथनमयुक्तमिति चेत्, सत्यम्। गोबलीवर्दन्यायेन पृथक्कथनं तदिति ज्ञेयम्। एवमन्यत्राप्यूह्यम्। **नन्विति**। 'भक्तिप्रह्वविलोकनप्रणयिनी–' इत्यादि.। सभङ्गश्लेष.। शब्दश्लेष.। जतुकाष्ठन्यायेन शब्दयोः श्लेषसंश्लेषणात्[6]। तत्र द्वयोरपि प्राधान्यविवक्षणान्नोपमानोपमेयभावकल्पनम्। इह तु प्रकृतार्थे तात्पर्यावगतेस्तदसंबद्धार्थबोधनायोगादुपमानत्वेन तस्य प्रकृतार्थविशेषणत्वमित्युपमानोपमेयत्वकल्पनमिति भेद.। 'योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः। शतकोटिदता बिभ्रद्विबुधेन्द्र स राजते॥' इत्याद्यभङ्गश्लेषस्त्वेकवृन्तगतफलद्वयन्यायेनार्थश्लेष। तत्रेन्द्रनृपयोरुपमानोपमेयभावकल्पनसाम्यात्। श्लेषे च व्यञ्जनानङ्गीकाराद्व्यञ्जनोदाहरणत्वमयुक्तमित्यर्थ.। **यत्रोभयोरिति**। अन्यतरत्राभिधानियामकाभावात्, उभयत्र तत्सद्भावाद्वा यत्रोभयतात्पर्यं स श्लेषस्य विषय., न व्यञ्जनाया। यत्र त्वभिधानियामकमेकत्रार्थे तत्रा-

---

कर. शुण्डादण्ड.। दानाम्बु मदजलम्। भद्रात्मनो भद्रजातीयस्य। 'भद्रो मन्द्रो मृगश्चैव' इत्युक्त्वा 'एतेऽष्टौ गजयोनय.' इत्युक्ते। दुरधिरोहतनोर्दुःखेनाधिरोह आरोहणं यस्यास्तथाभूता तनुर्यस्य तथाभूतस्य। अत्युच्चत्वादित्यर्थ। विशालो दीर्घो यो वंशो वेणुस्तद्वदुन्नतिरुच्चत्वं यस्य। यद्वा विशाला वंशस्य पृष्ठदण्डस्योन्नतिर्यस्य। शिलीमुखा भ्रमरा। सग्रह आकर्षणम्। अनुपप्लुतगतेरनुद्धतगमनस्य धीरगमनस्येत्यर्थ'। अत्र प्रकरणाद्राजवृत्तान्तो वाच्यः, गजवृत्तान्तस्तु व्यङ्ग्य इत्यभिधामूलस्य वस्तुध्वनेरुदाहरणम्।' इत्युदाहरणचन्द्रिका.

१. 'प्रवृत्ति.' ख २ 'प्रस्तुते' क 'प्रस्तुतो' ग ३ 'कथं' ख पुस्तके नास्ति. ४. 'स्वरूपस्य' ग ५ 'न स्यात्' ख ६ 'सश्लेषसंश्लेषणात्' ख

यत्सोऽर्थान्तरयुक्तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥ १५ ॥

स इति शब्दः । तथेति व्यञ्जक इत्यर्थः ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे काव्यशरीरभूतशब्दार्थविभागो द्वितीय उल्लासः ।

---

तृतीय उल्लासः ।

एवं शब्दे निरूपिते उपोद्घातेन शब्दव्यञ्जनायां निरूपितायां प्रसङ्गेनार्थव्यञ्जना निरूपणीया, तत्रैतदाशङ्क्यते—शब्दे निरूपितेऽवसरोऽयमर्थनिरूपणस्य, किं चार्थे धर्मिणि निरूपिते तद्धर्मो व्यञ्जनापि सुनिरूपा भवति, तत्कुतस्तदनादृत्य व्यञ्जनानिरूपणमिति तदेनां शङ्कामपनिनीषन्नुक्तं स्मारयति—

अर्थाः प्रोक्ताः पुरा तेषां

अर्था वाच्यलक्ष्यव्यङ्ग्याः । अर्थस्य संनिकृष्टतरत्वेऽपि तेषामित्यनेन योग्यतया वाचकादयः शब्दाः परामृश्यन्ते ।

शिष्यावधानाय प्रतिजानीते—

अर्थव्यञ्जकतोच्यते ।

ननु सर्वेषामित्यादिना पूर्वमर्थानां व्यञ्जकता प्रोक्तैव, तदन्या कीदृशी सेत्याकाङ्क्षायामाह—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥ १ ॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥ २ ॥

बोद्धव्यः प्रतिपादनीयो जन. । अन्तर्भावितण्यर्थत्वात् । अतो न वाच्येनाभेदः । काकुः शोकभीत्यादिभिर्ध्वनिविकार । वाक्यवाच्याभ्यां सहितोऽन्यसंनिधिर्वाक्यवाच्यान्यसंनिधिः । अतो न द्वन्द्वे एकवद्भावे नपुंसकत्वप्रसङ्गः । प्रस्तावः प्रकरणम् । वैशिष्ट्यं वैलक्षण्यम् । तच्च वक्त्रादिषु प्रत्येकमभिसंबध्यते । अन्योर्थो वाच्यलक्ष्यव्यतिरिक्तः । व्यक्तिर्व्यञ्जना करणव्युत्पत्तेः । अर्थस्य

---

परार्थप्रतीतिर्व्यञ्जनयैवेति तत्राभिधामूलध्वनेर्विषय इत्यर्थ. ॥ इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरात्मजतत्सद्वैद्यनाथभट्टविरचितायां, काव्यप्रदीपटीकायां प्रभाख्यायां काव्यशरीरभूतशब्दार्थविभागो नाम द्वितीय उल्लासः ॥

उपोद्घातेनेति । प्रकृतस्य व्यञ्जकशब्दनिरूपणस्य सिद्ध्यर्थतयेत्यर्थः । तं अर्थम् । कीदृशीति । तथा च वक्त्रादिवैशिष्ट्यहेतुकत्वप्रकारेणार्थव्यञ्जकतोच्यत

---

१. 'तथा व्यञ्जकः' ख-ग. २ 'अपि' क-ग पुस्तकयोर्नास्ति.

त्रिविधस्यापि, न तु कस्यचिदेव । प्रतिभाजुषामित्यनेन नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा । या वासनेत्युच्यते । तस्यां सत्यामेव वक्तृवैशिष्ट्यादिसत्त्वेऽपि व्यङ्ग्यप्रतीतिरिति प्रतिपादितम् । अतएव वैयाकरणादीनां न तथा रसप्रतीतिः । तथा चोक्तम्—

'सवासनानां नाट्यादौ रसस्यानुभवो भवेत् ।
निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्मसंनिभाः ॥' इति ॥

यथाक्रममुदाहरणानि—

'अइपिहुलं जलकुम्भं घेत्तूण समागदम्हि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥'

अत्र वक्त्री कामिनी । तस्या दुःशीलत्वरूपवैशिष्ट्यं विजानतां चौर्यरतगोपनं व्यक्तीभवति ।

'ओणिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअम् ।
मह मन्दभाइणीए केरं सहि तुह वि अहह परिहवइ ॥'

---

इति । प्रतिज्ञार्थ इत्यर्थ । अतीति । 'अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम् । श्रमस्वेदसलिलनिश्वासनि.सहा विश्राम्यामि क्षणम् ॥' श्रमाद्यौ [ स्वेद ]सलिलनिश्वासौ ताभ्या नि सहा निर्बला । **ओणिद्दमिति** । 'औन्निद्र्यं

---

१ 'एकाकिन्या' नदी गत्वा आगताया अद्यास्या· कुतोऽयमीदृक् श्रम इति वितर्कयन्तीं समानशीला प्रतिवेशिनीं प्रति काचिदाह—अइपिहुलमिति । 'विउल' इति पाठे 'विपुल' इत्यर्थः । सखीत्यप्रतार्यताध्वननम् । अतिशयेन पृथुल महान्त जलपूर्ण कुम्भम् । तेन दुर्वहत्वम् । गृहीत्वा समागतासि । नतु मध्ये विश्राम· । त्वरितमित्यनेन स्वेदातिशययोग्यता ध्वन्यते । श्रमाद्यौ स्वेदसलिलनिश्वासौ ताभ्या नि सहा निर्बला । चलितुमक्षमेति यावत् । सलिलत्वोक्त्या स्वेदस्य बाहुल्य व्यज्यते । अत· क्षण विश्राम्यामि विश्राम करोमि । यथा चैवविधकुम्भवहनजन्योऽय श्रमः नान्यथा शङ्किष्ठा इति रतगोपन गम्यते । तच्च वल्लभायाः कामिन्या दु शीलत्वादिवैशिष्ट्यबलादिति वक्तृवैशिष्ट्यस्य सहकारित्वे उदाहरणम् ।' इत्युदाहरणचन्द्रिका २ 'ओणिद्दमिति । कृतकामुकोपभोगा दूती प्रतीयमुक्ति । महकेर' मदीयमिति वा । 'तुहेति कर्मणि षष्ठी । परिभवतीत्यस्य हिंसार्थकत्वात्' इति केचित् । 'तुहेति द्वितीयान्तमेव । तथानुशासनात्' इति दीपिकाकारः । तदा च संस्कृतच्छायापि त्वामित्येव बोध्या । "तुहवीत्यनन्तर 'अहह' इति क्वचित्पाठ· । स न युक्त । 'वृत्तहानिदोषात्' इति केचित् । तन्न । गाथाभङ्गेऽपि छन्दोन्तराभङ्गात्" इति चण्डीदासः । हे सखि, सनिश्वसितमौन्निद्र्यादिक कर्तृ मन्दभागिन्या मम कृते मदर्थं त्वामपि परिभवति पीडयतीत्यन्वय· । नि·श्वसितं निश्वासस्तत्सहितमुन्निद्रस्य गतनिद्रस्य भाव औन्निद्र्यम् । मन्दोऽल्पो भागो भागधेयं विद्यतेऽस्याः सा तथा । मां तावत्परिभवत्येव । मत्कार्यार्थं गमनागमनादिना कामुकस्य प्रसादनव्यापारेण त्वामपीत्यपिशब्दलभ्योऽर्थ· । मदीयमित्यर्थे तु मदीयमौन्निद्र्यादिक त्वामपि स्नेहवशात्परिभवती-

अत्र दूती प्रतिपाद्या तस्या अन्यदापि दृष्टदुष्टचेष्टया वैशिष्ट्येन तस्याः कामुकोपभोगो व्यज्यते । अत्रान्यदीयमुन्निद्रतादिकमन्यत्र बाधितमिति तत्सदृशमुन्निद्रतादिकं लक्ष्यत इति केचित् । तदबोधात् । सख्यास्तदीयोन्निद्रतान्वयस्यावाक्यार्थत्वात् ।

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'

खेदो मात्सर्यम् । अत्र खेदं मयि भजति नाद्यापि कुरुष्विति काकोर्वैशिष्ट्यान्मयि न योग्यं कुरुषु पुनर्योग्यं मात्सर्यमिति व्यज्यते । नन्वत्रोक्तेन काकुव्यङ्ग्येन वाच्यस्य सिद्धिः शोभनत्वनिष्पत्तिः क्रियते । तथा चापराङ्गतया

---

दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् । मम मन्दभागिन्याः कृते सखि त्वामप्यहह परिभवति ॥' 'भागो रूपार्धके प्रोक्तो भागधेयैकदेशयोः' इति विश्वः । **सख्यास्तदीयेति** । सख्या नायिकासंबन्ध्यौन्निद्रसंबन्धस्य वाक्यप्रतिपाद्यत्वाभावादित्यर्थः । अत्र हि नायिकागतौन्निद्र्यादेः सखीत्वेन तां प्रत्यपि दुःखदत्वं वाक्यार्थ इति भावः । **नन्विति** । यद्यपि गुणीभूतव्यङ्ग्यत्वेऽपि काकुवैशिष्ट्योदाहरणताया न क्षतिस्तथापि सुहृद्भावेन वस्तुस्थितिकथनायैतच्छङ्कोत्थापनं बोध्यम् । **शोभनत्वेति** ।

---

त्यर्थः । अतएव सखीति संबोधनम् । एतेन स्वीयस्यौन्निद्र्यादेरन्यपरिभावकत्वासंभवात्स्वीयसजातीयलक्षणेति निरस्तम् । एकेनोभयपरिभवाभावादप्यर्थसमुच्चयानुपपत्तेश्च । अत्र बोद्धव्यवैशिष्ट्येन कामुकोपभोगव्यक्तिः ।" इत्युदाहरणचन्द्रिका.

१. 'तथाभूतामिति वेणीसंवरणे 'आर्य, कदाचित्खिद्यते गुरुः' इति सहदेवोक्त्यनन्तर 'गुरुः किं खेदमपि जानाति' इत्युपक्रम्य भीमसेनोक्तिरियम् । अत्र इत्थमित्यध्याहृत्य गुरुर्गौरवेण साक्षादनभियोज्यो युधिष्ठिरः इत्थममुना प्रकारेण खिन्ने ग्लाने मयि खिद्यतेऽनेनेति खेदो मात्सर्यं (त) भजति । कुरुषु कौरवेष्वद्यापि एव दुरवस्थायामपि न भजतीति सोपहासकाका वाक्यार्थः । किं कृत्वेत्याह—तथाभूतामिति । नृपैरेव सदः सभा तस्या पाञ्चालदेशाधिपस्य राज्ञस्तनया पुत्री जन्मप्रभृत्यपरिभूताम् । असत्परिग्रहेणैव तथाभूता स्त्रीधर्मिणीं दुःशासनाकृष्टकेशपाशा विशिष्य भवत्सन्निधावपि कथयितुमयोग्याम् । दृष्ट्वेति भजनक्रियया समानकर्तृकम्, उषित स्थितमिति च भावे क्तप्रत्ययसिद्धं द्वितीयान्त दृष्ट्वेत्यस्य कर्म । तथा च वल्कलस्य धरैरस्माभिर्वने व्याधैः सार्धम्, नतु वानप्रस्थनृपादिभिर्यदुषितम्, विराटस्य राज्ञ आवासे गृहेऽनुचितस्य सूदादिवेषस्यारम्भेण निभृतं गुप्त यथा स्यात्तथा स्थितं च दृष्ट्वेत्यर्थः । दीपिकाकृतस्तु—'दृष्ट्वेत्येतदुषितमित्यनेन समानकर्तृकम् । सन्निधानात् । तेन पञ्चानामपि तद्दर्शनं लभ्यते' इत्याहुः । अर्वाञ्चस्तु—वल्कलधरैर्व्याधैः सहोषित मा दृष्ट्वा, विराटस्यावासे स्थित च मा दृष्ट्वा' इत्यर्थमाहुः । अत्र काकुवैशिष्ट्यान्मात्सर्यस्यात्यन्तानौचित्यं ध्वन्यते ।" इत्युदाहरणचन्द्रिका.

व्यङ्ग्यं गुणीभूतम्, अतो न ध्वन्यर्थं काकुरिति चेन, उक्तव्यङ्ग्यस्य क्रोधप्रकर्षपर्यवसन्नतया वाच्यस्यैव तदङ्गत्वात् । तदेतदुक्तम्—'नच वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्' इति । तथापि काक्वाक्षिप्तरूपगुणीभूतव्यङ्ग्यप्रभेदता कथमपनेयेति चेत्, न । अत्र नेति प्रश्नकाक्कापि वाक्यार्थप्रतीतिपर्यवसानात् । यां काकुं विना वाक्यार्थबोध एव नोपपद्यते तयैवाक्षिप्तस्य गुणीभावात् । यथा—'मथ्नामि कौरवशतं समरे न कोपात्' इत्यादौ भीमसेनादौ तादृशे वक्तरि । तदेतदुक्तम्—'प्रश्नमात्रेणापि काकोर्विश्रान्तेः' इति ।

अन्ये तु—'कुरुषु न भजतीति नञ्काकुः किमर्था । ततः प्रश्नरूपः किमर्थ एव हठाक्षिप्त इति तस्यैव गुणीभावो न्याय्यः । ननु क्रमेणापि काक्वा व्यङ्ग्यो गुणीभूतो भवति । अतएव गुणीभूतविभागे काक्वाक्षिप्तमिति हठार्थगर्भाक्षिप्तपदप्रयोग' इति तात्पर्यमाहुः ।

'तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एह्णि सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥'

---

व्यङ्ग्यार्थोपस्कृतो हि वाच्यार्थः क्रोधप्रकर्षपर्यवसायीति शोभन इत्यर्थः । ध्वन्यर्थं ध्वनित्वप्रयोजिका । स्फुटत्वादुक्तावनुक्तं हेतुं स्वयं दर्शयति—उक्तेति । क्रोधप्रकर्षकतया रसान्तरगतत्वेन व्यङ्ग्यमेव प्रधानम्, वाच्यं तु तदङ्गमिति पर्यवसानात् गुणीभूतमित्यर्थः । वृत्तौ शङ्कातन्निरासौ उद्धृतदर्शनेव ग्रन्थेन कृताविति दर्शयितुमाह—तदेतदिति । अपराङ्गत्वाभिप्रायं वाच्यसिद्ध्यङ्गमिति पदमिति प्रदीपव्याख्याने दर्शितमिति न विरोधः । प्रश्नमात्रेणेतिग्रन्थं विधान्तरेण गुणीभूतव्यङ्ग्यत्वाशङ्कानिवारकत्वेन व्याख्यातुमाह—तथापीति । नञ्मात्रगतया प्रश्नव्यञ्जिकया काक्कापि वाक्यार्थोपपत्तौ सिद्ध इत्यादिसमस्तगतकाक्का व्यङ्ग्यस्यानौचित्यस्य न काक्वाक्षिप्तत्वम् । या विना वाक्यापर्यवसानं तादृशकाकुव्यङ्ग्यस्यैव तथात्वादिति समाधानग्रन्थार्थमाह—अत्रेत्यादिना । किमर्थेति । किमित्यस्यार्थः प्रश्न एवार्थो व्यङ्ग्यो यस्या इत्यर्थः । क्रमेण प्रश्नरूपव्यङ्ग्यद्वारा । एवं चैतन्मते वाच्यस्य सिद्धिः शाब्दबोधः, तदङ्गं काकुः, तद्व्यङ्ग्यमनौचित्यमित्यर्थः । तेन विना बाधाच्छाब्दबोधानुदयात् । काक्वाक्षिप्तरूपगुणीभूतभेदाशङ्काप्रश्नरूपव्यङ्ग्यस्य तथात्वेऽप्यनौचित्यरूपव्यङ्ग्यस्य प्राधान्यादाशङ्कानिरास इति ज्ञेयम् । तइआेति । 'तदा मम गण्ड

---

१. 'वाच्यार्थ' क २. 'न नञ्काकु' क. ३. 'काकु० किमर्थ' ख. ४. 'तइआ इति । नायिकाभयेन निकटवर्तिनीमन्यां साक्षादपश्यन् नायिकाकपोलगत तत्प्रतिबिम्ब नायिकामुखावलोकनमिषेण पश्यन्तं नायकं प्रति प्रतिबिम्बापगमे दृष्टिविकारेण ज्ञातरहस्याया नायिकाया इयमुक्तिः । तदा यदा सा कामिनी मत्संनिधावासीत् । निमग्नामनिमेषतया तथाभूतामिव । 'णमिअ' इति पाठे नमिता निहितामित्यर्थः । सैवाहमिति तदवस्थैवेत्यर्थः । सा स्निग्धानिमेषा । तथा च सखीसान्निध्यातिरिक्तसकलसत्त्वे

वाक्यमनेकपदम् । तेनात्र तदेदानींपदात्मकवाक्यवैशिष्ट्यान्मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यादृशी । चलितायां तु तस्यामन्यादृशीत्यहो प्रच्छन्नकामुकत्वं तवेति व्यज्यते ।

'उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किं चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥'

अत्र नर्मदोद्देशरूपस्य तद्विशेषणीभूतवातकुञ्जादिरूपस्य च वाच्यस्य यथोक्तविशेषणस्य वैशिष्ट्यात्सुरतार्थं प्रविशेति व्यज्यते ।

'णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥'

---

स्थलनिमग्नां दृष्टिं न नयस्यन्यतः । इदानीं सैवाहं तावेव कपोलौ न सा दृष्टिः ॥' **उद्देश इति** । ऊर्ध्वदेश उच्चस्तीरभूप्रदेश इत्यर्थ. । वातविशेषणं सुरतसुहृत्त्वम् । कुञ्जविशेषणं गुञ्जन्मधुकरत्वरूप उत्कर्षः । **णोल्लेईति** । 'नुदत्यनार्द्रमनाः श्वश्रूर्मा

---

तादृग्दृष्टिविरहस्तदेदानी पदात्मकवाक्यगम्यः सखीसानिध्याभावस्य स्वप्रयोजकत्वमवगमयतीति वाक्यवैशिष्ट्योदाहरणम् ।' इत्युदाहरणचन्द्रिका.

१. "उद्देश इति । नायिका प्रति रमणार्थिनः कामुकस्योक्तिरियम्, दूत्या वा । हे तन्वि, कंदर्पवेदनया तनुतायोगिनि, अय नर्मदायाः नर्म ददातीति नर्मदा, नतु यथाकथचिन्नदी तस्या उद्देश ऊर्ध्वो देशः स्खलनभयेन सचरतामनवलोकनीयस्तिष्ठतीत्यन्वयः । 'उद्दिश्यते दूरादेव जनैर्न पुनर्गम्यत इति निर्जनत्व सूच्यते' इति दीपिका । कीदृशस्तत्राह—सरसेत्यादि । सरसाना स्निग्धाना कदलीना श्रेण्या पङ्क्त्या या शोभा तयातिशाय्यतिशयितः । अत्र सरसत्वेन शुष्कपर्णध्वनिराहित्यम्, श्रेणीत्वेन च वेष्टनं गम्यते । तथा कुञ्जानामुत्कर्षेण गुञ्जन्मधुकरकरम्बितकुसुमसमृद्ध्यादिरूपेणाङ्कुरितोऽभूतप्रादुर्भूतो रमणीना विभ्रमो विलासो यत्र सः । तथा चानुत्पन्नविलासानामपि नवनवोन्मेषशालिविलासोदयाद्भवत्याः कामुकवैमुख्ये दुरुत्तर व्यसनं स्यादिति भाव. । न केवलमेतावदेव वैमुख्ये बाधकम्, कि त्वन्यदपि बलवदस्तीत्याह—कि चेति । एतस्मिन्प्रदेशे ते शैत्यमान्द्यसौगन्ध्यवत्तया प्रसिद्धा वाता वान्ति । कीदृशाः । सुरतस्य सुहृद. श्रमघर्माद्यपनोदनेन निरतिशयानन्दमयत्वरूपसुरतोत्कर्षहेतवः । 'श्रमापनयनेन पुनःपुनः प्रवर्तनया सुहृद.' इत्यन्ये । येषा वातानामग्रे मनोभू. सरति चलति । मनोभूत्वेन सचेतसा दुष्परिहर इति ध्वन्यते । मर्मज्ञतेति केचित् । कलितो धृतोऽकाण्डेऽनवसरे । निमित्ताभाव इति यावत् । कोपो येन सः । सुरतवैमुख्ये तु दृढ कुपितः किमिव न करिष्यतीति व्यज्यते । अत्र वाच्यस्य देशादेरुक्तविशेषणवैशिष्ट्यात्कामुकाभिप्रायव्यक्तिः ।" इत्युदाहरणचन्द्रिका. २. 'कांचित्संकेतार्थिनं तटस्थतयेव सनिहितमुपपतिं प्रति संकेतकालसूचनाय प्रतिवेशिनी प्रत्याह—णोल्लेईति । 'होइ' इत्यनन्तर 'णवर' इत्यधिकपाठे केवलमिति बोध्यम् ।

अन्यसंनिधिः संनिहितोऽन्यः । तेनात्र प्रतिवेशिनीं प्रति प्रवर्तिते वाक्ये प्रच्छन्नपुरुषरूपस्यान्यस्य संनिधेर्वैशिष्ट्यात्संनिहितं प्रति संध्या संकेतसमय इति व्यज्यते ।

'सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमे अ किं ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥'

अत्र प्रकरणस्य प्रस्तावस्याभिसारसंबन्धित्वरूपवैशिष्ट्यादुपपतिं प्रत्यभिसर्तुं न योग्यमिति व्यज्यते ।

'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥'

अत्र देशस्यातिविविक्ततादिरूपवैशिष्ट्याद्वक्तृवैशिष्ट्यादिसहितात्सख्या प्रच्छन्नकामुको युष्माभिः प्रहेय इति प्रियसखी. प्रति व्यज्यते ।

---

गृहभरे सकले । क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्राम. ॥' 'अणण्णमणा' इति पाठे त्वनन्यमना इत्यर्थः । अनार्द्रं निष्ठुरम् । **सुव्वईति** । 'श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण । एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥' एवमेव निर्व्यापारा । करणीयं रन्धनादि । सज्जय साधय ॥ **प्रकरणस्येति** प्रस्तावपदार्थकथनम् । **अभिसारसंबन्धित्वेति** । अभिसरणप्रस्तावे हि प्रियागमनमभिसरणनिषेधसूचकमित्यर्थ. । **अन्यत्रेति** । कुसुमानामवचायं हस्तेनादानम् । 'हस्तादाने चेरस्तेये' इति घञ् । अस्मीत्यहमर्थेऽव्ययम् । सख्या

---

नुदति प्रेरयति । अनार्द्रमकरुणम् । तेन श्रमादिव्याजालम्बनेनापि नावकाश इति ध्वन्यते । गृहभारो गृहकार्यनिर्वाह' । सकल इत्यनेन सार्वकालिकी व्यग्रता सूच्यते । यदि क्षणमात्रं विश्रामो भवति तर्हि संध्यायाम् । अथवा न भवति इति योजना । अत्र कामुकसंनिधित्वरूपादन्यसंनिधिवैशिष्ट्यात्संकेतकालसूचनाभिव्यक्ति' ।' इत्युदाहरणचन्द्रिका.

१ 'सुव्वईति । उपपतिं प्रत्यभिसर्तुं प्रस्थिता नायिकां निवारयितुं सख्या इयमुक्तिः । समागमिष्यतीति श्रूयत इत्यन्वय' । श्रूयते ननु चिरकाल श्रुतम् । सम्यक्पूर्णकाम. आगमिष्यति प्रिय इति सोल्लुण्ठोक्ति' । अद्य, ननु दिनान्तरे; प्रहरमात्रेण, ननु विलम्बात् । एवमेव तदीयभोजनाद्युपयोगिव्यापारराहित्येन । करणीयं रन्धनादिकं सज्जय साधयेत्यर्थ. । अत्र विदितरहस्यया सख्या कृतस्य प्रियागमनप्रस्तावस्याभिसरणप्रकरणकृतत्वरूपाद्वैशिष्ट्यात्प्रस्तावपदवाच्यस्य प्रकरणस्याभिसारसंबन्धित्वरूपाद्वा वैशिष्ट्यान्निवारणं व्यज्यते ।' इत्युदाहरणचन्द्रिका. २ 'अन्यत्रेति । हे सख्य:, यूयमन्यत्र इतो दूरम् । कुसुमानामवचाय हस्तेनादानम् । तथा चान्यत्र हस्तग्राह्यकुसुमबाहुल्यमिति प्रलोभनम् । अस्मीत्यहमर्थकम् । अत्राहमवचाय करोमि । हेतुमाह—नाहमिति । हि यस्माद्दूरं भ्रमितुं संचरितुं न समर्था । प्रसीदत प्रसन्ना भवत । अयं वो युष्मभ्यमञ्जलि· प्रणामाञ्जली रचित' कृत· । सर्वाभ्य एकोऽञ्जलिरप्यसामर्थ्यादेव । अत्र देशस्य निर्जनत्वादिवैशिष्ट्यात्प्रच्छन्नकामुकप्रेषणमाश्वस्ता प्रति व्यज्यते ।' इत्युदाहरणचन्द्रिका.

'गुरुअणपरवस पिअ किं भणामि तुह मन्दभाइणीअ अहम्।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जम्॥'

अत्राद्यपदप्रतिपाद्यमधुसमयवैशिष्ट्याद्वक्तुरवस्थाविशेषसहितादिदानीं यदि व्रजसि तदाहं तावन्न जीवामि, तव तु न जानामि गतिमिति प्रियं प्रत्युरक्तया व्यज्यते।

आदिग्रहणाच्चेष्टालीलादेः। तत्र चेष्टा यथा—

'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
आनीतं पुरतः शिरोंशुकमधःक्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते॥'

---

व्यज्यत इत्यन्वय.। गुरुजनेति। 'गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम्। अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम्॥' गतिमवस्थाम्। आदीति। कालादेरित्यादिपदादित्यर्थः। चेष्टादेरिति वृत्तिगतादिप... आद्यमाह—लीलादेरिति। आदिना हावान्तरपरिग्रहः। द्वारस्योपान्ते निरन्तरे

---

१. 'गुरुअणेति। तुहेति द्वितीयान्त पूर्ववत्। संबन्धसामान्यविवक्षया वा षष्ठी। गुरुजनो जनमात्रम्, न तु विदग्धः। स एव वसन्ते प्रवासप्रेषणात्परः शत्रुः। तस्य वश अधीनेति सबोध्यविशेषणम्। तेनानिवार्यत्वम्। प्रियेत्यनेन गमने दु खौत्कण्ठ्यम्। किं भणामि वदामि। परायत्ते निरर्थकत्वात्। मन्दभागिनी अल्पभाग्या। यतस्तवेयं मतिः। किं मया क्रियते तत्राह—अद्येत्यादि। अद्य प्रकरणाद्वसन्ते। यत्र प्रवासिनोऽपि गृहमायान्ति। व्रजेति रोषोक्तिः। स्वयमेव करणीयं कर्तुमर्हं जानासि। तेन स्वधैर्यं बुद्ध्वैव प्रायो गच्छसीत्यभिप्रायः। अत्राद्यशब्दप्रतीतात्प्रतिदिनोपचीयमानत्वादिरूपाद्वसन्तकालवैशिष्ट्यादिदानी त्वद्गमने न जीविष्यामीति व्यज्यते।' इत्युदाहरणचन्द्रिका. २. 'चेष्टादेः' ग. ३. 'चेष्टाया' क. ४. 'द्वारोपान्तेति। मित्रं प्रति नायकस्योक्तिरियम्। मयि द्वारस्योपान्ते समीपे निरन्तरे निर्व्यवधानेऽत्यन्तसनिहिते सति तया प्रकृतया नायिकया सौन्दर्यस्य साराणां श्रीः सपत्तिर्यत्र, सौन्दर्येण साराणां श्रेष्ठानामिव श्रीः शोभा वा यत्र तथाभूतया। ऊरुयुगं प्रोल्लास्य प्रसार्य परस्परेण समासक्तं संबद्धं समासादितं स्थापितम्। अथवा भावे क्तप्रत्ययः। तथा च समासङ्ग प्रापितमित्यर्थः। तथा शिरःसंबन्ध्यंशुक पुरतो मुखोपर्यानीतम्। चले चपले लोचनेऽधःक्षिप्ते संचारिते। वाचो वचनस्य तत्रानाविधं प्रसरणं सखीषु प्रवर्तनं निवारितम्। दोर्लते भुजलते संकोचिते। आकुञ्च्य मिथः संयोजिते इत्यर्थः। अत्र पञ्चभिर्वाक्यैरुल्लासनादिचेष्टावैशिष्ट्यात्क्रमेण स्पृष्टकालिङ्गन-गूढागमन-सूर्यास्तसमय-कोलाहलराहित्य-पारितोषिकालिङ्गनानि व्यज्यन्ते। तैश्चानुरक्तासीति रहस्यं द्योत्यते। तत्र स्पृष्टकालिङ्गनस्वरूपं—'संमुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्य स्पर्शनं स्पृष्टकम्' इति वात्स्यायनसूत्रे दर्शितम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्रोरुसमासङ्गादिचेष्टावैशिष्ट्यात्प्रच्छन्नकामुकविषय आकूतविशेषो ध्वन्यते । तत्र प्रथमार्धेन स्पृष्टकमालिङ्गनम्, शिरोंशुकं पुरत आनीतमित्यनेन गूढमागच्छेरिति, अधःक्षिप्ते चले लोचने वाचस्तत्र निवारितं प्रसरणमित्येताभ्यां सूर्यास्तसमये कोलाहलरहिते काले समागन्तव्यमिति, संकोचिते दोर्लते इत्यनेन पारितोषिकमालिङ्गनं करोमीति व्यज्यते । यद्यप्येकत्रैवोदाहरणे भेदान्तराण्यपि सन्तीति तदेवोदाहरणान्तरं संभवति, तथापि निःसंदेहव्युत्पत्तये आज्ञावसरतया पुनः पुनरुदाह्रियते । वक्तृबोद्धव्यादीनां प्रत्येकमेव न व्यञ्जकत्वम्, किंतु मिलितानामपीति द्रष्टव्यम् । तत्र द्वयोर्व्यञ्जकत्वं यथा—

'अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धिअ सज्जाए मह णिमज्जहिसि ॥'

नन्वर्थमात्रव्यञ्जकत्वे शब्दार्थयुगकाव्यस्य व्यञ्जकत्वं न सिद्धमित्यत आह—

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।**
**अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥ ३ ॥**

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपेऽर्थव्यञ्जकतानिर्णयस्तृतीय उल्लासः ।

---

निर्व्यवधाने । प्रोल्लास्य प्रसार्य । **स्पृष्टकमिति** । दूरस्थस्यैव प्रियस्य स्वाङ्गैः स्वाङ्गान्येव मेलयित्वालिङ्गनं स्पृष्टकमित्याहु. । **भेदान्तराण्यपीति** । अन्यत्र यूयमित्यत्र देशवैशिष्ट्यवद्वक्तृवैशिष्ट्यमपि दर्शितम् । अद्येति कालवैशिष्ट्योदाहरणेऽपि वक्तुरवस्थाविशेषरूपवैशिष्ट्यमित्येवमित्यर्थः । **अत्तेति** । 'श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय । मा पथिक रात्र्यन्ध शय्यायां मम निमङ्क्ष्यसि ॥' आवयोरिति वा । निमज्जति निःस्पन्दा शेते । अहमित्यत्र शयनक्रियानुपादानान्निद्राविरहध्वननम् । **शब्देति** । प्रत्यक्षीकृतकामिमिथुनादौ त इत्यादौ चास्वादविरहादन्वयव्यतिरेकाभ्यां शब्दस्यापि हेतुत्वम्, परिवृत्तिसहत्वतदभावाभ्यां तु शब्दाप्राधान्यमर्थप्राधान्यं विपरीतं चेत्येतावान्विशेष इति भावः ॥ इति श्रीमत्तत्सदुपाख्यश्रीरामचन्द्रभट्टसूरिवरात्मजतत्सद्वैद्यनाथभट्टविरचितायां काव्यप्रदीपटीकायां प्रभाख्यायामर्थव्यञ्जकतानिर्णयो नाम तृतीय उल्लास· ॥

---

१. "अत्तेति । स्वयदूत्या इयमुक्ति । 'अज्जा' इति पाठे आर्या साध्वी न विदग्धा । निमज्जति वार्धक्यान्निःस्पन्दं शेते नतु जाग्रद्रूपा । तेन शङ्काराहित्यम् । अत्र ततो भिन्नस्थलेऽहमहमेव नान्यसहिता । अत्र स्वापबोधकपदानुक्त्या निद्राराहित्यं स्वस्य व्यज्यते । दिवसकमिति निन्दाया कप्रत्यय । तस्य समागमप्रतिकूलत्वात् । द्वितीया चात्यन्तसयोगे । दिवसकं व्याप्येत्यर्थ । 'दिअहए' इति पाठे दिवसके प्रलोकय सम्यगवलोकय । पथिकरात्र्यन्धेति च रहस्यगोपनाय । पथिकत्वेन श्रमाद्विसरणयोग्यताया रात्र्यन्धत्वेन च स्वशय्यापतनप्रसक्तेर्द्योतनात् । अन्यथा प्रसक्तनिषेधे रहस्यभङ्गापत्तेः ।

चतुर्थ उल्लासः।

यद्यपि काव्यलक्षणं विभागं च विधाय लक्षणपदार्थेषु विवेचनीयेषु विशेष्यपदस्यार्थः शब्दार्थौ विचारितौ, इदानीं विशेषणपदार्थानां दोषगुणालंकाराणां निरूपणमुचितम्, नतु काव्यभेदस्य ध्वन्यादेर्भेदानाम्, तथापि ध्वन्यादेर्भेदेषु ज्ञातेषु दोषादीनां हेयोपादेयतयोरवगमो भवति। तयोर्विशेषनिष्ठत्वात्। यथा श्रुतिकटुत्वं दोषो ध्वनिविशेषे शृङ्गारादिध्वनौ हेयः, रौद्रादिरसध्वनौ चित्रभेदे वा अहेय एव। माधुर्यादिर्गुणः शृङ्गारादिध्वनावुपादेयः, रौद्रादिध्वनौ त्वनुपादेय एव। अलंकारोऽपि यमकादी रसादिध्वनावनुपादेयः, चित्रभेदे तूपादेय एव। तथाच दोषादिनिरूपणोपयोगिषु काव्यविशेषप्रभेदेषु निरूप्यमाणेषु प्रसङ्गादनुपयोगिनोऽपि निरूपणीया इत्युल्लासत्रयेण काव्यभेदत्रयभेदो निरूपणीयः। तत्र प्रथमे ध्वनिभेदः। तत्र तावद्ध्वनिर्द्विधा—अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। तत्र यद्यप्यभिधायाः प्राथम्यात्तन्मूलको विवक्षितान्यपरवाच्य एव प्रथमं निरूपयितुमुचितः, तथापि लक्षणामूलव्यञ्जनायाः प्राङ्निरूपणात् 'पशूननक्ति' इत्यत्रेव प्रावृत्तिकं क्रममुपादाय, सूचीकटाहन्यायेन वा प्रथममाद्यमुद्दिश्य विभजते—

---

**भेदेषु ज्ञातेष्विति**। रसध्वनित्वादिना ज्ञातेष्वित्यर्थः। तयोर्हेयोपादेयतयोः। **विशेषेति**। ध्वनिविशेषनिष्ठत्वादित्यर्थः। तदेव दर्शयति—**यथेति**। यस्य हि योऽपकर्षप्रयोजकः स दोषस्तत्र हेयः। अन्यत्र तु स न दोषः। अतएव न हेयः। **यमकादिरिति**। चित्तविक्षेपकत्वादिति भावः। चित्रभेदेषु शब्दचित्राख्ये। **काव्यविशेषप्रभेदेष्विति**। काव्यविशेषाणां ध्वन्यादीनां प्रभेदेषु रसध्वन्यादिरूपेषु। नन्वेवमपि यन्निरूपणं विना दोषादिनिरूपणं न संभवति त एव भेदा निरूपणीया न त्वन्येऽपि तत्राह—**प्रसङ्गादिति**। तत्र उल्लासत्रयमध्ये। **प्रागिति**। अभिधामूलव्यञ्जनात् पूर्वमित्यर्थः। **पशूनिति**। प्रजापतिदैवत्ययागसाधनानां सप्तदशपशूनामुपाकरणादयः षोडशसंस्काराः सह कर्तव्याः। 'प्राजापत्यैश्चरन्ति' इत्येकपदेनोपादानात्। अतः सर्वेषामुपाकरणं कृत्वा ततोऽञ्जनमिति पदार्थानुसमयाख्यक्रमेण किमञ्जनमुपाकरणवद्यतः कुतश्चित्पशोरारभ्य कार्यमुत येन क्रमेणोपाकरणं प्रवृत्तं तेनैव क्रमेणेति संशये नियामकाभावादस्त्वनियमः। अञ्जनादिकरणे तु पूर्वप्रवृत्तोपाकरणक्रमस्यैवोपस्थितस्य नियामकत्वसंभवात्तुल्यव्यवधानसंभवे न्यूनाधिकतत्कल्प-

---

महेत्यावयोरित्यर्थे निपातः। स्वमात्रोपादाने रहस्यप्रकाशापत्तेः। तरुणतया स्वशय्यापतनस्यात्यन्तानुचितत्वाद्वा स्वमात्रोट्टङ्कनम्। निमज्जथसि शयिष्ठाः। 'णिसज्जइ' 'णिसजहिसि' इति पाठे निषीदसि नीषेत्स्यसीति संस्कृतम्। अत्र गृहे विद्यमानायाः श्वश्र्वा अतिवृद्धतया वधिरनिश्चेष्टत्वादियोगादन्यस्य चासत्त्वान्निःशङ्कं व्यवहरेति वक्तृप्रतिपाद्यवैशिष्ट्यात्प्रतीयत इति दिक्।" इत्युदाहरणचन्द्रिका.

१. 'पदस्यार्थशब्दार्थौ' क, 'पदार्थः शब्दार्थौ' ग. २. 'अपि' क-पुस्तके नास्ति. ३. 'ध्वनिर्यथा' क, 'ध्वनिर्द्विविधः' ग.

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥ १ ॥**

वाच्यः वाच्यजात्यादिधर्माणां धर्मी अविवक्षितो वाच्येन रूपेणान्वयबोधविषयतया अनपेक्षितो यत्र सः । तत्र यद्यप्यविवक्षितवाच्यमात्रस्य नायं विभागः, किंतु तद्विशेषस्य ध्वनेः । न तु शब्दात्तथावगमः । तथापि यत्तदोरेकार्थपरामर्शकतया तत्र ध्वनाविति तच्छब्दार्थस्य ध्वन्यभेदे यच्छब्दार्थोऽपि ध्वनिरेव लभ्यते । अयं च ध्वनिभेदो लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सति संभवति । अविवक्षितत्वं च वाच्यस्यान्वयानुपपत्तेः । सा च वाच्यस्यानुपयुक्तत्वेन, उपयोगिनि रूपान्तरे तात्पर्याद्वा, स्वत एवान्वयायोग्यत्वाद्वा । अनुपयुक्तत्वमपि पुनरुक्तत्वात्, विशेषानाधायकत्वमात्राद्वा । तत्रोभयत्रापि वाच्यमर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके संक्रमितमाश्रयत्वेन परिणमितम्[२] । वाच्योऽप्यर्थो रूपान्तरेण लक्ष्यत इत्यर्थः । द्वितीये तु वाच्यमत्यन्ततिरस्कृतं न केनापि रूपेणान्वयप्रविष्टम् । तत्रार्थान्तरसंक्रमितवाच्यं पुनरुक्तेर्यथा[३]—

---

नायोगाच्च प्रवृत्तिक्रमेणैवानुष्ठानमिति मीमांसकसिद्धान्तोऽत्र दृष्टान्तीकृतः । प्रकृतेऽपि लक्षणामूलव्यञ्जनाया लक्षणामूलध्वन्युपयुक्ताया पूर्वं प्रवृत्तिस्तदुपजीविलक्षणामूलध्वनेः प्रथम निरूपणमित्येतावता साम्यात् । लक्षणामूलव्यञ्जनतदुत्थध्वन्योरङ्गाङ्गित्वेन परस्परसंनिकर्षस्य न्यायसिद्धत्वात् । लक्षणामूलध्वने पश्चान्निरूपणे तदङ्गलक्षणामूलव्यञ्जननिरूपणस्याभिधामूलव्यञ्जनतदुत्थाभिधामूलध्वनिभ्या द्वाभ्या व्यवधानमिति विप्रकर्षापत्तेरिति भावः । दृष्टान्ते विध्यवगतसाहित्यानुरोधात्क्रमनियम, इह तु तदभावात्स न युक्त इत्यत आह—**सूचीति** । अभिधामूलस्य बहुभेदत्वादिति भावः ।

ननु जात्यादेरेव वाच्यत्वादविवक्षितवाच्यत्वस्यात्यन्ततिरस्कृतवाच्यार्थान्तरसंक्रमितवाच्योभयसाधारण्येऽपि वाच्यस्य रूपान्तरेण लक्ष्यत्वरूपस्यार्थान्तरसक्रमितत्वस्यासंभव इत्यतो व्याचष्टे—**वाच्य इत्यादिना** । वाच्येन रूपेणेत्यर्थान्तरसंक्रमितवाच्यसग्रहार्थम् । अनपेक्षितस्तात्पर्याविषयः । कुन्तानामपि वाच्येन प्राधान्यरूपेणानपेक्षणात्सग्रहः । **लक्षणामूलेति** । लक्षणाया मूलं प्रयोजनतया हेतुभूतम् । तेन निरूढलाक्षणिकोत्थध्वनिव्यावृत्तिः । गूढत्वप्राधान्ये च वाच्यातिशयत्वोपलक्षके । तेनाष्टविधगुणीभूतव्यङ्ग्यव्यावृत्तिः । उभयत्रापि अनुपयुक्तभेदद्वयेऽपि । **आश्रयत्वेनेति** । इदमुपलक्षणम् । कुन्ताः प्रविशन्तीत्यादावर्थान्तरे पुरुषादिधर्मिण्याधेयत्वेनापि परिणामस्याभ्युपगन्तव्यत्वात् । मुख्यपरिणामस्यासंभवादाह—**वाच्योऽपीति** । रूपान्तरेण गम्यमानत्वमेव परिणाम इत्यर्थः । कुन्तानामपि विशेषणत्वेन रूपान्तरेण लक्षणाद्यथाश्रुतेऽपि न दोष इत्याहु । 'तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते । रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥' यदा ते

---

१. 'वाच्यावाच्य' क. २. परिणामितम्' क ३. 'पुनरुक्तं यथा' क.

'ताला जाअन्ति गुणा जाला ते सहिअएहिँ घेप्पन्ति।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ॥'

अत्र द्वितीयकमलशब्दः सौरभादिगुणयुक्तत्वरूपे लक्ष्ये संक्रमितवाच्यः।

विशेषानाधायकत्वमात्राद्यथा—

'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥'

अत्र वच्मीत्यनुपयुक्तार्थम्। अनुपादानेऽपि वचनक्रियाप्रतीतेः। अत उपदेशत्वं लक्ष्यम्। तत्र वाच्यार्थः संक्रमितः। एवं त्वामस्मीतिपदे अप्यनुपयुक्तार्थे। संबोध्यतयैव युष्मदर्थस्य वचनकर्मतावगतेः। वच्मीत्युत्तमपुरुषेणैवास्मदर्थस्य तत्कर्तृकत्वप्रत्ययात्। अतस्ताभ्यां लक्ष्ययोरुपदेश्याप्तत्वयोस्तद्वाच्यौ संक्रमितौ। तथा आत्मीयाया एव मतेः सर्वैरास्थानादनुपयुक्तत्वेनात्मीयशब्देन प्रमाणपरिगृहीतत्वे लक्ष्यमाणे तद्वाच्यं संक्रमितम्। 'अस्मद्युत्तमः' इत्यत्रार्थग्रहणादस्मियोगे वच्मीत्युत्तमपुरुषः।

अत्यन्ततिरस्कृतं यथा—

'उपकृतं बहु नाम किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम्॥'

---

प्रसिद्धा गुणाः सहृदयैर्गृह्यन्ते तदोत्कर्षहेतवो जायन्त इत्यन्वयः। दृष्टान्तमाह **रवीत्यादि**। अनुगृहीतानि स्पृष्टानि कमलानि कमलानि सुरभीण्याह्लादकानि वा भवन्ति। अत्रातथाभूतेषु कमलत्वजात्यभावो व्यङ्ग्य कमलपदलक्षणालभ्यः। अत्र रविकिरणाननुग्रहेण न केवलं सौरभादिगुणहानिः, अपि तु कमलत्वसाम्यान्तर्गतिरपि नेति लक्षणामूलध्वनिः।

**त्वामस्मीति**। अत्रोपदेशलक्षणामूलं हितसाधनत्वं व्यङ्ग्यम्। त्वामित्युद्देश्यत्व-

---

१. "त्वामसीति। असीत्यहमर्थे। एव च यत इत्यध्याहृत्य 'यतोऽत्र विदुषामसाधारणज्ञानवता समवाय एकवाक्यतापन्नः समुदायस्तिष्ठति तत्तस्मादात्मीयामप्रतार्यां मतिमास्थायावलम्ब्यात्र स्थितिं विधेहीति वाक्यार्थस्य त्वामुपदेशार्हमहमाप्तो वच्म्युपदिशामीत्युपदेशक्रियाकर्मत्वेनान्वयः। 'आदाय' इति पाठे गृहीत्वा। अवलम्ब्येति यावत्। विद्वत्समवायात्मीयशब्दानामाशुपरपराभवपरानभिभवनीयत्वावाध्यत्वानि दर्शितलक्षणामूलानि व्यङ्ग्यानि। एवं त्वामहमित्यनयोरवश्योपदेश्यहिताहितत्वालङ्घनीयाज्ञत्वे। वच्मीत्यस्य चादरणीयत्वमिति। केचित्तु—'स्थितिशब्देनापि सावधाना स्थितिर्लक्ष्या। विपक्षच्छिद्रापेक्षित्वं व्यङ्ग्यम्' इत्याहुः। पूर्वत्र पुनरुक्तत्वादिहेतुविशेषानाधायकत्वादर्थान्तरसङ्क्रमितत्वमिति द्वयमप्यर्थान्तरसङ्क्रमितवाच्यध्वनेरुदाहरणम्।" इत्युदाहरणचन्द्रिका। २. "उपकृतमिति। त्वया यद्बहूपकृतं तत्र तद्विषये किमुच्यते किं वाच्यम्। बहुत्वाद्वक्तुं न शक्यत इत्यर्थः। भवता परं केवलं सुजनता प्रथिता प्रकटिता। तथा च सौजन्यप्रयुक्त एवैतावानुपकारः, न तु प्रत्युपकारलाभाद्युपाधिप्रयुक्त इति भावः। हे सखे, ततः यस्मात्सुजनता प्रथिता

अत्रापकारिण्यन्वयायोग्यैरुपकृतादिपदैः स्वार्थविपरीतं लक्ष्यते । नच तत्र वाच्यस्य कथंचित्प्रवेशः । त्वयैवमपकारेऽपि क्रियमाणे मया प्रियमेवोच्यत इति स्वसाधुत्वं व्यङ्ग्यम् । तवोपकारापकारविवेको नास्तीति वा । अयं च प्रभेदो न केवलं विरोधिलक्षणया, किं त्वन्यत्रापि । यथा—

'आधूतसस्वेदकरोत्पलायाः स्मितावगूढप्रतिकूलवाचः ।
प्रियो विहायाधरमायताक्ष्याः पपौ चिराय प्रतिषेधमेव ॥'

अत्र पपाविल्यनेन सोत्कण्ठं निरीक्षणं लक्ष्यम् । उत्कण्ठातिशयो व्यङ्ग्यः ।

द्वितीयं ध्वनिभेदं कारिकार्धाभ्यामुद्दिश्य विभजते—

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।**

ध्वनिरिति प्रकरणाल्लभ्यते । अन्यपरं व्यङ्ग्योपसर्जनीभूतम् । अयं भेदोऽभिधामूलगूढव्यङ्ग्यप्राधान्ये सति द्रष्टव्यः । एष तु—

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २ ॥**

सूचीकटाहन्यायमाश्रित्यालक्ष्यक्रमव्यङ्ग्यस्य पूर्वमुद्देशः । तस्यैकत्वात् । द्विती-

---

लक्षणामूलं चावश्यवाच्यहिताहितत्वम् । तथास्मीत्युपदेष्टृलक्षणामूलं चानुल्लङ्घनीयाज्ञत्वं व्यङ्ग्यम् । एवमात्मीयामित्यत्राविगीतपक्षाश्रयणमित्यूह्यम् । उपकृतमित्यादावपकाराद्यतिशयोऽपि व्यङ्ग्यो बोध्यः । **आधूतेति** । स्मितेनावगूढाच्छादिता प्रतिकूला मामेति निषेधबोधिका वाग्यस्या इत्यर्थः । प्रतिषेधं तद्बोधकवाक्चेष्टादिकम् ।

अन्यपरमित्यस्यान्यतात्पर्यकमित्यर्थे व्यङ्ग्ये तात्पर्याविषयत्वानभ्युपगमादसंभव इत्यतो व्याचष्टे—**व्यङ्ग्येति** । लक्ष्यालक्ष्यक्रमत्वादिविभागो विवक्षितान्यपरवाच्यस्यैवेति दर्शयितुमाह—**एष त्विति** । न लक्ष्यो वाच्यप्रतीत्यपेक्षया क्रमो यस्य तादृशं व्यङ्ग्यं यत्रेत्यर्थः । एकत्वात् अलक्ष्यक्रमत्वेनैकभेदत्वात् । **पञ्चदशेति** । शब्दार्थोभयशक्तिमूलत्वेन त्रिविधस्य लक्ष्यक्रमस्य शब्दशक्तिमूलस्यालंकारवस्तुरूपव्यङ्ग्यद्वैविध्याद्द्वैविध्यम् । अर्थशक्तिमूलस्य द्वादश भेदाः । उभयशक्तिमूलस्यैकः । इत्येवं पञ्चदश भेदा बोध्याः ॥ ननु विभावानुभावव्यभिचारिसमूहालम्बनस्यैव रसत्वाद्विभावादिरसप्रतीत्योः क्रमस्यैवाभावादक्रम इत्येव वाच्यम्, न त्वलक्ष्यक्रम इति

---

तस्मात् ईदृशमेव सदा विदधत्कुर्वन् शरदां वर्षाणां शतं व्याप्य सुखितं सुखयुक्तं यथा स्यात्तथा आस्स्व तिष्ठेति मुख्योऽर्थः । स च प्रकरणादिना बुद्धापकारभावं प्रति बोधितो विपरीतं लक्षयति । तद्यथा—उपकृतमपकृतम् । सुजनता दुर्जनता । सखे शत्रो । सुखितं दुःखितमित्यपकाराद्यतिशयो व्यङ्ग्यः । एवंविधापकारेऽपि प्रियवादित्वात्स्वस्य साधुत्वं वा । तवोपकारापकारविवेको नास्तीति वा । तदीयं कौटिल्यं व्यङ्ग्यमिति केचित् । "अत्यन्ततिरस्कृतवाच्यध्वनेरुदाहरणम्" इत्युदाहरणचन्द्रिका.

यस्य तु पञ्चदशभेदत्वात्। विभावादय एव न रसः, किंतु रसस्तैर्निष्पद्यत इत्यस्ति विभावादिरसप्रतीत्योः क्रमः। स तु न लक्ष्यत इति क्रमस्यालक्ष्यत्वलक्ष्यत्वकृतं भेदद्वयमित्यर्थः।

**रसभावतदाभासभावशान्त्यादिरक्रमः।**
**भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः॥ ३॥**

अक्रमोऽलक्ष्यक्रमः। तच्छब्देन रसभावयोः परामर्शः। आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि। नन्वाभासवद्रसस्य शान्त्यादयः किं नोक्ताः। निरन्तरावयवस्यापरिच्छिन्नस्य निरतिशयस्य वेद्यान्तरसंपर्कशून्यस्य तदभावात्। आभासत्वं तु तिर्यगाद्यधिकरणतया अविरुद्धम्। भिन्न इति। यत्र प्रधानं रसादिस्तत्र ध्वनिः, यत्र त्वप्रधानं तत्रालंकार इति भावः।

रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥ ४॥**

---

तत्राह—**विभावादय एवेति**। 'व्यक्तः स तैर्विभावाद्यैः' इति वक्ष्यमाणसूत्रात्काव्यजन्यविभावादिप्रतीतिमात्रेण श्रोत्रियादेरपि रसवोद्धृत्वप्रसङ्गाच्चेति भावः। निष्पत्तिरग्रे व्याख्यास्यते। नच व्यङ्ग्यव्यञ्जकयोरपि प्रदीपघटयोरिव युगपज्ज्ञानमविरुद्धमिति वाच्यम्। दीपस्य स्वरूपत एव व्यञ्जकत्वम्, विभावादेस्तु ज्ञातस्येति वैषम्येऽस्य युगपज्ज्ञानायोगात्। क्रमाग्रहणं च रसोद्बोधसामग्र्या विषयान्तरभानप्रतिबन्धकत्वस्यानुभवबलेन क्लृप्तत्वात्। अतएवोक्तम्—'विगलितवेद्यान्तरमानन्दम्' इति। **नन्विति**। यथा रसस्याभासरूपो विकार उक्तस्तथा शान्त्यादयोऽपि विकाराः किमिति नोक्ता इत्यर्थः। समाधत्ते—**निरन्तरेति**। निरन्तरा अविच्छिद्यमाना अवयवा विभावादिरूपा यस्येत्यर्थः। रसस्य विभावाद्यनुसंधानजीवितत्वेन तद्विच्छेदरूपायाः शान्तेरसंभव इत्यर्थः। नहि विभावाद्यननुसंधाने शाम्यदवस्थः स्थायी केनाप्यव्यक्तश्चमत्कृतिहेतुः। अथाल्पतारूपः परिच्छेद एव रसशान्तिर्वाच्या सापि नेत्याह—**अपरिच्छिन्नस्येति**। एवमभिव्यक्तस्य रसस्यैकरूपत्वादपकृष्टत्वरूपापि शान्तिर्न संभवतीत्याह—**निरतिशयस्येति**। संधिशबलतयोर्निरासायाह—**वेद्यान्तरेति**। वस्तुतस्तु रसस्य स्थायिभावमूलकत्वान्न शान्त्यादिसंभवः, संभवे वा न चमत्कार इति बोध्यम्। **आभासत्वं त्विति**। तिर्यगादिगतत्वं हि नोक्तरसस्वभावविरुद्धम् येन रसे न संभवेदित्यर्थः। **यत्रेति**। 'शून्यं वासगृहं' इत्यादावुदाहरिष्यमाण इत्यर्थः। यत्र तु गुणीभूतव्यङ्ग्ये 'अयं स रसनोत्कर्षी' इत्यादौ शृङ्गारादिरसादे करुणरसाद्यङ्गत्वं तत्र रसवदादयोऽलंकारा इत्यग्रे व्यक्तीभविष्यति। **प्रमदेति**। एतच्च नायकोपलक्षणम्। तयोश्च परस्परा-

---

१. 'निष्पाद्यः' ग. २. 'लक्ष्यत्व' क-पुस्तके नास्ति.

विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥ ५ ॥

अथेति समुच्चये । कारणानि प्रमदेन्दूदयादीनि कारकोद्दीपकरूपाणि । कार्याणि—

'स्वेद स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥'

वाङ्मनोबुद्धिशरीरारम्भरूपाणि च कटाक्षभुजक्षेपादीनि । सहकारीणि तेषु जनयितव्येपूत्कण्ठादीनि । विभावा आलम्बनोद्दीपनरूपाः । चेत् यदेत्यर्थः । तत् तदेत्यर्थः । यद्यप्युद्दीपकस्य स्थायिनि न कारणत्वम्, किं तूत्पन्ने तस्मिन्नीषदुत्कर्षाधायकत्वरूपमुद्दीपकत्वम् । तथाप्यनुद्दीपितोऽप्यजातप्राय एवेत्युद्दीपकेऽपि कारकत्वोपचारात्तत्रापि विभावव्यवहारः । विभावादिसंज्ञा च विभावनादिव्यापारयोगात् । तद्यथा—वासनारूपतया स्थितान्रत्यादीन्स्थायिनो विभावयन्ति रसास्वादाङ्कुरयोग्यतां नयन्तीति विभावाः । अनुभावयन्ति च

---

नुरागाख्यरतिं प्रत्यन्वयव्यतिरेकाभ्यां कारणत्वावधारणात्कारकत्वम् । इन्दूदयाश्चोत्पन्नस्य रसादेरुत्कर्षकत्वादुद्दीपकत्वम् । लोके रत्यादे स्थायिनो यानि कारणानीत्याद्यन्वय । स्वेद इत्यादि । स्तम्भो निश्चेष्टता । स्वरभङ्गो गद्गदत्वादिस्वरान्यथात्वम् । वैवर्ण्यं वर्णान्यथात्वम् । प्रलय सुखदु खाभ्या चेष्टाज्ञाननिराकृति । सात्त्विका सत्त्वोद्रेकजनिता[१] । संकल्पविकल्पादिवृत्तिकं मनः । निश्चयरूपा बुद्धिः । आरम्भ क्रिया । आदिना लीलाविलासादिहावपरिग्रह । तेष्विति । रत्यादिस्थायिनां तेषु सात्त्विकभावादिषु कार्येष्वित्यर्थ. । आलम्बनमनुरागस्य विषयतया कारकहेतु । तानि नाट्यकाव्ययोश्चेद्वर्ण्यन्त इति शेष । तदा विभावादय क्रमेण कथ्यन्ते । तत्काव्यव्यपदेश्यानि भवन्तीति कारिकार्थ· । तत्र रसादौ स्थायिसंज्ञानिमित्तं दर्शयन्नेव विभावादिशब्दाना योगं दर्शयति—वासनेति । अन्त करणवृत्तिरूपस्य रत्यादेराशुविनाशित्वेऽपि संस्कारात्मना चिरकालस्थायित्वाद्यावद्रसप्रतीतिकालमनुसंधानाच्च स्थायित्वम् । तदुक्तम्—'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न य । आत्मभावं नयत्यन्यान्स स्थायी लवणाकर. ॥ स्रक्सूत्रभावादन्येषां भावानामनुगामक । न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥' इति । तान्विभावयन्ति । अभिव्यञ्जयन्तीत्यर्थ· । तत्कि विभावमात्रेणैव रसाभिव्यक्तिर्नेत्याह—रसास्वादेति । रसास्वादाङ्कुर ईषद्रसाभिव्यक्ति । तद्योगतां प्रापयन्तीत्यर्थ । नायिकादयो हि साधारण्येन काव्यादवगता· सहृदयहृदये वासनात्मकतया स्थितं रत्यादिभावमीषदभिव्यञ्जयन्ति । ईषदभिव्यक्तिरेव च रसादिव्यक्तेरङ्कुर इवोच्यते । एवमनुभावयन्ति रत्यादीन्प्रकटीकुर्वन्तीत्यर्थ । कार्याणि हि रोमाञ्चा-

---

१ 'गुणा·' क, 'स्मृता' ग

तानित्यनुभावाः। पोषकतया विशेषेणाभितः काव्ये स्थायिनं चारयन्ति, विशेषेणाभिमुख्येन चरन्तीति वा व्यभिचारिणः। व्यक्तः स इति। व्यक्तिश्चर्वणेति पर्यायः। सा च विशेषणम्। तथाच व्यक्तिविशिष्ट एव स्थायी रसः। एवंच रसस्याकार्यत्ववचनं विभावादिभिः काव्योपस्थितैः[1] स्थायिनो जननात् विभावादिकार्यताया एव प्रकृतत्वात् विशिष्टत्वस्य कार्यतानवच्छेदकत्वाद्वा। तस्मात्स्थायी न रसः किंतु विभावादिमेलकम्, ब्रह्मैव वा। 'अन्यथा न कार्य इत्यादि ग्रन्थविरोधात्' इत्यादि प्रलपितमनादेयम्। स तैरिति। यस्य यानि कारणादीनि स तैस्तज्जातीयैरित्यर्थः। स्थायी विरुद्धैरविरुद्धैर्वा भावैरतिरस्कृतप्रवाहो भावः। यदुक्तम्—

---

दीनि स्वकारणमाविक्येन व्यञ्जयन्तीत्यर्थः। **पोषकतयेति**। पोषणं च मुहुर्मुहुरभिव्यञ्जनम्। कटाक्षादिकार्यसमर्थत्वं वा। अभित सर्वाङ्गव्यापितया चारणं मुहुर्मुहुरभिव्यञ्जनम्। अभीत्यस्यार्थान्तरमाह—**आभिमुख्येनेति**। कार्यजनने आनुकूल्येनेत्यर्थः। तदुक्तम्—'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥' इति। स्थायिनि समुद्रप्राये उन्मग्ना उद्गता निर्मग्ना निलीनाः। अत एवानियतत्वादपि व्यभिचारिण इति ज्ञेयम्। अत एवोक्तम्—'ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम्। उपकृत्य च गच्छन्ति ते मता व्यभिचारिण॰॥' इति। एव च विभावैरीषदभिव्यक्तिः, अनुभावैः स्फुटा व्यभिचारिभि॰ स्फुटतरेति समुदायजन्याभिव्यक्तिरेव रसत्वापादिकेति। **विशेषणमिति**। न तूपलक्षणमिति भाव॰। अकार्यत्ववचनं स च न कार्य इत्यादिना वक्ष्यमाणम्। काव्योपस्थितै सीतारामादिभि॰। **स्थायिन इति**। रसीभवनयोग्यस्य सामाजिकगतरत्यादेरित्यर्थ। एवमपि यत्किंचित्कामिनीजन्यत्वमस्त्येवेत्यत आह—**विभावादीति**। 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति' इति पञ्चम्या विभावादीना हेतुत्वावगमात्तज्जन्यतायाः प्रसक्ताया निषेधकं तद्वाक्यमित्यर्थ॰। यत्राराध्यत्वादिज्ञानरूपप्रतिबन्धकविरहात्काव्योपात्तैरेव विभावादिभि स्थायिनो जननं तत्र कथमकार्यत्ववचनसंगतिरत आह—**विशिष्टत्वस्येति**। अभिव्यक्तिविशिष्टत्वस्येत्यर्थ॰। मेलकं समुदाय॰। तत्र कस्याप्यहेतुत्वान्न कार्यत्वं युक्तमिति भावः। समुदायस्यानतिरेकादाह—**ब्रह्मैवेति**। तद्रूपतां विनातिशयितानन्दात्मकत्वायोगादिति भाव॰। **अनादेयमिति**। अकार्यस्योक्तरीत्योपपत्ते॰। रसास्वादकाले नियमतोऽस्थायित्वान्निर्विषयत्वाद्बाह्यत्वाच्च विभावानुभावयोस्तथात्वायोगाच्चिन्तादेर्व्यभिचारिणश्च शृङ्गारादावनियतत्वाद्यावद्रसास्वादमननुवृत्तेर्ब्रह्मणश्च केवलस्य रसत्वे ज्ञानिनां रसास्वादप्रसङ्गादिति भावः। **तज्जातीयैरिति**। अयमाशय॰—सामाजिके वासनात्मकतया स्थिताया रतेरभिव्यक्तिरेव रस। तस्याश्च काव्योपात्ताः सीतारामादयो न कारणानि, न वा तत्कटाक्षादीनि, कार्याणि न वा लज्जादीनि सहकारीणि। किं तु तद्बोधोत्तरं सहृदयतासहकृतभावनाविशेषेण सीतात्वादिविशेषपरिहारेण

---

1. 'काव्योपस्थापितैः' क-ख-ग.

'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥' इति ।

न चेयं कल्पना सूत्रकारस्य । उक्तं हि भरतेन—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । एतद्विवृण्वते भट्टलोल्लटप्रभृतयः—'स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद्व्यभिचारिणा पोष्यपोषकभावरूपात्संबन्धाद्रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः । तथाहि ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः, व्यभिचारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये रसः । नटे तु तुल्यरूपतानुसंधानवशादारोप्यमाणः सामाजिकानां चमत्कारहेतुः' इति तदपेशलम् । सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधात् । न च तज्ज्ञानमेव चमत्कारहेतुः । लौकिकशृङ्गारादिदर्शनेनापि चमत्कारप्रसङ्गात् । न चानुभावादिविज्ञानबलायात आरोपस्तथा न तु साक्षात्कारमात्रमिति वाच्यम् । चन्दनसुखादौ वैपरीत्यदर्शनात् । अन्यथैवोपपत्त्या तादृशकल्पनायां मानाभावाच्च ।

श्रीशङ्कुकस्तु—"स्थायितो विभावादिभिरनुमाप्यानुमापकभावरूपसंबन्धाद्रसस्य निष्पत्तिरनुमितिरित्यर्थः । तथाहि नियमविपया धीः सम्यग्बुद्धिः । यथा

---

नायिकात्वादिसाधारणधर्मेण गम्यमानैरलौकिकविभावादिपदवाच्यैः सहृदयस्य रसाभिव्यक्ति. । विभावादीना साधारण्येनाभिव्यक्तिरेव विभावनानुभावनासंचारेणेति शब्दैरुच्यत इति स्थायिपदार्थकथनम् । **अतिरस्कृतेति** । अतएव न विरक्तानां शृङ्गाररसोद्बोध । विरुद्धा रत्यादेर्निर्वेदादय· । अविरुद्धा हर्षौत्सुक्यादयः । उत्पत्तिरित्यादेर्विभावेनेत्यादितृतीयान्तत्रयेण यथाक्रममन्वय. । **अनुकार्य इति** । अनुकार्ये रामादौ जनित उद्दीपित प्रतीतियोग्य कृत· परिपोषितश्च स्थायी रत्यादिको रसपदवाच्य[1] इत्यर्थ । वृत्तौ 'मुख्यया वृत्त्या' इत्यस्यापि शक्त्येत्यर्थः[2] । अथवा वस्तुवृत्त्येत्यर्थ । आरोपस्य तत्पूर्वत्वात्तस्यामुख्यत्वम् । कथं तर्हि सामाजिकानां रसोद्बोधस्तद्व्यवहारश्च तत्राह—**नट इत्यादि** । चमत्कारिण्यारोपे च रसपदं गौणमिति भाव· । तदयमत्र क्रम·—रामादिगतसीतादिविपयकरत्यादिरेव रसः सहृदयेन काव्योपात्तलिङ्गैरादावनुमीयते । ततस्तस्य कमनीयविभावाद्यभिनयप्रदर्शननिपुणे रामाद्यनुकारिणि नटे सादृश्यज्ञानरूपदोषादारोप· साक्षात्कारात्मको धर्म्यंशे लौकिक आरोप्यांशे त्वलौकिको रामोऽयं सीताविषयकरतिमानित्याकारश्चमत्कृतिहेतुरिति । न च सादृश्यस्य भेदगर्भत्वाद्बाधे सति कथं रामत्वाद्यारोप इति चेत् । न । अत्र भेदस्य नटनैपुण्यदोषेणाग्रहणादिति । **चन्दनेति** । नहि चन्दनारोपश्चमत्कृतिहेतु', अपि तु वस्तुतश्चन्दनसबन्ध एव । तथा सुखमपि नारोप्यमाणं तथा, कि

---

१. 'रसो रसपद' क. २. 'शक्तेत्यर्थ.' ख. ग.

'राम एवायम्' 'अयमेव रामः' इत्ययोगान्ययोगव्यवच्छेदविषये। अनन्तरावतीर्णबाधा तु मिथ्याधीः। यथौत्तरकालिके 'न रामोऽयम्' इति बाधे 'रामोऽयम्' इति। विरुद्धोभयकोटिका तु संशयः। यथा 'अयं रामो न वा' इति। सदृशोभयविषया धीः सादृश्यधीः। यथा 'रामासदृशोऽयम्' इति। ताभ्यो लोकप्रसिद्धाभ्यो विलक्षणया चित्रे 'तुरगोऽयम्' इतिवत् 'रामोऽयम्' इति बुद्ध्या प्रथमं[1] पक्षभूतो नटो विषयीक्रियते। ततस्तत्राविद्यमानमपि विभावदित्रयं लिङ्गमवगम्यते। कुतः पूर्वमेव रोमाञ्चाद्याविर्भावने[2] गुरुशिक्षामासाकृतातिशयिताभ्यासेन नटेन—

'सेयं[3] ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥' इति।

'दैवादहमद्य[4] तया चपलायतनेत्रया वियुक्तश्च।
अविरलविलोलजलदः कालः समुपागतश्चायम्॥'

---

तु वस्तुतो विद्यमानमेवेत्यर्थः। **अन्यथैवेति**। वक्ष्यमाणरीत्येत्यर्थ। **विलक्षणयेति**। यद्यपि चित्रे तुरगबुद्धिरपि मिथ्याधीरेव तथाप्यनन्तरावतीर्णबाधातो वैलक्षण्यमस्तीति न दोषः। **तत इति**। रामत्वेन नटस्य विषयीकरणादित्यर्थः। तत्र नटे। राममेदाग्रहेण बाधाग्रहादिति भाव। **कुत इति**। संनिकर्षलिङ्गयोरभावादालम्बनोद्दीपनयोः कथंचिच्छाब्दबोधेऽपि रोमाञ्चादेरनुभावस्यासनिकर्षेण

---

१. 'प्रथमे' क. २. आविर्भावेन' ख. 'अनुभावे' ग. ३. 'सेयमिति। सेय प्राणेश्वरी मम मनसा सकाशाल्लोचनगोचर गतेति संबन्धः। सा यदनुध्यानसतानेनैतावान्कालो गमितः। गोचरमिति भावप्रधाननिर्देशाद्गोचरत्वमित्यर्थः। पूर्वं मनस्येवासीत्, अधुना बहिरपि दृष्टेत्यर्थः। अङ्गेषु, नैकत्राङ्गे सुधारसस्यामृतरसस्य च्छटा वृष्टि। परीरम्भेण सर्वाङ्गीणसतापशान्त्या सौहित्योत्पादनात्। दृशोरिति सप्तमीद्विवचनम्। शोभनः पूरो द्रवो यस्य तथाभूतस्य कर्पूरस्य शलाकिका अञ्जनतूलिका। अतिशयितानन्दहेतुत्वात्। शरीरिणी मूर्तिमती मनोरथस्य श्री सपत्तिः। परीरम्भस्य चरमत्वेऽपि प्राधान्यात्प्रागुपादानम्। अत्र नायिकारूपालम्बनविभावप्रकाशनम्।' इत्युदाहरणचन्द्रिका. ४. 'इत्थं सभोगमुक्त्वा विप्रलम्भमाह—दैवादिति। अद्याहं तयानुभवैकवेद्यसमागमसुखया चपले आयते दीर्घे नेत्रे यस्यास्तथाभूतया। आगमनसमये कातरदृष्टिदर्शनात्पुरःस्फूर्तिकत्वेन तन्मात्रप्रकपोक्तिः। वियुक्तश्च। अभूवमिति शेषः। अविरला निबिडा विलोलाः सर्वदिक्सचारिणो जलदा यत्र एवभूतः अय दृश्यमानप्रकर्ष कालो वर्षर्तुरेव कालो यम इति श्लेषमूलाभेदाध्यवसानम्। सम्यक् प्रतिदिनोपचीयमानतया उपागतश्चेति चकाराभ्या समभिव्याहृतक्रिययोर्यौगपद्यप्रतीतेः समुच्चयालकारः। अविरलं निरन्तर विलोल द्रुतं यथा स्यात्तथा जल ददाति स तथेत्यर्थ इति कश्चित्। अत्र मेघरूपोद्दीपनविभाववर्णनम्।' इत्युदाहरणचन्द्रिका.

इत्यादि काव्यानुसंधानवलादालम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्याविर्भावनेन व्यञ्जनीयस्योत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात्। अथ तैः कृत्रिमत्वेनातल्लिङ्गैरपि कृत्रिमत्वेनाज्ञानात् स्थायी रत्यादिरनुमीयते। सैव चानुमितिः सचमत्कारप्रतीतिरूपा चर्वणा। अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते। चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः। ननु साक्षात्कारएव सचमत्कारः, न त्वनुमित्यादिरपि। अन्यथा सुखादावनुमीयमानेऽपि [१]स्यात्। न स्यात्। वस्तुसौन्दर्यबलाद्रसनीयत्वेन स्थायिनामन्यानुमेयवैलक्षण्यात्। तथापि स्थायिनां नटेऽसत्त्वाद्बाधावतारेऽनुमितिरेव कथं स्यादिति चेत्। न। अभावनिश्चयाभावात् स्थायितया संभाव्यमानत्वात्।" एतदप्यहृदयग्राहि। यतः प्रत्यक्षमेव ज्ञानं सचमत्कारम्, नानुमित्यादिरिति लोकप्रसिद्धिमवधूयान्यथा कल्पने मानाभावः। सूत्रस्यान्यथैव योजनासंभवात्।

भट्टनायकस्तु—'न तावन्नटगतत्वेन न रामगतत्वेनानुमीयते, न चोत्पा-

---

दर्शनायोगात्, उत्कण्ठादेश्चाभिव्यञ्जकाभावादित्यर्थः। **दर्शनीयस्येति**। यद्यपि शब्दावगतस्याप्यनुमापकत्वं संभवति तथापि पुरोवर्तिनि नटे बाधावतारात्तच्छब्देनापि तद्ग्रहो न संभवतीति तद्दर्शनापेक्षा। एवमनुमितेश्चमत्कारित्वार्थमपि तदपेक्षेति ज्ञेयम्। **व्यञ्जनीयस्येति**। वाच्यतायां दोषात्सिद्धान्ते व्यञ्जनीयस्येत्यर्थः। **तत्कार्येति**। उत्कण्ठादिकार्यशून्यदृष्टित्वादेः संपादनेनेत्यर्थः। तथा चैतन्मतेऽनुमानाद्व्यभिचारिणामवगम इति भावः। अत्रापि शब्दावगतकार्येणापि व्यभिचार्यनुमानसंभवेऽप्यनुमितेश्चमत्कारित्वाय कार्यं प्रकटीकरणमुक्तम्। **सचमत्कारेति**। चमत्कारजनिकेत्यर्थः। अत्र च काव्यजन्यभावनाविषयत्वं विभावादीनां मूलम्। तेन लोके प्रत्यक्षतोऽनुमानतो वा गृहीतैर्विभावादिलिङ्गैरुत्पन्नाया अनुमितेर्न चमत्कृतिजनकत्वापत्तिः। सचमत्कारतया चानुमितेरिच्छाविषयत्वान्मुहुर्मुहुस्तदुत्पत्तौ न पक्षताक्षतिः। वृत्तौ सामाजिकानामित्यस्य रस इत्यनेनान्वयं दर्शयितुमाह—**चर्वणा चेति**। अनुमितिधारेत्यर्थः। विशेषणांशस्य सामाजिकनिष्ठत्वाद्विशिष्टस्य तथात्वव्यवहार औपचारिक इत्यर्थः। वस्तुतस्तु वृत्तौ वासनात्मकतयेत्यनेन स्वगतवासनात्मकस्थायिना अगृहीतभेदतया सामाजिकनिष्ठ इति व्यवहार इति प्रतिपादितम्। **रसनीयत्वेनेति**। मुहुरिष्यमाणास्वादविषयत्वेनेत्यर्थः। अनुमानाकारस्तु—रामोऽयं सीताविषयकरतिमान्। सीताद्यालम्बनविभाववर्षर्तुरूपोद्दीपनविभावरोमाञ्चाद्यनुभावौत्सुक्यादिसंचारिभावसबन्धित्वात्। यो यदात्मकविभावत्वे सत्यनुभावसंचारिभाववान्स तद्गतिमानिति यत्तत्र्यां सामान्यतो व्याप्तिः। यो नैवं स नैवमिति व्यतिरेकव्याप्तिर्वेति संक्षेपः। **नानुमित्यादिरिति**। रत्यादिस्थायिभावविषय इति शेषः। इदमुपलक्षणम्। नटे स्थायिबाधप्रतिसंधानेऽपि सामाजिकानां रसोद्बोधे नानुमितिपक्षस्यासंभव इत्यपि बोध्यम्। **न तावदिति**। नटगतत्वेन नानुमीयते रामगतत्वेन नोत्पद्यत इति क्रमेणान्वयः। 'पारिमित्याल्लौकिकत्वात्सां-

---

१. 'इति' ख.

द्यते, न सामाजिकगतत्वेन व्यज्यते। आद्यपक्षयोरुक्तदोषात्। अन्यगतेनान्येषां चमत्काराभावाच्च। अन्त्ये सिद्धस्यैव व्यङ्ग्यत्वात् रसस्य चासिद्धत्वात्। सर्वेषामेवाभिव्यक्तिप्रसङ्गाच्च। तस्माद्विभावादिभिः संयोगाद्भोज्यभोजकभावसंबन्धाद्रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः। न च भोगपक्षेऽपि दोषावकाशः। भोगस्यालौकिकत्वात्। तथाप्यन्यनिष्ठः स्थायी अन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्यः। अतिप्रसङ्गादिति चेत्, उच्यते—शब्दात्मनः काव्यस्य त्रयो व्यापाराः—अभिधा, भावकत्वम्, भोजकत्वं च। तत्राभिधा निरन्तरसान्तरार्थनिष्ठत्वेन द्विधा। भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणं चैतदेव यत्सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः। स्थाय्यनुभावादीनां च संबन्धिविशेषानवच्छिन्नत्वेन। अन्त्यं व्यापारद्वयं नाट्येऽपि। एवं काव्ये नाट्ये च द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते। भोगश्च सत्त्वगुणोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपा अनन्यालम्बना या संवित्तत्स्वरूपो लौकिकसुखानुभवविलक्षणः। सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात्सुखदुःखमोहाः प्रकाश्यन्ते। उद्रेकश्च स्वेतरावभिभूयावस्थानमिति सांख्यसिद्धान्तानुसारेण विवृणुते" तदपि न सम्यक्। एतादृशव्यापारद्वयकल्पने प्रमाणाभावात्। भुक्तेर्ज्ञानातिरेकस्यानुभवबाधितत्वेन निष्पीड्यमानस्य चास्याभिव्यक्तिपक्ष एव पर्यवसानात्।

---

परायतया तथा। अनुकार्यस्य रत्यादेरुद्बोधो न रसो भवेत्॥' इति। पारिमित्यात्तद्व्यक्तिमात्रविश्रान्तत्वात्। सांपरायतया रामनटादिव्यवहिततया। असिद्धत्वादिति। प्रमाणाभावादिति भाव। अस्त्वसिद्धस्यैवाभिव्यक्तिस्तत्राह—**सर्वेषामिति**। वासनावतां तच्छून्याना चेत्यर्थः। एवं सीताद्यालम्बनकरामादिगतरत्यादेः सहृदयगतत्वेनाभिव्यक्तौ तेषा व्रीडातङ्काद्यापत्तिरपि बोध्या। **दोषेति**। असिद्धस्य भोगासंभवरूपदोषावकाश इत्यर्थ। **अलौकिकत्वादिति**। नहि भोगाख्यव्यापारो लोकसिद्धस्यैवेति क्लृप्तं येन दोषः स्यादिति भावः। लक्षणाख्यचतुर्थव्यापारसत्त्वात्कथं त्रय एवेत्यत आह—**तत्रेति**। तथा चाभिधान्तर्गतत्वान्न विरोध इति भावः। **साधारणकरणं चेति**। मुख्यार्थबाधानवतारेऽपि तथोपस्थितेर्न लक्षणया गतार्थत्वम्। शब्दावाच्य इत्यादिसाधारणीकरणार्थं तद्व्यापारावश्यकत्वं चेति भाव। तथाच विभावादिवाचकशब्दगतेन भावकत्वव्यापारेण विभावादिसाधारणीकरणद्वारा रत्यादिसाधारण्यम्। तदनन्तरं च भोजकव्यापारेण सत्त्वोद्रेकादावरणभङ्गे सति आनन्दात्मकचैतन्यविषयीकरणरूपा भुक्तिरिति निष्कृष्टार्थः। वृत्तौ 'संविद्विश्रान्तिसतत्त्वेन' इत्यस्य संविदो विश्रान्तिर्विगलितवेद्यान्तरतया स्थितिः। सैव सतत्त्वं स्वरूपं यस्य भोगस्येत्यर्थः। तत्त्वसतत्त्वशब्दयोः पर्यायता। गोत्रसगोत्रशब्दवत्। **प्रमाणाभावादिति**। लक्षणाप्रयोजनव्यञ्जकतया एकत्रा-

---

१. 'व्यज्यते' ख. २. 'प्रकाशन्ते' ग. ३. 'भुक्तिरिति' ख.

आचार्याभिनवगुप्तपादास्तु—"स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात्संबन्धाद्विभावादीनामेव वा परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिरभिव्यक्तिः। तथाहि लोके प्रमदादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत्पाटवं झटिति प्रवृत्तिस्तद्वतां सामाजिकानां सूक्ष्मतयान्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणालंकारयोगाच्चतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यपदेशयोग्यदशाविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते। नन्वेवं येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्वासनाविरहिणां किं रसाभिव्यक्तिर्नास्त्येव। कः संदेहः। अतएव शृङ्गारिणामेव शृङ्गारस्य, निर्विण्णस्वभावानामेव शान्तस्याभिव्यक्तिरित्याद्यनुभूयते। किं चापरापि स्वाभाविकी वासना सहकारिणी। यां विना शृङ्गारिणामपि मीमांसकवैयाकरणादीनां न रसाभिव्यक्तिः। तदुक्तम्—'वासना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु' इति। तथाप्यन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिः। उच्यते—'ममैवैते' 'शत्रोरेवैते' 'तटस्थस्यैवैते' इति संबन्धिविशेषस्वीकारनियमस्य, 'न ममैवैते' 'न शत्रोरेवैते' 'न तटस्थस्यैवैते' इति संबन्धिविशेषपरिहारनियमस्य चाज्ञानात्तेषां साधारण्येन प्रतीतेः। साधारण्येन प्रतीतिश्च न सर्वसंबन्धितया प्रतीतिः। किं तु संबन्धिविशेषीयत्वेनाप्रतीतौ प्रतीतिः। यद्वा 'अमुकस्यैवैते' इत्यवधारणं विना 'अमुकस्य' इत्येवं प्रतीतिः।

---

भिधानियन्त्रणेऽपरार्थव्यञ्जकतया वक्तृवैशिष्ट्यादिसहकारेण तत्तदर्थगमकतया च सिद्धेन व्यञ्जनाव्यापारेणैव गतार्थतया तदतिरिक्तव्यापारद्वयकल्पने मानाभावादिति भावः। रसो व्यज्यत इति व्यवहारस्तु 'ओदनं पचति' 'यूपं तक्षति' इतिवच्चासिद्धरसविषयत्वेऽप्युपपन्न इति ज्ञेयम्। लोक इत्यादिना तद्वतामित्यन्तं सामाजिकानां रसोद्बोधयोग्यताप्रयोजकं विशेषणम्। तेन श्रोत्रियव्युदासः। सूक्ष्मतया वासनारूपतया। अन्तः अन्तःकरणे। **चतुर्विधेति**। 'आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा। चत्वारोऽभिनयाः प्रोक्ता नाट्यशास्त्रविशारदैः॥' इत्युक्तेः। आहार्यो रामादिव्यञ्जको वेषः। सात्त्विको रोमाञ्चादिरूपः। दशा च साधारण्येन प्रतीयमानतारूपा। **कः संदेह इति**। तथा चाहु—'निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्मसन्निभा' इति। अनुभवमप्याह—**अतएवेति**। यतो वासनात्मतया स्थित एवाभिव्यज्यतेऽत इत्यर्थः। स्वाभाविकी काव्यव्युत्पत्तिस्वभावजा। एवं च रत्यादिनिरूपितविभावादिनिष्ठव्याप्तिग्रहजन्योद्बुद्धसंस्कार, काव्यभावनाजन्यसंस्कार, रत्यादिवासना चेति त्रयं रसाभिव्यक्तिहेतु। ननु काव्यजन्यवाक्यार्थबोधे सीतादौ जनकादिसंबन्धित्वविषयत्वस्यानुभवात्तदपलापानुपपत्तिरत आह—**यद्वेति**। यद्यपि [1]संबन्धिविशेषितवाक्यार्थबोधोत्तरं तदविशेषितवैयञ्जनिकसाधारण्यबोधे नोक्तदोषः, तथापि प्रथमवाक्यार्थबोधेनैव रसव्यक्तिसंभवे द्वितीयवाक्यार्थबोधकल्पनम्। तच्च

---

१. 'संबन्धविशेषतः' ग.

अतएवोक्तम्—'ममैवैते' इति नियमानवसायात्' इति। तथा च स्वीयत्वासंसर्गाग्रहात्स्वीयत्वसंसर्गग्रहप्रयोजनं संपद्यते। एवं च वाक्यार्थबोधे संबन्धिविषयत्वानुभवोऽपि न विरुध्यते। संसर्गबोधे संबन्धी न विषयः किं तु पदार्थस्मरण एवेत्यनुभवविरोधाद्विचारासहत्वाच्चानुपादेयम्। नन्वेवं विभावादीनां साधारण्यं विना तत्त्वव्याघातादस्तु साधारण्यम्। स्थायिनस्तु तत्कथं स्यात्। तस्य तत्तदात्मनिष्ठत्वात्। यद्यप्यसाधारण्येऽपि तस्य न रसप्रतीतिविरोधस्तथापि तदंशे सहृदयसंवादो न स्यात्। स एव चालौकिकताद्दशस्वीकारकारणमिति। उच्यते—उपायानां विभावादीनामुक्तरूपसाधारण्यबलाद्रसानुभवकाले स्थायिनां प्रमातृविशेषनिष्ठत्वलक्षणायाः परिमितप्रमातृताया यद्विगलनमज्ञानं तद्वशेनोन्मिषितो वेद्यान्तरसंपर्कशून्योऽपरिमितो भावो यस्य तेन प्रमात्रा सकलसहृदयसंवादकारिणा प्रमातृविशेषसंबन्धाग्रहरूपेण साधारण्येन स्थायी चर्व्यते। ननु चर्वणाविशिष्टः स्थायी रस इत्युच्यते। चर्वणया च स्थायी विषयीक्रियताम्। न तु सुखात्मक आत्मेति न रसस्य व्यक्तिरिति चेत्। न। स्वप्रकाशनये स्वाकारवदभिन्नस्याप्यात्मनो विषयीकरणात्। अभिव्यक्ति-

---

तविलम्बाश्रयणे प्रयोजनाभाव इति तात्पर्यम्। केचित्तु 'सीतादिपदैर्जनकादिसंबन्धितया पदार्थस्मरणोत्तरं जनकादिसंबन्धांशमपहाय स्त्रीत्वादिनैव वाक्यार्थबोधः काव्यमहिम्ना भवति' इत्याहुः, तन्मतं दूषयितुमाह—**संसर्गेति**। अनुभवे विप्रतिपन्नं प्रत्याह—**विचारेति**। पदार्थोपस्थित्यन्वयबोधयोः समानप्रकारकत्वनियमान्न ताद्दशान्वयबोधसंभव इति भाव.। अत्र 'न ममैवैते' इत्यादि परिहारनियमो द्दष्टान्ततयोपयुक्त इति ज्ञेयम्। **तत्त्वव्याघातादिति**। विभावत्वव्याघातादित्यर्थः। रत्यादीन्विभावयन्त्यास्वादाङ्कुरयोग्यतां नयन्तीति हि विभावा इत्युक्तं पूर्वम्। न चान्यदीयनायिकाज्ञानादन्यस्य रत्युद्बोध इति तेषां साधारण्यमावश्यकमिति भावः। **कथमिति**। सकलसामाजिकवृत्तित्वरूपस्य साधारण्यस्य स्वनायिकाविषयस्वमात्रवृत्ते रत्यादावसंभवादनुभवाच्चेति भावः। तदंशे रसांशे। ताद्दशस्वीकारे साधारण्यस्वीकारे कारणं प्रयोजक इत्यर्थ·। इदमुपलक्षणम्। स्वगतत्वेन[1] व्यक्तौ व्रीडातङ्कादिप्रसङ्गेऽपि बोध्य.। अपरिमितो भावो रत्यादि। संवादकारिणेति साधारण्येनेत्यस्य विशेषणम्। तथा च कामिनीविषयकरतित्वसामान्येन प्रमातृविशेषानालिङ्गितेन ग्रहणमेव साधारण्यमित्यर्थ·। **नन्विति**। विभावादिसमूहालम्बनेन रत्यवच्छिन्नचैतन्याभिव्यक्तिश्चर्वणा। सा च भग्नावरणा चित्। तया च रतिर्विषयीक्रियताम्। अन्त.करणधर्माणां साक्षिभास्यत्वात्। न त्वानन्दात्मिका चिदपि। अभेदात्। इष्टापत्तौ रसाभिव्यक्तेरानन्दानुभवत्वं न स्यादित्यर्थः। स्वप्रकाश आत्मेतिमतेऽभिन्नस्यापि विषयीकरणमस्तीत्युक्ते तत्र द्दष्टान्तमाह—**स्वाकारवदिति**। यथा ज्ञानस्यैवाकारो घटादिस्तस्मादभिन्नोऽपि तद्विषयो वाह्य-

---

१. 'स्वगतत्वेन' ख, 'स्वगतेन' ग.

विशिष्टश्च रत्यादिः स्थायी चर्व्यमाणतैकप्राणतया चर्वणानाशे विनष्टो रस इति प्रतीतिविषयो विभावादिजीवितावधित्वेनानित्यचर्वणः पुर इव परिस्फुरन्हृदयमिव प्रविशन्सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद्ब्रह्मास्वादमिवानुभावयन्नत एवालौकिकचमत्कारकारी शृङ्गारादिको रस इत्युच्यते। नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम्। तच्च न युक्तम्। विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्। घटपटाविति समूहालम्बनवदिति चेत्। न। पानकरसन्यायेन चर्वणात्। यथा पानके कर्पूराद्यंशो न पार्थक्येनानुभूयते तथात्रापि विभावाद्यंशः। ननु विभावादीनां परामर्शस्यान्वयव्यतिरेकात्तत्कार्य एव रसः किं नोच्यत इति चेत्। न। विभावादिपरामर्शस्य कारणत्वं यदि स्यात्तदा निमित्तकारणत्वमेव। न च तन्नाशस्य कार्यनाशकता दृष्टा। द्वित्वादीनां तथात्वानभ्युपगमात्। चन्दनादिस्पर्शजन्यसुखा-

---

ङ्गीक्रियते तथा प्रकृतेऽपीत्यर्थः। नन्वभिव्यक्तस्य स्थायिनः स्थिरत्वात्सर्वदा रसप्रतीत्यापत्तिरत आह—**अभिव्यक्तीति**। अभिव्यक्तेरुपलक्षणत्वे स्यादुक्तदोषः। सा तु विशेषणमिति विषयान्तरव्यासङ्गेन तन्निवृत्तौ विशिष्टस्थायिस्वरूपाभावान्नोक्तदोष इत्यर्थः। चर्व्यमाणता एको मुख्यः प्राणः स्वरूपं यस्येत्यर्थः। चर्वणानाशे हेतुमाह—**विभावादिजीवितेति**। जीवितमनुसंधानम्। पुर इवेत्यादिरसावेशवर्णनम्। अत्र स्फुरन्निवेत्यादिरीत्या क्रियाभिरिवशब्दार्थान्वयो ज्ञेयः। अत्रायं क्रमः—प्रथमं तावत्काव्यपदेभ्यस्तत्तदर्थोपस्थितिः। ततो वाक्यार्थबोधो यथोपस्थितविभावादिगोचरः। ततो गुणालंकाराभिनयादि। ततः सहृदयस्य रत्यादिवासनावतः साधारण्येन विभावादिबोधः। तेन च साधारण्येनैव विभावादिसवलितरत्यवच्छिन्नचिदानन्दावरणभङ्गात्प्रकाशमानानन्दचिद्विषयो विभावादिसंवलितः स्थायी रत्यादिको रसः। "तादृशस्थाय्युपहितचैतन्यमेव रसः। 'रसो वै सः' इति श्रुतेः" इत्यन्ये। तादृशविभावादिसवलितस्थाय्युपहितचिदानन्दाकारा वृत्तिरित्यप्याहुः। चर्वणा चावरणभङ्गयुक्ता चिदेव। सैव चाभिव्यक्तिरित्युच्यत इति। **पार्थक्येनेति**। ताटस्थ्येनेत्यर्थः। तथा च तेषां परस्परसंवलितत्वेन प्रकाशश्चमत्कृतिहेतुर्न लभ्यत इत्याक्षेपः। **पानकेति**। ननु पानके कर्पूरादीनामत्यन्तसंश्लेषात्तथानुभवोऽस्तु, इह तु किंनिमित्तक इति चेत्, अत्रापि विभावादेरन्योन्याविनाभावित्वपरस्परोपस्कारकत्वतत्तत्प्रतीतिसापेक्षत्वादिनिमित्तम्। रसप्रतीतेरलौकिकत्वाच्चानुभववशेन निमित्तकल्पना प्रामाणिकीति भावः। **तत्कार्य एवेति**। विभावादिसमूहालम्बनजन्यसुखविशेष एवेत्यर्थः। **न चेति**। तथा च विभावादिज्ञाननाशेऽपि रसप्रतीत्यापत्तिरिति भावः। न चेष्टापत्तिः। विभावादिजीवितावधित्वस्य रसप्रतीतावानुभविकत्वात्। न च तादृशसुखोत्पत्तिकाल एव पुनर्विभावादिज्ञानसंभवात्सुखसाक्षात्कारे विभावादीनामुपतापकवशेन भानसंभव इति वाच्यम्। सुख-

---

१. 'ब्रह्मानन्दास्वाद' ख-ग.

दिन्यायो भविष्यतीति चेत्। न। नहि तत्र स्पर्शाभावेन सुखं विनाश्यते। किंतु तदभावे कारणाभावात्कार्यं नोत्पद्यते। उत्पन्नस्य सुखस्य तर्हि कथं विनाश इति चेत्। विरोधिगुणान्तरात्। अत्रापि तथैवास्त्विति चेत्। न। रसस्य वेद्यान्तरसंपर्कशून्यतया ज्ञानान्तरादेस्तत्कालेऽभावात्। नन्वेष दोषो व्यक्तावपि समान इति चेत्। न समानः। व्यक्तेर्लोकोत्तरतया दोषासंस्पर्शात्। किं च चर्वणाविशिष्टः स्थायी रसः। नच काव्याद्युपस्थाप्यो[1] विभावादिर्विशिष्टहेतुः तर्ह्यस्तु ज्ञाप्य इति चेत्। न। विभावादिपरामर्शं विना तत्सिद्धेरभावात्। न चैकैव सामग्री निष्पादिका ज्ञापिका चेति संभवति। किंच स्वभिन्नतज्जन्यज्ञानविषयो हि तज्ज्ञाप्य उच्यते। अतएव स्वप्रकाशनयेऽपि चाक्षुषादिज्ञानं न चक्षुरादिज्ञाप्यं व्यवह्रियते। न चात्र तथा। स्वाभिन्नतज्जन्यज्ञानविषयतयैव तु तज्ज्ञाप्यत्वं न निषेधामः। किंतु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यो हेतुर्न लोकसिद्ध इति चेत्, अलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। कथं तर्हि विभावादिभिरुत्पन्नो रसो ज्ञेयो रस इत्यादि व्यवहार इति चेत्, आद्यस्तावच्चर्वणोत्पत्त्या। तत्रोत्पत्त्युपचारात्। द्वितीयोऽपि गुणालंकाराद्यसंभिन्नरसादिविषया या लौकिकी प्रमितिः, यच्चापरिपक्वयोगिनां युञ्जानपद-

---

साक्षात्कारसामग्र्या इतरविषयभानप्रतिबन्धकत्वेन तदयोगात्। अलौकिकत्वेनाप्रतिबन्धकत्वाङ्गीकारे रसप्रतीतेर्नित्यत्वापत्तेः। नन्वपेक्षाबुद्धिरूपनिमित्तकारणनाशाद्वित्वनाशो दृष्ट इति इहापि तथास्त्वित्याशङ्क्याह—**द्वित्वेति**। द्वित्वं नित्यम्। तत्र व्यञ्जिका त्वपेक्षाबुद्धिरित्यवगमादिति भावः। **नन्विति**। अभिव्यक्तेरपि निमित्तनाशान्नाशानुपपत्तिरिति दोषः समान इत्यर्थः। व्यञ्जकदीपाद्यभावविशिष्टस्य तमस आवरकत्वादावरणभङ्गस्य व्यञ्जकनाशेऽनुपपत्तेर्न दोषसाम्यमित्याह—**लोकोत्तरतयेति**। उत्पत्त्यादिविलक्षणतयेत्यर्थः। ननु विभावाद्यनुसंधानविच्छेदकस्य बलवद्व्यासङ्गस्य सुखविशेषसाक्षात्कारविरोधित्वस्य फलबलेन कल्पनान्नोक्तदोष इत्यत आह—**किंचेति**। 'स्थायी भावो रसः स्मृतः' इत्यादिबहुतरचिरन्तनोक्तेः स्थायिन एव रसवित्तौ मुख्यतया स्वाद्यत्वानुभवाच्च स एव रसो, न सुखविशेषः। स्थायी च पूर्वसिद्ध एवेति न काव्योपस्थितिविभावादिजन्य इत्यर्थः। **तत्सिद्धेरिति**। चर्वणाविशिष्टस्थायिसिद्धेरित्यर्थः। **निष्पादिकेति**। अभिव्यक्तिरूपविशेषणांश इत्यर्थः। **स्वभिन्नेति**। स्वपदेन ज्ञाप्यत्वाभिमतमुच्यते। अतएव चक्षुर्जन्यज्ञानस्य स्वभिन्नत्वाभावादेव। **स्वाभिन्नेति**। ज्ञायमानस्यैव रसत्वाद्रसशरीरान्तर्गतमेव ज्ञानमिति रसाभिन्नमेव तदिति भावः। रसज्ञानस्य च भग्नावरणचिद्रूपस्य स्थाय्युपहितत्वेन विभावादिजन्यत्वोक्तिः। साक्षिरूपसुखादिज्ञानस्य जन्यत्वव्यवहारवत्। स्थाय्युपहितचिदानन्दाकारवृत्तिरूपरसपक्षे तु समञ्जसैवेति द्रष्टव्यम्। चर्वणीयः पुन पुनरास्वादनीयः। **अन्य इति**। व्यञ्जकाख्य इत्यर्थः। **अलौकिकत्वेति**। व्यञ्जनाया अलौकिकत्वं वदतामस्माकमनुकूलमेवैतदित्यर्थः।

---

१. 'उपस्थापनीयो' ख

वाच्यानां जगद्भेदविषयकत्वशालिविज्ञानम्, यच्च परिपक्वयोगिनां युक्तपदाभिधेयानां बाह्यार्थसंस्पर्शरहितं स्वात्ममात्रविषयं संवेदनम्, तेभ्यो गुणालंकारयुक्तरसादिमात्रविषयतया विलक्षणं यत्संवेदनं तद्गोचरतयेति मन्तव्यम् । न केवलम[1]सत्त्वादज्ञाप्यो रसः, किं त्वितोऽपि यतस्तद्ग्राहकं न निर्विकल्पकम् । विभावादिपरामर्शस्य विर्निकल्पकजननायोग्यत्वात् । नापि स्वभिन्नसविकल्पकम् । चर्व्यमाणस्यालौकिकानन्दमयस्य [2]स्वसंवेदनमात्रसिद्धत्वात् चर्वणादशायां ज्ञानान्तराभावात् । स्वाभिन्नसविकल्पकविषयत्वेन ज्ञाप्यत्वमिष्टमेव । ननु निर्विकल्पस्वभिन्नसविकल्पयोरन्यतरविषयत्वाभावोऽपरविषयत्वपर्यवसन्नः । तथा चैकविषयत्वाभावेऽपरविषयत्वप्रसक्तिरित्युभयविषयत्वाभावेऽ[3]नुभवविषयत्वं प्रसज्येतेति चेत् । न । एवं ह्युभयरूपत्वमापद्यमानं स्वाभिन्नसविकल्पकविषतया लोकोत्तरचमत्कारमेव गमयति, न पुनर्विरोधमिति । अथ विभावादयो मिलिताः किमिति व्यञ्जकत्वेन निर्दिष्टाः । एकैकस्य व्यञ्जकत्वे व्यभिचारात् । अथैकैकस्मादन्यद्वयाक्षेपात्तत्राप्यस्त्येव रसव्यक्तिरित्यव्यभिचार इति चेत् । न । [4]व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम् । अश्रुपातादयोऽनुभावाः शृङ्गारस्येव [5]करुणभयानकयोः । चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानाम् । इत्यन्यद्वयाक्षेपानियमात् । नन्वेवं मिलितस्यैव व्यञ्जकत्वे एकैकोपस्थितौ रसव्यक्तिर्न स्यात् । दृश्यते चासौ । यथा—

'वि[6]यदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥'

इत्यादौ कामिनीगताया रतेरालम्बनमात्रस्योपस्थितौ ।

---

**जगदिति** । जगद्भिन्नत्वेनात्मज्ञानमित्यर्थ । **स्वसंवेदनेति** । स्वात्मकेत्यर्थः । वृत्तौ 'उभयाभावरूपस्य' इत्यस्योभयाभाववत इत्यर्थ । **एवं हीति** । निर्विकल्पकविषयत्वाभावो न स्वभिन्नसविकल्पकविषयत्वेनैव पर्यवस्यति । अपि तु स्वभिन्नसविकल्पकविषयत्वाभावोऽपि न निर्विकल्पकविषयत्वेनैव, अपि तु स्वाभिन्नसविकल्पकविषयत्वेनाप्यलौकिकेनेति न विरोध इत्यर्थ । **एकैकस्येति** । विभावादेरेकैकस्यानेकरससाधारण्यात्प्रत्येकज्ञानाद्रसविशेषानुपपत्तेरन्वयव्यभिचारादित्यर्थः । एकैकेनाप्याक्षिप्तैकानुगुणेतरद्वयसन्निवेनैकरसप्रतीतिसंभवान्न व्यभिचार इति शङ्कते—**अथेति** । विभावादेरेकैकस्यानेकरससाधारण्यादसाधारणेतरद्वयाक्षेपानियमे नैकस्यापि रसस्याप्रतीतेरुक्तव्यभिचारस्य तादवस्थ्यमिति समाधत्ते—**व्याघ्रादय इत्यादिना** । दृश्यते चासावित्यादावालम्बनमात्रस्योपस्थिताविलन्वय. । आलम्बनपदमु-

---

1. 'असमत्वाव' क २ 'तस्य स्वसंवेदन' ख. ३. 'उभय' ख-ग. ४. 'व्याघ्राद्यो हि' ख. ५. 'करुणा' क-ख ६. 'वियदिति । मानवतीं प्रति सख्या उपयुक्ति' । हे मुग्धे मानभङ्गावश्यभावेऽपि दयितप्रणामोपेक्षणादिविवेकरहिते, प्रणतिपरे भुज्मानमयानिनि दयिते प्रेमपात्रे कान्तविषये प्रसीद प्रसादं कुर्वित्यन्वयः । दयित इत्यनेन मानानिमोकेऽनौचित्य ध्वन्यते । मानभङ्गावश्यभावे बीजमाह—वियदलीत्यादि ।

एवम्—

'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः॥'

इत्यादावङ्गम्लान्याद्यनुभावमात्रस्य।

'दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किं चाञ्चितभ्रूलतम्।

---

दीपनविभावस्याप्युपलक्षणम्। अनुभावव्यभिचारिव्यवच्छेद एव तात्पर्यात्। यद्यपि

---

वियदाकाश अलयो भ्रमरा इव मलिनाः श्यामाश्च ते, अम्बु गर्भे येषां ते मेघा यत्र तथाभूतम्। इति कर्मधारयोत्तर बहुव्रीहिः। अस्तीति शेषः सर्वत्र बोध्यः। अम्बुगर्भत्वेनावृष्टत्वात्स्थैर्यं व्यज्यते। तथा मधुकरकोकिलयोः सहितयोः कूजितैर्दिशा श्रीः शोभा। वर्षासु कोकिलकूजिताभावेऽपि मुग्धाया भयोत्पादनाय सख्याः प्रतारणोक्तिरियमिति केचित्। मधुकरा एव कोकिला इति रूपकम्। एवं च यथा वसन्ते कोकिला मनोहरा स्तथेदानीं मधुकरा (इति) माद्यन्तीत्यपरे। यद्वा क्वचन केचन कोकिला प्रावृष्यपि माद्यन्तीति यथाश्रुतमेव युक्तमिति चण्डीदासः। धरणिर्भूमिः अभिनवा नूतना अङ्कुरा एवाङ्के उत्सङ्गे टङ्काः पाषाणभेदिनः पाषाणप्रायकठिनमानभञ्जनत्वाद्वा यस्यास्तया। अङ्कुराणां पाषाणप्रायवियोगिहृदयविदारकत्वाट्टङ्कारोपः। एवं चोर्ध्वमधस्तिर्यक्चोद्दीपनप्रवृत्तौ तद्रहितदृष्टिसंचारस्थलाभावान्मानभङ्गस्यावश्यभाव्यत्वमुपदर्शितम्। 'टङ्कः पाषाणदारणः' इति कोषः। 'अत्र केवलस्योद्दीपनस्योपादानम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१ "परिमृदितेति। मालतीमाधवे 'तथाह्यवस्था' इत्युपक्रम्य माधवस्य मकरन्दं प्रति मालत्यवस्थावर्णनोक्तिरियम्। अस्या मालत्या अङ्गं इत्यादि। जात्यभिप्रायमेकवचनम्। परिमृदिता करतलद्वयमर्दनेन शिथिलीकृता या मृणाली बालमृणालं तद्वन्म्लानम्। तेन बहुदिनोपचीयमानमान्मथव्यथाविकारसूचनम्। तथा क्रियासु शरीरधारणमात्रोपयोगिनीषु पानभोजनादिरूपासु बह्वीषूपन्यस्तासु परिवारस्य सखीगणस्य प्रार्थनाभिर्बह्वीभिः कथमपि अनिच्छन्त्या अपि बलात्प्रवृत्तिः सकृत्कचिदुपक्रममात्रम्, न पुनः क्रियानिष्पत्तिरिति षष्ठी विषयनिवृत्तिरूपा कामावस्थोक्ता। चकारोऽप्यर्थे भिन्नक्रमः। कपोलोऽपि निष्कलङ्कस्य कलावशिष्टस्य हिमांशोर्लक्ष्मीं शोभां कलयति धारयति। पाण्डुक्षामत्वात्। तदाह—अभिनवेति। अभिनवो नूतनो यः करिदन्तस्य च्छेदश्छिन्नो भागस्तद्वत्पाण्डुः। सद्यश्छिन्नस्यातिस्वच्छत्वात्तथोक्तिः। तथा च कालिदासः—'सद्य कृत्तद्विरददशनच्छेदगौरस्य तस्य' इति कर्तने सद्यस्त्वमाह। लक्ष्मीमित्यनेनैवमपि न शोभाच्युतिरिति गम्यते। सेयं तनुताख्या पञ्चमी कामावस्था। कपोल इति जात्यभिप्रायमेकवचनम्। अत्र केवलस्याङ्गम्लान्यादेरनुभावस्य वर्णनम्।" इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'ग्लान्यादि' क, 'मालिन्यादि' ख. ३. "दूरादिति। जात आग अपराधो यस्मात्प्रमादतस्तथाभूते, न तु कृतागसि अतएव प्रेयसि प्रीतिपात्रे मानिन्याश्चक्षु' अहो इत्याश्चर्ये प्रपञ्चे विचित्रव्यापार

मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥'

इत्यादावुत्सुकादिविशेषणव्यङ्ग्यानामौत्सुक्यलज्जाहर्षकोपासूयाप्रसादानां व्यभिचारिमात्राणाम्। यद्यप्यत्र प्रेयसीत्यालम्बनविभावोऽप्यस्ति, तथापि रत्यनुकूलधर्मवत्तया निर्देशादनस्तिकल्प एवेति। मैवम्। एषां विभावादीनामसाधारण्येनान्यद्वयाक्षेपकत्वेनात्रापि मिलितानामेव व्यञ्जकत्वात्। नन्वेषां चेदसाधारण्यं किमन्यद्वयाक्षेपणेन। एकैकव्यभिचारेण हि त्रयोपादानम्। अथ साधारण्यमेव कथं तर्हि स्थायिविशेषयोग्यविभावाद्याक्षेपकत्वमिति। उच्यते—एकस्य व्यभिचारान्मिलितानां व्यञ्जकत्वे स्थितेऽसाधारणेनापीतरद्वयमाक्षिप्यते। किंच रसस्य विभावादिसमूहालम्बनरूपत्वादेकैकस्मादसाधारणादपि व्यक्त्यभावान्मिलितानामेव व्यञ्जकत्वम्। अतोऽसाधारण्येऽपीतरद्वयमाक्षिप्यते। ततो मिलितैस्तदभिव्यक्तिः" इति।

---

प्रणतिरूपोऽनुभावोऽप्युक्त, तथापि नायिकागताया रतेस्तस्यानुपस्थितिरिति तात्पर्यम्। अनुभावमात्रस्येत्यनन्तरमुपस्थिताविल्यनुपज्यते। एवं व्यभिचारिमात्राणामित्यत्रापि प्रसादस्य हर्षरूपत्वाद्व्यभिचार्यादिद्वयाक्षेपकत्वेनेत्यर्थः। **एकस्येति।** साधारण्यस्थल इत्यर्थ। तथाच क्लृप्तमिलितव्यञ्जकत्वानुरोधादितराक्षेप इत्यर्थ। ननु यत्र मिलितानामपि साधारण्यं तत्र विरोधो न। एकस्यापि रसस्यानभिव्यक्त। असाधारण्यत्वेन प्रकरणादिना ज्ञातानामेव व्यञ्जकत्वं वाच्यम्। तथा चैकैकस्मादपि तथा ज्ञाताद्रसव्यक्तिरविरुद्धेति। अरुचेराह—**किंचेति।** तदुक्तं प्राक् पानकरसन्यायेनेति। एवं च 'वियत्' इत्यादौ नायिकानिष्ठरतेरङ्गम्लानत्वादयोऽनुभावा प्रसीदेत्युक्तिगम्या। असूया व्यभिचारिभाव. तदुभयोपस्थितौ विप्रलम्भरसव्यक्ति। 'परिमृदित–' इत्यादौ च प्रकरणगम्यौ मालतीमाधवौ विभावौ म्लानिगम्या चिन्ता संचारिणी च गम्यते। 'दूरात्–' इत्यत्र चालम्बनविशेषस्य

---

संताने चतुरं जातमित्यन्वय। प्रपञ्चचातुर्यमेव प्रपञ्चयति—दूरादित्यादिना। दूरात्। दृष्टे इति शेषः। सप्तम्यर्थे पञ्चमी। सर्वेषु सप्तम्यन्तेषु प्रेयसीति सवध्यते। उत्सुक इतोऽन्यत्र वा यातीति शङ्कया उत्कण्ठासूचकचेष्टाविशेषशालि। आगते समीप प्राप्ते विवलितं दूरतः पश्यन्त्या ममौत्सुक्यमनेन ज्ञातमिति लज्जया तिर्यक्कृतम्। सभाषिणि सम्यग्भाषिणि स्फारितं विकसितम्। प्रियालापेन हर्षोदयात्। संश्लिष्यति सम्यगतिशयेन सान्निध्य प्राप्नुवति अरुणमारक्तम्। अप्रसाद्यैव स्पर्शमिच्छतीति कोपात्। अत एवापसरन्त्या गृहीतवसने। किंचेति समुच्चये। अञ्चिता कुटिलीकृता भ्रूलता येन तथाभूतम्। कोपाधिक्येनासूयोदयात्। चरणयोरानति प्रणामस्तस्य व्यतिकर' सबन्ध. पौनःपुन्य वा यस्येति दयितविशेषणम्। वाष्पाम्बुनाश्रुजलेन पूर्णं समाप्तमीक्षणं दर्शनं यस्य तत्। मानभङ्गेन प्रसादोदयात्। अम्बुपद वाहुल्यसूचनाय। 'वाष्पाम्बुपूर्णं क्षणात्' इति पाठस्तु काचित्क' समञ्जस एव। अत्रौत्सुक्यादिव्यभिचारिभावानामनेककेवलानामुपादानम्" इत्युदाहरणचन्द्रिकासंक्षेपः.

केचिदाहुरेक एव शृङ्गारो रसः, केचिच्च द्वादशेत्यादि, तन्निरासाय भेदानाह—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥ ६॥**

शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात्। अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते॥

शान्तस्य शमाद्यादिविरहेणानभिनेयत्वात्काव्यमात्रगोचरत्वमित्यभिधानाच्चात्य इत्युक्तम्। यद्वा नाट्ये तावदष्टौ रसाः प्रतिपादिताः, अतः काव्येऽपि तावन्त एवेत्यर्थः। ननु रसः सुखात्मक इति प्रतिपादितम्, तत्कथं दुःखमयः करुणादिको रस इति चेत्। न। लोके तथात्वेऽपि काव्यादौ पार्यन्तिकालौकिकसुखोदयात्। अन्यथा प्रेक्षावतामप्रवृत्त्यापत्तेः। शृङ्गारादीनां च लक्षणं

---

निःश्वासपाण्डुतादेश्चानुभावादेश्चोपस्थितावेव रसव्यक्तिरित्यूह्यम्। **एक एवेति।** शृङ्गारस्य लोके आस्वाद्यतायाः सर्वानुभवसिद्धत्वात् काव्ये गुणालंकारयोगेनाधिकास्वादगोचरतया रसत्वं युक्तम्, न त्वितरेषाम्। लोके सुखात्मत्वाननुभवात् काव्य एव तथात्वकल्पनाया अप्रामाणिकत्वात्। अद्भुतस्य च विस्मयप्रकृतिकत्वात् तस्य चोद्भटालंकारवर्णनादावपि नीरसेऽभ्युपगमाच्च रसत्वमित्याशयः। **द्वादशेति।** भक्तिवात्सल्यश्रद्धाख्यैस्त्रिभिः सहिताः शृङ्गारादयो नवेत्यर्थः। तत्र भक्तिर्भगवति प्रसिद्धा श्रद्धाप्यास्तिक्यनिश्चयात्मिका वेदशास्त्रविषया[1] शिष्टानां प्रसिद्धैव। वात्सल्यमपि पुत्रमित्रादौ स्नेहाभिधानम्। **तन्निरासायेति।** 'सर्वं वाक्यं सावधारणम्' इति न्यायेन तन्निरासबोधनायेत्यर्थः। तत्र भक्तिवात्सल्ययोर्भावान्तर्गतिः। 'रतिर्देवादिविषया' इति वक्ष्यमाणत्वात्। श्रद्धायाश्चासुखात्मकत्वाच्चमत्कारानुत्पादकत्वाच्च न रसत्वमित्यूह्यम्। **काव्यमात्रेति।** श्रव्यकाव्येत्यर्थः। **अभिधानादिति।** 'शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात्। अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते॥' इति कैश्चिदभिधानादित्यर्थः। 'अभिमानात्' इति क्वचित्पाठः। वस्तुतो नटे शमाभावेऽपि न क्षतिः। तत्र रसाभिव्यक्तेरनङ्गीकारात्। सामाजिकेषु शमसत्त्वेनैव शान्तरससंभवात्। अभिनयस्यापि शून्यदृष्टित्वादिना संभवात्। संसारानित्यताप्रतिपादकगीतावन्नतया वाद्यादेः संभवाच्च नाट्येऽपि शान्तसंभव इत्याशयेनाह—**यद्वेति।** नाट्येऽष्टावेवेति नार्थः। किंतु ये नाट्ये दर्शितास्त एव काव्येऽपीत्यर्थः। **तावन्त एवेति।** न शान्तव्यवच्छेदः। तस्य वक्ष्यमाणत्वात्। किंतु वात्सल्यादीनामिति ज्ञेयम्। **पार्यन्तिकेति।** पर्यन्ते विभावादिज्ञानजस्थायिचर्वणादशाया[2] भवं पार्यन्तिकम्। अत्र चान्वयव्यतिरेकाभ्यां काव्यजन्यविभावादिसमूहालम्बनमेव हेतुरिति भावः। ईदृशकल्पनायां मानमाह—**अन्यथेति।** अश्रुपातादयस्तु तत्तदानन्दानुभवस्वाभाव्यात्, ननु दुःखात्। नहि दुःखनियता अश्रुपातादयः। भगवद्गुणनाक-

---

१. 'वेदशास्त्रार्थे' क. २. 'ज्ञानस्थायि चर्वणा' ख.

रत्यादिप्रकृतिकत्वम् । तत्र मनोनुकूलेष्वर्थेषु सुखसंवेदनं रतिः । तत्प्रकृतिको रसः शृङ्गारः । स द्वेधा—संभोगो विप्रलम्भश्च ।

तत्र—

'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥'

स च परस्परालोकनालिङ्गनादिभेदादगणेय[1] इत्येक एव गण्यते ।

'भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥'

स च संगमपूर्वः, तदन्यश्च तत्रान्त्यो[2]ऽभिलाषहेतुक इत्युच्यते । अभिलाषपदेन तद्धेतोरनादिसंगमाभावस्य लक्षणात् । आद्यस्तु क्वचिदीर्ष्यया प्रणयेन वा मानरूपः । स ईर्ष्याहेतुक इत्युच्यते । ईर्ष्यापदेन मानहेतोरुपलक्षणात् । क्वचित्तु कार्यवशाद्देशान्तरस्थितेः । स प्रवासहेतुकोऽभिधीयते । उत्पद्यमानोत्पत्स्यमानावपि प्रवासौ स्वज्ञानद्वारा विप्रलम्भप्रयोजकाविति नाव्याप्तिः[3] । प्रवासशब्देन ज्ञानलक्षणाद्वा क्वचिच्छापात् । स च शापहेतुक इति व्यवह्रियते । क्वचिदुक्तत्रितयातिरिक्ताद्गुरुलज्जादितः कारणात् । स एष विरहहेतुक इत्युच्यते । करुणशृङ्गारस्याप्यत्रैवान्तर्भावः । तत्र संभोगो नायिकारब्धो नायकारब्धश्च । क्रमेणोदाहरणम्—

'शून्यं[4] वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।

---

र्णनाद्भक्तानां तदुदयात् । तत्र तु स्वलेशस्याप्यसंभावनीयत्वादिति दिक् । **सुखसंवेदनमिति** । सुखात्मताज्ञानमित्यर्थः । सुखसाधनत्वज्ञानमिति यावत् । वस्तुतस्तु तज्जन्य प्रेमाख्यो भावो रतिरिति बोध्यम् ।

**तद्धेतोरिति** । सिद्धे इच्छाविरहात्संगमप्रागभावोऽभिलाषप्रयोजक इत्यभिलाषपदेन लक्ष्यते । अन्यथा सर्वस्यैव विप्रलम्भस्याभिलाषहेतुकत्वेन भेदानुपपत्तेरिति भाव । **प्रणयेति वेति** । तदुक्तम्—'द्वयो. प्रणयमान स्यात्प्रमोदे सुमहत्यपि । प्रेम्ण कुटिलगामित्वात्कोपो य कारणं विना ॥' इति । कारणं विनेत्यनेन कोपस्याहार्यत्वं सूचितम् । **करुणेति** । 'यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनर्लभ्ये । विमना भवति यदेकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥' इत्युक्तः । यथा कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते । **शून्यमिति** । अत्र नायिकार-

---

१ 'अपरिगणेय.' ख २. 'तत्रान्यो' क. ३. 'नातिव्याप्तिः' क. ४. 'शून्यमिति । नवोढाया अभिनवसमागमवर्णनमिदम् । बाला नवोढात्वेनाप्रगल्भा । वासगृहं रतिमन्दिरं शून्यं निर्जनं विलोक्य विशेषतः सखीनिभृतसत्त्वशङ्कापरिहारेण दृष्ट्वा शयनात् किंचित्, न तु सर्वतः, निद्राभङ्गे पार्श्वपरिवर्तने समाधातुम्, शनैः वलयादिक्वणनशङ्कया मन्दमुत्थाय मनुरागजिज्ञासया निद्राया व्याजं मिषमुपागतस्य प्राप्तस्य, न तु व्याजेन निद्रा-

विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जा नम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

आलोक्येति लज्जया समानकर्तृकम् ।

'त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।

---

ब्धतया तद्गताया रते. प्राधान्यम् । तत्र नायक आलम्बनम् । शून्यगृहमुद्दीपनम् । नायकचुम्बनमनुभावः । लज्जा व्यभिचारिभावः । तद्ध्वनिप्रसङ्गवारणाय लज्जापदेन तदुक्ति । तेन तच्चमत्कारापकर्षे इति शृङ्गारध्वनित्वमेव सिध्यति । अतएव हास्यस्यापि स्वपदेनोपादानम् । **लज्जयेति** । अर्शआद्यचि लज्जावतीत्यर्थलाभादिति भाव ।

त्वं मुग्धाक्षीत्यत्र नायिका आलम्बनविभावः । नयनसौन्दर्यमुद्दीपनविभावः । वीटिकास्पर्शोऽनुभावः । तद्गम्यमौत्सुक्यं व्यभिचारिभाव इति ज्ञेयम् ।

---

मिति सर्वथा तदभावसूचनम् । पत्युः ननु प्रियस्य । अपूर्वसमागमेनानुद्भिन्नरहस्यत्वात् । कालक्षेपसहिष्णुत्वाद्वा । मुख सुचिर व्याजशङ्कानिरासायातिचिरकाल निर्वर्ण्य निःशेषतो यावन्मतिवैभवं वर्णयित्वा । अनुरागातिशयान्निद्रानिर्णयार्थं वा निःशेष वर्णयित्वा । सुचिर व्याजमुपागतस्येति वान्वयः । निद्रायास्तात्त्विकभ्रमाद्विस्रब्धं विश्वासयुक्तं यथा स्यात्तथा परितः कपोलयोर्भाले नयनयोश्च चुम्बयित्वा गण्डस्थली जातपुलकामालोक्य । स्वरहस्यप्रकाशात् । लज्जत इति लज्जेति पृथक्पदम् । लज्जावतीत्यर्थ. । मत्वर्थीयाच्प्रत्ययात् । तेन लज्जनक्रियासमानकर्तृकेणालोक्येति क्त्वाप्रत्ययोपपत्तिः । नम्रं स्वयमेव नामित लज्जापारवश्यातिशयेन मुख यस्यास्तादृशी । तव निखिलमपि रहस्यमवगतमिति हसता अतएवोद्भिन्नरहस्यतया अथवा कालाक्षेपकबलात् प्रियेण चिर लज्जापगमपर्यन्तं चुम्बितेत्यन्वयः । अत्र शून्यमित्युद्दीपनातिशयचुम्बनप्रवृत्तियोग्यता च ध्वन्यते । वासगृहमित्युपकरणसपत्तिः । विस्रब्धमिति रागातिशयादविमृश्यकारित्व ध्वन्यते । नम्रेत्युक्त, ननु नामितेति तेन लज्जया तथा विह्वलत्व यथा मुखनामनेऽप्यशक्तिरिति व्यज्यते । लज्जाया अनुभावगम्यत्वेऽपि शृङ्गाराङ्गत्वलाभाय लज्जायाः पदेनोपादानम् । तेन व्यङ्ग्यत्वकृतप्रहर्षापहारान्न भावध्वनित्वम् । चिरमित्यनेन लज्जापगम. सभोगाङ्गीकारश्च व्यज्यते । पत्युरिति युक्तानुरागित्वम् । यद्यपि चात्र द्वयोरपि परस्परालम्बने रती प्रतीयेते । शून्यत्वमुभयोरुद्दीपनम् । कामिनीरतेर्नायकनिद्रा । मुखनिर्वर्णनचुम्बने अनुभावौ । लज्जा व्यभिचारिभाव. । नायकस्य रतेरुद्दीपनं नायिकया चुम्बनम् । पुलकचिरचुम्बनावनुभावौ । हासादिरनुभाव । हासव्यङ्ग्यो हर्षः संचारी । तथापि नायकविषयिण्या नायिकानिष्ठाया रतेरुद्रेकः प्राधान्येन चर्वणाविषय इति बोध्यम् । 'भोगावासो वासगृहम्' इति हारावली ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'परिरभ्य' ख. २. 'एव नायिकारब्धं सभोगमुदाहृत्य नायकारब्धमुदाहरति—त्वमिति । हे मुग्धाक्षि सुन्दरनयने, त्वं कञ्चुलिकया विनैव मनोहारिणी मनोहरणशीलां लक्ष्मीं शोभा धत्से धारयसि । अक्ष्णैव सकलवशीकरणात् । न केवल कञ्चुलिकया शोभा-

शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥'

वीटिका वसनग्रन्थिः ।

विप्रलम्भेष्वभिलाषहेतुको यथा—

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥'

प्रेम स्नेहः । स एव प्रकृष्टः प्रणयः । स एव परिचयातिशयेन रञ्जनक्षमो रागः ।

---

नुदयः अपि तु विद्यमानायास्तिरोधानमपीत्येवकारार्थः । प्रियतमेऽतिशयितप्रीतिपात्रे इत्यभिधानशील एव तस्याः कञ्चुलिकाया वीटिका ग्रन्थिस्तस्या मोचनाय तत्संस्पृशि सति शय्याया उपान्ते प्रान्तदेशे निविष्टा लज्जया निविडसलग्ना भवतीषु स्थितास्वयमेव चेष्टत इति सस्मिता उक्तिचातुर्येण सखीसमक्षं धार्ष्ट्याचरणेन च स्मितयुक्ता वा सखी आलीजनस्य नायिकैव तस्या नेत्रोत्सवः सैव वा नेत्रोत्सवस्ता दृष्ट्वा हर्षोदयस्तेनानन्दितः संजातानन्द आलीजनः सखीजनः अलीकाना मिथ्याभूताना वचनाना शुको मया भोजनीयः शारिका पाठनीयेत्यादीनामुपन्यासो यथा स्यात्तथा शनकैर्मन्द निर्यातो निर्गत इत्यन्वयः । शनकैस्त्वमलीककथा च नायिकाया लज्जातिशयनिरासार्थम् । प्रियतम इत्यनिवार्यत्वम्, सस्मितेत्यनेन कञ्चलिकापसारणे स्वरसश्च व्यज्यते । अत्र मुग्धाक्षी प्रियतमश्च परस्पररत्यालम्बनविभावौ । नायकरतेरुद्दीपनं नयनसौन्दर्याङ्गशोभादि । त्वमित्यादिवचनवीटिकास्पर्शावनुभावौ । तयोश्चाभिधायिनि वीटिकासस्पृशीत्येककालतावगमे प्रतीयमान उत्कण्ठाख्यः सचारी । तथा नायकारतेरुद्दीपन नायकानुभावौ । स्मितादिरनुभावः । तद्व्यङ्ग्यो हर्षः सचारी । शय्योपान्तनिवेशगम्या लज्जा व्यभिचारिभाव इति द्वयस्य गम्यत्वेऽपि नायकरतेरुद्रेकश्चर्वणाविषय इति बोध्यम् ॥' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'प्रेमार्द्रा इति । मालतीमाधवे मालतीलाभाय श्मशानसाधनप्रवृत्तस्य माधवस्येयमुक्तिः । मुग्धदृशो मालत्यास्तास्ता मदनुभूता विशेषाश्चेष्टाः कटाक्षरूपा मयि भवेयुरित्याशंसाया लिङ् । कीदृश्य । निसर्गमधुराः निसर्गेण स्वभावेन मधुरा मनोहराः । तथा प्रेम्णा आर्द्राः । प्रेमबाहुल्यसूचकतया तदार्द्रत्वोपचारः । प्रणयः प्रेमकृतो वशीकारस्तत्स्पर्शिन्यः । परिचयात्संघर्षादुद्गाढोऽतिसान्द्रो रागस्योदयो यासु ताः । विशिष्य वक्तुमशक्यतयानुभावमुखेन प्रतिपादयितुमाह—यासु चेष्टास्वाशंसया मनोरथेन परिकल्पितास्वपि किं पुनरनुभूयमानासु क्षणादन्तःकरणस्यानन्देन सान्द्रो घनो लयस्तन्मयीभावो बाह्यकरणस्य चक्षुरादेर्व्यापारं विषयग्राहित्वं रुणद्धीति तथाभूतो भवतीति वाक्यार्थः । अत्र मुग्धदृश इति दृक्प्रकर्षोपक्रमात्प्रेमार्द्रा इत्यादिविशेषणस्वारस्याच्च चेष्टापदेन दृग्व्यापारलाभः । अयमभिलाषहेतुको विप्रलम्भः ॥' इत्युदाहरणचन्द्रिकासक्षेपः.

ईर्ष्याहेतुको यथा—

'सा पत्युः प्रथमेऽपराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥'

सख्येनोपदेशः सख्योपदेशः।

भविष्यत्प्रवासहेतुको यथा—

'प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रिय सुहृत्सार्थः किमु त्यज्यते॥'

---

१. 'काचित्सखीवृत्तान्तं सखीं प्रति कथयति—सेति। सा बाला मुग्धा। पत्युः प्रियस्य। अपराधकारित्वात्। प्रथमापराधस्यान्याङ्गनासंगमरूपस्य समये। प्रथमत्वेनासह्यत्वम्। सख्येन सौहार्देन य उपदेशस्तं विना तदभावात्। सख्येत्यसमस्तत्वे तृतीयान्तम्। तथाच सखीकर्तृकोपदेशं विनेत्यर्थः। सविभ्रममङ्गस्य भ्रुकुट्यादेर्या वलना चलना वक्रोक्तयश्च ताभिः ससूचनमर्थान्मानस्य प्रकाशनं नो जानातीत्यन्वयः। तर्हि किं करोतीत्यत्राह—स्वच्छैरित्यादि। अश्रुभिरित्युपलक्षणे तृतीया। रोदनं चोपलक्ष्यम्। तथा चाश्रुभिरुपलक्षितं केवलमेव रोदनं करोतीत्यर्थः। स्वच्छैर्निर्मलैः अच्छयोर्निर्मलयोः कपोलयोर्मूले गलितैः। अञ्जनपत्ररचनयोस्त्यागादश्रुकपोलयोः स्वच्छता। उत्तानशयनान्मूले गलनम्। लुठदित्यादि रूपकम्। लुठन्तो विप्रकीर्णा लोलाश्चञ्चला येऽलकाः केशास्तद्रूपैः। 'लुठल्लोलोदकैः' इति पाठे लुठद्भूमौ पतल्लोलोदकं स्रोतो येषां तैरित्यर्थः। कीदृशी बाला। पर्यस्ते लज्जया परितोऽस्ते क्षिप्ते नेत्रोत्पले यया तथाभूता। आरुण्यादुत्पलारोपः॥' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'प्रथमापराधसमये' ख. ३. 'प्रोष्यत्पतिका स्वजीवितं संबोध्य सोपालम्भं वदति—प्रस्थानमिति। हे प्रिय प्रीतिपात्र जीवित, प्रियतमे यातुं गन्तुं निश्चितं सजातनिश्चयं चेतो यस्य तथाभूते सति ननु गन्तुमुद्यते सर्वे अर्थात्तव सुहृदः समं सह प्रस्थिताः प्रचलिताः। तथाच तवापि गन्तव्ये सति गमनावश्यभावे सति सुहृदां सार्थः समूहः किमु कुतस्त्यज्यते। त्वयापि गन्तव्यमिति भावः। के के प्रस्थितास्तत्राह—प्रस्थानमित्यादि। वलयैः कङ्कणैः प्रस्थानं कृतम्। प्रियगमनश्रवणजनितकार्श्येन स्वस्थानच्युतेः। प्रियसखैः प्रीतिपात्रैर्मित्रैः। प्रियस्य नायकस्य वा मित्रभूतैरिति वचनादिविपरिणामेन सर्वेषु तृतीयान्तेषु योज्यम्। तत्त्वं च प्रियसंनिधानान्वयव्यतिरेकानुविधायितया। अस्रैरश्रुभिरजस्रं निरन्तरम्। असंख्यत्वात्। गतं स्वस्थानान्निर्गतम्। धृत्या धैर्येण क्षणमपि नासितं न स्थितम्। चित्तेन गन्तुं पुरः पूर्वमेव व्यवसितमुद्युक्तं ननु गतम्। तेन सममित्यनेनाविरोधः। प्रियेति संबोधनेन प्रियतमेनेव त्वयापि त्यक्तुमुचितमिति व्यज्यते। सार्थशब्दश्च यद्यपि 'सधसार्थौ तु जन्तुभिः' इत्यमरोक्तेर्जन्तुसमूह एव

भूतप्रवासहेतुर्यथा मम—

'कियदम्बु भवेद्वसुंधरायां कति वा पल्लवसंचया भवेयुः ।
कियती च समृद्धिरम्बुजानां परितापोऽपह्रियेत यैः कृशाङ्ग्याः ॥'

सख्याः प्रवासिनं नायिकं प्रतीयमुक्तिः ।

भवत्तद्धेतुको यथा ममैव—

'किं मूढे परिखिद्यसे कतिपयैरेव प्रिये वासरै-
रायाता वयमेहि धेहि परितः प्रास्थानिकं मङ्गलम् ।
एवंवादिनि वल्लभे दयितया निःश्वस्य पाणौ कृतो
मङ्गल्यः कलशो विलोचनपयोधाराभिरापूरितः ॥'

शापहेतुको यथा—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥'

आलिख्येत्यपीच्छाविषय एव ।

---

यद्यपि त्वामालिख्येत्यत्र क्रूरपदेनासूयाख्यभावध्वनिप्राधान्यं 'शठेन विधिना' इतिवत्प्रतिभाति, तथापि 'दृष्टिरालुप्यते मे' इत्यन्तेन वाक्येन विप्रलम्भावगमोत्तरं क्रूरपदेनासूयाभिव्यक्तिरिति न तत्प्राधान्यम् । किंतु रसाङ्गत्वमेव । शठेनेत्यत्र त्वेकवाक्य एवासूयाभिव्यक्त्यनन्तरं निद्रेत्यनेन पश्चाद्विप्रलम्भाभिव्यक्तिरिति भाव-प्राधान्यमिति विशेषो बोध्यः । स्वयं भेदप्रतिपादनावसरे ईर्ष्यादिहेतुत्रयातिरिक्त-

---

प्रयुज्यमानो दृष्टः नाचेतनसमूहे तथापि प्रकृते चैतन्यारोपात्संगमनीयः । एष प्रवास-हेतुकः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'त्वामिति । मेघदूते कुबेरशापप्रतिबद्धप्रियासविधगमनस्य यक्षस्य मेघद्वारा प्रियां प्रति संदेशोक्तिरियम् । प्रणयेन कुपितां मानवतीं त्वा धातुरागैर्गैरिकादिभी रक्तधातुभिः शिलायामालिख्यात्मानं ते तव चरणयोः पतितं प्रणतं कर्तुं यावदिच्छामि तावन्मुहुरुपचितैः प्रवृद्धैरस्रैर्बाष्पैर्मे दृष्टिर्दर्शनमालुप्यते लुप्ता भवतीत्यन्वयः । अर्थान्तरं न्यस्यति—क्रूर इति । अतस्तस्मिन्नप्यालेख्येऽपि नौ आवयोः संगमं क्रूरः श्रेयो विघटने जागरूकः कृतान्तो दैवमेव कृतान्तो यमो न सहते । किमुत साक्षादित्यर्थः । अत्र कोपे रक्तिमोदयाद्धातुरागैरित्युक्तम् । भूमिशयनाच्च शिलायामित्युक्तम् । अत्र कथंचिल्लिखितायामाकृतौ पादपतनारम्भे तत्का-लीनतदीयविलासविशेषानुसरणसमुद्दीपितशोकावेशवशप्रवृत्तैरश्रुभिर्दर्शनविघातद्वारा विघ्नः क्रियत इति सर्वतन्त्रविदो वाचस्पतिमिश्राः । आधुनिकास्तु लिखनमपीच्छाविषय एव न तु निर्व्यूढमिति मन्यन्ते । यद्यप्यत्र प्रबन्धालोचनयोन्माद एव प्राधान्येन प्रतीयते तथापि तदनालोचनेनोन्मादाभास एवेत्यभिप्रेत्य रसध्वनित्वेनोदाहृतम् । अयं शापहेतुको विप्र-लम्भः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

विरहहेतुको यथा—

'[1]अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृ-
द्यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥'

एषा विरहोत्कण्ठितेत्यभिलाषहेतुकादेर्भिद्यते ।

'न्यैङ्ग[2]व्रीडादिभिश्चेतोविकासो हास उच्यते ।'

न्यैङ्ग[3] वैकृतम् । तेन हासप्रकृतिको हास्यः । यथा—

'[4]आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।

---

हेतुकत्वेनान्ते विरहहेतुकस्याभिधानात्तदुदाहरणमन्ते दर्शितम् । **एषेति** । विरहोत्कण्ठितेति यतो मुनिनोक्ता । न तु प्रोषितभर्तृकाख्यभेदान्तर्गता विप्रलम्भसामान्यप्रयुक्ता वा । अतो विरहस्यान्येभ्योऽभिलाषादिभ्यो भेदं गमयतीत्यर्थः ।

---

१. 'अन्यत्रेति । इत्युक्तप्रकारेणाल्पेतराभिर्बह्वीभिः कल्पनाभिर्वितर्ककरणैः कवलितं ग्रस्तम् । व्याप्तमिति यावत् । स्वान्त मनो यस्यास्तथाभूता बाला निशान्तस्य गृहस्यान्तरे मध्ये निशि निद्रा नाप्नोतीति सबन्धः । किंभूता । वृत्तः सजातो विवर्तनस्य पार्श्वपरिवर्तनस्य व्यतिकरः समूहो यस्यास्तथाभूता । कल्पनाप्रकारमाह—अन्यत्रेति । अन्यत्र नायिकान्तरगृहे व्रजति गच्छतीति कथापि का । न कापि अलीका । किमु गमनमित्यपिशब्दलभ्योऽर्थः । खलु निश्चितम् । अस्य नायकस्य तादृक् सुहृदपि न यो मा नेच्छति द्वेष्टि । तथाच तत्कृतनिवारणमप्यसभाव्यमित्यर्थः । तर्हि हेत्वभावेऽनागमनमप्यसभाव्य तत्राह—नागतश्चेति । चस्त्वर्थे । आगतस्तु नेत्यर्थः । कारणभावेऽपि कार्यमिति विस्मये हहहेति । सहसेति वा पाठः । विधेर्दैवस्य कोऽयमननुभूतपूर्वः प्रक्रम आरम्भः अहेतुककार्योत्पादरूपः । सहसेतिपाठे ननु दैववशान्नागतस्तत्राह—सहसेति । सहसा अकस्मात् । तथाच विधेर्मया किमपराद्धमिति भाव इति संगमनीयम् । एषा च 'आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः । तदनागमदुःखार्ता विरहोत्कण्ठिता मता ॥' इत्युक्तलक्षणा नायिकेत्यवश्यं विरहस्य प्रवासादितः पृथग्भावः स्वीकार्यः । अन्यथा प्रोषितभर्तृकादितोऽस्या भेदान्तरत्वानापत्तेः ॥' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'न्यङ्ग्य' क. ३. 'न्यङ्ग्य' क. ४. 'आकुञ्च्येति । विष्णुशर्माणमुपहसतः कस्यचिदुक्तिरियम् । इतीत्युपलक्षणार्थकतृतीयान्तम् । 'विष्णुशर्मा कश्चिद्विप्रः । आकुञ्च्येत्यादि हतोऽहमित्यन्तेन वाक्येनोपलक्षितं रोदितीत्यन्वयः । वाक्यार्थस्तु—अशुचिमुच्छिष्टादिनोपहतं पाणिमाकुञ्च्य संकुचिताग्रं कृत्वा । मुष्टीकृत्येति यावत् । मन्त्रपूतानामम्भसा पृषतैर्बिन्दुभिः प्रतिपदं प्रतिक्षणं पवित्रे मम मूर्ध्नि तारो दीर्घः स्वरो यत्र, प्रथितो विस्तारितस्थूदिति शब्दश्च यत्र तथा प्रहारमदाद्दत्तवती । हाहेति खेदे । हतो नष्टोऽहमिति । 'प्रहितथूत्क' इति पाठे प्रहित प्रक्षिप्तं थूत्कं लाला यत्रेति व्याचक्षते । अत्र हास्यरसः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

तारस्वरं प्रथितथूत्कमदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥'

अत्र ताड्यमानो विष्णुशर्मा तत्क्रन्दनं च विभावौ रसाश्रयस्य । एतद्वाक्यमनुभावः । चापलादिर्व्यभिचारीति ।

'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक् ।

आदिग्रहणादनिष्टाप्तिः । शोकप्रकृतिकः करुणः । यथा—

'हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो
धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥'

अत्र विपन्ना काचिदीश्वरी संबोध्या, तदङ्गदाहश्च विभावौ ।

'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते ।'

तत्प्रकृतिको रौद्रः । यथा—

'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।

---

विभावावालम्बनोद्दीपनरूपौ । एवमग्रेऽपि ।

कृतमनुमतमित्यादावर्जुनादय आलम्बनविभावा निर्मर्यादत्वमुद्दीपनम् । प्रति-

---

१ 'हा मातरिति । राजपत्न्या मृतायां तत्परिजनविलापवर्णनमिदम् । इत्थमेतत्प्रकाराः पुरे भवानामङ्गनाना गिरश्चित्रस्थानप्यालेख्यगतानपि रोदयन्ति भित्तीरपि शतधा शतखण्डाः कुर्वन्ति कि पुनः सचेतनानित्यन्वयः । किंभूताः । उच्चैः क्रन्दनाद्घर्घरस्वराश्च ताः श्रमाद्बाष्पबाहुल्याच्च मध्येऽन्तराले रुद्धा विच्छिन्नाश्चेति कर्मधारयोत्तर पुनः करुणा इत्यनेन कर्मधारय । करुणा सस्नेहाः कातर्यसूचिका वा । नातो रसस्य शब्दवाच्यतादोषः । किंरूपा गिर इत्यपेक्षाया तत्स्वरूपानुकरण पूर्वार्धम् । तदर्थस्तु—हा इति विषादे । भो मातः, कुत्र गन्तव्ये त्वरिता सजातत्वरासि । येनास्मानपि नापेक्षितवती । 'त्वमितासि' इति पाठे इतासि गतासीत्यर्थः । किमिदमाकस्मिकोत्पातरूपम् । हा इति धिगर्थे । देवता धिक् । नानोपचारपूजास्तुतिनुतिभिरप्यरक्षणात् । आशिषोऽर्थोद्बनादितर्पितद्विजाना क कुत्र । गता इति शेष । ता अपि विफला इति भावः । प्राणान्धिक् । त्वदभावेऽपि स्थिरत्वात् । ते तवाङ्गेषु सुकुमारेष्वशनिर्वज्र तद्रूपो हुतवहः । य एवाहुतिभिः पूर्वं तर्पितत्वाद्धुतवहः स पतित स्वयमेव । सचेतनैरेतेष्वङ्गेषु पातयितुमशक्यत्वात् । यद्वा पतितोऽशनिरिति भिन्न वाक्यम् । वज्रपात एवाय यत्तव विपत्तिरिति । दृशौ नेत्रे दग्धे इति विशिष्योपादान रमणीयतातिशयेन तद्दाहे दुःखाधिक्यात् । यद्वास्माकं दृशौ दग्धे इत्यशुभदर्शित्वादकस्माद्दग्धे इति लोकोक्त्या द्रष्टव्यम् । अत्र करुणरसः ॥' इत्युदाहरणचन्द्रिका.
२. 'कृतमिति । वेणीसंवरणे द्रोणवधानन्तरमर्जुनादीन्प्रत्यश्वत्थाम्न उक्तिरियम् । इदं गुरोर्द्रोणस्य वधरूप पातकमेव गुरुपातक महापातकमविवेकान्मनुजरूपैः पशुभिरुदायुधैरुद्यता-

नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'
'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।'

तत्प्रकृतिको वीरः । स च त्रिधा—युद्धवीरो दानवीरो दयावीरश्च । तत्राद्यो यथा—

'क्षुद्राः संत्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः
किंचित्संरम्भलीलानियमितजलधिं राममन्वेषयामि ॥'

अपरावूहनीयौ ।

---

ज्ञानुभाव. । असहायत्वगम्यो गर्वः संचारी । यद्यपि कृतमित्यादिक्रमं हित्वा नरके-त्यादिन्युत्क्रमेण संकीर्तनमनुचितं तथापि रौद्रे विवेकशून्यतायाः पोषकत्वान्न दोष. । विवेकसत्त्वासत्त्वाभ्या च वीररौद्रयोर्विशेषः ।

अपराविति । तत्र दानवीरो यथा रसगङ्गाधरे—'कियदिदमधिकं मे यद्वि-

---

स्वैरत एव निर्मर्यादैर्मर्यादाशून्यैर्यैर्भवद्भिरर्जुनाद्यैः कृतमनुमतमनुज्ञात दृष्टं वा तेषां सभीमः किरीटिनां भीमसेनार्जुनसहिताना भवतां नरकस्य दैत्यविशेषस्य रिपुणा श्रीकृष्णेन सार्धं मसृङ्मेदोमांसै रुधिरवसामांसैरयमेतत्क्षणवर्ती अहमनन्यसहायो दिशा लक्षणया तद्देवताना बलिं पूजोपहार करोमीत्यन्वयः । पूर्वं दण्डक्रमेण कृतमित्याद्यभिधायानन्तर क्रोधात्क्रमविस्मृत्यानुमन्तुः प्रागुपादानम् । पशुभिरित्यनेन बलिदानयोग्यता ध्वन्यते । सार्धमिति संबन्धिनि साहित्यं, नतु कर्तरीति बोध्यम् । अत्र रौद्रः ।' इत्युदाहरणचन्द्रिका.

१. 'क्षुद्रा इति । हनुमन्नाटके रावणपुत्रस्येन्द्रजित इयमुक्तिः । भो जात्या पराक्रमेण च क्षुद्रा नीचा हरयो वानराः, एते दृश्यमानदुरवस्थाः । यूयमिति शेषः । सत्रास विजहित त्यजतेति सबन्धः । एते आगते अर्थान्मयीति वार्थः । भयत्यागे हेतुमाह—क्षुण्णेत्यादि । यतः क्षुण्णश्चूर्णितः शक्रारूढार्हस्येभस्यैरावतस्य कुम्भो यैस्तादृशा अमी सायका बाणा युष्मद्देहेषु निपतन्तः पतमाना न तु पात्यमानाः पर केवल लज्जा दधति धारयन्ति । क्षुद्रकार्यकरणाल्लज्जिता इव न मामानन्दयन्तीत्यर्थः । तथा च दैवाद्बाणपातेऽपि मदनुद्देश्यत्वाद्भयं त्यजतेत्यर्थः । लक्ष्मण प्रत्याह—सौमित्रे इति । सुमित्रायाः पुत्र, त्वं तिष्ठ । युद्धोद्यमाद्विरमेत्यर्थः । हेतुमाह—पात्रमित्यादि । हि यस्मात्त्वं रुषा क्रोधानां पात्रं विषयो नासि न भवसि । तर्हि किमर्थमुद्यमस्तत्राह—नन्वहमित्यादि । अहं मेघनादः प्रसिद्धनामा । नन्विन्द्रजिव् । तत्त्वस्याप्यनुत्कर्षकत्वात् । राममन्वेषयामि कीदृक्पराक्रमशील इति मार्गयामि । हेतुगर्भं विशेषणमाह—किंचिदिति । किंचित्संरम्भ ईषत्क्रोध. स एव लीला क्रीडा तया नियमितो बद्धो वशीकृतो वा जलधिर्येन तथाभूतम् । क्वचित् 'भ्रूभङ्ग' इति पाठः स सम्यगेव । अत्र सौमित्रे इति मातृसंबन्धोत्कीर्तनान्निर्वीर्यत्वं द्योत्यते । रुषामिति बहुवचनेन तदतिशय इति बोध्यम् ।' इत्युदाहरणचन्द्रिकासंक्षेप'. २. 'हरयो भिन्नशक्रेभ' इति पाठः. ३. 'युष्मद्गात्रेषु' इति पाठः. ४. 'किंचिद्भ्रूभङ्गसंज्ञा' इति पाठः.

'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ।'

तत्प्रकृतिको भयानकः ।

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'

'जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात् ।'

तत्प्रकृतिको बीभत्सः । यथा—

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'

---

जायार्थयित्रे कवचमरमणीयं कुण्डले चार्पयामि । अकरुणमवकृत्य द्राकृपाणेन निर्ग-लद्बहलरुधिरधारं मौलिमावेदयामि ॥' एषा द्विजवेषायेन्द्राय कवचकुण्डलदानो-द्यतस्य कर्णस्य तद्दानविस्मितान्सभ्यान्प्रत्युक्तिः । दयावीरो यथा नागानन्दे जीमू-तवाहनोक्तौ—'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति । तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥' इति । यद्यपि धर्मवीरोऽपि कैश्चिद्युधिष्ठिरादिरुक्तस्तथापि दशरूपकादौ त्रय एव कथिता इति तावन्त एवोक्ताः ।

---

१. 'ग्रीवेति । शाकुन्तले मृगहननाय धावितरथस्य दुष्यन्तस्य राज्ञः सूतं प्रति 'अय पुनरिदानीमपि' इत्युपक्रम्योक्तिरियम् । पश्येत्यस्य वाक्यार्थः कर्म । स चेदानीमप्यथ पुरो-दृश्यमानो मृगः पुनरुदग्रप्लुतत्वादुत्कटोत्फलत्वाद्वियत्याकाशे बहुतरमधिकं प्रयाति, उर्व्यां भूमौ स्तोकमल्पं प्रयाति । किंभूतः । अनु पश्चात्पतति धावति स्यन्दने रथे ग्रीवाया भङ्गेन वक्रीभावेनाभिरामं यथा स्यात्तथा मुहुर्वारंवारं गम्यदेशदर्शनेन विच्छेदाद्बद्धा दृष्टिर्दत्तदृष्टिः । शरपतनभयाद्भूयसा स्थूलेन पश्चार्धेनापरार्धेन पूर्वकायं प्रविष्टः प्रवेष्टुमारब्धः । स्थूलस्य कृशे कथं प्रवेश इत्यप्रतिसंधानाद्भयातिशयसूचनम् । तथार्धावलीढैरर्धभक्षितैः श्रमेण विवृ-तात्प्रसारितान्मुखाद्भ्रंशिभिः पतद्भिः दैवात् । न तु पातितैः कीर्णं व्याप्तं वर्त्म मार्गो यस्य सः । अत्र नृपरथाद्भयमेव स्थायिभाव इति न शब्दवाच्यतादोषः । अत्र भयानकः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः । २. 'उत्कृत्येति । मालतीमाधवे श्मशानवर्णनम् । प्रेतेषु रङ्कः कृपणः । दरिद्र इति यावत् । अव्यग्रमनाकुलं यथा स्यात्तथा । भोजनसमाप्तिभया-च्छनैरिति यावत् । कृत्तिं चर्म उत्कृत्योत्कृत्य प्रथममत्ति भक्षयति । अथानन्तरं पृथुना महता उच्छोफेनोच्छूनतया भूयांसि मांसानि जग्ध्वा भक्षयित्वा अङ्कस्थात्करङ्कान्मस्तका-दस्थिसंस्थं स्थपुटगतमपि गम्भीरविषमभागगतमपि क्रव्यं मांसमत्तीति संबन्धः । तेन क्त्वा-प्रथमाथशब्दानां नासंगतिः । 'पृथूत्सेध' इति पाठेऽपि स एवार्थः । करङ्कः शवशरीर-मिति केचित् । कीदृशानि मांसानि । अंसौ स्कन्धौ स्फिक् ऊरुमूलकटिसंधिपृष्ठभागः ।

स्थपुटं निम्नं विषमम् ।

'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात् ।'

तत्प्रकृतिकोऽद्भुतः । यथा—

'चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ॥'

एषां भेदो वचनमात्रान्न सिध्यतीत्येषां विभिन्नानुक्तरूपान्स्थायिभावानाह-

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ ७ ॥**

तत्र—

'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमा ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥'

---

उक्तरूपानिति । 'मनोनुकूलेष्वर्थेषु सुखसंवेदनं रतिः' इत्यादिभिरुक्तलक्षणानित्यर्थः । स्थायिशब्दार्थं दर्शयितुमाह—**विरुद्धा इति** । तेनानुच्छिद्यमानतया

---

पिण्डी जङ्घोर्ध्वभागः । पिण्डेति पाठे तदाकारत्वात्स एव । एवमादिष्ववयवेषु सुलभानि तथा उग्रस्तीव्रः पूतिर्दुर्गन्धो येषां तानि । कीदृक्प्रेतरङ्कः । आर्तः क्षुत्पीडितः । परितोऽस्ते क्षिप्ते नेत्रे येन सः । बलवत्पिशाचान्तरेणापहरणशङ्कया । दैन्यात्स्थपुटगतमांसापकर्षणाय वा प्रकटिता दशना दन्ता येन सः । अत्रोत्कृत्योत्कृत्येति वीप्सया कालक्षेपाक्षमः एकदा सर्वं चर्म त्याजयितुं न शक्नोति किंतु किंचित्किंचित्तथा विधाय तद्भक्त्वापरभागमुत्कृत्यात्तीति लभ्यते । एवं च यावच्छक्तिसत्त्वं तावदुत्कर्तनमिति । 'आत्तस्नाय्वन्त्रनेत्रः' इति पाठे स्नायुः शिरा । आत्तानि गृहीतानि स्नाय्वादीनि येन । 'रङ्कः कृपणमन्दयोः' इति मेदिनी । 'करङ्को मस्तके' इति च । अत्र बीभत्सः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'निम्नोन्नतम्' क. २. 'चित्रमिति । वामनमुद्दिश्य बलेरुक्तिरियम् । अत्र चित्रादिशब्दा भङ्गिभेदेन स्वसमभिव्याहृतपदार्थस्य लोकोत्तरताप्रतिपादकाः । ननु विस्मयार्थो... । तस्यात्र स्थायित्वेन वाच्यतादोषापत्तेः । तथा च महामाहात्म्यशाली एष पुरुषश्चित्र लोको... चमत्कारं वस्त्विति संबन्धः । माहात्म्ये विशिष्टेऽन्वितस्यापि लोकोत्तरत्वस्य विशेषणे माहात्म्ये... न भवति ...नम् । 'उत्कटः पण्डितः' इत्यादिवत् । बतावतार इति । अत्राप्येष इति मध्यमणिन्यायेनान्विन्द्रजित् । ...ध्यते । अवतारः सदाचारप्रवर्तकः । अत्रापि बतशब्दार्थस्य पूर्ववदन्वयः । ...यामि । हेतुगर्भे विशेषाया वा' इति दीपिका । 'अविकारः' इति पाठे विकाराभाववानित्यर्थः । ...तया नियमितो बद्धो बलिः । क्व न कापीति भङ्ग्यन्तरेण लोकोत्तरेत्युक्तं भवति । भङ्गिर्गमनो... सम्यगेव । अत्र सौमित्रे इतिकारविशेषः । अभिनवा अपूर्वैव । वैलक्ष्यगतमात्यन्तिकत्वमेवका... तदतिशय इति बोध्यम् ।' सहस्रसंतापेऽप्यचलचित्तत्वम् । अहो अलौकिकः प्रभावः सामर्थ्यं... ३. 'युष्मद्गात्रेषु' इति पाठः । काप्यनिर्वाच्या आकृतिरवयवसंस्थानम् । एष सर्गो निर्माणं नूतनः क्षण इत्यर्थः ।' इत्युदाहरणचन्द्रिका.

इति सामान्यलक्षणम् । अवस्थितिश्चैषां स्त्रक्सूत्रन्यायेन, फेनबुद्बुदन्यायेन तु व्यभिचारिणामित्यनयोर्भेदः । विशेषलक्षणान्युक्तानि । अष्टावेव चेत्स्था( चैते स्था )यिनः । अतो न्यूनाधिकत्वशङ्का रसे निरस्तेति ।

यद्यपि विभावानुभावप्रतिपाद्यव्यञ्जकत्वपुरस्कारेण व्यभिचारिभेदोपदर्शने न कश्चिन्न्यायः, तथापि व्यङ्ग्यविवेचनाय निर्वेदस्य स्थायित्वव्यवस्थापनाय च व्यभिचारिभेदानाह—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ८ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ ९ ॥
स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १० ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ११ ॥

नामत एव समाख्याताः, न तु लक्षणतः । लक्षणानामन्यैरेव सप्रपञ्चं दर्शितत्वात् । तद्यथा—

'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ॥'
'चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ।' इति केचित् ।
'रत्यायासकलाभ्यासाद्ग्लानिर्निष्प्राणतेव या ।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः ॥'

---

स्थिरा आस्वाद्यमाना रत्यादयः स्थायिन इति कथ्यन्ते । यदा त्वस्थिरता तदैतेषां रसान्तरे संचारित्वमेव न तु स्थायित्वम् । तदुक्तम्—'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति, 'शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः । शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ॥ इत्याद्यन्यत्समुन्नेयं स्वयं भावितबुद्धिभिः ।' इति च ।

**यद्यपीति** । रसव्यञ्जकत्वस्य विभावानुभावयोरपि समानत्वात्तयोरपि प्रतिपादनमुचितम् । अतो न रसव्यञ्जकत्वाद्व्यभिचारिकथनम् । किं तु 'रतिर्देवादिविषया व्यभिचारी तथाञ्चितः' इति भावस्य वक्ष्यमाणत्वात्तदुपयोगितया निर्वेदस्यादौ निर्देशेन प्राधान्यरूपस्थायित्वद्योतनेन शान्तरसप्रतिपादनाय चेत्यर्थः । **तत्त्वज्ञानेति** । यथा—'प्राप्ताः श्रियः सकलकामदुघास्ततः किम्' इत्यादौ । आपदा यथा—'राज्ञो विपद्बन्धुवियोगदुःखं देशच्युतिर्दुर्गममार्गखेदः । आस्वाद्यतेऽस्याः कटुनिष्फलायाः फलं मयैतच्चिरजीवितायाः ॥' इत्यादौ । ईर्ष्यया यथा—'विगिध-क्शाक्जितम्' इत्यादौ । संभोगरत्या ग्लानिर्यथा—'लुलितनयनताराः क्षामवक्त्रेन्दु-

'अनर्थप्रतिमा शङ्का परक्रौर्यात्स्वदुर्नयात्।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत्॥'
'परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः॥'
'संमोहानन्दसंभेदः स्खलदङ्गवचोगतिः।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत्॥'
'उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः॥'
'श्रमः खेदोऽध्वरत्यादेः श्वासनिद्राभरादिकृत्।
श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यतः॥'
'श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे।
बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः॥' इत्येके।
'आलस्यं श्रमगर्भादेर्जाड्यं जृम्भाक्रियादिकृत्।
दौर्गत्यादेरनोजः स्याद्दैन्यं कार्श्यामृजादिकृत्॥'
'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।
प्रयत्नपूर्विकान्वेष्यस्मृतिश्चिन्तेति केचन॥'
'मोहो विचित्तता भीतिदुःखवेगानुचिन्तनैः।
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत्॥'

---

बिम्बा रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः। तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः॥' इत्यादौ। विप्रलम्भरत्या यथा—'परिमृदितमृणाली—' इत्यादौ। परक्रौर्याच्छङ्का यथा—'ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम्। सखीषु स्मेरासु प्रथयसि च वैलक्ष्यमसमं प्रिया प्रायेणास्तेत्यदयविहितातङ्कविधुरम् (हृदयनिहितातङ्कविधुरा)॥' इत्यादौ। अत्र वासवदत्तायाः क्रौर्यात्सागरिकायाः शङ्का। गर्वादसूया यथा—'अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः' इत्यादौ। अध्वजः श्रमो यथा—'अलसलुलितमुग्धान्यध्वसंजातखेदादशिथिलपरिरम्भैर्दत्तसंवाहनानि। मृदुमृदितमृणालीदुर्बलान्यङ्गकानि त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता॥' इत्यादौ। इयं सीतां प्रति श्रीरामोक्तिः। रतिश्रमो यथा—'प्राप्य मन्मथमदादतिभूमिं दुर्वहस्तनभराः सुरतस्य। शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः॥' इत्यादौ। गर्भजमालस्यं यथा—'चलति कथंचित्पृष्टा यच्छति वाचं कथंचिदालीनाम्। आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः॥' इत्यादौ। दारिद्र्याद्दैन्यं यथा—'मद्देहे मशकीव मूषकवधूर्मूषीव मार्जारिका मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः। मूर्च्छापन्नशिशून्सून्विजहतः संप्रेक्ष्य झिल्लीरवैर्लूतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति॥' इत्यादौ। चिन्ता यथा—'अस्तमितविषयसङ्गा

१ 'कार्यतः' क.

'सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः ।
भ्रूसमुल्लासकरजवादनादिस्तदुद्भवः ॥'
'अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥'
'दुराचारादिभिर्व्रीडा धार्ष्ट्याभावोऽभिधीयते ।
वस्त्राङ्गुलीयकस्पर्शभूरेखाधोमुखादिकृत् ॥'
'चेतोनिमीलनं व्रीडा न्यग्भावस्तवादिभिः ।' इति केचित्।
'मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः ।'
'आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ।' इति केचित् ।
'तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥'
'मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ।
आवेगो राजविद्रावरत्यादेः संभ्रमो मतः ॥'
'तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ।'
'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥'
'क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ।' इत्येके ।
'गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाविनयावज्ञादिकृत्तु सः ॥'

---

मुकुलितनयनोत्पला बहुश्वसिता । ध्यायति किमप्यलक्ष्यं वाला योगाभियुक्तेव ॥' इत्यादौ । मोहो यथा—'तीव्राभिषङ्गप्रभवेण—' इति कुमारसम्भवे तृतीयसर्गे कामदाहप्रसङ्गे । स्मृतिर्यथा—'अत्युच्चाः परितः स्फुरन्ति गिरयः' इति । ज्ञानजा धृतिर्यथा—'वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या' इति । शक्त्या धृतिर्यथा—'राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः । प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥' इति । लज्जा यथा—'अलंकुरु निजं वपुर्दयित मण्डनैः किं पुनस्त्वमेव मम मण्डनं दयित किं परैर्मण्डनैः । वरं कुरु पयोधराधरनितम्बबिम्बेषु मामिति प्रविवच श्रुतौ जयति नम्रवक्त्रा वधूः ॥' इति । चापलं यथा—'अन्यासु तावदुपमर्दसहासु भृङ्ग लोलं विनोदय मनः सुमनोलतासु । बालामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः[1] ॥' इति । हर्षो यथा—'अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना । अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव ॥' इति । आवेगो यथा—'क्षिप्तो हस्तावलग्नः प्रसभमभिहतो व्याददानोऽशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥' इत्यादौ । जडता यथा—'एव-

1. 'नवमल्लिकाया' ख

'प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः।
निःश्वासोच्छ्वाससंतापसहायान्वेषणादिकृत्॥'[1]
'कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसंभ्रमैः।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः॥'
'निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसनादयः॥'[2]
'विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत्।[3]
ध्यानजाड्यप्रमोहाधिपरितापादिकृत्तु सा॥'
'स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।
कोपावेगभयग्लानिसुखदुःखादिकारकः॥'
'निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत्॥'
'अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता।
तत्र स्वेदशिरःकम्पनेत्ररागाङ्गविक्रियाः॥'[4]
'लज्जाद्यैर्विक्रियागोपोऽवहित्थात्मन्यविक्रिया।[5]
व्यापारान्तरसक्तित्ववदनानमनादयः॥'

---

मालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति। सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये॥' इत्यादौ। गर्वो यथा—'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये। जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥' इत्यादौ। विषादो यथा—'नन्वेष राक्षसपतेः स्खलितः प्रयासः (प्रतापः) प्राप्तोऽद्भुतः परिभवो हि मनुष्यपोतात्। दृष्टः स्थितेन च मया स्वजनप्रमाथो दैन्यं च राजनि रुणद्धि किमाचरामि॥' इति रावणपुरुषोक्तौ। औत्सुक्यं यथा—'पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः। कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः॥' इति। निद्रा यथा—'निद्रार्धमीलितदृशो मदमन्थराणि नात्यर्थवन्ति न च यानि निरर्थकानि। अद्यापि मे मृगदृशो मधुराणि तस्यास्तान्यक्षराणि हृदये किमपि ध्वनन्ति॥' इति। विस्मृतिर्यथा—'तस्याः सान्द्रविलेपनस्तनतट-' इत्यादौ। 'अपस्मार' (पूर्वस्यापस्मृतिः) इति पाठे तु 'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम्। फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के॥' इत्युदाहार्यम्। स्वप्नो यथा—'जाने कोपपराङ्मुखी-' इत्यादौ विबोधोऽप्यत्रोदाहार्यः। अमर्षो यथा—'प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात्। न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्॥' इति। अवहित्था यथा—'एवंवादिनि देवर्षौ

---

१. 'निःश्वासोच्छ्वासकृत्तापसहायान्वेषणादय.' क. २. 'च्छ्वासनायक.' क. ३. असात्पाक् खग पुस्तकयोः 'आवेश्चात्यन्तदुःखादेरपसारस्तथाविध.। मनःक्षेपस्त्वपसारो ग्रहावेशादिसंभवः॥' इति केचित्, इत्यधिकमस्ति. ४. 'स्वेद.' कख. ५. 'क्रियायोगो' क.

'द्विष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥'
'भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ।
स्मेरता धृतिसंतोषौ बहुमानस्तथात्मनि ॥'
'व्याधयः संनिपाताद्यास्तेषामन्यत्र विस्तरः ।
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः ॥'
'उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ।
तस्मिन्नस्थानरुदितगीतहासासितादयः ॥'
'जीवस्योद्गमनारम्भो मरणं परिकीर्तितम् ।
संमोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् ॥'

अत्र च[1] मरणस्थाने केचित्करुणां पठन्ति । सा च परदुःखप्रहाणेच्छारूपत्वाच्चित्तवैक्लव्यमयाच्छोकान्नातिरिच्यत इति तद्गणनमत्रानुचितमित्येके । अन्ये तु तस्या दयावीरस्थायित्वमित्यत्र तद्गणनानौचित्यमित्याहुः । न चान्यत्र संचारित्वाद्गणनं फलवदिति वाच्यम् । स्थाय्यन्तरसाधारणत्वात् । तेऽपि हि क्वचन संचारिणः । तदुक्तम्—

'शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ॥
इत्याद्यन्यत्समुन्नेयं स्वयं भावितबुद्धिभिः' । इति ।
'गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पितादयः ।

---

पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥' इत्यत्र । उग्रता यथा—'प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भवत्क्रोधप्रेरितभीमभार्गवभुजास्तम्भापविद्धः क्षणात् । उज्ज्वाल· परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथिर्येनानेन जगत्सु खण्डपरशुर्देवो मृड· ख्याप्यते ॥' इति । मतिर्यथा—'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्' इति किराते । व्याधिर्यथा—'पाण्डुक्षामं वदनं–' इत्यादौ । उन्मादो यथा—'रक्ताशोक कृशोदरी क्व नु गता–' इत्यादौ । मरणं यथा—'कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् । पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥' अत्र कुशले पृष्टे जीवन्त्याः कुतस्तदिति जीवतीत्यस्याभिप्राय । तमबुद्ध्वा पुन प्रश्ने स एव भङ्ग्यन्तरेण सूचितः । प्रसिद्धमरणस्यालम्बनोच्छेदेन भावत्वायोगादुद्गमनपूर्वावस्थोक्ता । **साधारणत्वादिति** । तथा च तेषामपि व्यभिचारिषु गणनापत्तिरिति भाव । त्रासो यथा—'त्रस्यन्ती चलशफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य । क्षुभ्यन्ति प्रसभमहो विनापि हेतोर्लीलाभि· किमु सति कारणे रमण्य ॥' इति । वितर्को यथा—'कः समुचिताभि-

---

१. 'च' क-पुस्तके नास्ति.

ऊहो वितर्कः संदेहो[1]ऽङ्गुशिरोऽङ्गुलिनर्तकः ॥'

निर्वेदस्यामङ्गलप्रायस्य प्रथमनिर्देश्यत्वेऽपि प्राङ्निर्देशो मुख्यत्वप्रकाशनेन स्थायित्वप्रतिपादनाय तेन

## निर्वेदस्थायिभावाख्यः शान्तोऽपि नवमो रसः[2] ।

तत्प्रकृतिकत्वात् । यथा—

'अहौ[3] वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्येऽरण्ये[4] शिवशिवशिवेति प्रलपतः ॥'

स्त्रैणं स्त्रीसमूहः । वाशब्दाभ्यां द्वयोर्द्वयोस्तुल्यता द्योत्यते । अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः । न चैतस्य स्थायी निर्वेदो युज्यते । तस्य विषयेष्वलंप्रत्ययरूपत्वादात्मावमानरूपत्वाद्वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तम्—

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥'

---

षेकादार्य प्रच्यावयेद्गुणज्येष्ठम् । मन्ये ममैष पुण्यैः सेवावसरः कृतो विधिना ॥' इति लक्ष्मणोक्तौ ।

**तुल्यतेति** । सा चानुपादेयत्वेनेति बोध्यम् । **शान्तेश्चेति** । निखिलविषयपरिहारेण वैराग्येण जनितो य आत्ममात्रे विश्रामो विगलितवेद्यान्तरतया चित्तस्य

---

१. 'सदेहो' क-ग. २. कैश्चिदिद कारिकार्धं वृत्त्यन्तर्गतमेव पठ्यते, उल्लाससमाप्तिस्थं च 'वेदखाब्धिवियच्चन्द्राः शरेषुयुगखेन्दवः' इत्यर्धमपि वृत्त्यन्तरेव पाठ्यते. तन्मते विंशतिकारिकात्मकोऽयमुल्लासः. ३. "अहौ वेति । अहिः सर्पः । दृषच्छिला । लोष्टं मृत्खण्डः । स्त्रैण स्त्रीसमूहः । द्वयोर्द्वयोः प्रत्येक वाशब्दस्तुल्यतासूचनार्थः । अहिहाराद्योः समा इदमुपादेयमिदमनुपादेयमिति वैषम्यरहिता दृग्दृष्टिर्यस्य एवंभूतस्येत्यर्थः । जगतो मिथ्यात्वेन रागद्वेषयोरभावात् । एवं च यथाहिरनिष्टापादकत्वेनानुपादेयस्तथा हारोऽपीति समदृष्टिरिति व्याख्यानमनादेयम् । क्वचिदमेध्ये पुण्ये वारण्ये मम दिवसा यान्त्विति वाशब्दानुषङ्गेण बोध्यम् । अन्यथा समदृष्टित्वासंगतेः । प्रलपतोऽनर्थकं वदतः । शब्दमात्रस्य ब्रह्मप्रतिपादकत्वात्प्रयोजनाभावाच्च शिवेति शब्दोच्चारणस्य प्रलापरूपत्वम् । 'यान्ति' इति पाठे 'क्वचित्' इत्यत्र 'कदा' इति पाठः । तेन 'कदाकर्ह्योर्विभाषा' इति भविष्यदर्थे लट्प्रत्ययः ।' इति चण्डीदासादय. । वस्तुतस्तु तथापाठेऽपि कदेति पाठकल्पनमनर्थकम् । जीवन्मुक्तेन विद्यमानायाः स्वावस्थायाः परामर्शोपपत्तेरिति बोध्यम् ।" इत्युदाहरणचन्द्रिका. ४. 'पुण्यारण्ये' ग.

अत एव 'सर्ववृत्तिविरामोऽस्य स्थायी' इति निरस्तम् । अभावस्य स्थायित्वायोगात् । तस्माच्छमोऽस्य स्थायी । निर्वेदादयस्तु व्यभिचारिणः । स च शमो निरीहावस्थायामानन्दः । स्वात्मविश्रामादिति ।

रसवद्भावोऽप्यलक्ष्यक्रमेषु पठितः स किंरूपः । रत्यादीनां रसरूपत्वात्, व्यभिचारिणां रसाङ्गतानियमेन प्राधान्याभावात्, सात्त्विकानामव्यङ्ग्यत्वादित्यत आह—

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।**
**भावः प्रोक्तः**

रतिरिति स्थायिभावोपलक्षणम् । देवादिविषयेत्यप्यप्राप्तरसावस्थोपलक्षणम् । तेन देवादिविषया सर्वा, कान्तादिविषयाप्यपुष्टा रतिः, हासादयश्चाप्राप्तरसावस्थाः, प्राधान्येन व्यञ्जितो व्यभिचारी च भाव इत्यवधातव्यम्—यदुक्तम्—

'रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथवा ।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥'

तदेतदाह वृत्तिकारः—'कान्तादिविषया[2] तु व्यक्ता शृङ्गारः ।'

तत्र देवविषया रतिर्यथा—

'कण्ठकोणविनिविष्टमीश[3] ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥'

मुनिविषया यथा—

'हरत्यघं[4] संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥

---

स्थितिस्तेन य आनन्दः शमाख्यस्तस्य प्रादुर्भावोऽभिव्यक्तिस्तत्स्वरूपत्वानुभवादित्यर्थः । **निरीहेति** । विषयव्यासङ्गशून्यतेत्यर्थः ।

---

१. 'शक्यो' क　२ 'कान्ताविषया' इति काव्यप्रकाशपुस्तकेषु केपुचित्पाठः. ३. "कण्ठेति । हे ईश, तव कण्ठस्य कोण एकदेशे निविष्टं संलग्नं कालकूटं विषमपि मे महामृतमुत्तममृतम् । अतिप्रियत्वात् । उपात्तं मूर्ध्ना धृतमप्यमृतं चन्द्रकलारूपं यदि भवद्वपुषो भेदेन वृत्तिरवस्थितिर्यस्य तथाभूतम् । भेदेनावभासमानमिति यावत् । तदा मे मह्यं न रोचते । अन्यस्य यथातथास्तु, मम तु न रुचिविषय इत्यर्थः । भवद्वपुषो भेदो यत्र वपुर्भिन्नं तद्वृत्तीति वा । तथा चानन्यगामित्वेन कालकूटस्य प्रियत्वम्, अतथाभूतत्वेन चामृतस्याप्रियत्वमिति भावः । उपात्त पीतमिति कश्चित् । वृत्तिपद व्याप्यपरम् । एवं च भवद्वपुर्भेदव्याप्यमित्यर्थः । ईशवपुःसंबद्धस्यान्यत्र सतोऽपि प्रीतिपात्रतौचित्यादिति केचित् । अत्र देवविषयो भावः ।" इत्युदाहरणचन्द्रिका. ४ 'हरतीति । माघे नारदं प्रति कृष्णोक्तिरियम् । भवदीयस्य भवत्सबन्धिनो यस्य कस्यापि, किं पुनर्भवतो दर्शनं कर्तृ शरीरभाजा शरीरधारिणां मादृशां कालत्रितये वर्तमानादिकालत्रयेऽपि योग्यतामर्थादिष्टलाभस्य तत्संपादकगुणवत्त्वरूपां व्यनक्ति । सूचयतीत्यर्थः । कथमित्यत आह—हरती-

एवमप्राप्तपरिपोषा पुत्रादिविषया रतिः स्थाय्यन्तरं चापुष्टमुदाहार्यम्।

व्यभिचारी प्राधान्येन वर्णितो यथा—

'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥'

अत्र विधिं प्रत्यसूया प्राधान्येन प्रतीयते।

**तदाभासा अनौचित्यप्रवर्तिताः।**

अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः। तच्चैकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां (वा) द्रष्टव्यम्। एकविषयरतिरेव नेति तु प्रलापः। 'बन्दीकृत्य नृपद्विषाम्' इत्यादावुदाहरिष्यमाणत्वात्

---

**एवमिति।** तत्र 'हरस्तु किंचित्परिवृत्तधैर्य—' इति कुमारसंभवे तृतीयसर्गेऽपुष्टायां रतावुदाहार्यम्। पुत्रविषयायां वृत्तौ क्वचित्पठितं 'एह्येहि वत्स—' इति पद्यम्। हासादयश्चापुष्टा रसतरङ्गिण्यां द्रष्टव्याः।

**प्राधान्येनेति।** शठत्वोपन्यासरूपविचित्रानुभावव्यङ्ग्यताकृतचारुत्वेन मुखतः प्राधान्यम्। पानकरसे मरिचादेरुत्कटस्येव। पार्यन्तिकं तु रसप्राधान्यमिति बोध्यम्। अतएव वक्ष्यति—'मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।' इति। श्रृङ्गारप्रकर्षविरोधिस्वरूपमाह—**तच्चेति।** प्रकर्षविरोधित्वं चेत्यर्थः। एकाश्रयत्वे नायकनायिकान्यतरमात्राश्रयत्वे रतेरित्यर्थः। तथा तिर्यगादिविषयत्वे। आदिना

---

त्यादि। यतः संप्रति वर्तमानकालेऽघं पापं हरति नाशयति। एष्यत आगमिष्यतः शुभस्य श्रेय साधनस्य हेतुः संपादकम्। दर्शनस्यादृष्टद्वारा श्रेयःसाधनत्वात्। अदृष्टस्य च दृष्टसामग्रीसंपादकत्वेन हेतुत्वात्। पूर्वमाचरितैः पूर्वजन्मार्जितैः शुभैः सुकृतैः कृतम्। तथाच वर्तमानकाले पापनाशरूपा योग्यताप्रतिबन्धकत्वभावत्वेन श्रेयःसाधनत्वात्। भाविनि तु श्रेयःसाधकादृष्टसंपत्तिः। भूते तु तथाविधं सुकृतमिति। सूचनं चाद्ययोर्जनकतया अन्त्यायास्तु जन्यतयेति बोध्यम्। अत्र मुनिविषयो भावः।" इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'जाने इति। वियुक्तस्य सखायं प्रतीयमुक्तिः। हे भ्रातः, अद्य मया स्वप्ने प्रियतमा कोपेन पराङ्मुखी सती पाणिना मा मा संस्पृशेत्युक्त्वा रुदती रोदनं कुर्वती गन्तुं प्रवृत्ता दृष्टा। ततस्तादृग्दर्शनोत्तरमहं यावत्प्रियां परिरभ्य चाटुकाना प्रियवाक्यानां शतैर्नाश्वासयामि नानुनयामि तावज्जाने निश्चिनोमि शठेन वञ्चकेन विधिना दैवेन निद्रया दरिद्रो रहितो निद्रादरिद्रः अतथाभूतोऽपि तथा कृतः। अत एव विधिर्दुर्घटविधायकः। जाने शठेनेत्यनेन निर्णीतापकारित्वेनासूयाप्रकर्षः। नो यावदिति लोकोक्तिः। नोऽस्माकं प्रियेति वा संबन्धः। अत्र शठपदव्यञ्जितोऽसूयाख्यव्यभिचारिभावः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

रसाभासो यथा—

'[1]स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
　विलेभे कः प्राणान्रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
　त्तपःश्री कस्यैषा मदननगरि ध्यायसि तु यम् ॥'

अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते। नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम् । एकत्रापि तादृशव्यापारसंभवात् । यत्तु—'अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति । एकविषयत्वाभिप्राये त्वेकमेव कर्मपदमुपाददीत' इति । तत्तुच्छम् । स्तुमो विलेभे इत्यादीनां भिन्नवाक्यस्थानामेकविभक्त्यन्तपदोपस्थापितेनानन्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिपदैरुपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात् । अत्र ब्रूमः—तुशब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते। एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते। बहुपदमनेकपरं वा ।

---

अगम्याविषयत्वसंग्रहः । एवं बहुनायकविषयत्वेन । व्यभिचारिणां तु रसाङ्गतायाआभासत्वम् । वाशब्दः कुत्रचित्प्रमादलिखित एव । एकविषया एकमात्राश्रया । वन्दीकृत्येति पञ्चमोल्लास उदाहरणं रसाभासस्य भावाङ्गतायामुदाहरिष्यते । तत्र सैनिकगतैव रतिर्न तु वन्दीषु । **तुशब्देनेति** । यं तु ध्यायसीति ध्यानकर्मीभूतस्येतरेभ्यो व्यवच्छेदप्रतीतेर्भिन्नत्वमगवम्यते अत. सर्वेषामपि स्वरसतो भेदप्रतीतेर्नापह्नवो युज्यते । आभासत्वस्यार्जनादित्यर्थ. । बहुपदं बहुव्यापारोपादानमिति वृत्तिगतम् । **एवमिति**। तत्र तिर्यगादिविषयतायाम्—'मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुर. सारसम् । चक्राह्वेण वियोगिना बिसलता नास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥' इत्युदाहार्यम् । एवं गुर्वाद्यालम्बनतया हासस्य, वीतरागाद्याश्रयतया

---

१. 'स्तुम इति । वारयोषितं प्रति कस्यचित्कामुकस्य चाटूक्तिरियम् । हे वामाक्षि, वामं सुन्दरम्, जितेन्द्रियाणामपि वशीकरणाद्विरुद्धं चाक्षि यस्यास्तथाविधे; त क पुरुष स्तुमो यं विना क्षणमपि न रमसे क्रीडसि । हृष्यसीति यावत् । तथा य मृगयसेऽन्विष्यसि कोऽसौ रण. सङ्ग्राम एव मखो यज्ञ. । त्वत्कर्तृकान्वेषणरूपस्वर्गफलकत्वात् । तस्य मुखे पुरतः प्राणान्विलेभे ददौ । अर्थाज्जन्मान्तरे । हे शशिमुखि चन्द्राननने, य बलादालिङ्गसि स क सुलग्ने शोभनग्रहाधिष्ठिते लग्ने जात उत्पन्न. । हे मदनस्य नगरि राजधानि । अत्रैव मदनस्य वैभवात् । यं तु ध्यायसि तस्य कस्यैषा त्वत्कर्तृकध्यानरूपा तपःश्रीः । तप सपत्तिरित्यर्थः । अत्र शशिमुखीत्यनेन बलादालिङ्गनस्य युक्तता व्यज्यते । शशिनाप्यङ्गीकृतशशापरित्यागात् । नगरीत्वारोपेणानेकविषयकमदनाश्रयत्वसूचनम् । तस्या अनेकाश्रयस्वभावत्वात् । अत्र रतेरनेकविषयत्वाद्रसाभासः ।' इत्युदाहरणचन्द्रिका.

भावाभासो यथा—

'राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गा।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥'[1]

अत्र[2] रतेर्व्यभिचारिभूता चिन्ता अनौचित्यप्रवर्तिता। नायिकाया अननुरक्ततया रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणोऽपि तथात्वात्। एवमन्येऽप्युदाहार्याः।

भावशान्त्यादिरक्रम इत्यत्र भावशान्त्यादिपदप्रतिपाद्यमाह—

**भावस्य शान्तिरुदयः संधिः शबलता तथा॥ १३॥**

संधिरेककालमेव तुल्यकक्षयोरास्वादः। शबलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दिनाम्। न च भावस्य शबलतायाः शान्त्युदयाभ्यामविशेषः। शान्तेरुदयस्य वा एकैकस्यास्वादे तद्भेदद्वयोपगमात्।

तत्र भावस्य शान्तिर्यथा—

'तस्याः[4] सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाययते।

---

करुणस्य, पित्राद्यालम्बनतया रौद्रवीरयोः, वीरगतत्वेन भयानकस्य, यज्ञीयपशुवसाद्यालम्बनतया बीभत्सस्य, ऐन्द्रजालिकाद्यालम्बनतयाद्भुतस्य, चाण्डालादिगतत्वेन शान्तस्य चाभासत्वमूह्यम्।

---

१. "राकेति। सीतामुद्दिश्य रावणोक्तिरियम्। सा सीता राकायामखण्डचन्द्रायां पूर्णिमाया यः सुधाकरश्चन्द्रस्तद्वन्मुखं यस्यास्तथाविधा। एवं तरले चञ्चले आयते दीर्घे अक्षिणी यस्यास्तथाभूता। स्मेरमीषत्प्रकाशं यौवनम्। नवयौवनमिति यावत्। तेन तरङ्गितास्तरङ्गवदुत्तरोत्तरारम्भशीला विभ्रमा येषु तथाविधान्यङ्गानि यस्याः सा तथाभूतेति निदर्शनक्रमेण मुखादिगतप्रकर्षविभावनम्। तत्तस्मादुक्तसौन्दर्यातिशयेनानुपेक्ष्यत्वात्किं करोमि। तल्लाभायेति शेषः। तया सह मैत्री क्रियतां तत्राह—विदध इति। अत्रास्यां सीताया मैत्री कथं केनोपायेन विदधे करोमि। तदुपायोऽपि न प्रतिभातीत्यर्थः। ननु सैव त्वां स्वीकुर्यात्तत्राह—तदिति। तया स्वीकृतिर्ममायमिति बुद्धिविषयीकरणं तस्य व्यतिकरे संबन्धे उपायो हेतुः क इव। क संभाव्यत इत्यर्थः। 'विभ्रमास्या' इति पाठे तथाविधमास्यं यस्या इत्यर्थः। 'स्यात्' इति पाठे क उपायः स्यादित्यन्वयः। अत्र चिन्ताख्यव्यभिचारिभावस्याननुरक्तनायिकाविषयतया आभासत्वमिति भावाभासोदाहरणत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'विभ्रमास्या' ख-ग. ३. 'अत्र तु' ख. ४. 'तस्या इति। खण्डितायाः स्वनायिकायाः कोपतच्छान्तिवृत्तान्तं वयस्यं प्रति कथयतो धृष्टनायकस्येयमुक्तिः। तस्याः सपत्न्याः। असूयातिशयान्नामानिर्देशः। सान्द्रं घनं श्रीखण्डादिविलेपनं यत्र तथाभूतस्य स्तनतटस्य समीपे समस्थानस्य तत्पर्यन्तगामी अतएव प्रकृष्टो यः श्लेषः परीरम्भस्तेन या मुद्रा स्तनाकारं विलेपनमयं चिह्नं

इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥'

अत्र कोपस्य शान्तावेव चमत्कारविश्रामः ।

उदयो यथा—

'एकस्मिन्शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥'

अत्रौत्सुक्यस्योदयः ।

संधिर्यथा—

'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।

---

शान्तावेवेत्यनेन तद्गम्यहर्षादिव्यवच्छेदः ।

---

ऽनाङ्कित चिह्नितम् । तदीयत्वेन ज्ञापितमित्यर्थ' । वक्षश्चरणयोरानतेः प्रणामस्य यो 'व्यतिकरः सबन्धः पौनःपुन्यं वा तद्व्याजेन च्छलेन किं किमिति गोपाय्यते आच्छाद्यत इत्यर्थान्नायिकयोक्ते सति मया क्व तन्मुद्राङ्कनमित्युदार्योक्त्वा त्वन्मुद्राङ्कन संप्रमार्ष्टुं विलोपयितु सा सहसा अप्रसाद्यैव रभसेन त्वरया आश्लिष्टा आलिङ्गिता । तत्सुखवशादालिङ्गनानन्दपारवश्यात्तन्व्या तन्मुद्राङ्कितत्व विस्मृत चेत्यन्वयः । चकारेणालिङ्गनास्मृत्योरेककालता द्योत्यते । अत्र कोपाख्यस्य व्यभिचारिभावस्य शान्तिः ।' इत्युदाहरणचन्द्रिका.

१ 'अपि' ग २ एकस्मिन्निति । अमरुककवेरुक्ति । एकस्मिन्शयने शय्यायां विपक्षभूता रमणी सपत्नी तस्या नामग्रहे ग्रहणे अर्थान्नायकेन कृते सति सद्यस्तत्कालमेव कोपेन पराङ्मुखं यथा स्यात्तथा ग्लपितया खिन्नया मुग्धया स्वस्याधैर्यमजानन्त्या कयाचिच्चाटूनि प्रियभाषणानि कुर्वन्नपि प्रियतम आवेगात्कोपसंभ्रमादवधीरितोऽवज्ञातस्तूष्णीमालापरहित स्थितः प्रसादज्ञानायावहितो न तु निद्रित । तत्क्षण तूष्णीं स्थितिसमये सुप्त इव प्रार्थनापराङ्मुखो मा भूदित्यौत्सुक्येनामन्दमतिशयित वलिता वक्रीकृता ग्रीवा यत्र तद्यथा स्यात्तथा पुनर्वीक्षितो वीक्षणानन्तर वीक्षित । वारंवारमित्यर्थः । 'आवेशात्' इति पाठे कोपावेशादित्यर्थः । 'तत्क्षणात्' इति पाठे तूष्णींभावक्षणानन्तरमेवेत्यर्थः । ल्यब्लोपे पञ्चमी । तत्क्षण प्राप्येति तदर्थः । अत्रौत्सुक्यस्योदयः ।' इत्युदाहरणचन्द्रिका. ३ 'तत्क्षणात्' ख-ग. ४. 'उत्सिक्तस्येति । सीतामालिङ्गितस्तद्भावयतो वा रामस्य भार्गवागमे परामर्शोऽयम् । तपश्च पराक्रमश्च तयोर्निधेः स्थानभूतस्य । धर्मयुद्धोभयवीरस्येत्यर्थः । अत एवोत्सिक्तस्य ख्यातस्य दृप्तस्य वा । अर्थात्परशुरामस्याभ्यागमादागमनादेकत एकस्यां दिशि सतः परशुरामस्य सङ्गे या प्रियता प्रेम च, वीरस्य रभसो हर्षस्तस्योत्फाल उद्रेकः । वीरोचितकौतुकोद्रेक इत्यर्थः । स च एतौ द्वावपि मा कर्षत आकर्षयत. । अत्र चकारद्वयं द्वयोस्तुल्य-

वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥'

अत्र पूर्वार्धे संभ्रमात्मक आवेगः । उत्तरार्धे हर्षः । अनयोस्तुल्यमेवास्वादः ।

शबलता यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ॥'

अत्र क्वाकार्यमित्यादौ वितर्कः, भूयोऽपीत्यौत्सुक्यम्, दोषाणामिति मतिः, कोपेऽपीति स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेऽपीति दैन्यम्, चेतःस्वास्थ्यमिति धृतिः, कः खल्विति चिन्ता स्फुटं पूर्वपूर्वोपमर्देन प्रतीयमाना शबलताचमत्कारभूमिः ।

---

**पूर्वपूर्वेति** । पूर्वपूर्वेषां मतिशङ्काधृतिपर्यन्तानां शान्तिसंचारिणां सर्वेषामुपमर्देन

---

प्राधान्यसूचनाय । अन्यतोऽन्यस्या दिशि एषोऽनुभूयमानो भावनोपनीतो वा वैदेहीपरिरम्भश्च । विदेहो जनकः । स एव विगतदेहः कामस्तस्य पुत्री । विजये सहायत्वात् । तस्याः परिरम्भ आश्लेषश्च मा रुणद्धि । मुनिपार्श्वगमने प्रतिबध्नातीत्यर्थः । चकारः पूर्वोक्ताभ्यां तुल्यत्वस्य तुल्यकालत्वस्य च संधिरूपस्य सूचनाय । एकस्य परिरम्भस्य सत्सङ्गप्रेमोत्साहाभ्यां तुल्यत्वसंपादकं विशेषणमाह—मुहुरित्यादि । मुहुर्वारंवारं चैतन्यं ज्ञानमामीलयन्विषयान्तराद्व्यावर्तयन् हरिचन्दनं चन्दनभेदः इन्दुश्चन्द्रश्च तद्वच्छिशिरः शीतलश्चासौ स्निग्धः प्रेमसंवलितः । अतएव रुणद्धीति युक्तम् । स्निग्धेन युद्धे निवर्तनात् । 'स्पर्शः' इति पाठे तथाविधः स्पर्शो यत्रेत्यर्थः । अत एवानन्दी आनन्दजनकः । अत्र मुनावत्यादरणीयत्वज्ञानजन्यत्वरूपविशेषः पूर्वार्धगम्यः, हर्षस्तूत्तरार्धगम्य इति तयोस्तुल्यकालत्वात्संधिः । इत्युदाहरणचन्द्रिका. ५. 'कर्षति' ख.

१. 'स्पर्शो' ख. २. 'तुल्यकाल' ख. ३. 'क्वेति । शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः । अकार्यं ब्राह्मणकन्यायामासक्तिरूपं क्व, शशो लक्ष्म चिह्नं यस्य चन्द्रस्य कुलं च क्व । क्वद्वयेन सहानवस्थानप्रतिपादनेनात्यन्तानौचित्यं प्रकाश्यते । भूयोऽपीत्युक्तवितर्कोपमर्देनौत्सुक्यम् । अपिना असंभावनोत्कटता सूच्यते । नोऽस्माकं श्रुतं शास्त्रश्रवणं दोषाणां प्रमादावेशादीनां प्रशमायात्यन्तिकनाशायेति मत्यौत्सुक्यबाधः । अहो आश्चर्यम् । कोपेऽपि मुखं अर्थात्तस्याः कान्तं कमनीयमिति मतिबाधेन स्मरणम् । अपगतं कल्मषं दुश्चरितं येभ्यस्तादृशाः कृते महात्मभिराचरिते सुचरिते धीर्येषां ते तथाभूताः सत्पुरुषाः किं वक्ष्यन्तीति निन्दाशङ्कया पूर्वोपमर्दः । स्वप्नेऽप्यश्रुतादृष्टघटकेऽपि सा दुर्लभेत्यनेनाभिमताप्राप्तियुक्तदैन्येनाशङ्कातिरस्कारः । हे चेतः, स्वास्थ्यमुपैहि उपगच्छेत्यनेन धैर्यं पूर्वस्माद्बलवत् । कः खलु धन्यः, नाहमिव मन्दभाग्यो युवा तरुणोऽधरं धास्यति पास्यतीति चिन्ता सर्वोपमर्दिकेति शृङ्गारे विश्रान्तिरित्यवधेयम् । अत्र भावानां पूर्वपूर्वोपमर्देनावस्थितिरूपा शबलता ।' इत्युदाहरणचन्द्रिका.

ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः संभवत्येव तत्कथं नोक्त इति चेत्, न। भावोक्त्यैव तदुक्तेः। भावस्थितेर्भावाभिन्नत्वात्।

ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथं भावोदाहरणमेतत्, कथं वा भावध्वनित्वम्। रसाङ्गत्वेन तेषां गुणीभावादित्यत आह—

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।**

ते भावशान्त्यादयः। कदाचन यदा त एवाङ्गित्वेन विवक्ष्यन्ते। विवहनप्रवृत्तराजानुगम्यमानभृत्यवत्।

एवमसंलक्ष्यक्रमव्यङ्ग्यभेदं विचार्य संलक्ष्यक्रमव्यङ्ग्यप्रभेदानाह—

**अनुस्वनाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः॥ १४॥**
**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।**

घण्टायां हन्यमानायां मुख्यशब्दानन्तरं यथा क्षोदीयानपरोऽनुरणनरूपः शब्दः प्रतीयते तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्य स्थितिर्यत्र सः। शब्दश्चार्थश्चोभयं चेति द्वन्द्वः। तेन शब्दशक्तिमूलव्यङ्ग्यः, अर्थशक्तिमूलव्यङ्ग्यः, उभयशक्तिमूलव्यङ्ग्यश्चेति त्रिधेत्यर्थः। शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव शब्देन तदर्थप्रतीतिः, नतु पर्यायान्तरेणापि। एतद्वैपरीत्यं चार्थशक्तिमूलत्वम्। न त्वभिधया तत्प्रतीतिरिति। एतेन "अभिधाया यत्र न नियमनं तत्रैष भेदो द्रष्टव्यः। तन्नियमने तु नाभिधामूलत्वम्, किंतु व्यञ्जनामूलत्वमेव 'भद्रात्मनः–' इतिवद्भवेत्" इति यत्केनचिदुक्तं तन्नादेयम्। 'भद्रात्मनः–' इत्यादेरप्येतद्भेदत्वेनेष्टत्वात्। अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः। किंच प्रथमोदाहरणे प्राकरणिकाप्राकरणिकयोरिति व्याख्यानेन, द्वितीये भवानित्यनेन, तृतीयेऽसीत्यनेन, प्रकरणस्याभिधानियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुध्येत। तस्माद्यथोक्तमेव न्याय्यम्।

---

प्रतीयमाना चिन्ता शवलतायाश्चमत्कारस्य भूमि। विश्रान्तिस्थानमित्यर्थ.। एवंविधचिन्तया च शृङ्गारप्रकर्ष शत्रुविजयेन राज्यस्येव भवति।

**त एवाङ्गित्वेनेति**। अत्रेदं बोध्यम्। अभिव्यक्तिस्थायिभावोद्रेके रसध्वनिव्यपदेश। स्वानुभवाभिव्यक्तव्यभिचारिभावोद्रेके च भावादिध्वनिव्यपदेशः। एतदन्यव्यङ्ग्यविभावानुभावोद्रेके वस्तुध्वनिरित्यलंकारध्वनिरिति वा व्यपदेश इति। **तद्वदिति**। अनुरणनसदृशी संलक्ष्यक्रमा व्यङ्ग्यस्थितिर्यत्र स इति समास। क्रमस्त्वर्थोद्व्यञ्जकेन सहेति ज्ञेयम्। केचित्तु—'उल्लास्य' त्यादौ यत्र प्रकरणादिकमभिधानियामक नास्ति तत्राभिधयैवेन्द्रादिबोधे सति तेन सहोपमालंकारादेर्ध्वनि शब्दशक्तिरूपाभिधामूल। यत्र तु तन्नियमनं तत्र तन्मूलत्वं न सभवति। 'यथा भद्रात्मन इत्यादौ' इति वदन्ति तद्दूषयति—**एतेनेति**। शब्दशक्तीत्यस्योक्तव्याख्यानेनेत्यर्थः। उल्लास्येत्यादावप्यभिधानियामकमस्त्येवेति तदुदाहरणासंगतिरित्याह—**किंचेति**।

तेषु मध्ये—

**अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते॥ १५॥**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा।**

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा। अलंकृतस्यानलंकृतवस्तुमात्रस्य व प्राधान्येन प्रकाशादित्यर्थः। तत्राद्यो यथा—

'उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः॥'

कालो वैरिसंहर्ता यः करवालः स एव महदम्बु धाराजलं वहतीति महाम्बुवाहः। यद्वा मह उत्सवः स एवाम्बु तद्वाहः। गर्जितं सिंहनादः। अत्र करवालमुल्लास्य एतावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्यासंबद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कवेस्तात्पर्यमित्युपमालंकारो व्यङ्ग्यः। स च शब्दशक्ति-

---

भवच्छब्दस्य संबोध्यवाचित्वादप्रकृतस्य च संबोध्यत्वायोगात्प्रकृतत्वम्। एवमसीत्यपि युष्मद्योगापेक्षमिति प्रकृतत्वगमकमित्यर्थः।

प्रधानत्वेनेत्यस्यानुभासत इत्यनेनान्वयं दर्शयति—**प्राधान्येनेति**। धाराजलवाहकत्वोक्तौ धाराजलैरित्यस्य वैयर्थ्यमाशङ्क्याह—**यद्वेति**। उत्सवो वैरिजयरूपः। स एवाम्बु तद्वन्निरन्तरं प्रवृत्तिशील. तस्य धारक इत्यर्थः। **उपमालंकार इति**। प्राधान्येनेति शेष·। नच समासोक्तिवदुपमाया· प्रकृतोपस्कारकतया अपराङ्गत्वरूपगुणीभूतव्यङ्ग्यत्वापत्ति। तत्र व्यङ्ग्यस्याप्रस्तुतवृत्तान्तस्य प्राधान्येन प्रतीतौ चम-

---

१. 'अत्र वाच्यपक्षे येन प्रकृतेन देवेन नृपेण जरठ कठोरमूर्जित वलवद्गर्जित सिंहयस्य तथाविधेन कालो वैरिसंहर्ता यः करवाल· खड्गस्तत्र यन्महदम्बु धाराजलं प्रवाहः प्रसरणमुल्लास्य तीक्ष्णीकृत्य धाराजलैः खड्गकान्त्या। खड्गरत्नादिकान्तौ [illegible]योगात्। रिपूणां शत्रूणा त्रिजगति त्रिभुवने ज्वलितो विख्यात· सकल एव [illegible] रणे निर्वापितः। विलोपित इत्यर्थः। महदम्बु धाराजलम्, मह [illegible]करवालः कृष्णायसखड्गश्चासौ स चेति कर्मधारयः। [illegible] तु येन देवेन मेघाधिपतिनेन्द्रेण कालकर [illegible] महाम्बुवाह मेघमुल्लास्य प्रकाश्य रणे तेजो [illegible] [त्रि]भुवने रिपूणामर्थाज्जलशत्रूणा तेजसा सकलः [illegible] [ता]दृशेन देवेन। जरठोर्जितगर्जितेन। तत्प्रयो[illegible] [अ]र्थकतृतीयाङ्गीकारेण गर्जितेनोपलक्षितं मेघमुल्ला[illegible] [ध्व]नेरुदाहरणम्। एवमग्रिमोदाहरणत्रयमपि।'
क

मूलः[1] । पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ[2] तदप्रतीतेः । एवमग्रेऽप्यूह्यम् । एवमलंकारान्तराण्यपि । यथा—

'तिग्मरुचिरप्रतापो[3] विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥'

अत्र तिग्मरुचिः, अप्रतापः, एवं क्रमेणैकैकपदस्य द्विपदत्वे विरोधाभासः ।

पदाभेदेऽपि विरोधाभासो यथा—

'अमितः[4] समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ॥'

ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव नेत्युच्यते तत्कियती सीमा । अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वं तदभावे व्यङ्ग्यत्वमिति ।

'निरुपादानसंभारमभित्तावेव[5] तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'

---

त्कत्वभावेन गुणीभावेऽप्यत्रोपमायाः प्राधान्यसंभवेन गुणत्वानङ्गीकारात् । एवमप्येकपदोपस्थितयोरभेदाध्यवसायाद्रूपकध्वनिरेव युक्त इति चेत्, न । तथाविधाभेदग्रहस्यापि चमत्कारातिशयानाधायकत्वात् । प्रधानीभूतेतराङ्गतया हि क्वचित्तदङ्गीकारः । प्रसिद्धसादृश्यमूलकतदङ्गीकारे तु प्रथमोपस्थितत्वादुपमाया एव कल्पनमुचितमिति संक्षेपः ।

---

१. 'मूलो व्यङ्ग्यः' ग. २. 'तदुपस्थितौ' ख. ३ 'तिग्मेति । हे विभो प्रभो, भवान्विभाति शोभत इत्यन्वयः । कीदृशः । तिग्मस्तीक्ष्णश्चासौ रुचिरो मनोज्ञः शत्रुमित्रपक्षयोः प्रतापो यस्य सः । विधुराणां शत्रूणां निशेव निशा मरणं करोतीति । तथा मधुरा मनोज्ञा लीला चेष्टा यस्य सः । मतिः शास्त्रतत्त्वज्ञानं मानश्चित्तसमुन्नतिस्तयोस्तत्त्वेन सारेण वृत्तिर्वर्तनं यस्य सः । प्रतिपदं पक्षाणां सहायानामग्रणीरग्रेसरः । अत्र तिग्मरुचिः सूर्योऽप्रतापोऽनुष्णः । विधुश्चन्द्रो न निशाकृद्रात्रिकर्ता । मधुर्वसन्तोऽलीलः क्रीडाशून्यः । मतिमान्प्रशस्तबुद्धिरतत्त्वेऽवस्तुभूते वृत्तिर्व्यवसायो यस्य स तादृशः । प्रतिपत्तिथिरपक्षाग्रणीः पक्षादिभूता नेति विरोधाभासो व्यङ्ग्यः । द्वितीयार्थस्याप्रकृतत्वात् । इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'अमित इति । हर्षं शत्रुमित्रयोर्द्यति खण्डयति ददाति' चेति तथाभूत हे प्रभो, त्वं समितः सङ्ग्रामात्प्राप्तैरुत्कर्षैरमितोऽपरिच्छिन्नः । असतां खलानामहितो दण्डकृत् । अतएव साधुभिरुत्कृष्टैर्यशोभिः सहितो युक्तोऽसीत्यन्वयः । साध्विति क्रियाविशेषणं वा । यद्वा अमित इति पञ्चम्यन्तं सङ्ग्रामविशेषणम् । उत्कर्षैर्हर्षदेति चान्वयः । अत्र मित मान तद्रहितस्तत्सहितश्च । तथा हितशून्यो, हितसहितश्चेति विरोधो व्यङ्ग्यः । अप्रकृतत्वादिति ।' इत्युदाहरणचन्द्रिका. ५. 'निरुपादानेति । तस्मै शूलिने महादेवाय नम इत्यन्वयः । कीदृशाय । निर्गत उपादानसंभार उपकरणसंपत्तिर्यत्र तद्यथा स्यात्तथा । अभित्तावनाधारे । शून्य इति यावत् । चित्रं नानाकारं जगत्तन्वते विस्तारयते । यद्यप्युपादानसंभारं विना न सृष्टिस-

चित्रं नानाकारमालेख्यं च। कला चन्द्रस्य षोडशो भागः कौशलं च। अत्रोपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्यः शूलिनो व्यतिरेको व्यङ्ग्यः। तस्य चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता।

ननूदाहृतेषूपमादीनां प्राधान्यम्, न वा। आद्ये कुतस्तेषामलंकारत्वम्। अन्यानलंकरणात्। द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वम्। व्यङ्ग्यस्याप्राधान्यादिति चेत्, न। पूर्वमयमलंकार आसीदित्येतावता अलंकारव्यपदेशात्। यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः। नन्वेवं व्यपदेशसमर्थनेऽप्यलंकारध्वनित्वं न समर्थितमिति चेत्, न। अलंकारपदेन तद्योग्यताया विवक्षितत्वात्। न चैवं रसादिध्वनावप्यलंकारध्वनित्वप्रसङ्गः। संलक्ष्यक्रमस्यैव तादृशस्य तथाभिप्रेतत्वात्। वस्तुतस्तु प्राधान्याप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव, नतु रसापेक्षयापि। तदपेक्षया सर्वत्र गुणीभावात्। तथा चोपमादीनां रसाङ्गतयालंकारत्वं वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः।

वस्तुमात्रं यथा—

'पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।

---

ननु द्वितीयार्थस्य प्रकृतत्वेन विरोधस्य व्यङ्ग्यत्वे सर्वत्रैव तदापत्तिरिति न क्वापि तस्य वाच्यता स्यादित्याशयेन शङ्कते—**नन्विति**। सीमा मर्यादा। कियत्युक्ते वाच्यता कियति चोक्ते व्यङ्ग्यतेति व्यवस्थेत्यर्थः। **अपीति**। द्योतकत्वे स्फुटाप्रतीतेर्वाच्यायमानतया वाच्यत्वमेव व्यवह्रियते, अन्यथा तु व्यङ्ग्यतेत्यर्थः। पूर्वं वाच्यतादशायाम्। अलंकारपदेनालंकारध्वनिशब्दगतेन। **योग्यताया इति**। अलंकारजातीयरूपाया इत्यर्थः। **न चैवमिति**। तत्रापि रसवदलंकारजातीयत्वसत्त्वादिति भावः। तादृशस्य कदाचिदलंकारस्य। **तथेति**। अलंकारध्वनिव्यपदेश्यतयेत्यर्थः।

**पन्थिअ ण एत्थेति**। 'पथिक नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे।

---

भवस्तथाप्युपकरणसंपत्तेरपि भगवदिच्छायत्तत्वेन तत्पारवश्याभावे तन्निरपेक्षत्वमुपचरितं बोध्यम्। एवं कलया चन्द्रषोडशांशरूपया श्लाघ्यायेति प्रकृतोऽर्थः। व्यञ्जनया तु चित्रकलाशब्दाभ्यामालेख्यतत्प्रावीण्योपस्थित्या मषीतूलिकाद्युपादानैर्भित्तावालेख्यकारादिभ्यः। कलावद्भ्य उत्कर्षः प्रतीयते।' इत्युदाहरणचन्द्रिका.

१. 'पथिअ' क-ग. "स्वयंदूती 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितिमनुसृत्य पथिकमाह—पन्थिअ इति। हे पथिक, प्रस्तराणा पाषाणानां स्थलेऽत्रास्मिन्ग्रामे मनागल्पमपि स्रस्तर कटाद्यास्तरणं नास्तीत्यन्वयः। पाषाणबाहुल्येन तृणदुर्लभतासूचनम्। तत्तसाच्छयनसामग्र्यभावात्कारणादुन्नतं पयोधर मेघं प्रेक्ष्य तत्प्रतिबन्धाद्यदि वससि तदा वसेत्यापाततोऽभिप्रायः। व्यङ्ग्यार्थस्तु—प्रस्तराणा मूर्खाणां स्थानेऽत्र ग्रामे सत्थर कामशास्त्रं मनागपि नास्ति। ततश्चेङ्गिताभिज्ञविरहादुन्नतं स्तनं प्रेक्ष्य मेघ चोद्दीपक यद्युपभोगक्षमोऽसि तदा आस्स्वेति। प्रस्तरस्थले इत्यनेन शय्यापेक्षापि

उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥'

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते । तच्च पओहरेति शब्दशक्तिमूलमिति ।

तथा—

'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यस्मै प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥'

अत्र प्रथमार्धे शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते, नतु विरोधालंकारः । शनिरशनिरित्यनयोः सामानाधिकरण्याभावात् । विरोधस्य च तत्रैव विश्रान्तेः । द्वितीयार्धं तु नोदाहरणम् । तत्र चशब्दस्याप्यर्थत्वे विरोधस्य वाच्यत्वात् । समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति ।

अर्थशक्तिमूलानुरणनरूपं व्यङ्ग्यं विभजते—

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ १६ ॥**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।**
**वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ १७ ॥**
**वस्त्वलंकारमथवा तेनासौ द्वादशात्मकः ।**

---

उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥' इति । **विरुद्धावपीति** । नञो विरोध्यर्थकतया अशनिरित्यनेन शनिविरुद्धार्थबोधादिति भावः । **सामानाधिकरण्येति** । परस्परानन्वयेनैकधर्मिबोधकत्वाभावात् । यथा शनिरिति वाच्य इत्यर्थः । **अर्थशक्त्युद्भव इति** । अर्थशक्त्युद्भवोऽप्यर्थाद्ध्वनिर्द्वादशात्मकः । द्वादशभेद इत्यन्वयः । कथम् । यद्येन हेतुना व्यञ्जकोऽर्थः स्वतःसंभवी कवेस्तेनोम्भितस्य निबद्धस्य वा प्रौढोक्तिमात्रात्सिद्धो वस्तुरूपोऽलंकाररूपो वेति षड्भेदः । असौ

---

नास्तीति ध्वन्यते । एतच्छब्दशक्तिमूलवस्तुध्वनेरुदाहरणम् । एवमनन्तरमपि । अत्र सर्वत्र शब्दशक्तिमूलत्वं परिवृत्त्यसहनानार्थशब्दप्रयोगादवसेयम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'पेक्खिअ' क. २. 'शनिरिति । हे नरेन्द्र, यस्मै त्वं कुप्यसि तं शनिर्ग्रहोऽशनिर्वज्रं चोच्चैरतिशयेन निहन्ति । यत्र पुनः प्रसीदसि । पुनःशब्दस्त्वर्थे । यत्पुरुषविषये त्वित्यर्थः । स पुरुष उदारो दाता महान्वा अनुगता दारा यस्य प्रवासाद्यभावात् स तथाभूतश्च भातीत्यर्थः । अत्र पूर्वार्धेऽशनिपदाद्विरुद्धार्थकनञ्समभिव्याहारेणाप्रकृतस्य शनिविरुद्धार्थस्यावगतौ विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तुध्वनिः । न तूत्तरार्धेऽपि । तत्रैककार्यकरणाप्रतीतेः । किं तूदारः अनुदारस्तद्भिन्नः इत्येवं विरोधालंकारध्वनिरेव । चकारस्य समुच्चयार्थत्वात् । अप्यर्थत्वे तु विरोधस्य वाच्यतैवेति । न च पूर्वार्धेऽपि विरोधस्य व्यङ्ग्यत्ववाच्यत्वयोरन्यतराशङ्का । एकधर्मिगतत्वेन विरुद्धनिर्देश एव तत्स्वीकारात् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

स्वतःसंभवी न केवलं भणितिनिष्पन्नशरीरः। अपि तु बहिरप्यौचित्येन संभाव्यमानः। प्रौढोक्तिमात्रात्सिद्धः बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा निर्मितः। अयमर्थः—व्यञ्जकोऽर्थस्त्रिधा। स्वतःसंभवी, कविप्रौढोक्तिमात्रसिद्धः, कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्च। स त्रिविधोऽपि वस्तुमात्रमलंकृतिर्वेति षड्विधो व्यञ्जकः। षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वालंकृतिर्वेति द्वादश भेदा भवन्ति।

तत्र स्वतःसंभविन्यर्थभेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—

'[1]अलससिरोमणिधुत्ताणमग्गिमो पुत्ति धणसमिद्धिमओ।
इअ [2]भणिएण णअङ्गी पप्फुल्लविलोअणाजाआ॥'

अलसत्वेनान्यत्र गन्तुमनिच्छुः धूर्तत्वेन रतेष्वनादृतगुणः। धनसमृद्धिमत्तया कृपण इति निर्धार्य यत्प्रफुल्लनयनत्वं वस्तु तेनान्यासामनाकर्षणीय इति ममैवोपभोग्य इति वस्तु व्यज्यते।

वस्तुनालंकारस्य यथा—

'[3]धन्यासि या कथयति प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।

---

वस्तुमात्रमथवालंकारं व्यनक्ति। तेन हेतुना भणित्या प्रौढोक्त्या निष्पन्नं कल्पितं शरीरं स्वरूपं यस्य स इत्यर्थः। औचित्येन योग्यतया। **अलसेति**। 'अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः। इति भणितेन नताङ्गी प्रोत्फुल्लविलो-

---

१. 'अलससिरोमणी' ग. 'पतिंवरां प्रति धात्र्याः प्ररोचनोक्तिः पूर्वार्धम्। उत्तरार्धं तु कवेः। प्रकरणाच्चायमित्यध्याहारः। हे पुत्रि, अयं वरोऽलसाना निरुद्योगाना शिरोमणिः श्रेष्ठः धूर्तानामग्रिमोऽग्रगण्यः धनसमृद्धिमयो धनसमृद्धिप्रचुरः इति भणितेन भाषणेन नताङ्गी काचित्कुमारी प्रफुल्ले हर्षविकसिते विलोचने यस्यास्तादृशी जातेत्यन्वयः। अत्रालसत्वेन नायिकान्तरागमनं धूर्तत्वेन रतेष्वनादृतगुणत्वं धनिकत्वेन कृपणतया अदातृत्वं च सूचितं सदन्यासामनाकर्षणीयो ममैवोपभोग्य इति नायिकायां व्यनक्ति। तादृशं च कुमार्या ज्ञान प्रफुल्लनयनत्वेन वस्तुना स्वहेतुहर्षव्यञ्जनद्वारेण तत्कारणीभूतं सामाजिकेषु व्यज्यते।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'जम्पिएण' ख. ३. 'धन्यासीति। रसकथापरासु सखीषु मध्ये रतिकालीनं स्वप्रियालापं कथितवती काचित्प्रहसन्त्याः कस्याश्चिदुक्तिरियम्। हे सखि, या त्वं रतान्तरेषु रतमध्येषु प्रियेण संगमेऽपि सुरतयोगेऽपि विस्रब्धं विश्वासयुक्तम्। निःशङ्कमिति यावत्। चाटुकानां प्रियवाक्यानां शतानि कथयसि सा त्वं धन्यासीति सोल्लुण्ठम्। हे सख्यः, प्रियेण नीवीं वस्त्रग्रन्थिं प्रति करे प्रणिहिते नीव्यां करोऽर्पयितव्य इति प्रणिधानस्य संकल्पस्य विषयीकृते सति न त्वर्पिते। अवाचकत्वापत्तेः। यदि किंचिदपि स्मरामि तदा शपामि शपथं करोमीत्यन्वयः। यद्यपि 'शपथे शपे.' इत्यनुशासनादात्मनेपदमुचित तथाप्यङ्गस्पर्शपूर्वकमिथ्यात्वनिरासस्य मुख्यशपथस्यात्राविवक्षितत्वान्न दोषः। प्रियसगमेष्वालापादिषु। तत्रापि

नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥'

अत्र वाच्येन वस्तुना त्वमधन्या, अहं तु धन्येति स्वस्य व्यतिरेकालंकारो व्यज्यते । ननु व्यञ्जको धन्यासीति त्वत्पदार्थस्य व्यतिरेकालंकार एव । तत्कथं वस्तुव्यञ्जकोदाहरणमेतदिति चेत्, न । संबोध्यव्यतिरेकस्तावन्न वाच्यः । आत्मनि कथनाभावस्याशाब्दत्वात् । व्यङ्ग्यस्तु यद्यपि भवत्येव, तथापि तमनपेक्ष्यैव वाच्येन वस्तुमात्रेण यथोक्तव्यतिरेकव्यञ्जनादिति ।

अलंकारेण वस्तुनो यथा—

'दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।

---

चना जाता ॥' प्रियकरस्पर्शमात्रेण विगलितवेद्यान्तरतया स्मरणाभावेन चाह—**धन्येतीति** । व्यतिरेकप्रतीतिसिद्धौ न व्यङ्ग्यस्य त्वत्पदार्थव्यतिरेकस्य प्रतीक्षेत्यर्थः । **आत्मनीति** । अहं न कथयामि त्वं तु कथयसीति व्यतिरेकशरीरम् । तत्राहं न कथयामीत्यंशस्य वाच्यत्वाद्व्यङ्ग्य एव संबोध्याया व्यतिरेक इत्यर्थः । अस्तु तस्यैव व्यञ्जकत्वमत आह—**तमनपेक्ष्यैवेति** । कथनेन हि विषयान्तरव्या-

---

रतमध्येषु न पुनरादावन्ते वेति वार्थः । यदि किंचिदपि स्मरामीति वाक्यमध्ये सख्यः शपामीत्यस्य प्रवेशाद्गर्भितत्वं प्रकृते गुण एव । विवक्षितार्थस्य सत्यप्रत्यायनात् । सोल्लुण्ठोक्तावेकस्या एव सौभाग्यगर्वितायाः संबोध्यत्वाद्धन्यासीत्येकवचनम् । स्वोत्कर्षसूचने तु बह्वीनां तथात्वात्सख्य इति बहुवचनमिति नासंगतिः । अत्र च रतकालेऽपि विषयान्तरवेदनेन रागस्य कृत्रिमतामावेदयता चाटुकथनेन त्वमधन्येति ध्वन्यते । अन्तरापिशब्दाभ्यामत्यन्तानौचित्यप्रकाशनद्वारा तदतिशयः । एवंच बहुवचनस्य प्रतिरतिसमयं तथाभावसूचनद्वारा तद्व्यञ्जकत्वम् । एवं शतानीति प्रातिपदिकवचनयोश्चेति । तथोत्तरार्धे स्मरणाभावेन प्रियकरस्पर्शमात्रेण संमोहानन्दमन्थरतया अकृत्रिमरागातिशयं सूचयताहं धन्येति व्यज्यते । इत्थं चोभयसंवलनेन व्यतिरेकालंकारलाभ इति बोध्यम् । अतः स्वतःसंभविना वस्तुनालंकारध्वनिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'दर्पान्धेति । यस्य राज्ञः करे कृपाणः खड्गो युधि युद्धे वीरैः कालीकटाक्ष इव व्यलोकि दृष्टः । कीदृशः । दर्पेण मदेनान्धस्य गन्धगजस्य 'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं विद्यान्नृपतेर्विजयावहम् ॥' इत्युक्तलक्षणस्य कुम्भ एव विशालतया तन्मध्यभाग एव कपाट तस्य कूटेऽग्रभागे या संक्रान्तिः प्रवेशस्तस्य निघ्नमधीनं तेन वा निघ्नं दृढसंबद्धं घनं निबिडं यच्छोणितं तेन शोणा रक्ता शोचिर्दीप्तिर्यस्य तादृशः' । कटाक्षः कीदृशः । कोपेन कषाया लोहिता कान्तिर्यस्य तथाभूतः । अत्र साम्यावगमानन्तरमुपमानगतं सकलेत्यादि वस्तु व्यक्तीभवति । तेन स्वतः संभविनोपमालंकारेण वस्तुध्वनिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'रोचिः' ख.

वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥'

अत्र कालीकटाक्ष इव कृपाणो व्यलोकीत्युपमा। न पुनरुत्प्रेक्षा। संभावनाविरहात्। तया च सकलरिपुक्षयः क्षणात्करिष्यत इति वस्तु प्रकाश्यते।

अलंकारेणालंकृतेर्यथा—

'गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥'

अत्र निजाधरदशनवैरिवधूजनौष्ठदशनव्यथामोचनयोः कारणकार्ययोः पौर्वापर्यभावलक्षणया अतिशयोक्त्या अलंकारेण दशनसमकालमेव शत्रवो व्यापादिता इति 'समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रिया' इत्युक्तलक्षणः समुच्चयालंकारो द्योत्यते। एष एव च तुल्यकालं योगितेति व्युत्पत्त्या तुल्ययोगितेति कैश्चिदुच्यते। मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति बुद्धेरुत्प्रेक्षणादुत्प्रेक्षाप्यत्र व्यङ्ग्या। एषु व्यञ्जकोऽर्थः स्वतःसंभवी।

---

सङ्गसूचनेन रागानुत्कटत्वद्योतनादधन्यत्वं व्यज्यते। **संभावनाविरहादिति** संभावनाया अविवक्षितत्वादित्यर्थः। तद्विवक्षाया हि—'अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्।' इतिवदुत्प्रेक्षा विधेयतया प्रतिपाद्या स्यात् नतु विलोकनकर्मविशेषणतया सिद्धवदित्यर्थः। व्यलोकीत्यस्यैवोत्प्रेक्षार्थत्वे त्विवशब्दानर्थक्यमिति भावः। यत्तु संभावनायामनुगतधर्मस्यैव प्रयोजकत्वम्, न बिम्बप्रतिबिम्बभावापन्नस्येति, तदयुक्तम्। 'आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्। सुजातपुष्पस्तवकावनम्रा संचारिणी पल्लविनी लतेव ॥' इत्यादौ बिम्बप्रतिबिम्बभावापन्नस्याप्युत्प्रेक्षोपपादकतया चित्रमीमांसायामुदाहरणात्। नह्यत्रोपमा। संचारिणीति विशेषणस्य वैयर्थ्यापत्तेरित्यूह्यम्। **अतिशयोक्त्येति।** वृत्तौ च विरोधगर्भत्वादियमेव विरोधपदेनोक्तेत्याशयः। प्रकृतानामप्रकृतानां वा एकधर्मान्वयरूपायास्तुल्ययोगिताया असंभवात्समुच्चय एवोक्तव्युत्पत्त्या कैश्चित्तुल्ययोगितापदेन व्यवहृत इति वृत्तिकृतापि निर्दिष्टमित्याह—**एष एव चेति।** वस्तुतस्त्विदमयुक्तम्। उक्तातिशयोक्तेः प्रौढोक्तिसिद्धत्वेन स्वतःसंभविव्यञ्जकार्थो-

---

१. 'गाढेति। यो राजा युधि युद्धे रुषा क्रोधेन निजाधरं स्वाधरोष्ठं निर्दशन्सन्नरीणां शत्रूणां वधूजनस्य स्त्रीजनस्यौष्ठरूपाणि विद्रुमदलानि विद्रुमस्य नवपल्लवस्य पत्राणि प्रवालपत्राणि वा गाढस्य कान्तदशनक्षतस्य कान्तदन्तव्रणस्य व्यथा पीडा तद्रूपात्संकटादमोचयन्मोचितवान्। क्रोधाद्वैरिवधे तद्वधूनां रतिक्रीडाविरहाद्दन्तक्षतं न भवतीत्यर्थः। अत्र निर्दशन्निति वर्तमाननिर्देशादधरदशनमोचनयोः कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिः। इयमेव वृत्तौ विरोधपदेनोक्ता। तन्मूलत्वादिति। स्वतःसंभविनालंकारेण दशनव्यापादनयोर्यौगपद्यरूपसमुच्चयालंकारध्वनिः। तुल्यकालं योगितेति व्युत्पत्त्या वृत्तावपि समुच्चय एवोक्त इति ध्येयम्।' इत्युदाहरणचन्द्रिकासंक्षेपः।

कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—

'कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥'

अत्र यद्यपि बिसिनीकाण्डसंजातशङ्का इति भ्रान्तिमान्, ससंदेहो वालंकारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वोदाहरणमयुक्तम्। तथापि तद्भागनैरपेक्ष्येणापि किंचिच्छुक्लं कर्णे प्रविशतीत्येतावतापि वस्तुमात्रेण येषामप्यर्थाधिगमो नास्ति तेषामप्येवं श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करोतीति व्यक्तिसंभवाद्वस्तुमात्रोदाहरणत्वमुक्तम्। अत्र च कीर्तिश्रवणानन्तरं कर्णे हस्तावर्तनं हस्तिनो न स्वतःसंभवि। किंतु कविसंप्रदायात्कविना वर्णितमिति कविप्रौढोक्तिसिद्धत्वम्। एवमग्रेऽपि द्रष्टव्यम्।

अत्रैव वस्तुनालंकारस्य यथा—

'केसेसु बलामोडिअ(मोडि) [तह] तेण समरम्मि जअसिरी गहिआ।
जह कंदराहिँ विहुरा तस्स दढं कण्ठअम्मि संठविआ ॥'

---

दाहरणत्वायोगात्। अतो वृत्युक्त ओष्ठदशनतद्व्यथामोचनयौगपद्यविरोध एवाभासमानो व्यञ्जकः। वाच्यतया सामानाधिकरण्येनाप्रतीतस्यापि व्यञ्जनया तथा प्रतीतिसंभवादित्येव युक्तम्। **केशेष्विति**। 'केशेषु बलात्कारेण [तथा] तेन समरे जयश्रीर्गृहीता। यथा कंदराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिता. ॥' इति। वृत्तौ

---

१. 'कैलासस्येति। कैलासस्य प्रथमशिखरे मूलशिखरे वेणुसमूर्च्छनाभिर्वेणूत्थापितरागैः। 'स्वर' संमूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुर्गीततत्त्वविदो जना. ॥' इत्युक्तेः। विबुधानां देवानां रमणीभिरप्सरोभिर्गीयमानां यदीयां यस्य प्रकृतस्य राज्ञः संबन्धिनीं कीर्तिं श्रुत्वा सरसस्य स्निग्धस्य बिसिन्या पद्मिन्याः काण्डस्य मृणालस्य सजाता शङ्का सदेहो भ्रान्तिर्वा येषामेवभूता., तथा स्रस्तास्तिर्यग्भूता अपाङ्गा नेत्रप्रान्ता येषा तथाभूताश्च दिङ्मातङ्गा दिग्गजा. श्रवणयो कर्णयो. सरोरूपयो. पुलिन इव समीपदेशे हस्त शुण्डामावर्तयन्ति चालयन्ति। आहर्तुमिति शेषः। 'प्रथमे मुख्ये। सर्वोच्च इत्यर्थः' इति केचित्। धवलत्वस्य श्रोत्राग्राह्यत्वात्स्रस्तापाङ्गा इति। पुलिन इत्यनेन श्रवणयोः सरस्त्वाध्यासान्मृणालत्वभ्रमौचित्यं व्यज्यते। केचित्तु—'श्रवणपुलिने इति रूपकम्। पुलिनेऽपि बिससंभवादित्याहुः। अत्र कविप्रौढोक्तिसिद्धेन वस्तुना जडानामप्येवंविधबुद्धिजननेन चमत्करोति त्वत्कीर्तिरिति वस्तु व्यज्यते। कीर्तिश्वैत्यादेर्लोकसिद्धत्वाभावात्कविप्रौढोक्तिसिद्धत्वं बोध्यम्। एवमग्रेऽपि।' इत्युदाहरणचन्द्रिका. २. 'केशेष्विति। बलामोडिशब्दो बलात्कारे देशी। जयश्रीरित्यनन्तर तथेति पूरणीयम्। तेन राज्ञा समरे युद्धे जयश्रीर्जयलक्ष्मीर्बलात्कारेण केशेषु तथा गृहीता यथा कदराभिर्गुहाभिस्तस्य राज्ञो विधुरा शत्रवो दृढं कण्ठे स्वसंनिवेशे सस्थापिता इत्यन्वय.। तेन पराजिताः शत्रव पलाय्य गुहास्वेव तिष्ठ-

अत्र तेन तथा समरे केशेषु जयश्रीर्गृहीता यथा तस्यारयः कंदराभिः कण्ठे स्थापिता इति वस्तुना एकत्रैव सङ्ग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यलिङ्गम्। न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं संभाव्य कंदरा एव न तांस्त्यजन्तीत्यपह्नुतिश्च व्यज्यते। यत्तु केशग्रहावलोकनोद्दीपितमदना इव कंदरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षा व्यज्यत इति तद्भवेदेवम्, यदि पूर्वं कंदरादीनां नायिकात्वाद्यारोपः स्यात्। अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात्। तदभ्युपगमे च न वस्तुमात्रस्य व्यञ्जकत्वम्। किंतु समासोक्तेरलंकारस्य।

अत्रैवालंकारेण वस्तुनो यथा—

'गाढालिङ्गणरहसुज्जुअम्मि दइए लहुं समोसरइ।
माणंसिणीण माणो पीलणभीरु व्व हिअआहिं॥'

अत्र पीडनभीत इवेत्युत्प्रेक्षयालंकारेण प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु ध्वन्यते।

अत्रैवालंकारेणालंकारस्य यथा—

'जा ठेरं व हसन्ती कइवअणम्बुरुहबद्धविणिवेसा।
दावेइ भुअणमण्डलमण्णं विअ जअइ सा वाणी॥'

---

प्रथमव्यङ्ग्यमुक्तं दूषयति—**यत्त्विति**। तदभ्युपगमे नायिकात्वाद्यारोपस्वीकारे। प्रस्तुतेऽप्रस्तुतसमारोपस्य समासोक्तिरूपत्वादित्यर्थः। **गाढेति**। 'गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति। मनस्विन्या मानः पीडनभीरुरिव हृदयात्॥' **उत्प्रेक्षयेति**। भीरुत्वोत्प्रेक्षया ह्यात्यन्तिकी। माननिवृत्तिर्गम्यत इति प्रसादातिशयानुभावानां प्रत्यालिङ्गनादीनामभिव्यक्तिरित्यर्थः। **जा इति**। 'या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा। दर्शयति भुवनमण्डलमन्यदिव जयति सा

---

न्तीति तात्पर्यार्थः। अत्र कविप्रौढोक्तिसिद्धेनोक्तवाक्यार्थरूपवस्तुना केशग्रहणावलोकनोद्दीपितमदना इव कंदरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षाध्वनिः।' इत्युदाहरणचन्द्रिका.

१. "गाढेति। गाढालिङ्गनाय रभसेन हर्षेण वेगेन वा दयिते प्रिये उद्यते सति मनस्विन्या मानः पीडनाद्भीरुर्भयशील इव हृदयाल्लघु शीघ्रं सम्यङ्निःशेषतोऽपसरतीत्यन्वयः। मनस्विन्या हृदयादिति वा सबन्धः। 'भीदो व्व' इति पाठे भीत इवेत्यर्थः। अत्रोभयोत्प्रेक्षयेव प्रत्यालिङ्गनहसितादिसंभोगविजृम्भणाभिव्यक्तिः, न तु गाढालिङ्गनोद्यते मानोऽपसृत इत्येतावतेति सहृदयसाक्षिकम्। 'रभसो वेगहर्षयोः' इति विश्वः।" इत्युदाहरणचन्द्रिका.
२. 'जा ठेरमिति। या वाणी वाग्देवता तदभिन्नत्वेनाध्यवसिता काव्यरूपा वा कविवाक् स्थविरं वृद्धमर्थाद्ब्राह्मणम्। तदीयभुवनान्यत्वप्रदर्शने तस्यैवोपहसनीयत्वात्। हसन्तीव। अवैदग्ध्यात्। कवेर्वदनमेवाम्बुरुहं पद्मं तत्र बद्धो रचितो विनिवेशः स्थितिर्यया तादृशी भूत्वा भुवनमण्डलमन्यदिव विलक्षणमिव दर्शयति सा जयति सर्वोत्कर्षेण वर्तत इत्यन्वयः। अत्र च हसन्तीवेत्युत्प्रेक्षया चमत्कारैककारणत्वाशलाभ, अन्यदिवेत्युत्प्रेक्षया जगतो नवनवत्व-

अत्र जा ठेरं व हसन्तीत्युत्प्रेक्षालंकारेण चमत्कारैककारणं नवं नवं जगदम्बुजासना निर्मिमीत इति वाण्या ब्रह्मणो व्यतिरेकः प्रकाश्यते । यद्यप्युत्प्रेक्षां विनापि व्यतिरेकोऽयं प्रकाशते 'नियतिकृतनियम—' इत्यादिवत्, तथापि न स्फुटो भवतीति । यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽप्युत्प्रेक्षाव्यञ्जकत्वं न विहन्यत इति ।

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेर्भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—

'जे लङ्कागिरिमेहलासु खलिआ संभोगखिण्णोरई-
फारप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते एह्निं मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥'

अत्र यथोक्तेन वस्तुना निःश्वासेन प्राप्तैश्वर्याः किं किं न कुर्वन्तीति वस्तु व्यज्यते । तारुण्णपुण्णा विअ इत्यस्य व्यक्तावनुपयोगात् । न चैवमस्याप्रयोजकत्वम् । उक्तिविशेषपरिपोषकत्वात् । निःश्वाससंपर्कस्य बहलत्वहेतोरुपादानात्काव्यलिङ्गस्यैव व्यञ्जकतेति चेत्, न । तस्य हेतुत्वाविवक्षयापि तथा व्यक्तेः ।

---

वाणी ॥' **हसन्तीत्युत्प्रेक्षेति** । इदमन्यदिवेत्युत्प्रेक्षाया अप्युपलक्षणम् । **जे इति** । 'ये लङ्कागिरिमेखलासु स्खलिताः संभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् । त इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो जाता

---

लाभः । कविवदनेत्यादिना अजलजेत्यंशलाभ इति बोध्यम् । वृत्तावुत्प्रेक्षया व्यतिरेक इति च जात्यभिप्रायमेकवचनम् । हसन्तीवान्यदिवेति द्वाभ्यामुत्प्रेक्षाभ्यां ब्रह्मतन्निर्मितिव्यतिरेकयोर्भारतीतन्निर्माणयोर्व्यञ्जनादिति ।" इत्युदाहरणचन्द्रिकासक्षेपः.

१. "जे लङ्केति । कर्पूरमञ्जर्याख्ये नाटके कर्पूरमञ्जरीसमाख्याया नायिकाया इयमुक्तिः । 'मेहलाहि' इति पञ्चम्यन्तपाठे मेखलाया इति । ये वाता लङ्कागिरेः सुवेलस्य मेखलासु नितम्बभागेषु स्खलिताः । स्वभोक्तृसर्पत्रासात् । सभोगेन खिन्नाना श्रान्तानामुरगीणां स्फाराभिर्विस्तृताभिरुत्फुल्लाभिरूर्ध्वप्रसृताभिः फणानामावलीभि' पङ्क्तिभिः कवलने ग्रसने सति दरिद्रत्व क्षीणत्व प्राप्तास्ते मलयसबन्धान्मलयानिला इदानीं विरहिण्या नि श्वाससंपर्किणो नि'श्वासमिश्रिताः सन्तः शिशुत्वेऽपि क्षीणत्वेऽपि बहला बाहुल्ययुक्तास्तारुण्येन पूर्णा इव जाता इति समुदितोऽर्थः । 'लङ्कासनिहितो गिरिर्लङ्कागिरिर्मलयः' इति चक्रवर्ती । अत्र स्त्रीणामाहारद्वैगुण्येनोरगीति स्त्रीनिर्देश । फणानां स्फारोत्फुल्लत्वेन श्वासस्य स्थूलत्वं व्यज्यते । अनिलानां सुवेलतो मलयागमने समुद्रलङ्घनाच्छैत्यम्, मलयसबन्धात्सौगन्ध्यम्, क्षीणत्वप्राप्त्या मान्द्यं च ध्वन्यते । अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेन वस्तुना निःश्वासमात्रेण प्राप्तैश्वर्याः किं किं न कुर्युरिति व्यज्यते ।" इत्युदाहरणचन्द्रिकासक्षेपः.

तत्रैव वस्तुनालंकारस्य यथा—

'सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम् ।
पिअदंसणविहलत्तणखणम्मि सहसत्ति तेण ओसरिअम् ॥'

अत्र प्रियदर्शनविह्वलत्वक्षणे धीरत्वेनापसृतमिति वस्तुना अकृतेऽपि प्रार्थने सा प्रसन्नेति विभावना, नूनं प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा च व्यज्यते ।

अत्रैवालंकारेण वस्तुनो यथा—

'ओल्लोल्लकरअरअणक्खएहिं तुह लोअणेसु मह दिण्णम् ।
रत्तंसुअं पसाअं कोवेण पुणो इमे ण अक्कमिआ ॥'

अत्र किमिति कुपिते लोचने वहसीति प्रश्नोन्नयनादुत्तरालंकारेण कोवेण इमे ण अक्कमिआ इत्यपह्नुत्यलंकारसहितेन न केवलमार्द्रक्षतानि गोपयसि, किं तु तेषामहं प्रसादपात्रमपि जातेति वस्तु व्यज्यते ।

अत्रैवालंकारेणालंकारस्य यथा—

'महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ ॥

---

झटिति शिशुत्वेऽपि वहलास्तारुण्यपूर्णा इव ॥' इति । **सहीति** । 'सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम् । प्रियदर्शनविश्रृङ्खल(विह्वल)त्वक्षणे सहसेति तेनापसृतम् ॥' इति । **धीरत्वेनेति** । अत्र धैर्येऽपसृतत्वरूपचेतनधर्मारोपात्प्रौढोक्तिसिद्धार्थस्य व्यञ्जकत्वं ज्ञेयम् । **सखीति** । अत्र सहीत्युदाहरणे नायिकाया वक्तृत्वेऽपि सखीनिरूपितं सखीत्वमस्त्येव । **ओल्लोल्लेति** । 'आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् । रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥' इति । ओल्लोल्लेत्यत्र तु सखीत्वं गौणं द्रष्टव्यम् । **इत्यपह्नुत्यलंकारसहितेनेति** । निषेधरूपाया अपह्नुते कोपप्रसञ्जकप्रश्नाक्षेपकत्वादुत्तरालंकाराङ्गत्वमिति भावः । **महि-**

---

१. 'सहीति । हे सखि, मम धीरत्वेन धैर्येण मानस्याश्वासं धीरो भवेति समाश्वासनं विरचय्य कृत्वा प्रियदर्शनेन विश्रृङ्खले (विह्वले) व्याकुले क्षणे स्वव्याकुलत्वस्य क्षणे उपचारात् । सहसेति । तेन धैर्येणापसृतम् । इतिशब्दो वाक्यसमापकोऽन्ते योजनीय इत्यन्ये ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'सौभाग्यवत्त्वं' क. ३. 'ओल्लोल्लेति । किमिति कुपिते लोचने वहसीति पृच्छन्तं परनायिकानखक्षतादिचिह्नवन्तं नायकं प्रति नायिकाया उक्तिरियम् । तवेत्यनन्तरमङ्गे इति शेषः । तवाङ्गे आर्द्रार्द्रैः । भल्लार्द्रैरित्यर्थः । करजानां नखानां रदनानां दन्तानां च क्षतैः परनायिकाकृतैर्मम लोचनयो रक्तांशुकं रक्ता अश्रव एव रक्तांशुकं रक्तवस्त्रं प्रसादो दत्तः । कोपेन पुनरिमे लोचने नाक्रान्ते इत्यर्थः । स चायमुक्तरूपस्य नायकप्रश्नस्योन्नामकोत्तररूपत्वादुत्तरालंकारो न केवलमार्द्रक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रमपि जातेति वस्तुव्यञ्जकः । इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'महिलेति । विरहकृशा नायिका नायकायावेदयन्त्याः सख्या उक्तिरियम् ।

अत्र महिलासहस्रभरितत्वात्तव हृदि स्थानं लभते, ततोऽङ्गं तन्वपि तनयतीति हेत्वलंकाराभ्यां तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः। अत्र कविनिबद्धा सखी वक्त्री। एवमर्थशक्त्युद्भवस्य द्वादश भेदाः।

## शब्दार्थोभयभूरेकः

यथा—

'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम्॥'

अत्र श्यामारूपकामिनीविशेपरजन्योरुपमा व्यङ्ग्या। सा चातन्द्रचन्द्रेत्यादेः परिवृत्त्यसहतया, समुद्दीपितेत्यादेस्तत्सहतया उभयस्यापि व्यञ्जकत्वेन शब्दार्थोभयशक्तिमूला।

## भेदा अष्टादशास्य तत्॥ १८॥

अस्य ध्वनेः। नतु शब्दार्थोभयभुवः।

---

**लेति**। 'महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती। अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥' इति।

**उभयस्यापीति**। प्राधान्येनेति शेषः। तेन शब्दशक्तिमूलेऽप्यर्थस्य व्यञ्जकत्वेऽपि तस्य प्राधान्याभावान्नोभयशक्तिमूलत्वम्। परिवृत्त्यसहशब्दप्राचुर्ये च शब्दशक्तिप्राधान्यम्, परिवृत्तिसहशब्दप्राचुर्ये त्वर्थशक्तिप्राधान्यम्, तत्साम्ये तूभयशक्तिप्राधान्यादुभयशक्तिमूलत्वं व्यपदिश्यते। अतएव 'पन्थिअ ण एत्थ—' इत्यादावुपभोगक्षमोऽसि चेदास्स्वेत्यादिवस्तुव्यञ्जने सत्थरपओहरशब्दयोरेव परिवृत्त्यसहयोः

---

हे सुभग सौभाग्ययुक्त, महिलाना स्त्रीणा सहस्रैर्भरिते व्याप्ते तव हृदयेऽमान्ती अवकाशमलभमाना सा नायिका अनुदिवस दिवसमभिव्याप्य नान्यत्कर्म कर्तव्यं यस्यास्तथाभूता तनु कृशमप्यङ्ग तनयति तनूकरोतीत्यर्थः। अत्र सुभगेत्यनेन नायिकाया एवानुरागविषयत्व नतु सा तवेति ध्वन्यते।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'अतन्द्रेति। अत्र प्रकृता श्यामा रात्रिः कं जनं सानन्दं न करोति, अपि तु सर्वमिति सबन्धः। कीदृशी। न विद्यते तन्द्रा आलस्य यस्यासावतन्द्रो मेघाद्यनावृततया स्फुरद्रूपश्चन्द्र आभरणं भूषण यस्याः सा तथाभूता। अतएव सम्यगुद्दीपितो मन्मथो यया सा तादृशी। तारका नक्षत्राणि तरलानि चञ्चलानि यस्या सा तथेति। अत्र व्यञ्जनया श्यामा षोडशवार्षिकत्वादिविशिष्टनायिकाविशेषः क जन सानन्द न करोति। कीदृशी। अतन्द्रोऽनल्पश्चन्द्रः कर्पूर आभरण यस्यास्तथाभूता। चन्द्र शिरोभूषणविशेष इति केचित्। समुत् हर्षेण सहिता। दीपितो दीप्तिं प्रापितो मन्मथो यया। तारका अक्षिकनीनिका तरला यस्याः सा तथा। तारकावत्तरलो हारमध्यमणिर्वा यस्या इति प्रतीतौ स्त्रीविशेष इव रात्रिरित्युपमाप्रतीतिः। चन्द्रपदस्य परिवृत्त्यसहतया समुद्दीपितेत्यादेश्च तत्सहतयोभयशक्तिमूलत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

ननु रसभावादीनां बहुत्वादष्टादशत्वमनुपपन्नमित्यत आह—

**रसादीनामनन्तत्वाद्भेद एको हि गण्यते।**

कथमनन्तत्वम्। इत्थम्—नव रसाः। तत्र शृङ्गारस्यैव द्वौ भेदौ, संभोगविप्रलम्भौ[1]। तत्र संभोगस्यापि परस्परालिङ्गनादयो बहवो भेदाः। विप्रलम्भस्याभिलाषादय उक्ताः। तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम्। तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम्। तत्रापि देशकालावस्थाभेद इत्येकस्यैव रसस्यानन्त्यम्। का गणना सर्वेषाम्। कुतस्तर्ह्येकत्वेन गणनम्। असंलक्ष्यक्रमस्वरूपमेकं सामान्यमाश्रित्य।

**वाक्ये द्व्युत्थः**

शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्य एव। ननु नायं नियमः। शिशुपालवधे तद्दूतोक्तौ प्रबन्धेऽपि दर्शनादिति चेत्, न। तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात्तुल्यप्राधान्यभावात्। 'ब्राह्मणातिक्रमत्यागः' इतिवत्। अन्यत्राप्येवं संभाव्यत इति चेत्संभाव्यताम्। नतु क्वापि निश्चीयते येन तदादाय विभागः स्यादिति।

**पदेऽप्यन्ये**

अन्ये सप्तदश ध्वनिभेदा वाक्ये पदेऽपि। ननु पदस्य व्यञ्जकत्वे किमायातम्

---

प्राधान्यम्, नतु पथिकाद्यर्थस्येति न तत्रोभयशक्तिमूलवस्तुध्वनिः। किं तूक्तोदाहरणजातीयेष्वलंकारध्वनिरित्येक इत्युक्तम्। व्यङ्ग्यभेदेन काव्यभेदात्तस्य चेहाभावादिति। **अष्टादशेति**। अविवक्षितवाच्यस्यार्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यरूपं भेदद्वयम्। विवक्षितान्यपरवाच्ये रसादिरसंलक्ष्यक्रम एकः। शब्दशक्तिमूलस्य वस्त्वलंकृतिरूपं भेदद्वयम्। अर्थशक्तिमूलस्य द्वादश भेदाः उभयशक्तिमूलश्चैक इत्युक्तप्रकारेणेत्यर्थः। **तयोरपीति**। संयोगविप्रलम्भयोर्द्वयोरपीत्यर्थः। विभावा उद्दीपनरूपा अनुभावाश्चोक्तालिङ्गनादिव्यतिरिक्ता ज्ञेयाः। तथा नानारूपा व्यभिचारिणश्च। तैर्वैचित्र्यमित्यर्थः। **तत्रापीति**। तस्मिन्वैचित्र्येऽपीत्यर्थः। **नायकयोरिति**। 'पुमान्स्त्रिया' इत्येकशेषः। तत्रापि उक्तप्रकृतित्वे सत्यपि। भेद इत्यनन्तरं वैचित्र्यहेतुरिति शेषः। देशो निकुञ्जादिः। कालो वसन्तादिः। अवस्था नवयौवनादिः। सामान्यं रसभावादिसाधारणं धर्मम्। शिशुपालवधे माघकाव्ये तद्दूतोक्तौ 'दमघोषसुतेन—' इत्यादिषोडशसर्गे श्रीकृष्णं प्रति शिशुपालदूतोक्तौ 'उभयं युगपन्मयोदितं' इत्यन्तेन प्रबन्धेन संधेर्वाच्यतया विग्रहस्य च व्यञ्जनया प्रतिपादनादुभयशक्तिमूलतासंभव इत्यर्थः। **तुल्येति**। वाच्यार्थेन तुल्यप्राधान्यादित्यर्थः। **ब्राह्मणेति**। जामदग्न्यदूतोक्तौ क्षत्रियाणामिव रक्षसां क्षयं क्षणेन करिष्यतीति व्यङ्ग्यम्। यथा वाच्यतुल्यचमत्कारं संधेरपि विवक्षितत्वेन दुर्मनायत इति वाच्यस्यापि गभीरोक्त्या चमत्कारित्वात्तथात्रापीत्यर्थः। **एवमिति**। उभयशक्ति-

---

१. 'सभोगो विप्रलम्भश्च' ख-ग.

वाक्यरूपस्य काव्यस्य ध्वनित्वे । कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत्, उच्यते । पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया, किंतु तस्य प्राधान्येन । अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्युपगमान्न कश्चिद्दोषः । एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति । कामिनीवैकावयवस्थेन भूषणेन ।

तदुक्तं ध्वनिकृता—

'एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदव्यङ्ग्येन सुकवेर्ध्वनिना भाति भारती ॥' इति ।

तत्र वाक्यव्यङ्ग्यमुदाहृतम् । पदव्यङ्ग्यमुदाह्रियते । तत्राविवक्षितवाच्यभेदयोरर्थान्तरसंक्रमितवाच्यं यथा—

'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥'

अत्र द्वितीयो मित्रशब्द आश्वस्तत्वे, शत्रुशब्दो नियन्त्रणत्वे, अनुकम्प्यशब्दः स्नेहपात्रत्वे संक्रमितवाच्यः । नायकस्य दृढप्रकृतित्वं व्यङ्ग्यम् । ननु 'त्वामस्मि वच्मि—' इति वाक्यप्रकाश्ये पूर्वमुदाहृतम्, तस्मादस्य पदप्रकाश्यस्य को भेद इति चेत्, न । अनवबोधात् । तद्धि प्रत्येकपदव्यङ्ग्यभिन्नं समस्तपदवाक्यव्यङ्ग्यम् । तस्मादत्र सर्वथा सावधानेन भाव्यमित्येवंरूपं यत्तत्परम् । इदं तु केवलमित्रादिपदव्यङ्ग्याभिप्रायमिति ।

अत्यन्ततिरस्कृतवाच्यं यथा—

'खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥'

---

मूलध्वनेः प्रबन्धगतत्वमित्यर्थ. । **नन्विति** । व्यञ्जकत्वं हि ध्वनित्वे प्रयोजकम् । न तद्वाच्येऽस्तीति ध्वनिकाव्यमिति व्यवहारानुपपत्तिरिति भाव । **अविवक्षितेति** । लक्षणामूलव्यञ्जकत्वस्य लाक्षणिकपद एव संभवादिति भावः । भारती कविता । **केवलेति** । आश्वस्तत्वादेर्यावज्जीवस्थायित्वरूपोत्कर्षरूपेत्यर्थ. । **खलेति** । 'खल-

---

१. 'यस्येति । यस्य पुरुषस्य मित्राणि मित्राणि आश्वस्तानि । विश्वासपात्राणीत्यर्थः । तथा शत्रवः शत्रवो नि शेषतो यन्त्रणीयाः । दमनीया इत्यर्थः । यस्येत्यनुषङ्ग इहोत्तरत्र च वोध्यः । अनुकम्पा दया तद्योग्योऽनुकम्प्यश्च स्नेहपात्रं च । स जात. शोभनजन्मा स एव जीवति । श्लाघ्यजीवनवानित्यर्थः । अत्रोक्तार्थान्तरसंक्रमितवाच्यैर्मित्रादिशब्दैर्यावज्जीवावस्थायित्वरूपतदतिशयव्यञ्जनद्वारा नायकस्य स्थिरप्रकृतित्व प्रत्येक व्यज्यते । त्वामस्मीति तु तस्मादत्र सावधानेन भाव्यमिति पदसमुदायरूपवाक्यव्यङ्ग्याभिप्रायमिति भेदः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'नियन्त्रितत्वे' ख. ३. 'खलेति । यद्यपि खलाना दुष्टाना व्यवहारा दारुणा इष्टप्रतिबन्धका दृश्यन्ते तथापि सदर्थग्राहितया हृदयरूपेण वयस्येन

अत्र विमोहेनाप्रवृत्तिर्लक्ष्यते। नच तत्र वाच्यस्य कथमपि प्रवेशः। इष्टकार्यकारित्वं व्यङ्ग्यम्। यद्यपि व्यवसाये विमोहाभावो नान्वयायोग्य इति कुतो लक्षणा, तथापि धीराणामधीरेभ्यो वैलक्षण्यं प्रतिपाद्यम्। नच तल्लक्षणां विना संभवति। अधीरव्यवसायेऽपि मोहाभावादित्यवश्यं लक्षणा स्वीकार्या।

अलक्ष्यक्रमव्यङ्ग्यं यथा—

'लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्॥'

अवयवस्य संस्थानसौष्ठवं रूपम्। अवयविनस्तदेव लावण्यम्। कान्तिरुज्वलता। अत्र विप्रलम्भार्थे वाक्येऽनुभवैकगोचरमर्थं प्रकाशयतां तत्पदादीनां प्राधान्यम्। एवमग्रेऽपि। न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किं त्वन्येषामपि। यथा—

'मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि।

---

व्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्। हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति॥'इति। **इष्टेति**। इष्टकार्यकारित्वायोगव्यवच्छेद इत्यर्थः। ताच्छील्यबोधकणिनिप्रत्ययात्। **तदेवेति** अवयवसंस्थानसौष्ठवमेवावयविनो लावण्यमुच्यत इत्यर्थः। केचित्तु—'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यद-

---

मित्रेण बहुमता अनुमोदिता धीराणा व्यवसाया उद्योगा न विमुह्यन्ति। न प्रतिबद्धा भवन्तीत्यर्थः। अथवा खलप्रतारणया स्वार्थसाधने न विसंवदन्तीत्यर्थ.। अत्रोक्तार्थे लाक्षणिकस्य विमुह्यन्तीत्यस्येष्टकारित्व व्यङ्ग्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'लावण्यमिति। कस्यचिद्विरहिण उक्तिरियम्। तदनुभवैकगोचरं लावण्यम्। कान्तिरुज्ज्वलता। असाविति पूर्ववत्। एवमग्रेऽपि। रूप सस्थानसौष्ठवम्। वचसः क्रमः परिपाटी। सकलमिद तदानुभवकाले सुधाया अमृतस्यास्पदं स्थानमभूत्। सर्वाङ्गीणसौहित्यसंपादकत्वात्। अधुना वियोगकाले। स्मर्यमाणमिति शेषः। महान् ज्वर इव ज्वरः। सर्वाङ्गीणतापहेतुत्वादित्यर्थः। अत्र तदादिभिर्विशिष्यवचनानर्हतया लावण्यादिगतलोकोत्तरत्वप्रतिपादनद्वारा विप्रलम्भाभिव्यक्तिः।' इत्युदाहरणचन्द्रिकासक्षेपः.
२. 'मुग्ध इति। सख्या मान शिक्षयन्त्या इयमुक्तिः। हे मुग्धे उपदेशाग्रहणादनभिज्ञे, अखिलोऽतीतो वर्तमानो भविष्यंश्च कालो मुग्धतयैव यथोचिताचरणेनैव नेतुं यापयितुं किं किमित्यारभ्यते। तर्हि किमाचरितुं युक्त, तत्राह—मानं धत्स्व धारय। धृतिं धैर्यं बधान गृहाण। बन्धनोक्त्या अनपनेयता ध्वन्यते। प्रेयसीति प्रियविषये। एतच्च वाक्यचतुष्टयेऽप्यन्वेति। ऋजुता सरलतां दूरीकुरु त्यज। इत्येव सख्या प्रतिबोधिता नायिका भीत भययुक्तमानन यस्यास्तथाभूता सती ता प्रतिबोधयन्ती सखीं प्रति वचः प्रत्युत्तरमाहेत्यन्वयः। भयकार्यस्य शोषवैवर्ण्यादेराननगतत्वात्तत्र भीतत्वोपचार.। नीचैरित्याद्युत्तरम्। हे सखि, नीचैर्मन्दं शंस कथय। हि यस्मान्मे मम हृदि हृदये स्थितो

सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥'

अत्र भीताननेतिपदं नीचैः शंसनविधानस्य योग्यतां प्रकाशयत्प्राधान्ये रागातिशयं व्यञ्जयति ।

भावादीनां तु वाक्येऽपि न तादृशं चारुत्वम् । पदप्रकाश्यत्वे सुतराम् । अतस्तत्प्रभेदा नोदाह्रियन्ते ।

लक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदेषु शब्दशक्तिमूलेऽलंकारव्यक्तिर्यथा—

'[1]रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि[2] नृपभीम ॥'

अत्र भीमेति भीषणीयार्थेन नृपसंबोधनविशेषणेन भीमसेनोपमा व्यज्यते ।

अत्रैव वस्तुनो व्यक्तिर्यथा—

'[3]भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिःस्यन्दं विदधाति सदागमः ॥'

---

ङ्गेषु तल्लावण्यमितीर्यते ॥' इत्याहुः । योग्यतामकृत्रिमताम् । भीषयतीति भीषणीयः ।

---

विद्यमानः प्राणेश्वरः प्राणानां तदायत्तत्वाज्जीवितसर्वस्वायमानः कान्तः श्रोष्यति । ननु शङ्कायाम् । प्रतिर्वीप्सायाम् । प्रतिबोधिता मुहुर्बोधिता । अत्र नीचैः शंसनविधानस्यानाहार्यत्वरूपतां प्रकाशयद्भीताननापदं रागस्याकृत्रिमतया संभोगप्रकर्षे पर्यवस्यति । सख्या अपरिहार्यवचनतया च नीचैरिति विधिः, ननु मा शंसेति निषेध इति ज्ञेयम् । पूर्वत्र विप्रलम्भ इह संभोग इति भेदः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'रुधिरेति । हे भीम भयंकर नृप, त्वं विभासि शोभस इत्यन्वयः । पक्षे भीमो भीमसेनो व्यङ्ग्यः । कीदृशः । रुधिरस्य विसरेण समूहेन प्रसाधितो भूषितः करालेन भीषणेन करवालेन खड्गेन रुचिरो मनोज्ञो भुजरूपः परिघोऽर्गला यस्य तादृशः । जयश्रीनिरोधकत्वादर्गलात्वोक्तिः । मित्रशत्रुभेदेन करालत्वरुचिरत्वे बोध्ये । पुनः कीदृक् । झटिति भ्रुकुट्या भ्रूभङ्गेन विटङ्कितस्तदाकाररेखाङ्कितत्वात्संजातविटङ्को ललाटमेव विशालतया पट्टो यस्य सः । 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः । 'भ्रुकुट्या विटङ्कितो ललाटपट्टो यस्येत्यर्थः' इति केचित् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'विभाति नृपभीम.' ख. ३. 'भुक्तीति । जनान्तरसंनिधावुपनायके स्थितेऽप्रस्तुतवेदप्रशंसान्यानेन तदागमनाधीनं हर्षं व्यञ्जयन्त्या नायिकाया इयमुक्तिः । सन्नासावागमो वेदः कस्यानन्दनिःस्यन्दमानन्दप्रवाहं न विदधाति करोति । अपितु सर्वस्येत्यर्थः । कीदृक् । भुक्तिं स्वर्गादिभोगं मुक्तिं च निःश्रेयसं करोतीति तथाभूतः । कर्मकाण्डोपनिषद्भ्यामुभयोपायबोधनात् । एकान्तेन नियमेन सम्यगादेशने हितोपदेशे तत्परः । अप्रतारकत्वात् । इति वाच्योऽर्थः । मुख्यतया तु विवक्षितो गोपनायाप्राकरणिकीकृतो व्यङ्ग्यो यथा—सतः सुन्दरस्य नायकस्यागमः आगमनं कस्य नायिकाजनस्यानन्दनिःस्यन्दं न विदधाति । कीदृशः । भुक्तिः संभोगः ।

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसति। तत्र सदागमपदेन स्तुतिर्व्यज्यते। उभयोश्चैतयोः शब्दप्राधान्यम्। परिवृत्त्यसहत्वात्।

अर्थशक्त्युद्भवेषु स्वतःसंभविन्यर्थे व्यञ्जके वस्तुना वस्तुनो व्यक्तिर्यथा—

'[1]सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातो[2]ऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः।
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम्॥'

अत्र तव सौकुमार्यमाश्चर्यम् येनाधुना क्लान्तासीति वस्तुना कृतपरपुरुषपरिचया स्नातासीति वस्तु अधुनापदप्राधान्येन व्यज्यते।

वस्तुनालंकृतेर्यथा—

'[3]तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥

---

कर्तर्यपि 'कृत्यल्युटो बहुलम्' इत्यनुशासनात्। **काचिदिति**। सखी दूतीवेत्यर्थः। एवं सच्छास्त्रविषयप्रकृतीकरणेन मुख्यया अभिधावृत्त्या संकेतदायिनं शंसति। संकेतदानेनेष्टसंपादकतया व्यञ्जयतीत्यर्थः। गोपनार्थं प्रकृतस्याप्यप्रकृतीकरणम्। अप्रकृतस्य च प्रकृतवदभिधानात्। **स्तुतिरिति**। अत्यन्तहितकारितारूपेत्यर्थः। **अधुनेति**। सायंस्नानोत्तरमित्यर्थः। तत्तु पुरुषसमागमादेवेत्यधुनेत्यस्य प्राधान्यम्।

---

मुक्तिर्विरहादिदु खत्यागः। तौ करोतीति तथा। एकान्तस्य संकेतस्थानस्य समादेशने तत्पर इति पूर्वत्रोपमाध्वनौ भीमपदस्य, इहोक्तवस्तुध्वनौ प्रधानभूतस्य सदागमपदस्य परिवृत्त्यसहत्वाच्छब्दशक्तिमूलत्वं ज्ञेयम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'सायमिति उपपतिं संभुज्य तज्जनितश्रमापनयनाय स्नानादिकृतवतीं सखीं प्रति ज्ञातरहस्यायाः सख्या इयमुक्तिः। हे सखि, तव सौकुमार्यमाश्चर्यम्। येन कारणेनाधुना श्रमनिवर्तकस्नानादिसमवधानदशायामभितः समन्ततो बहिरन्तश्च क्लान्तासि श्रान्तासि। कथम्। तत्राह—नेत्रेत्यादि। ते तव नेत्रयोर्द्वन्द्व युग्मं न विद्यते मीलनस्य व्यतिकरः पौनःपुन्य यत्र तथा आसितुं स्थातुं न शक्नोति। तथाच मीलनपौनःपुन्य सर्वाङ्गीण श्रमं गमयतीति भावः। आश्चर्यं कुतः। तत्राह—सायमित्यादि। सायंकाले स्नानमुपासितं श्रमापनोदनसमर्थं यथा स्यात्तथा कृतम्। मलयजेन चन्दनेनाङ्गं सम्यगासमन्ताल्लेपितम्। अम्बरस्याकाशस्य मणिरिव मणिः सूर्योऽस्ताचलस्य मौलिं मस्तकं यातः। अस्तंगत इत्यर्थः। तेनातपादिजनितत्वसंभावनानिवृत्तिः। अत्र मत्सविधे विस्रब्धं निःशङ्कं मन्थरं वा आगतिरागमनम्। एतेन भयत्वराहेतुकत्व क्लमस्य नास्तीत्युक्तम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अस्ताचलचूल' ख. ३. 'तदप्राप्तीति। विष्णुपुराणगतमेतत्पद्यद्वयम्। पूर्वोक्ताभ्योऽन्या गोपस्य कन्यका निर्गत उच्छ्वासः प्राणोत्क्रमण यस्याः सा तथाभूता। तस्या भावस्तत्ता तया। प्राणोत्क्रमणं विनेत्यर्थः। 'न तस्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते' इति श्रुतेः। मुक्तिं गता भावत्तया तद्रूपतां प्राप्तेत्यन्वयः। कीदृशी। तस्य कृष्णस्याप्राप्त्या वियोगेन यन्म-

चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥' युग्मम् ।

अत्र जन्मसहस्रैरुपभोग्यानि दुष्कृतसुकृतयोः फलानि वियोगदुःखचिन्ताह्लादाभ्यां कयाप्यनुभूतानीत्युक्तम् । एवं च दुष्कृतसुकृतराशिफलतादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषचयपदाभ्यां द्योत्यते ।

अलंकारेण वस्तुनो यथा—

'[2]क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥'

अत्र पराङ्मुखे त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति वस्तु सर्वपदप्राधान्येन व्यज्यते । ननु नायमर्थान्तरन्यासः । वनं

---

इत्युक्तमिति । अन्यथा सर्वपुण्यपापनाशस्य चिन्तावियोगसुखदुःखाभ्यां क्षयानुपपत्तेरिति भावः । न चोक्तव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वमाशङ्कनीयम् । अन्यत्र तथात्वेऽपि प्रकृते भगवद्विषयकरत्युत्कर्षप्रयोजकतया वाच्यादतिशयितत्वेन तदप्रसङ्गात् । वाच्यादनतिशायित्वेन हि व्यङ्ग्यस्य गुणीभावः । स वाच्यसिद्ध्यङ्गतया क्वचित्क्वचित्प्रकारान्तरेणेत्यष्टौ तद्भेदाः । ननु वाच्यसिद्ध्यङ्गत्वं गुणीभावनियतम् । वाच्यातिशायित्वे तदसंभवादित्याहुः । वस्तुतस्तु इत्युक्तमित्यनेनोक्तमेव व्यङ्ग्यं वाच्यसिद्ध्यङ्गम् । तेन त्वतिशयोक्तिर्ध्वन्यत इति नोक्तदोष इति ज्ञेयम् । अत्रेति । क्षणदेत्यादिविशेषवृत्तान्तोपपाद्येन पराङ्मुख इत्यादिसामान्यरूपेणार्थान्तरन्यासेनेत्यर्थः । सर्वप्रपञ्चपराङ्मुखत्वस्य विध्यधीनत्वादुक्तव्यङ्ग्यलाभः ।

---

हदु खं तेन विलीनानि नष्टान्यशेषाणि समस्तानि समग्राणि पातकानि यस्याः सा । तथा तस्य चिन्तया ध्यानेन यो विपुलो महानाह्लाद आनन्दस्तेन क्षीणः पुण्यचयः पुण्यसमूहो यस्याः सा । पुण्यपापयोः फलनाश्यत्वात् । पुनः कीदृक् । जगतः सूतिरुत्पत्तिर्यस्मात्तादृशं श्रीकृष्णं परब्रह्मस्वरूपिणं सच्चिदानन्दरूपं चिन्तयन्ती भावयन्ती अत्र कृष्णवियोगदुःखचिन्ताह्लादयोरशेषपापपुण्यफलत्वेनाध्यवसितयोरवगतिरित्यतिशयोक्तेर्व्यङ्ग्यत्वम् । तच्चाशेषचयपदप्राधान्यादिति बोध्यम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

२ क्षणदेति । बतेति खेदे विस्मये वा । तवेति द्वेषकर्मणि षष्ठी । भो वीर, तव त्वां द्विषतां त्वयि पराङ्मुखे प्रतिकूले सति सर्वं पराङ्मुखं विपरीतम् । जातमिति शेषः । एतदेवोपपादयति—क्षणदेत्यादिना । क्षणदा रात्रिरक्षणदा रात्रिभिन्ना । वनमवनं वनभिन्नम् । व्यसनं द्यूतादि तद्भिन्नम् । इत्येवं शब्दशक्तिमूलव्यञ्जनागम्यविरोधालंकारेण सर्वपराङ्मुखत्वोपपत्तिः । विरोधपरिहारस्तु—क्षणमुत्सवं ददातीति तथा पश्चान्नञ्समासेन तद्भिन्ना रात्रिः, वनमवनं रक्षकम्, अवीनां मेषाणामसनं क्षेपणं तदेव व्यसनमिति रीत्या बोध्यः । अत्रोक्तरीत्या विरोधानुप्राणितेनार्थान्तरन्यासेन सर्वपदप्राधान्येन विधिरपि त्वामनुवर्तत इति वस्तु व्यज्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

रक्षकमित्यादेर्वाच्यस्यार्थस्यानुपपादकत्वादिति चेत्, न । शब्दशक्त्या व्यङ्ग्यस्य क्षणदा क्षणदाभिन्नेति विरोधस्योपपादकत्वेन तथात्वात् ।

अलंकारेणालंकारस्य यथा—

'तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअणं महीसँमुहम् ॥'

अत्राधरो म्लानकमलदलमिति रूपकेणालंकारेण त्वयास्य मुहुश्चुम्बनं कृतं तेन तस्य म्लानत्वमिति काव्यलिङ्गं मिलाणकमलदलपदप्राधान्येन द्योत्यते ।

अथ कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकार्थे वस्तुना वस्तुव्यक्तिर्यथा ।

'राईसु चन्दधवलासु ललिअमप्फालिऊण जो चापम् ।
एकच्छत्तं विअ (व) कुणइ तिहुअणरज्जं विजम्भन्तो ॥'

अत्र वस्तुना येषामसौ स्मरो राजा तेषु मध्ये न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैर्निशातिवाह्यत इति वस्तु त्रिभुवनराज्यपदेन प्राधान्येन व्यज्यते । अखण्डाज्ञाविषयो हि राज्यम् । इवार्थो न व्यञ्जनोपयोगी । प्रत्युत तत्परित्यागेऽतिशयो गम्यते ।

---

**तथात्वादिति** । अर्थान्तरन्यासत्वादित्यर्थः । **तुहेति** । 'तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् । इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥' **काव्येति** । म्लानत्वे मुहुश्चुम्बनस्य हेतोः प्रतीतेः काव्यलिङ्गाख्योऽलंकार इत्यर्थः । **राईस्विति** । 'रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् । एकच्छत्रमिव करोति त्रिभुवनराज्यं विजृम्भमाणः ॥' यो मदनः । येषां कामिनाम् । 'तेभ्यः' इति प्रकाशपाठे तु तेभ्योऽपेत इत्यर्थः । इवार्थ उत्प्रेक्षा । **अतिशयित इति** ।

---

१. 'तुहेति । गोसम्मीति प्रभाते देशी । प्राकृते लिङ्गानियमाद्दलपदे पुंस्त्वम् । रात्रावत्यन्तचुम्बितदयिताधरा वधूं प्रति कस्याश्चिदुक्तिः । तव वल्लभस्य दयितस्य प्रातःकालेऽधरोष्ठ म्लानं च तत्कमलस्य दलं तद्रूप आसीदिति सखीवचनं श्रुत्वा नवा वधूस्तरुणी वदनं मुखं मह्या भूमेः संमुखम् । अधोमुखमिति यावत् । करोतीत्यन्वयः । करोतीति वर्तमाननिर्देशाल्लज्जाया अविरामः सूच्यते । कमलदलो इति तद्रूप इत्यर्थः । अत्राधरो म्लानकमलदलमिति रूपकालंकारेण तथाधरश्चुम्बितो येन म्लानत्वमिति काव्यलिङ्गालंकारो मिलाणादिपदप्राधान्येन व्यज्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'राईस्विति । यः प्रकरणात्कामः । चन्द्रेण धवलासु रात्रिषु । ज्योत्स्नीष्विति यावत् । ललितं सुकुमारमनोहरम् । न जरठम् । आस्फाल्यैव त्रिभुवनानां राज्यमेकमेवच्छत्रं यत्र तथाभूतम् । अद्वितीयमिति यावत् । करोति । अतएव विजृम्भमाणो विस्फुरमाण इत्यर्थः । अत्र कविप्रौढोक्तिसिद्धेन वस्तुना स्वशासकानङ्गपारवश्येन कुशलैः कामिभिरुपभोगपरैरेव निशातिवाह्यत इति त्रिभुवनराज्यपदप्राधान्येन व्यज्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

वस्तुनालंकृतेर्यथा—

निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति सा च यत्र तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥'

अत्र व्यतिकरमेत्यावस्थाः समुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि निर्वेदोन्मादादयोऽवस्था भवन्तीति विरोधालंकारो व्यतिकरपदेन प्राधान्येन व्यज्यते ।

अलंकारेण वस्तुनो यथा—

'वारिज्जन्तो वि पुणो संदावकदत्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥'

अत्र स्तनभारवयस्येन विशुद्धजातित्वाद्धारो न चलतीति हेत्वलंकारेणानवरतं कम्पमान एव हारोऽस्तीति वस्तु न चलतीति पदेन व्यज्यते ।

---

निर्धारितार्थप्रतीतेरित्यर्थः । **निशितेति** । अत्र विरोधे व्यतिकरपदस्य परस्परसंघर्षबोधकस्य प्राधान्यम् । नच शनिरशनिरित्यादिवत्सामानाधिकरण्याभावे कथं विरोधालंकार इति वाच्यम् । तत्रेत्युपात्ते एकधर्मिण्येव हसितं रुदितमित्याद्यवस्था इति सामानाधिकरण्यस्य स्फुटं प्रतीतेः । न ह्यभेदान्वयसामानाधिकरण्यं नान्यत्रेति नियमे मानमस्ति । शनिरित्यादौ तु नैकत्र धर्मिणि शन्यशनिप्रतीतिरिति । न तत्र विरोध इति युक्तम् । एतेन विरुद्धा इत्यस्य कार्यकारणभूता इत्यर्थः । व्यतिकरः पौर्वापर्यविपर्यय. । तथा च विरोधशब्देनात्र तथाभूतातिशयोक्तिरुच्यत इति प्रलपितमनादेयम् । **वारिज्जन्तो इति** । 'वार्यमाणोऽपि पुनः संतापकदर्थितेन हृदयेन । स्तनभरवयस्यत्वेन विशुद्धजातिर्न चलत्यस्या हारः ॥' विरहसंतापकदर्थितेन हृदयेन श्वासाधिक्यात्प्रणोद्यमानो हारो वार्यमाण इवेति गम्योत्प्रेक्षा । तथाभूतोऽपि

---

१. 'निशितेति । अनङ्गः अराले सकलकामिहिंसतया कुटिले वयसि यौवने सति सुदृश शोभननयनायाः कामिन्याः दृशि दृष्टौ निशितास्तीक्ष्णाश्च ते शराश्च तेषा धिया अयं मम निशितः शर इति बुद्ध्या स्वस्य बलमर्पयति । सा चार्पितबला दृष्टिर्यत्र यस्यां दिशि लक्षणया तत्संबन्धिनि युवजने निपतति तत्रावस्था हसितरुदितमूर्च्छादयो व्यतिकर मिश्रणमेत्य प्राप्य समुन्मिषन्त्युद्भवन्तीत्यन्वयः । अत्र तथाविधेन वस्तुना परस्परविरुद्धा अप्यवस्थाः प्रादुर्भवन्तीति व्यतिकरपदप्राधान्येन विरोधालकारो व्यज्यते । अन्यथा तत्पदवैयर्थ्यात् ।' इत्युदाहरणचन्द्रिकासक्षेप.. २. 'वारिज्जन्तो इति । विरहजनितेन सतापेन कदर्थितेन पीडितेन हृदयेन पुन पुनर्वार्यमाणोऽप्यस्याः प्रकृतनायिकाया हारः स्तनभरस्य वयस्यत्वेन सख्येन न चलति । यतो विशुद्धजातिर्निर्दुष्टमुक्ताजातिमान् । श्लेषेण विशुद्धजन्मा चेति । विशुद्धजातयो हि न कदापि स्वस्थानाच्चलन्तीत्यर्थः । अत्र व्यङ्ग्यमनवरतकम्पनं श्वासोच्छ्वासाधिक्ये हृदयकम्पनप्रयुक्तं वेदितव्यम् । अत्र विशुद्धजातित्वरूपेण हेत्वलकारेण विशुद्धजातिपदप्राधान्येनोपदर्शितव्यङ्ग्यध्वनि. ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अलंकारेणालंकारस्य यथा—

'सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो।
तीए खन्धाहि बलं गहिअ सरो सुरअसंगरे जअइ॥'

अत्र सुरतसंगरे धम्मिल्लः स्मर इति रूपकालंकाराभ्यां तथा केशपाशः स्कन्धे पतितो यथा रतिविरतावप्यनिवृत्तेच्छः कामुकोऽभूदिति विभावनास्कन्धपदप्राधान्येन व्यज्यते।

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकार्थध्वनिभेदेषु पदप्राधान्येन वस्तुना वस्तुनो व्यक्तिर्यथा—

'णवपुण्णिमामिअङ्कस्स सुहअ को तं सि भणसु मह सच्चम्।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज॥'

अत्र यथोक्तेन वस्तुनान्यस्यामपि प्रथममनुरक्तस्त्वमभूर्न तत इति वस्तु णवपुण्णिमामिअङ्कपओसरअणीपदप्राधान्येन द्योत्यते। अत्र पदे रजनीवेत्युपमानैरपेक्ष्येण कथं व्यञ्जकत्वमिति चिन्त्यम्।

अत्रैव वस्तुनालंकारस्य यथा—

'[3]सहि णवणिहुवणसमरम्मि अङ्कवाली सहीएँ णिविडाए।

---

स्तनभरसौहार्देन विशुद्धजातित्वान्न चलतीत्यर्थः। **स इति**। 'स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः। तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसंगरे जयति॥' स्कन्धः सेनानिवेशोऽपि। बलं सैन्यमपि। **णवेति**। 'नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम्। का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य॥' **अत्रेति**। पदे प्रदोषरजनीपदे। अत्र प्रदोषरजन्याः केत्येतावतापि व्यञ्जनसंभवाद्वस्तुमात्रव्यञ्जकतोदाहरणत्वं वृत्तावभिप्रेतमिति भाति। **सहीति**।

---

१. 'स इति। स धम्मिल्लः केशपाश एव स्मरः कामः। तस्या नायिकायाः स्कन्धोऽस एव स्कन्धः सेनानिवेशः तस्माद्बलं सामर्थ्यमेव बलं सैन्यं गृहीत्वा सुरतरूपे सङ्ग्रामे जयत्युत्कृष्टो भवति। कीदृशः। मुग्धं सुन्दरं श्यामलमङ्गं यस्य सः। तथा कलितः पुनरासादितो ललितो मनोहरो निजदेहो धम्मिल्लरूपो येन तथाभूत इवेत्युत्प्रेक्षागर्भम्। अत्र धम्मिल्लस्य स्कन्धसंबन्धेन शोभातिशयलाभात्तत्पदप्राधान्यम्॥' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'खण्डितायाः स्वामिनं प्रतीयमुक्तिः। हे सुभग, त्वं नवस्य प्रथमोदितस्य पूर्णिमासंबन्धिनो मृगाङ्कस्य चन्द्रस्य संबन्धी को भ्राता सखा वासि एतन्मम सत्यं भण वद। तत्संबन्धित्वं विना क्षणिकानुरागित्वस्य तत्स्वभावस्य त्वय्यनुपपत्तेरिति भावः। तथा चन्द्रस्य प्रदोषरजनीव तव का नायिका सौभाग्यं नायकानुरागादि समग्रं यस्याः सा तथाभूतेत्यर्थः। अत्र नवेत्यनेन क्षणिकानुरागित्वलाभः। पूर्णिमामृगाङ्केत्यनेन नायिकान्तरसंसर्गित्वं व्यज्यते। एवं प्रदोषेत्यनेन प्रकृष्टदोषवत्त्वम्, रजनीत्यनेन रागित्वमित्यूह्यम्। केचित्तु 'नवः प्रतिपदुदितः' इत्यर्थमाहुः। अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना णवेतिपदप्राधान्येन मयीवान्यस्यामपि क्षणिकानुरागित्वमिति वस्तु ध्वन्यते॥' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'सख्या इयमुक्तिः। हे सखि, नवं नूतनं निधुवनं सुरतमेव समरः सङ्ग्रामस्त-

हारो णिवारिओ व्विअ उच्चेरन्तो तदो कहं रमिअम् ॥'

अत्र निधुवनसमर इति रूपकस्य व्यञ्जनायामप्रयोजकतया वाच्येन वस्तुमात्रेण हारच्छेदानन्तरं प्रौढाङ्गनारताद्विलक्षणं नवोढायास्ते रतमभूत्तत्कथय कीदृगिति व्यतिरेकालंकारः कहंपदप्रकाश्यः ।

अलंकारेण वस्तुनो यथा—

'पविसन्ती घरवारं विवलिअवअणा पलोइऊण पहम् ।
खन्धे घेत्तूण घडं हा हा णट्ठोत्ति रुअसि सहि किंति ॥'

अत्र नष्ट इति रोदिषीति हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं कामुकं दृष्ट्वा यदि गन्तुमिच्छसि तदपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदप्राधान्येन प्रकाश्यते ।

यथा वा—

'विहलङ्खलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम् ।
वारप्फंसमिसेणि अ अप्पा गरुओत्ति पाडिअ विहिण्णो ॥'

---

'सखि नवनिधुवनसमरे अङ्कपाली सख्या निबिडया । हारो निवारित एवोच्चरंस्ततः कथं रमितम् ॥' अङ्कपाली आलिङ्गनम् । उच्चरन्नुच्छलन् । **पविसन्तीति** । 'प्रविशन्ती गृहद्वारं विवलितवदना प्रलोक्य पन्थानम् । स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति ॥' **किंतिपदेति** । हेलाक्षेपेण रोदनकृत्रिमत्वप्रतीतेरिति भावः । अत्र व्यञ्जकस्य स्वतःसंभवित्वेन कविप्रौढोक्तिकल्पितत्वाभावादाह— **यथा वेति । विहलङ्खलमिति** । विश्रृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतर-

---

सिन्निबिडया दृढया विश्वस्तया च अङ्कपाली आलिङ्गनं तद्रूपया सुखहेतुत्वात्सख्या उच्छ्रियमाणो द्वयोस्तृतीयतयाधिको भवन् हारो निवारित एव । गाढालिङ्गनेन त्रोटित इत्यर्थः । ततो हारच्छेदानन्तरं कथं रमितं क्रीडितमिति प्रश्नेन वैलक्षण्यसूचनाद्व्यतिरेकलाभः । 'उच्छेरन्तो' इति पाठेऽर्थो दर्शितः । 'उच्चेरन्तो' इति पाठे उच्चरन्नूर्ध्वं चलन् । अत्र हारच्छेदानन्तरं विलक्षणं रतमभूत्कथय कीदृगिति व्यतिरेकः कहपदप्राधान्येनोक्तवस्तुना ध्वन्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'हे सखि, गृहद्वारं प्रविशन्ती त्वं विवलितं परावृत्तं वदनं यस्यास्तथाभूता सती पन्थानं मार्गं विलोक्य स्कन्धे घटं गृहीत्वा हा हा नष्ट इति किमिति रोदिषि । घटभङ्गस्य बुद्धिपूर्वकत्वे रोदनहेतुत्वाभावादिति भावः । रोदने नष्टत्वं हेत्वलंकारः । नाशे स्कन्धग्रहणं हेतुरिति चक्रवर्ती । अत्र हेत्वलंकारेण संकेतनिकेतं गच्छन्तं प्रियं दृष्ट्वा यदि गन्तुमिच्छसि तदापरं घटं गृहीत्वा गच्छेति ध्वन्यते । रोदनवैयर्थ्यबोधनद्वारा समीहितसाधनानुमितिसूचनार्त्किंतिपदस्य प्राधान्यं बोध्यम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

२ 'हे सखि, त्वां विश्रृङ्खलां व्याकुलां अतएव तरलतरा अतिशयेन तरला चञ्चला दृष्टिर्यस्यास्तथाभूतां दृष्ट्वा कुटेन घटेन द्वारस्पर्शस्य मिषेण व्याजेनात्मा स्वस्वरूपं गुरुको

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशसमये पश्चादागतं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन त्वया घटः स्फोटित इति मयावगतम्। तत्समाश्वासं विधाय समीहितसिद्धये व्रज। अहं तव श्वश्रूनिकटे सर्वं समर्थयिष्य इति वस्तु द्वारस्पर्शमिषेणेत्यपह्नुत्या वारम्फंसमिसेण्त्ति पदेन द्योत्यते।

अलंकारेणालंकारस्य यथा—

'जोह्णाएँ महुरसेण अ विइण्णतारुण्णउसुअमण्णा सा।
वुड्ढा वि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम्॥'

अत्र परवधूत्वेन सा तव हृदयं हरतीति काव्यलिङ्गालंकारेणास्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदाचरितं वक्तुं न शक्यत इत्याक्षेपालंकारः प्राधान्येन परवधूपदद्योत्यः प्रकाश्यते।

शब्दार्थोभयशक्तिमूलस्तु पदप्रकाश्यो न भवति। तत्र वाक्यस्यैव प्राधान्यात्। एवं पञ्चत्रिंशद्भेदाः।

**प्रबन्धेऽप्यर्थशक्तिभूः ॥ १९ ॥**

---

दृष्टिम्। द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः। **जोह्णाए इति**। 'ज्योत्स्नया मधुरसेन च वितीर्णतारुण्यौत्सुक्यमनाः सा। वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम्॥' **आक्षेपेति**। अत्र त्वदीयमाचरितं वक्तुं न शक्यत इति द्योतनफलो वक्ष्यमाणस्य त्वयैवं कर्तुं न योग्यमित्यादिवचनस्य निषेधरूपो य आक्षेपालंकारस्तस्य द्योतनमभिप्रेतम्। 'निषेधो वक्तुमिष्टस्य' इत्यादिना तथा वक्ष्यमाणत्वात्। **तत्र वाक्यस्यैवेति**। परिवृत्तिसहतदसहानेकपदरूपस्येत्यर्थः। **एवमिति**। उभयशक्तिमूलस्य पदव्यङ्ग्यानन्तर्गतावित्यर्थ.। पूर्वोक्ता वाक्यप्रकाश्या अष्टादश। उभयशक्तिमूलरहिता. पदप्रकाश्याः सप्तदश। इत्येवं पञ्चत्रिंशदित्यर्थः। मेलकं समूह.। गमनं निवर्तनं चेति द्वन्द्व'। रचनायां वैदर्भ्यादिसञ्ज्ञिकायामष्टमे

---

गुरुरिति हेतोः पातयित्वा विभिन्नो विभेदित इत्यर्थः। अन्तर्भूतण्यर्थत्वात्। नाय द्वारस्पर्शोद्घटनाश.। किंतु गुरुतया परपीडकत्वाद्घटेनैव स्वात्मा विभेदित इत्यपह्नुतिः। अत्रोक्तापह्नुत्या पूर्ववद्वस्तुध्वनि'। पूर्वत्र हेत्वलंकारस्य प्रौढोक्तिसिद्धत्वाभावादुदाहरणान्तरोक्ति.।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'गतयौवनान्यनायिकाप्रसक्त स्वामिनमुपहसन्त्या नायिकाया इयमुक्ति। अहह खेदे। वृद्धापि सा नायिका ज्योत्स्नया मधुनो मद्यस्य रसेनास्वादेन च वितीर्णं दत्त यत्तारुण्यं तेनोत्सुकमर्थाद्रते मनो यस्यास्तथाभूता सती नवोढेव तव हृदय हरति। यतः परवधूः। परनायिकात्वेनैव तव चित्त हरति नतु सौन्दर्यादिनिमित्तान्तरमस्तीति भावः। तदेतत्काव्यलिङ्गम्। ज्योत्स्नामधुरसाभ्या दत्त तारुण्यं हृदयहरणे हेतुरिति काव्यलिङ्गमिति चक्रवर्तिनः। आक्षेपे परवधूत्वस्य प्राधान्येन प्रयोजकत्वात्तत्पदप्राधान्यम्।' इत्युदाहरणचन्द्रिकासंक्षेप.. २. 'वाच्यस्यैव' ख.

अर्थशक्तिमूलः पदवाक्ययोः प्रबन्धे च । प्रबन्धश्च संघटितनानावाक्यसमुदायः । स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्चेति । तत्र पदवाक्ययोरुदाहृतम् । प्रबन्धे यथा गृध्रगोमायुसंवादादौ । तथा हि—

'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
कङ्कालबहले घोरे सर्वप्राणिभयंकरे ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ।'

इति दिवा प्रागल्भ्यवतो गृध्रस्य मृतावेक्षकपुरुषविसर्जनपरं वाक्यमेलकम् ।

'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥'

इति निशि प्रगल्भस्य गोमायोस्तद्व्यावर्तनपरं श्लोकद्वयमिति प्रबन्ध एव

---

१ 'अलमिति । महाभारते शान्तिपर्वणि मृत बालं संध्यासमये श्मशाने समानीत द्वा दिवसे समर्थस्य रात्रावन्धस्य गृध्रस्य तद्बन्धुविसर्जनार्थमियमुक्तिः । हे जनाः, अस्मि श्मशाने स्थित्वा अलं पूर्यताम् । कीदृशे । गृध्रैर्मांसादैः पक्षिविशेषैर्गोमायुभि श्रृगालैश्च कुले व्याप्ते । तथा कङ्कालान्यस्थीनि बहलानि यत्र एवभूते घोरे दारुणे अतएव सर्वेषा ाणिना भयकरे त्रासजनके । तथा च प्रयोजनाभावे एवंविधे स्थले स्थितिरनुचितेत्यर्थ' । ननु तस्यापि पुनरुज्जीवन संभाव्यत इत्यत आह—न चेहेति । इह ससारे कालधर्म मरणमुपा त' प्राप्त प्रियो वा द्वेष्यः शत्रुर्वा कश्चिदुदासीनो वा न जीवितः । तथा चैतदसभावित मित्यर्थः । समाधानायाह—प्राणिना ससारिणामीदृशी प्राणोत्क्रमणरूपा गति. स्वभावः । व च स्वभावस्य दुरतिक्रमत्वान्मोहो न कार्य इति भाव. ।' इत्युदाहरणचन्द्रिका सक्षेपः.
२ 'आदित्योऽयमिति । रात्रौ समर्थस्य गोमायोर्जनव्यावर्तनार्थमुक्ति. । हे मूढा मूर्खा', अयमादित्य सूर्यः स्थितः । अस्तीति शेष. । तथा च रात्रिचरेभ्यो भयमधुना नास्तीति भाव' । अत' साप्रतमधुना स्नेह सविधस्थितिरूप कुरुत । स्नेह जीवनोपायानुष्ठानलक्षणमिति दीपिकायाम् । मृतस्य जीवनासभवादफलमवस्थानमित्याशङ्क्याह—बहुविघ्न इत्यादि । अय सध्यात्मको मुहूर्तो बहुविघ्न' राक्षसवेलात्वाद्भूतावेशादिरूपविघ्नबहुल. । तथा चैतन्मुहूर्तापगमे तद्विघ्नोपशान्तौ कदाचन जीवेदपीति सभावनायामपिशब्दः । एव जीवनसभावनामुत्पाद्य मोहयितुमाह—अमुमिति । हे मूढा', गृध्रस्य वाक्यात्पूर्वोक्तादविशङ्किताः कथमकस्मात्त्याज्योऽय बाल इति विचाररहिता विश्वस्ता वा अमुं बालं कथ त्यजध्वमित्यार्षमात्मनेपदम् । कीदृश बालम् । कनकवर्णवदाभा यस्य तथाभूतम् । नतु कनकाभम् । तदा कनकगतकाठिन्यस्यापि प्रसङ्गात् । तथा न प्राप्तमासादित यौवन येन तम् । अत्र बालत्वेन मृत्युकालाभाव., कनकेत्यनेन मृत्युचिह्नवैवर्ण्याभाव', अप्राप्तेत्यनेन परदाराभिगमनादिराहित्येनायु सत्त्व च सूच्यते । मूढा इत्यत्र 'बाल.' इति क्वचित्पाठः । तत्राविवेचका इत्यर्थः । अत्रोदाहरणद्वये क्रमेण जनविसर्जनव्यावर्तनयो. प्राधान्येनाभिव्यक्ति ।' इत्युदाहरणचन्द्रिकासक्षेप .

व्यञ्जकः प्रथते । अत्र स्वतःसंभविना वस्तुना गमननिवर्तनरूपवस्तुव्यक्तिः । एवमन्येऽप्येकादश प्रभेदा द्रष्टव्याः ।

## पदैकदेशरचनावर्णेष्वपि रसादयः ।

रसादयो लक्ष्यक्रमाः पदैकदेशे रचनायां वर्णेषु । अपिशब्दात्प्रबन्धे । पदवाक्ययोस्तु 'पदेऽप्यन्ये' इत्यनेनैव प्रतिपादिताः । पदं तावद्द्विविधम्, सुबन्तं तिङन्तं च । तदेकदेशो नामधातुस्वरूपप्रकृतिभागः प्रकृत्येकदेशः सुप्तिङ्स्वरूपविभक्तिभागश्च उपसर्गादिरूपश्च । तत्र पदवाक्ययोरुदाहृतं प्राक् । पदैकदेशादिषूदाह्रियते । तत्र धातुरूपप्रकृत्यात्मकपदैकदेशे रसादिव्यक्तिर्यथा—

'रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ ॥'

अत्र रतिव्यक्तौ 'जि'धातुरूपप्रकृतेः प्राधान्यम् । यतः स्थगनव्यापारसाम्येऽप्यन्यनेत्रयोः कराभ्यां पिधानमस्य तु लोकोत्तरेण कर्मणेति तदेवोत्कृष्टं धन्यजीवितमिति रत्युत्कर्षप्रयोजकमनया व्यज्यते । अतएव जयतीत्युक्तम्, न तु शोभत इत्यादि । एवमग्रेऽपि प्रकृत्यादे रसादिव्यञ्जने प्राधान्यं तत्तदर्थव्यञ्जकतयावगन्तव्यम् ।

नामरूपतदेकदेशे तद्व्यक्तिर्यथा—

'प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।

---

वक्ष्यमाणायाम् । वर्णेषु 'मूर्ध्नि वर्गान्त्यगा स्पर्शाः' इत्यादिना तत्रैव वक्ष्यमाणेषु । उपसर्गादीत्यादिना वक्ष्यमाणनिपातादिसंग्रहः । **रईति** । 'रतिकेलिहृतनिवसनकर-

---

१ रईति । रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं सज्जयति सर्वोत्कृष्टं भवति । कीदृशस्य रुद्रस्य । रतिकेलौ सुरतक्रीडायां हृतं निवसनमर्थाद्गौरीसंबन्धिवासो येन स चासौ करकिसलयाभ्यां करपल्लवाभ्यां रुद्धं पिहितमर्थाद्गौर्या नयनयोर्युगलं द्वन्द्वं यस्य तथाभूतस्येति बहुव्रीहिद्वयोत्तरं कर्मधारयः । रतिकेलिहृतनिवसनायाः करकिसलयाभ्यामित्यादिविग्रहे निवसनेत्यत्र ह्रस्वानुपपत्तेः । अत्र जिधातुरूपप्रकृत्या पदैकदेशस्य प्राधान्यम् । तथा च करद्वयस्य नेत्रद्वयपिधानव्यापृततया अलौकिकचुम्बनपिधानवत्तया तृतीयनयनस्योत्कृष्टत्वमुच्यमानं रागातिशयहर्षलज्जादिसंपत्तिमुखेन रसातिशयं पुष्णाति ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'प्रेयानिति । सशपथमिति मध्यमणिन्यायेनोभयत्र संबध्यते । सोऽयं परमप्रेमास्पदत्वेन प्रसिद्धः प्रेयान्प्रियः शपथेन सहितं यथा स्यात्तथा पादयोरानतः प्रणतः कान्तया सशपथमपाकृतो निराकृतः सन्नुन्मना उत्सुकमनाः सन्वासभवनाद्वासगृहात् । 'रास' इति पाठे क्रीडागृहात् । द्वित्राण्येव नाधिकानि पदानि न द्वाराणि यावन्न याति तावद्द्वावित्यैव प्रत्युत विपरीतं कृतः प्रणामो यत्र तद्यथा स्यात् । पूर्वं प्रणतस्यापाकरणमधुना प्रणामपूर्वकं धरणमिति वैपरीत्यम् । तथा गलंश्चासौ नीवीनिबन्धश्च स तथा पाणिसंपुटे प्रणामार्थं बद्धाञ्जलौ गलन्नीवीनिबन्धो यत्र तद्यथा स्यात्तथा धृतः । रागौत्कण्ठ्याद्गलतो नीवीबन्धस्य प्रणा-

तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥'

अत्र द्वारादिपदं परिहृत्य पदानीत्युक्तम् । तेन द्वारपर्यन्तगमनेऽप्यसहिष्णुतयोत्कण्ठातिशयो व्यज्यते ।

तिङ्सुपोर्यथा—

'पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक्सायकान्पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥'

अत्र किरतीति तिङा किरणस्य साध्यता तिङ्योगे साध्यतयैव धात्वर्थोपस्थितेः। निवृत्तेति सुप्प्रत्ययेन निवृत्तेः सिद्धता । सुप्प्रयोगे तथैव प्रकृत्यर्थप्रतीतेः । तत्रापि क्तप्रत्ययेनातीतता प्रकाश्यत इति किरणनिवृत्त्योः पौर्वापर्यविपर्ययरूपातिशयोक्तिप्रकाशो रसोत्कर्षे पर्यवस्यति । यत्तु 'लटा साध्यत्वम्, क्तप्रत्ययेन भूतत्वम्' इति व्याख्यातम्, तदयुक्तम् । सुप्तिङ्भ्यां सिद्धत्वसाध्यत्वमभिधाय 'तत्रापि क्तप्रत्ययेनातीतत्वम्' इत्यनेन वृत्तिव्याख्यानेन विरोधात् ।

---

किसलयरुद्धनयनयुगलस्य । रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥' अनया 'जि' धातुरूपप्रकृत्या । **अतीततेति** । अत्र मानचर्चानिवृत्तेरतीतोत्पत्तिकत्वस्य ध्वस्त इत्यादाविव क्तप्रत्ययवाच्यत्वेऽपि निवृत्तिगतमात्यन्तिकत्वं स्वसमानाधिकरणमानचर्चासमानकालिकत्वरूपं क्तप्रत्ययव्यङ्ग्यमिति तात्पर्यम् । **रसोत्कर्ष इति** । वसन्तस्योद्दीपकत्वप्रकर्षादिति भाव । **यत्त्विति** । भूतत्वं सिद्धत्वमभिमतम् भूतभ-

---

माञ्जलिनैवालम्बनम् । केचित्तु 'पाणिसंपुटेत्यादि धावनक्रियाविशेषणम्' इत्याहु । 'लसत्' इति पाठे स्वार्थिकं गलनम् । अहो विस्मये । गतिः स्वभाव. । अत्र प्रयान्कान्तयेत्येताभ्या परस्परविरहाक्षमत्वं ध्वन्यते । क्वचित् 'सायं' इति पाठ . अत्र पदेतिनामरूपप्रकृत्यात्मकपदैकदेशस्योत्कण्ठातिशयपर्यवसायितया प्राधान्यम् ।' इत्युदाहरणचन्द्रिकासक्षेप'.

१. 'पथीति । पथि पथि मार्गे मार्गे अङ्कुराणामाभा कान्ति. शुकचञ्चूनमिव चारुर्मनोहरा । अस्तीति शेषः । 'रम्भा' इति पाठे शुकचञ्चुवच्चारूणा रम्भाङ्कुराणा कदल्यङ्कुराणा लासक इत्यन्वयः । पवमानो वायुर्दिशि दिशि प्रतिदिशं वीरुधा लताना लासको नर्तकश्चास्तीति नूतनाङ्कुरशोभाशालिवसन्तर्तुसर्वदिक्संचारिमन्दमारुतयोरुद्दीपकयो संपत्तिरुक्ता । तत्कार्यमाह—नरीति । नृशब्दस्य सप्तम्या रूपम् । पुष्पं धनुर्यस्य तथाभूत कामो नरि नरि प्रतिमनुष्यं द्राक् शीघ्रं सायकान्पञ्चापि बाणान्किरति क्षिपति । एवं कामोद्दीपने सति पुरि पुरि नगर्यां नगर्यां मानिनीना मानवतीना मानस्य चर्चा प्रसङ्गो विनिवृत्तः । विशेषेण निवृत्त इत्यर्थ' । अत्र किरति निवृत्तेति तिङ्सुपो प्रत्ययात्मकपदैकदेशयो क्रमेण प्रत्ययार्थगतसाध्यत्वसिद्धत्वाभिव्यक्तिद्वारा रत्युद्दीपनातिशयपर्यवसानात्प्राधान्यम् ।' इत्युदाहरणचन्द्रिकासक्षेप'. २. 'सुप्प्रयोगे' क·ग

अथ सुप्तिङ्विशेषेषु यथा—

'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना॥'

अत्र लिखन्नित्युक्तम्, न तु लिखतीति। तेन शत्रा लिखनस्याप्राधान्यमबुद्धिपूर्वकत्वरूपम्। आस्त इत्युक्तम्, न त्वासीदिति। तेन तथावस्थानस्य प्रसादपर्यन्तता तिङ्विभक्त्या व्यज्यते। यद्यपि शतृप्रत्ययः सुपः प्रकृतिरेव तथापि तिङादेशिलङ्कृतितया तिङ्त्वेनैवोदाहृतः। भूमिमित्युक्तम्, न तु भूमाविति। तेन बुद्धिपूर्वकं भूमौ न किंचिल्लिख्यत इति सुब्विभक्त्या व्यज्यते।

'गामारि अम्हि गामे वसामि ण अरिट्ठिइं ण आणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि॥'

---

व्यसंमुच्चारण इत्यादिवत्। अत्र क्तप्रत्ययेनातीतत्वप्रकाशनस्य सुपा सिद्धत्वाभिधानस्य चानुवृत्तेर्वृत्तिविरोध इत्याशयः। **अबुद्धिपूर्वकत्वरूपमिति**। स्वगतेष्टसाधनताबुद्धिपूर्वकत्वाभावरूपं क्रियान्तरेष्टसाधनत्वज्ञानाधीनकृतिसाध्यत्वपर्यवसितमित्यर्थः। तेन बुद्धिपूर्वकमित्यत्र तु भिन्नमेवाबुद्धिपूर्वकत्वं पूर्वोक्तादिति ज्ञेयम्। **गामेति**। 'ग्रामीणास्मि ग्रामे वसामि नगरस्थितिं न जानामि। नागरिकाणां पतीन्हरामि या

---

१. लिखन्निति। बहुदिनव्यापिमानवती प्रति सख्या इयमुक्तिः। हे कठिने कठिनहृदये, तव प्राणा इव दयितः प्रियोऽवनतो नम्रो बहिर्बाह्यशालाया भूमिं लिखञ्शून्यहृदयतया विलिखन्नास्ते उपविष्टोऽस्ति। तथा सख्यः सर्वा निर्गत आहारो यासां तास्तथाभूताः सत्यः सततं निरन्तरं यद्रुदितं रोदनं तेनोच्छूने जातशोथे नयने यासां तथाभूताः। सन्तीति शेषः। तथा पञ्जरस्थैः शुकैः सर्वं हसितयुक्तं पठितं परित्यक्तम्। तव चेयमवस्था दृश्यमानात्यन्तक्षीणतरा विशिष्य वक्तुमशक्या। अतोऽधुना ईदृशातिशये सति मानं विसृज त्यजेत्यन्वयः। अत्र शुकेऽपि हास्यवर्णनं न विरुद्धम्। 'विहायसा तेन विहस्य भूयः' इति नैषधादौ दर्शनादित्याहुः। अत्र लिखन्निति शतृप्रत्ययेन यावदुपवेशनकालिकत्वं लिखनस्य व्यज्यते। एवमास्त इति वर्तमानत्वार्थकात्मनेपदरूपतङा उपवेशनस्य प्रसादरूपफलपर्यन्तत्वम्। आसित इत्युक्तौ तदलाभात्। भूमिमिति द्वितीयया तस्या एव लिखनकर्मत्वावगमाद्बुद्धिपूर्वकलिखनाभावव्यक्तिः। विधान्तरेण व्यञ्जकत्वोपदर्शनायोदाहरणान्तरोक्तिः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'गामेति'। कलहे का त्वमसीत्यधिक्षिपन्ती नागरिकस्त्रियं प्रति ग्राम्यस्त्रिया इयमुक्तिः। 'गामरुहम्मि' इति पाठे ग्रामरुहा ग्रामजातास्मि। वसामि तिष्ठामि। नगरस्थितिं वैदग्ध्यरूपां मर्यादाम्। नागरिकाणामित्यनादरे षष्ठी। तथा च नगरे भवा नागरिका अनादृत्य तासां पतीन्हरामि। वशीकरोमीत्यर्थः। पतिकर्तृकेऽपि तासामनादरे एतस्याः प्रयोजककर्तृत्वमवसेयम्। यद्यपि 'षष्ठी चानादरे' इत्यनुशासनाद्वाच्य एव सः तथापि तद्बोधनद्वारा गर्वरूपव्यभिचारिभावव्यञ्जकत्वं विवक्षितमक्षतमेव। अतएव पदैकदेशेत्यादौ रसादय इत्येवोक्तम्। एवं सर्वत्रैवंविधस्थले द्रष्टव्यमिति दिक्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र नागरिकाणामिति षष्ठ्या पतिपदार्थे तादृशकलाभिज्ञतादिरूप उत्कर्षः प्रकाश्यते । 'रमणीयः क्षत्रियकुमार आसीत्' इत्यत्र लुङातीतकालविहितेना-चिरं तदीयहिंसायाः सुकरत्वं व्यञ्जयता प्राधान्येन धूर्जटिधनुर्भङ्गजन्मा भार्गव-क्रोधः प्रकृष्यते ।

वचनविशेषो यथा—

'ताणँ गुणग्गहणाणं ताणुक्कण्ठाणँ तस्स पेम्मस्स ।
ताणँ भणिआणँ सुन्दर एरिसिअँ जाअँ अवसाणम् ॥'

अत्र गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारत्वेऽपि कार्यं प्रेम एकजातीयमेव न कदाचिदन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते ।

पुरुषव्यत्ययस्य व्यञ्जकत्वं यथा—

'रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥'

अत्र त्वं मन्ये अहं विहरिष्यसे इति 'प्रहासे च मन्योपपदे मन्यतेरुत्तम

---

नवामि सा भवामि ॥' **अत्रेति** । नागरिकनायिकासंबन्धित्वेन तत्पतिषु वैदग्ध्यं तद्व्यञ्जकत्वेन स्वस्मिंस्तदित्यर्थः । षष्ठ्या अनादरार्थत्वपक्षेऽपि तद्द्वारा वैदग्ध्यव्यञ्जनमेव ज्ञेयम् । **ताणँ इति** । 'तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः । तेषां भणितानां सुन्दरं ईदृशं जातमवसानम् ॥' पूर्वनिपातादय इत्यादिपठेन

---

१. 'ताणँ इति । 'ईरिसिअ' इति पाठे ईर्ष्यितमिति ज्ञेयम् । सापराध दयितं प्रति कुपिताया इयमुक्तिः । हे सुन्दर, विशिष्यानिर्वाच्यानां नानाविधानां गुणग्रहणानां तासामसांनिध्ये उत्कण्ठानां तस्य प्रेम्णः तेषां भणितानां त्वमेव जीवितसर्वस्वमित्यादीनां वचनानामीदृगेवंविधापराधकलुषितमवसानं पर्यवसानं जातमित्यन्वयः । ईर्ष्यितं सञ्जातेर्ष्यमिति पाठान्तरेऽर्थः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'रे रे इति । शान्तस्य स्वचित्तं प्रति साक्षेपसंबोधनमिदम् । चञ्चललोचनायामञ्चिता गमिता रुचिरभिलाषो येन तथाभूतेति चेतोविशेषणम् । चञ्चलाभ्यां लोचनाभ्यामञ्चिता आविष्कृता रुचिर्यो-नायिकायामस्येति चण्डीदासः । रे चेत, एणनयनां हरिणाक्षीमालोक्य स्थिरं प्रेम यत्र तादृशं महिमानं माहात्म्यं स्थिरतारूपं प्रमुच्य त्यक्त्वा किं कस्मान्नृत्यसि । नर्तकवद्धर्षादुल्लोलं भवसीत्यर्थः । हेतुमाशङ्क्य निराकर्तुमाह—किं मन्ये इति । किं मन्यसे विहरिष्यामीत्यर्थः । बत खेदे । हतां निन्दितामिमामन्तर्विद्यमानामाशां मुञ्च त्यज । खलु यत एषा उपदर्शिता आशा । स्त्रीति कश्चित् । संसार एव वारांनिधिः समुद्रस्तस्मिन्कण्ठतटे कृता बद्धा शिला मज्जनहेतुत्वात्तद्रूपा । भवतीति शेषः । इत्थं च परिणामविरसत्वाद्धर्षो न युक्त इति भावः । अत्र मन्य इति पुरुषव्यत्ययेन प्रहासो व्यज्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

एकवच' इतिसूत्रेण युष्मदस्मदोर्योगे उत्तममध्यमयोर्विपर्ययेण विधानं प्रहास-मभिव्यनक्ति।

पूर्वनिपातादयः पदैकदेशधर्मत्वात्पदैकदेशा एव गण्यन्ते। पूर्वनिपातस्य यथा—

'येषां[1] दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः।
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥'

अत्र चाटुके पराक्रमनयेत्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपातमभिधाय पराक्रमस्य तथाभावोऽभ्यर्हितत्वं द्योतयति।

उपपदविभक्तिविशेषस्य यथा—

'प्रधनाध्वनि[2] वीरं[3] धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नरप भवानयुद्धविधिसिद्धसाधुवादपदम्॥'

अत्र वीररसात्मनि भवान्दिवसेनायुद्धेति 'अपवर्गे तृतीया' अपवर्गश्च फलप्राप्तौ क्रियापरित्यागः। अतो भवत्पदार्थस्य युद्धरूपक्रियाया यत्फलं विजयस्तत्प्राप्तिस्तृतीयया द्योत्यते। यस्तु 'युद्धविधीत्यादि क्रियाविशेषणम्' इति व्याख्यातवान्स च्छन्दोभङ्गमपि नाज्ञासीदिति।

प्रत्ययरूपस्य प्रकृत्यैकदेशस्य यथा—

'भूयो[4] भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।

---

१. 'येषामिति। येषा राज्ञा दोर्बलं बाहुबलमेव। एवकारेण नीतिबलव्यवच्छेदः। ते राजानो दुर्बलतया निर्बलत्वेन संमता॰। नीतिज्ञानाम्। वृद्धानामिति शेषः। तैर्दोर्बलमात्रशरणै॰ केवलनीतिरीतिशरणैश्चोर्वीश्वरैः पृथ्वीश्वरैः प्राय॰ किं कार्यम्। न किमपीत्यर्थ॰। समुच्चयार्थकस्यापिशब्दस्य भिन्नक्रमतया योजनात्। नीतिर्नीतिशास्त्रम्। तदुक्तवृत्तिप्रकारो रीति॰। हे क्ष्माशक्र पृथ्वीन्द्र, ये पुनः पराक्रमनययोः स्वीकारेण कान्तो रमणीय क्रमो व्यवसायो येषा तथाविधास्ते त्रिजगति भुवनत्रयेऽपि नैव स्युर्न स्युरेव। यदि वा स्युस्तदा पर केवल भवादृशा भवत्तुल्याः पवित्रा द्वित्रा॰। न बहव इत्यर्थ॰। अत्र पराक्रमस्य पूर्वनिपातस्तदर्थस्याभ्यर्हितत्व गमयति। 'अभ्यर्हितं पूर्वम्' इत्यनुशासनात्।' इत्युदाहरणचन्द्रिकासंक्षेप॰. २ प्रधनेति। हे वीर, धनुषो ध्वनिं टंकाररूप बिभर्तीति धनुर्ध्वनिभृत् तथाभूते। प्रधन युद्धमेव प्रनेशनि॰सरणहेतुत्वादध्वा मार्गस्तस्मिंस्तव विधुरैः शत्रुभिर्दिवस व्याप्यायोधि युद्धमकारि। हे नरप नरान्पाति रक्षतीति तथाभूत, भवांस्तु दिवसेन विधिना विधानेन सिद्धस्य न तु कृत्रिमस्य साधुवादस्य कीर्ते॰ पद स्थान यथा स्यात्तथा अयुद्ध। युद्ध कृतवानित्यर्थ। अत्र दिवसेनायुद्धेत्यनेन 'अपवर्गे तृतीया' इत्यनुशासनादवगतो युद्धक्रियासमाप्तिरूपोऽपवर्गो युद्धफलस्य विजयस्य प्राप्तिं द्योतयति। क्रियायाः फलापवर्गित्वादिति ध्येयम्।' इत्युदाहरणचन्द्रिकासंक्षेप. ३. 'धीर' ख. ४. 'भूयो भूय' इति। मालतीमाधवे 'कथित च नो मालतीधात्रेय्या लवङ्गिकया' इति चूर्णिकामनुक्रम्य कामन्दकी॰

साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठालुलितललितैरङ्गकैस्ताम्यतीति ॥'

अत्राङ्गकैरिति कस्वरूपतद्धितेनाल्पार्थकेनानुकम्पातिशयो व्यज्यते ।

उपसर्गरूपस्य तदेकदेशस्य यथा—

'परिच्छेदातीत' सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपदं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥'

अत्र प्रध्वंसादिति प्रशब्दः प्रकृत्येकदेशः प्रकर्षद्योतकः । उपसर्गाणामवाचकत्वात् ।

---

पूर्वोक्तपुरुषव्यत्ययस्य परिग्रह । **उपसर्गरूपस्येति** । तदेकदेशस्य पदैकदेशस्य। प्रकृत्यन्तर्गतत्वाभावात्कथ प्रकृत्येकदेशत्वमत आह—**प्रकर्षेति** । प्रकृत्यर्थ एवास्याप्यर्थ इति पृथगर्थाभावात्तदन्तर्भूत एवेत्यर्थ । पृथगर्थाभावमेवाह—**उपसर्गाणामिति** । चकारस्य पृथगर्थत्वात्कथमेकदेशतेति शङ्कते—**यद्यपीति** । अनुशास्तीत्यस्य शास्त्रमिति शेष । उपसर्गाणा वाचकत्वपक्षेऽप्येकदेशत्वमुपपाद-

---

वचनमिदम् । यन्मालती गाढया दृढयोत्कण्ठया औत्सुक्येन लुलितैर्म्लानै· सद्भिर्ललितैर्मनोहरैरङ्गकैस्ताम्यति ग्लायतीति मालत्या धात्रीपुत्र्या लवङ्गिकया कथितमिति चूर्णिकावाक्येनान्वयः । किं कृत्वा । भूयो भूयो वारवार सविधया निकटस्थया नगरीसम्बन्धिन्या रथ्यया राजमार्गेण पर्यटन्त गच्छन्तं नव युवान माधव रतिः काममिव साक्षात् नतु चित्रादौ दृष्ट्वा दृष्ट्वा पुन·पुनरवलोक्य । तेन रागौत्कण्ठ्यलाभ' । किंभूता मालती । भवनस्य वासगृहस्य सबन्धिनी या वलभी उपरितनमण्डपस्तदीये तुङ्गे उच्चे वातायने गवाक्षे तिष्ठतीति तथाभूता । न तु रथ्यासलग्नगृहान्तरवलभीवातायनस्था तत्र स्थितं पश्यति । पश्यन्ती मामय पश्येदिति शङ्कया वातायने शरीरस्यानर्पणात् । 'ललितललितै' इति पाठेऽतिमनोरमैरित्यर्थ· । अत्रानुकम्पाया कप्रत्ययविधानात्तद्व्यङ्ग्येन सौकुमार्येण दु खासहिष्णुत्वाभिव्यक्तिद्वारा विप्रलम्भोत्कर्ष" इत्युदाहरणचन्द्रिकासक्षेप .

१. 'परिच्छेदेति । मालतीमाधव एव मकरन्द प्रति माधवस्य स्वावस्थाकथनमेतत् । मम कोऽपि विकारोऽन्तरन्त·करण जडयति स्तम्भयति । विषयाग्राहक करोतीति यावत् । तथा ताप विरहसताप च कुरुत इत्यन्वय । कथभूत' । परिच्छेद इयत्ता विरामो वा तमतीतोऽतिक्रान्तः । तद्रहित इत्यर्थ । तथा सकलाना शक्तलाक्षणिकव्यञ्जकाना वचनाना शब्दानामविषय । शक्त्या लक्षणया व्यञ्जनयापि वा प्रतिपादयितुमशक्यत्वात् । पुन'-शब्दोऽत्र कालान्तरमात्रे, न त्वावृत्तौ । तस्या औत्तरकालिकपदार्थाश्रितत्वात् । तथा च यो विकारोऽस्मिञ्जन्मनि पुनरन्यदानुभवपथमनुभवगोचरत्व न गतवानित्यर्थ· । 'पुनरिति त्वर्थे । अस्मिञ्जन्मनि त्वनुभवपथ न गतवानित्यर्थ·' इति केचित् । पुन कीदृक् । विवेकस्य गुणदोषविषयस्य प्रध्वसान्नाशादुपचितेन प्रवृद्धेन महता मोहेन विपरीतज्ञानेन गहनो

निपातरूपपदैकदेशस्य यथा—

'कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम्॥'

अत्र चद्वयेन मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपः समुच्चयो द्योत्यते। यद्यपि चेति भिन्नमेव पदम्, न त्वन्यस्यैकदेशस्तथापि केवलस्य तस्यासाधुत्वात्पदैकदेशत्वोपचारेणोदाहरणम्। अत एवोक्तं भोजराजेनोपमाप्रकरणे—'नहीवादेः सार्थकत्वेऽपि पृथक्पदतामनुशास्ति' इति। एतेन तिङन्तसमभिव्याहृता उपसर्गा अपि व्याख्याताः।

अथ बहूनां यथा—

'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदिपरं देवो न जानाति तम्।

---

व्याप्त इत्यर्थः। अत्र प्रशब्देन समूलोन्मूलनलक्षणः प्रकर्षस्तद्द्वारा वा मोहप्रकर्षो व्यज्यते तेन रागातिशयस्तेन च विप्रलम्भातिशय इति ज्ञेयम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. कृतं चेति। नृपं प्रति मन्त्रिण उक्तिः। हे राजन्, त्वया मनो गर्वस्याभिमुखं न तु गर्वितं कृतं च किमन्यत्। अपेक्षितमिति शेषः। एवं शस्त्रप्रयोगादिकं विना नोऽस्माकं द्विषः शत्रवो निहताश्च। न तु निहनिष्यन्ते। दृष्टान्तमाह—तमांसीति। अंशुमान्सूर्यो यावदुदयाद्रेर्मौलिता शिरोलंकारता नायाति तावदेव तमांसि तिष्ठन्ति। तस्मिंस्तु तथाभूते न तिष्ठन्तीति वैधर्म्येण दृष्टान्तः। अत्र चकाराभ्यां स्वसमभिव्याहृतक्रिययोस्तुल्यकालतारूपः समुच्चयस्तद्द्वारा वा वीरप्रकार्षो ध्वन्यते।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'रामोऽसाविति। राघवानन्दे रावणमुद्दिश्य कुम्भकर्णवचनम्। असौ खरदूषणादिहन्तृत्वेन प्रसिद्धो रामो भुवनेषु न तु यत्रकुत्रचित् विक्रमसंबन्धिभिः संधिविग्रहादिभिस्तत्प्रमुखैर्वा वैर्यादिभिर्गुणैर्न तु दोषैः परामुत्कृष्टां प्रसिद्धिं प्राप्तः। यदिपरमित्यखण्डो निपातोऽवधारणार्थः। तं रामं देवो भवान्यदिपरं केवलमस्माकं सर्वेषां भाग्यस्य विपर्ययाद्दुर्भाग्यत्वेन परिणामान्न जानाति, न तु भाग्याभावात्। तस्मिन्हि सति सत्फलाभावमात्रम्, न त्वसत्फलम्। दुर्भाग्यात्त्वसत्फलमिति विपर्ययपदद्योत्यम्। तं देवो जानात्येव। यदि न जानाति तदा परं केवलं भाग्यविपर्ययादिति वार्थः। 'यदि पुनः' इति पाठेऽयमेवार्थः। प्रसिद्धिहेतुभूतविक्रमगुणोदाहरणमाह—वन्दीवेति। एष मरुद्वायुर्बन्दी वैतालिक इव सप्तभिः स्वरैः षड्जाद्यैर्यस्य यशांसि गायतीत्युत्प्रेक्षागर्भम्। कीदृशैः। एकबाणाहतौ तन्निमित्तं श्रेणीभूतानां विशालानां विस्तृतानां तालवृक्षाणां विवरै रन्ध्रैरुद्गीर्णाः प्रकाशितास्तैस्तथाभूतैः। एकबाणस्याहतिर्यत्र एवंभूता इति तालविशेषणम्।' इति केचित्। 'एकबाणाहत' इति सम्यक्पाठः। रामेण सुग्रीवप्रत्ययाय विसंष्ठुलाः सप्तताला एकबाणेन भिन्ना इत्याख्यानम्। अत्रासाविति सर्वनाम्नः भुवनेष्विति गुणैरिति वचनप्रातिपदिकवचनम्। अस्मादिति सर्वाक्षेपिणो भाग्यविपर्ययादित्यन्यथा परिणाममुखेनाभिधानस्य च व्यञ्जकत्वं सहृदयवेद्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥'

अत्रासाविति सर्वनाम्नः । भुवनेष्विति न तु देशेष्विति । भुवनेषु(ष्व)ति भुवनरूपप्रातिपदिकस्य बहुवचनस्य च विक्रमगुणैरिति न तु गुणेन दोर्ष्णेति प्रातिपदिकवचनयोर्व्यञ्जकत्वम् । किंचास्मद्भाग्येत्यत्र न त्वद्भाग्येति न वा मद्भाग्येति कृतम् । तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वाक्षेपकत्वम् । तथा ग्यविपर्ययादित्यन्यथा संपत्तिमुखेनोक्तम्, न त्वभाग्यादित्यभावमुखेन । तस्तथाविधानेनाभाग्यविरहेऽपि भाग्यान्येव तादृशत्वेन परिणतानीति व्यज्यते।

'तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥'

अत्र तरुणिमनीति इमनिचस्तरुणत्वपदेन, अनुमदनधनुरित्यव्ययीभावस्य नुःसमीप इत्यनेन, मौलिमधिवसतीति कर्मभूताधारस्य मौलौ वसतीत्यनेन तुल्यत्वेऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकः । तत्र त्वशब्देन प्रकृत्यर्थस्य प्रौढत्वं व्यज्यते । इमनिचा तु तद्व्यतिरेको नवत्वम् । धनुषः समीप इत्यत्र धनुषोऽत्यन्तं गुणीभावः । अव्ययीभावे तु पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थस्य किंचिदेवाप्राधान्यम् । कर्मभूताधारस्थले तु व्याप्तिरवगम्यत इत्यवसेयम् । एवमन्येषामपि बोद्धव्यम् ।

वर्णरचनयोर्व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते । प्रबन्धे तु नाटकादौ रसादिव्यञ्जकत्व द्रष्टव्यम् ।

यत्तु—'पूर्वं प्रबन्धशब्देन संघटितावान्तरवाक्यसमूहोऽभिहितः । इदानीं तु संघटितमहावाक्यमित्यपौनरुक्त्यम् ।' इति कश्चिदाह । तदज्ञानात् । पूर्वं ह्यर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वम्, अत्र त्वसंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्याभावात् ।

---

यितुमाह—**एतेनेति । वर्णरचनयोरिति ।** गुणस्वरूपानवगतौ तद्व्यञ्जकनिरूपणासभवादन्यस्य चार्थस्य वर्णरचनाव्यङ्ग्यस्याभावादत्र तदनिरूपणमिति भाव । इदमेवेमनिजादिपदैकदेशाद्वर्णाना भेदकमित्यपि वदन्ति । वस्तुतस्त्वर्थविशेषेऽननुशि-

१. 'तरुणिमनीति । इय चकितस्य भीतस्य हरिणस्येव चले चञ्चले नयने यस्यास्तथाभूता नायिका सकलाना ललनाना स्त्रीणा मौलिमधिवसति । मौलौ तिष्ठतीत्यर्थः । 'उपान्वध्याङ्वस.' इत्याधारस्य कर्मसंज्ञा । कस्मिन्सति । तरुणिमनि तारुण्ये कलामुपचयं कलयत्याश्रयति सति । तथा भ्रुवोरग्रे शिष्यभूते अनुमदनधनुर्मदनधनुषो गुरुभूतस्य समीपे पठति सति । अर्थात्तत्कौशलं शिक्षति सति । केचित्तु—'कला चातुरी कलयति प्रकाशयति सतीत्यर्थः । पठतीत्यत्रापि कलामित्यनुषङ्गः' इत्याहुः । अत्रेमनिचा प्रकृत्यर्थस्य नवत्वं पूर्वपदार्थप्रधानाव्ययीभावेन च धनुषोऽनुगुणता प्रकाशयता ततोऽप्यधिकं जगद्वशीकारकौशलं भ्रूलताग्रस्य प्रत्याय्यते । मौलिमिति कर्मतया व्याप्तिसूचनद्वारा सौन्दर्यातिशय इति ज्ञेयम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

**भेदास्तदेकपञ्चाशत्**

तथाहि—अविवक्षितवाच्यस्य द्वौ भेदौ । तौ च प्रत्येकं पदवाक्ययोरिति चत्वारः । विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्यः पदवाक्यतदेकदेशघटनावर्णप्रबन्धभेदेन षड्विधः । लक्ष्यक्रमेषु शब्दशक्तिमूलस्य द्वौ भेदौ । तौ च प्रत्येकं पदवाक्ययोरिति तस्य चत्वारो भेदाः । अर्थशक्तिमूलस्य द्वादश भेदाः । ते च प्रत्येकं पदवाक्यप्रबन्धेष्विति षट्त्रिंशदस्य भेदाः । उभयशक्तिमूलस्तु वाक्य एवेति ।

**तेषां[1] चान्योन्ययोजनम् ॥ २० ॥**

**संकरेण[2] त्रिरूपेण संसृष्ट्या चैकरूपया ।**

**वेदखाब्धिवियच्चन्द्राः**

संशयेनाङ्गाङ्गिभावेनैकव्यञ्जकानुप्रवेशेन चेति त्रिविधः संकरः । उक्तप्रकारत्रयं विना संयोगः संसृष्टिः । एवमेकपञ्चाशतो भेदानामेकपञ्चाशता भेदैर्योजनमिति तावतां तावद्गुणनेन सहस्रद्वयमेकाधिका षट्शती च । संयोजनं च संसृष्ट्यादिचतुःप्रकारैरिति तावतां चतुर्भिर्गुणने दशसहस्राणि चतुरधिकानि चत्वारि शतानि च संपद्यन्ते ।

न चानुग्राह्यानुग्राहकभावेन संकरस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसंकरत्वमिति वाच्यम् । तत्र हि स्वतश्चमत्कारिण एव तस्य किंचित्परोपकारतामात्रम् । न तु शेषशेषिभाव एवेति । नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनम्, स्वस्य तु स्वेन कथं योजनेति चेत् । न । व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि संकरादिति सूत्रकर्तुराशयः ।

अत्रार्वाचीनाः—"गणनेयमयुक्ता । अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात् । तथा हि—अर्थान्तरसंक्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसंक्रमितवाच्येन योजनायाम् । एवमन्यत्रापि । तस्मात्

'एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु ।
समार्धेनासमो गुण्य एतत्संकलितं लघु ॥'

---

छत्वमेकं भेदकं वर्णरचनयोः । पदैकदेशादेरिति बोध्यम् । **स्वतश्चमत्कारिण एवेति** । यथा—'राघवविरहज्वालासंतापितशैलसह्यशिखरेषु । शिशिरे सुखं शयाना कपयः कुप्यन्ति पवनतनयाय ॥' इति पण्डितराजपद्ये जानकीकुशलावेदनेन राघव-शिशिरीकृत इति व्यङ्ग्यस्य चमत्कारिण एव सतो हनुमद्विषयकक-

---

१. क-पुस्तके 'तेषां चान्योन्ययोजनम्' अस्मादनन्तरं 'तेषामिति । भेदानामित्यर्थः ।' इत्यधिकमस्ति. २. 'संकरेणेति संशयेन' क

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत् । तथा च 'रसद्स्वाग्निमेदिन्यः' इति त्रयोदशशतानि षड्विंशत्यधिकानि जायन्ते । योगश्चतुःप्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' इति पञ्चसहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदा इत्येव ज्याय " इति वदन्ति ।

अत्र ब्रूमः—अनुभवसिद्धं तावत्पुण्ड्रकादीक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानुशयौ । तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतदाढ्येन तद्योजनम् । यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः । एवमन्यत्राप्यूह्यम् । एतदेव प्राधान्यमादाय गणना सौत्री । नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति मैवम् । अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात् तत्रोभयभेदसंकरस्वीकारात् । एतादृशे चास्थाने पदालम्बनमात्रमेव महत्पौरुषमिति सहृदयभावमास्थायालोचनीयमिति ।

शुद्धभेदैः सह

शरेषुयुगखेन्दवः ॥ २१ ॥

तेषु दिङ्मात्रमुदाह्रियते—

'छणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिदा ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥'

अत्रानुनयतेर्वाच्योऽनुनयः किमुपभोगत्वलक्षणे लक्ष्ये संक्रमितः, आहोस्विद्विवक्षित एवोपभोगस्य व्यञ्जक इत्यविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः संदेह· संकरः ।

'स्निग्धश्यामलकान्तिलिप्तवियता वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।

---

पिकुलकोपोपपादकत्वेऽपि न ध्वनित्वव्याहति । वाच्यसिद्ध्यङ्गत्वादेर्हि क्वचिदेव गुणीभूतव्यञ्जकत्वापादकत्वम्, यत्र न चमत्कारातिशय । न तु तत्सद्भावेऽपीति भाव । वस्तुतो रसाद्यपेक्षया गुणीभावेऽपि वाच्यापेक्षया प्राधान्यान्न ध्वनित्वक्षतिरित्यवधेयम् । **छणेति** । 'क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता । रोदिति पश्चाद्भागवलभीगृहेऽनुनीयता वराकी ॥' क्षणे उत्सवे प्राघुणिका अतिथि । किमप्यवाच्यम् । **अत्रेति** । कोपस्याभावाद्व्याजरूपतयोच्यमानोऽनुनयो लक्षणयो-

---

१. 'छणेति । देवरानुरक्तामुपनायिकामुत्सवागता तत्पत्न्या कटूक्तामनुनेतु देवर प्रति कस्याश्चिदुक्तिरियम् । पडोहरशब्दो गृहपश्चाद्भागे देशी । प्रतिवेशिवाचीत्येके । हे देवर सुभग, क्षणे उत्सवे प्राघुणिका अभ्यागता काचित्ते तव जायया पत्न्या किमप्यवाच्य भणिता उक्ता सती गृहस्य पश्चाद्भागे यद्वलभीगृहमुपरितनगृहं तत्र रोदिति । अतएव वराकी दीनानुनीयता समाधीयतामित्यर्थ ।' इत्युदाहरणचन्द्रिकासक्षेप. २. 'स्निग्धेति । विरहिणो रामस्येयमुक्ति । स्निग्धा श्लक्ष्णा श्यामला च या कान्तिस्तया लिप्त सपृक्त वियदाकाश यै । तथा वेल्लन्त्यो विलासेन खेलन्त्यो बलाका बकपङ्क्तयो येषु तथाभूता घना मेघा

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

अत्र मुख्यार्थबाधाल्लिप्तपदं संपर्कं लक्षयदतिशयं व्यनक्ति । पयोदे चाचेतने सौहृदाभावात्सुहृत्पदमुपकारित्वं लक्षयत्तदतिशयं प्रतिपादयति । पयोदानां मयूरनिष्ठकेकाद्युपकारशीलत्वात् । रामपदं च सर्वसहत्वानुपयुक्तशक्यार्थतया सकलदुःखभाजनत्वं लक्षयत्सीतां विनापि जीविष्यामीति व्यञ्जयदेव विप्रलम्भं व्यनक्ति । तत्र लिप्तेति पयोदसुहृदामित्यनयोरत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह राम इत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन संकरः । तयोरुद्दीपकत्वात् । रामपदेन चैकव्यञ्जकानुप्रवेशेनार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः । रामोऽस्मीत्यनेनैव लक्षणामूलस्य विप्रलम्भस्य च व्यञ्जनाद्विप्रलम्भे वाक्यव्यङ्ग्येऽप्यस्य प्राधान्यात् । एवमन्यदप्युदाहार्यम् ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे ध्वनिप्रभेदविभागश्चतुर्थ उल्लासः ।

---

पभोगप्रतिपादकः । उपभोगगतसामञ्जस्यं व्यङ्ग्यम् । अथवा बाधाभावाद्वाच्य एवोपभोगव्यञ्जक इत्यर्थः । उभयथाप्युपभोग एव तात्पर्यपर्यवसानात्संदेहस्यादोषत्वम् । **लक्षणामूलस्येति** । सीतां विनापि जीविष्यामीति व्यङ्ग्यस्येत्यर्थः ॥ इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृतायां प्रदीपप्रभायां चतुर्थ उल्लासः ॥

---

एव घना निबिडाः कामं यथेष्टं सन्तु । तथा शीकरिणोऽम्बुकणशालिनो वाताः । शीकरिणि इति नित्ययोगे । तेन मान्द्यलाभः । एवं पयोदो मेघः सुहृत्केकाद्युपकारजनको येषां ते तथा भूताः केकापदसांनिध्यान्मयूराः । तेषामानन्देन केकाः वाण्यः । अतएव कलाः अव्यक्तमधुराः । आनन्देन कण्ठजाड्यात्कामं सन्तु । सुदृढमतिशयितं कठोरहृदयोऽहं रामः सकलदुःखपात्रत्वेन प्रसिद्धोऽस्मि । अतएव सर्वमुक्तोद्दीपकातिशयजनितं क्लेशं सहे । वैदेही विदेहराजपुत्री तु सुकुमारतया दुःखाक्षमा कथं भविष्यति जीविष्यति । तस्या जीवनं न संभाव्यत इत्यर्थः । हहाहेति त्रयो निपाताः खेदातिशये । भावनोपनीतां सीतां संबोध्याह—देवीति । धीरा भव धैर्यं कुरु । अतएव देवीति संबोधनम् । देवत्वेन धैर्यस्योचितत्वात् । यत्तु—'सीतामरणं संभाव्य पृथ्वीं प्रत्याह—हे सर्वसहे वसुधे देवि, धीरा भव दुहितृशोकेन त्वं मा विदीर्णा भूरित्यर्थो मदीयः' इत्युक्त्वा पूर्वोक्तार्थेऽज्ञानकृतत्वाभिधानं कस्यचित्तत्काव्यहृदयानभिज्ञतया जल्पितमिति सहृदयैरुपेक्ष्यम् । अत्र द्रवद्रव्यसंयोगस्य लेपस्य हितकारित्वस्य सुहृत्त्वस्य कान्तिमेघयोर्बाधादुक्तार्थे लक्षणा । लेपसुहृत्त्वयोः सर्वथान्वयाननुप्रवेशादत्यन्ततिरस्कृतत्वम् । लक्ष्यातिशयौ व्यङ्ग्यौ । तयोस्त्रिरूपसंकराभावात्संसृष्टिः । रामपदेन च सर्वसहत्वानुपयुक्तार्थतया उक्तार्थसंक्रमितवाच्येन पीडासहस्रसंपातेऽपि प्राणधारणादात्मनि न्यक्कारो व्यज्यते । तत्र च घनकेकाचिरस्थायित्वयोर्लिप्तसुहृत्पदव्यङ्ग्ययोरनुग्राहकत्वं व्यक्तमेव । एवमेकेन रामपदेन दुःखभाजनत्वलक्षणया राज्यत्यागवनवासजटावल्कलधारणस्त्रीवियोगादिपात्रतया तदतिशयव्यक्तिः । तद्द्वारा च सीतां विनापि जीविष्यामीति शोकावेगनिर्वेदाद्यभिव्यक्तिमुखेन विप्रलम्भपरिपोष इति लक्षणामूलातिशयध्वनिरसध्वन्योः संकर इति दिक् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

## पञ्चम उल्लासः ।

एवं ध्वनौ भेदप्रभेदाभ्यां निर्णीते गुणीभूतव्यङ्ग्यस्य भेदानाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ १ ॥**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदा मताः ।**

वाच्यापेक्षया अचमत्कारकारित्वेन[1] व्यङ्ग्यस्य गुणीभावः । तच्च स्वत एवासुन्दरत्वेन, अगूढत्वादिविशेषणसप्तकेन वेत्यर्थः । अगूढं चासहृदयैरपि वेद्यम् । तादृशं वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम् । एवमन्येष्वपि भेदेष्वनुभव एव साक्षी । अपरस्याङ्गमपरस्य रसादेः स्वनैरपेक्ष्येण लब्धसिद्धेरुपकारकम् । वाच्यसिद्ध्यङ्ग वाच्यस्य सिद्धिरेव यदधीना तत् । अस्फुटं सहृदयानामपि दु:खसवेद्यम् । संदिग्धतुल्यप्राधान्य इति । संदिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वयमित्यर्थः । काक्वाक्षिप्तं यया काक्वा विना वाक्यार्थ एव नात्मानं लभते तया प्रकाश्यम् । काक्वा हठेनोपस्थापितमिति वा । असुन्दरं स्वभावादेव वाच्यापेक्षया अचारु ।

तेष्वगूढं यथा—

'[2]यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीवधव्यतिकरेण युनक्ति कर्णौ ।

---

अवसरसंगतिं दर्शयितुमाह—**एवमिति** । **अगूढमिति** । व्यङ्ग्यमेवंप्रकारम् । तेन गुणीभूतव्यङ्ग्यस्य काव्यस्याष्टौ भिदा मता इत्यर्थ । अथवा व्यङ्ग्यमगूढत्वादिधर्मवत् । एवं सत्यष्टौ भिदा मता इत्यर्थ. । अपराङ्गत्वादेर्नियमेन गुणीभावप्रयोजकत्वव्यावृत्त्यर्थमाह—**वाच्यापेक्षयेति** । तथा च वाच्यादतिशयचमत्काराभावे सत्येव मध्यमत्वम् । न तु तदसत्त्वे केवलापराङ्गत्वादिनेति भावः । वाच्यातिशायित्वाभावस्यापराङ्गप्रयुक्ततायामनुभवं प्रमाणयति—**एवमिति** । एवं च यत्र नानुभवस्तत्र न मध्यमभेदान्तर्भाव इति सूचितम् । **अपरस्येति** । द्विविध इत्यनन्तरं

---

१. 'चमत्कारकारि' क. २. 'बृहन्नलादशाया स्वाभ्युदयाय किमिति न चेष्टस इत्युक्तेऽर्जुनोक्तिरियम् । असुहृदा वैरिणा कृता तिरस्कृतिर्यस्य तथाभूतो नृपो यस्य मम एत्य । शरणमिति शेष । तप्तया सूच्या यो व्यधो वेधस्तस्य व्यतिकरेण सवन्धेन कर्णौ युनक्ति सवध्नाति । शरणागतस्य तप्तलौहशलाकया कर्णवेधो देशाचार इति स्वयमेव शरणागतत्वसूचनाय तथा करोतीत्यर्थ । स एष ऐश्वर्यभ्रष्टोऽहं काञ्च्या गुणेन प्रकर्षेण यद्ग्रथनं तस्य भाजन पात्रमस्मि । तत्र नियुक्त इति यावत् । अतः सम्प्रत्यधुना न तु पूर्वं जीवन्न, भवामि । अश्लाघ्यजीवन इत्यर्थः । किमावहामि किं करोमि । अथवाऽसुहृत्कृततिरस्कृतिस्तद्वार्ता तप्तसूचीवधव्यतिकरेण कर्णौ युनक्ति । कर्णयोस्तादृग्दु:खमुत्पादयतीत्यर्थ. । असीत्यहमर्थे वा । काञ्चीगुणग्रथनभाजनं स एषोऽहमित्याद्यन्वय इति ॥' इत्युदाहरणचन्द्रिकासक्षेपः.

काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ॥'

अत्र जीवन्नित्यभिमतकार्यशक्तत्वे संक्रमितवाच्यम्। तस्य च मरणमेव श्रेय इति व्यङ्ग्यमसहृदयैरपि वाच्यवत्प्रतीयते इति गुणीभूतम्।

'[1]उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥'

अत्र चुम्बतेर्वक्रसंयोगो मुख्योऽर्थोऽचेतने बाधित इति संयोगमात्रं लक्ष्यतोऽस्यात्यन्ततिरस्कृतवाच्यत्वम्। व्यङ्ग्यश्चास्योप.कालो वाच्यायमानतया गुणीभूतः। नन्वत्र लक्ष्यतावच्छेदकस्य संयोगत्वस्य वक्रसंयोगेऽपि सत्त्वात्कथमत्यन्ततिरस्कृतवाच्यत्वमिति चेत्, लक्ष्यतावच्छेदकस्य सत्त्वेऽपि वाच्यस्य संयोगविशेषस्यान्वयाप्रवेशात्।

'[2]अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः।

---

व्यङ्ग्योऽर्थ इति शेष.। प्रथमे अलक्ष्यक्रमरूपापराङ्गभेदे। रसादेर्वाच्याङ्गता त्वसंभवान्नोदाहृतेत्याहु। यत्र तु 'तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी। निवसन्बाहुसहायश्चकार रक्ष.क्षयं रामः ॥' इत्यादौ रामगतवीररसस्यारण्योत्कर्षकतया तदङ्गत्वं तत्रोदात्तालंकारो वक्ष्यते। महतां चोपलक्षणमिति महतां

---

१. 'उन्निद्रेति। नायकेन सह सुप्ता रतिश्रमालसतयानाकलितप्रबोधसमया सखी प्रति तत्सूचनाय सख्या इयमुक्ति। मधुपा भ्रमरा गृहसबन्धिनीषु दीर्घिकासु वापीषु मञ्जु मनोहर यथा स्यात्तथा गायन्ति। एतद्रवेर्बिम्ब चकास्ति दीप्यते चेत्यन्वय। तथा च सूर्योदयप्रतीक्षणमप्यनाशङ्क्यमिति भावः। गृहेत्यनेनातिनिकटस्थतया सकलगृहजनवेद्यतयानौचित्यप्रकाशनम्। कीदृशा मधुप.। उन्निद्रं विकसितं कोकनद रक्तोत्पल तस्य रेणुना परागेण पिशङ्गितानि कृष्णरक्तयोर्मिश्रणात्पिङ्गलवर्णान्यङ्गानि येषा ते तथाभूता'। अङ्गपदोपादानात्सर्वाङ्गव्यापि तद्वर्णलाभः। कीदृशं बिम्बम्। उदयस्य सबन्धिनमचलं पर्वत चुम्बति स्पृशतीति तथाभूतम्। अत एवेषदुदितत्वान्नवस्य नूतनविकसितस्य बन्धुजीवाख्यपुष्पस्य च्छद पत्र तद्वदाभा यस्य तथाभूतम्। रक्तत्वात्सूक्ष्मत्वाच्चेति। अत्र चुम्बतेरत्यन्ततिरस्कृतवाच्यव्यङ्ग्यमुष कालरूपमगूढम्।' इत्युदाहरणचन्द्रिका. २. 'अत्रेति। रावणं हत्वा विमानेनायोध्यामागच्छतो रामस्य सीता प्रतीयमुक्ति.। 'एकस्या एव समरभुवस्तत्तत्कर्माधारतया प्रत्येक नवनवायमानाद्भुतरसालम्बनत्वेन पुनः पुनरत्रेत्यस्योपादानम्। यद्वा 'भिन्नान्येव स्थानान्यत्र पदैरुक्तानि' इति दीपिकायाम्। फणिपाशो नागपाशस्तेन यद्बन्धनमर्यादावयोस्तस्य विधिरासीत्। विधेरलङ्घ्यत्वादनपकर्ष इति सूचनाय विधिग्रहणम्। शक्त्यायुधविशेषेण भवत्या देवरे लक्ष्मणे वक्षसि गाढ दृढं ताडिते सति

दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥'

अत्रानुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थवाक्येऽनुक्तोऽपि नायको राम एवार्थशक्त्या प्रतीयते। स च केनापीत्युपादानेन वाच्यायमानतया अगूढः कृत । 'तस्याप्यत्र' इति पाठे गूढतया ध्वनित्वमव्याहतमेव । अत्र श्लोके प्रतिवाक्यमत्रेत्युपादाने प्रत्येकमेवाङ्गुतत्वं व्यनक्ति ।

अपरस्पररसादेर्वाच्यस्य वा प्रधानस्याङ्गमलक्ष्यक्रमः, अनुस्वानाभलक्ष्यक्रमो वेति द्विविधः। तत्र प्रथमे रसस्याङ्गभावेन गुणीभूतत्वं यथा—

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

अत्र भूरिश्रवसश्छिन्नं हस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारः करुणस्याङ्गम् । निष्पन्नस्य रसस्यापराङ्गत्वाभावाद्रसपदेनात्र स्थायिभावो द्रष्टव्यः ।

रसस्यैव भावाङ्गता यथा—

'कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।

---

हनुमता द्रोणाद्रिर्दिव्यौषधीयुक्त आहृत आनीत इति तत्पराक्रमप्रकाशनम् । भवद्देवर इति संवन्धप्रदर्शनमुपकारप्रकाशनार्थम् । इन्द्रजिद्रावणपुत्र. । दिव्यैर्दिवि भवैः। तादृशैरित्यर्थः । लक्ष्मणशरैर्लोकान्तर स्वर्गं प्रापितः । दिव्यानां तत्प्रापकत्वस्योचितत्वात् । मृगाक्षीति सर्ववाक्यार्थान्वयि । केनापीत्यपिर्हेलायाम् । राक्षमपते रावणस्य कण्ठरूपाटव्यरण्य कृत्ता छिन्नेत्यर्थ' । अत्रेन्द्रजित्त्वेनोपन्यासाद्धन्तुरुत्कर्षलाभ. । लक्ष्मणशरैरिति शराणां कर्तृत्वप्रदर्शनं लक्ष्मणस्यावहेलनसूचनार्थम् । अहकारप्रकटनभयाद्धीरोदात्तनायकेन केनापीत्युक्तम् । छिन्नस्य पुन पुनरुद्गतस्य च्छेदनादटवीत्युक्तम् । अत्र केनापीत्यर्थशक्तिमूलं सलक्ष्यक्रम रामरूपं व्यङ्ग्यमगूढम् ।' इत्युदाहरणचन्द्रिकासक्षेप'

१ 'अयमिति । रणभूमिपतित भूरिश्रवसश्छिन्नं हस्तमादाय तद्वधूप्रलापोक्तिरियम् । अयं दृश्यमानावस्थ पूर्वमनुभूतावस्थ कर इत्यन्वय. । पूर्वावस्थामेवाह—रशनेत्यादि । रशना काञ्चीमुत्कर्षत्याकर्षतीति तथा । पीनयोः स्तनयोर्विमर्दनकारी । नाभिश्च ऊरू च जघनं चैतानि स्पृशतीति तच्छील । नीव्या वसनग्रन्थेर्विस्रसनो मोचक इति । एव चैवविधशृङ्गारलीलापात्रभूतस्येदृगदुरवस्थाप्राप्तिरिति करुणपरिपोषः । तेन शृङ्गाररूप व्यङ्ग्यमपराङ्गत्वाद्गुणीभूतम् ।' इत्युदाहरणचन्द्रिकासक्षेप २ 'कैलासेति । गिरिभुव पार्वत्याः सा पादनखाना द्युति कान्तिर्वो युष्मान्सदा त्रायता रक्षत्विति सवन्ध' । कीदृशी । कैलास आलयः स्थान यस्य तथाभूतस्य शिवस्य भालसवन्धिलोचनस्य रुचारुणकान्त्या निर्वर्तिता निष्पादितालक्तकस्य लाक्षारसस्य व्यक्ति. प्रकटता यस्या तथाभूता । मानिन्या पादपतने सानिध्येन लाक्षारुणललाटनेत्रप्रभासपर्कात् । सा का । यया द्युत्या सुदृढं यथा स्यात्तथा रूढा प्रवृद्धा कोकनदस्य रक्तोत्पलस्यानुकारेणानुकरणेन सरसातिशयिता नेत्रयोः कान्ति. कोपजनिता शोणा द्युतिः सद्यस्तत्क्षण सम्यङ्निःशेष यथास्यात्तथोत्सार्यते दूरीक्रियते । पादपतनगतस्यो

स्पर्धाबन्धसमिद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥'

अत्र वक्तुर्देवीविषयकरतिरूपभावे देवयोः शृङ्गारोऽङ्गम्।

भावे भावस्याङ्गत्वं यथा—

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिमां प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'

अत्र भूविषयो रतिभावो राजविषयस्य रतिभावस्याङ्गम्।

आभासस्याङ्गत्वं यथा—

'बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥'

---

त्सारणकर्तृत्वस्य तदनुभावरूपायां तादृशद्युतावुपचारो वक्ष्यमाणोत्प्रेक्षार्थः। तदाह- स्पर्धाया विजिगीषाया बन्धेन सातत्येन समिद्धयातिदीप्तयेवेति। अत्र भाललोचनरुचिसंपर्ककृतं दीप्तत्वं स्पर्धाबन्धहेतुत्वेनोत्प्रेक्षितं वेदितव्यम्। अत्र पादपतनाभिव्यक्तमहादेवरत्यास्पदत्वेन पार्वतीविषयो भावः प्रकृष्यत इति तत्प्राधान्यम्। एवमन्यत्राप्यङ्गाङ्गिभावः सुधीभिरूहनीयः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'अत्युच्चा इति। राजानं प्रति कवेरियमुक्तिः। परितः समन्ततः। स्फारा विस्तीर्णा इत्युभयान्वितम्। अम्भोधय इत्यनन्तरं स्फुरन्तीत्यनुषङ्गः। अपिर्भिन्नक्रमः। बिभ्रत्यपि धारयन्त्यपि किमपि किंचिदपि न क्लान्तासि श्रान्तासीति हे पृथ्वीति संबोधनपदाध्याहारेणान्वयः। एवंविधगिर्यादिधारणेऽप्यक्लमादाश्चर्येण यावद्भुवः पृथिव्या इति पूर्वार्धोक्तां स्तुतिं मुहुर्वारं वारं प्रस्तौमि प्रसंजयामि। करोमीति यावत्। तावदिमां भुवं बिभ्रत्पालयन्नेव तव भुजो न तु भुजौ स्मृतः। ततो भुजस्मरणाद्वाचो मुद्रिताः संकुचिता इत्यर्थः। अत्र भूविषयकरतिभावो राजविषयस्य तस्याङ्गम्' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'बन्दीति। हे नृप, ते तव सैनिका येषां द्विषां शत्रूणां मृगदृशः कातरनेत्रतया मृगनेत्रसमानदृष्टयः स्त्रियो बन्दीकृत्य हठादाहृत्य पश्यतां प्रेयसां पश्यतः प्रियाननादृत्य ताः श्लिष्यन्त्यालिङ्गन्ति। हठाश्लेषजनितस्य क्रोधस्य शान्तये प्रणमन्ति। लान्ति गृह्णन्ति आत्मसात्कुर्वन्तीत्यर्थः। 'लालयन्तीत्यर्थः' इत्येके। परितः कामशास्त्रानुक्तस्थलेऽपि चुम्बन्ति मत्तत्वात्त्वरावेशाच्च। इत्थमनौचित्यप्रवर्तयितापि त्वं तैः प्रत्यर्थिभिः शत्रुभिरिति स्तूयसे इत्यन्वयः। स्तुतिप्रकारमाह— अस्माकमित्यादि। हे औचित्यवारांनिधे औचित्यसमुद्र, अस्माकं सर्वेषां सुकृतैः पुण्यैर्दृशोः। गोचरे इति शेषः। निपतितोऽसि। तत्तस्मात्त्वद्दर्शनादखिला विपदो विनष्टा ध्वस्ता इति। अत्र पूर्वार्धे शृङ्गारोऽननुरक्तविषयत्वादाभासः। उत्तरार्धे शत्रुविषयत्वाद्रतिभावाभासः। तौ च कविगतराजविषयकरतिभावाङ्गम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र प्रथमार्धे शृङ्गारोऽननुरक्तविषयतया, द्वितीयार्धे तु रतिरूपो भावः शत्रुविषयतया आभासः । तौ च राजविषयकरतिभावस्याङ्गम् ।

भावशान्तेर्यथा—

'[1]अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥'

अत्र वैरिणो गर्वरूपो भावः । तस्य शमो राजविषयकरतिभावेऽङ्गम् ।

भावोदयस्य यथा—

'[2]साकं कुरङ्गकदृशा मधुपानलीलाः
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥'

अत्र विषमावस्थाव्यङ्ग्यस्य त्रासस्वरूपभावस्योदयो राजविषयरतिभावस्य ।

भावसंधेर्यथा—

'[3]असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।

---

वीरादीनामुपलक्षणत्वमितराङ्गत्वं चेत्तदप्युदात्तमित्यनुवृत्तेनान्वयादित्यर्थः । **गर्वरूपो भाव इति** । गत इत्यनेन मुख्यार्थवाधाच्छमो लक्ष्यते । तत्प्रकर्षस्तु

---

१. 'अविरलेति । हे राजन्, अविरल निरन्तर करवालस्य खड्गस्य कम्पनैः, भ्रुकुटीपूर्वकैस्तर्जनैश्छिन्धिभिन्धीत्यादिवाक्यै., गर्जनैर्हुंकारसिंहनादरूपैर्लिङ्गैस्तव वैरिणां यो मदोऽस्माभिर्मुहुर्ददृशे दृष्ट' स मदो गर्वस्तवेक्षणे दर्शने सति क्षणात्क्वापि गतः पलायित इत्यन्वय । अत्र गत इत्यनेनाचेतने मदे मुख्यार्थवाधान्नाशो लक्ष्यते । तदतिशयश्च व्यङ्ग्यो राजविषयभावस्याङ्गम् । अत एवोक्तं वृत्तिकृता—'प्रशमः' इति' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'साकमिति । हे विभो प्रभो, तव वैरिणि कुरङ्गकदृशा बालकुरङ्गनेत्रया कान्तया सुहृद्भिरपि साक सार्धं मधुपानाद्या लीला. कर्तुं प्रवृत्ते सति अन्याभिधायि अनेकार्थतयान्याभिप्रायक केनापि जनेन हेतुना वा गृहीतमुच्चारित तव नाम कर्तृ तत्र वैरिणि विषमां कम्पादेकर्त्रीमवस्थामकरोदित्यन्वय. । अत्र च त्रासरूपव्यभिचारिभावोदयो राजविषयभावाङ्गम्' इत्युदाहरणचन्द्रिकासंक्षेपः ३. 'असोढेति । तप कुर्वती पार्वतीं बटुवेषेण च्छलयतो महादेवस्य वर्णनमिदम् । कपटेन च्छलेन यो वटोर्ब्रह्मचारिणो वेषस्तस्यापनयने मोचने त्वराशैथिल्याभ्या युगपत्समकालमभियुक्त आक्रान्त' स्मरहरः शिवो वो युष्माकं प्रमोदं दिश्याद्दद्यादित्यन्वयः । त्वराशिथिलतयोर्हेतुगर्भे विशेषणे क्रमेण चरणद्वयेनाह—असोढेत्यादि । तपस इति कर्मणि षष्ठी । तत्काले बटुप्रादुर्भावकाले उल्लसन्प्रादुर्भवन्नसहभावो दुःसहत्वमर्थाद्दौर्यो यस्य तादृशस्य तपसोऽसोढा तप. सोढुमसमर्थः । 'तपोबलाकृष्टत्वेन स्वरूपमदर्शयित्वा स्थातुमसमर्थः' इत्येके । 'उल्लसदसमभावस्य' इति पाठे उल्लसन्नसमभावो निरुपमत्वं यस्येत्यर्थ. । अथचेति समुदित समुच्चयार्थकम् । शैलदुहितुः पार्वत्याः कथाना विस्रम्भेषु विश्वा-

प्रमोदं वो दिश्यात्कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥'

अत्र स्मरहरगतयोरावेगधैर्ययोः संधिः शिवविषयरतिभावस्याङ्गम्।

भावशबलताया यथा—

'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥'

अत्र पश्येत्कश्चिदिति शङ्का। चल चपल रे इत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बं वितरेति श्रमः। हहहेति दैन्यम्। व्युत्क्रम इति विबोधश्चेनन्यागमरूपः। क्वासि यासीत्यौत्सुक्यम्। एषां शबलता नृपविषयरतिभावेऽङ्गम्।

एते च गुणीभूता रसादयो रसवदाद्यलंकारव्यपदेशं लभन्ते। ननु गुणीभूतो रसो रसवत्, भावस्तु प्रेयः, रसभावाभासावूर्जस्वि, भावशान्तिः समाहित इत्यस्यैव पूर्वेषामलंकारव्यवहारः, न पुनर्भावोदयादिषु। तत्कथमेतदुच्यत इति चेत्। यद्यन्यवचनं विना मद्वचसि नादरस्तर्हि कश्चित्प्रेक्षावानवश्यं ब्रूयात 'रसादिना तुल्यन्यायत्वात्' इति। ननूदाहृतेषु ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदेषु ध्वनिभेदैर्गुणीभूतव्यङ्ग्यभेदैरलंकारभेदैर्वावश्यं संकरः संसृष्टिर्वा वर्तते। तत्कथं ध्वनिरिति क्वचित्, क्वचिद्गुणीभूतव्यङ्ग्य इति। तत्रापि क्वचिदलंकारध्वनिरिति

---

व्यङ्ग्य इत्याशयः। **कश्चित्प्रेक्षावानिति**। तदुक्तं चालंकारसर्वस्वकृता—'भावो-

---

सेषु। विस्रब्धकथास्विति यावत्। रसिक· प्रीतिमांश्चेत्यर्थ·। अत्र त्वराशैथिल्याभ्यामवग- तयोरावेगधैर्ययोः सधिः शिवविषयरतिभावाङ्गम्'' इत्युदाहरणचन्द्रिकासक्षेप.

१. 'नृपविषय' क. २. 'पश्येदिति। हे पृथ्व्या परिवृढ प्रभो, अरण्ये वृत्तिर्वर्तनं यस्यैवभूतस्य भवद्विद्विषः शत्रो· कन्या फलानि किसलयानि कोमलपल्लवाश्च भक्षणार्थमाद- दाना गृह्णती कचिदाक्रान्तुकाम पुरुषं जातानुरागा इत्थमभिधत्त इत्यन्वयः। कथमभिधत्ते तत्राह—पश्येदित्यादि। कश्चिज्जनः पश्येदिति शङ्का। तद्धेतुश्च सगोपनीया पुरुषचेष्टाभि- व्यङ्ग्या। रे चपल स्वच्छन्दाचरणाच्चञ्चल, चल अपसरेति काकुविशेषसाहित्याद्रागानुवि- द्धासूया। का त्वरेति धृति सत्वरजिगमिषावारणाय। अहं कुमारी। असीति शेषः। तेन कुमार्या मम नैव स्वातन्त्र्यमुचितमिति स्मरणम्। हस्तरूपमालम्बमवलम्बनं वितर देहीति श्रमस्तदुपमर्दक। हहहेति भावजन्य दैन्यम्। व्युत्क्रमो विपरीताचरणम्। जायत इति शेष। सोऽयं विबोधः। असीति त्वमित्यर्थे। त्वं क्व यासि गच्छसीत्यौत्सुक्यम्। एषामुक्त- रीत्या पूर्वपूर्वोपमर्देनोत्तरोत्तरोदयरूपा शबलता। 'तिलतण्डुलन्यायेन समप्राधान्येन चर्व्य- माणतारूपा' इत्यन्ये। सा च राजपराक्रममूलकतया तदभिव्यक्तिद्वारा राजविषयां रतिमुद्दी- पयन्ती तदङ्गमिति बोध्यम्।' इत्युदाहरणचन्द्रिकासक्षेपः.

क्वचिद्रसादिध्वनिरित्यादि । एवं तद्गुणीभूतव्यङ्ग्य इत्यादिव्यपदेशानां नियम इति चेत्, प्राधान्यात् । यत्र हि यत्प्रधानं तत्र तेन व्यपदेशः । प्राधान्यं चातिशयितश्चमत्कारः । स च सहृदयहृदयैकवेद्य इति नासिद्धः ।

अथ वाच्याङ्गभावेन शब्दशक्तिमूलस्य लक्ष्यक्रमस्य गुणीभावो यथा—

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥'

अत्र पादत्रयद्योत्यापि रामेण सहोपमा मयाप्तं रामत्वमित्यनेन वाच्यतां नीता । तदङ्गं च शब्दशक्तिमूलानुरणनरूपो द्वितीयोऽर्थः ।

---

दयभावसंधिभावशबलताश्च पृथगलंकाराः' इति । यत्र हीति । तथा च 'अयं स रशन-' इत्यादौ करुणजन्यचमत्कारातिशये स्मर्यमाणशृङ्गारस्य प्राधान्येन प्रयोजकत्वाद्गुणीभूतव्यङ्ग्यमिति व्यवहार इति भावः । वाच्यतां नीतेति । रामत्वमित्यस्य मुख्यार्थबाधाद्रामसादृश्यमित्यर्थ एव पर्यवसानादिति भावः । कथं सादृश्यमित्यपेक्षायां चाश्लिष्टशब्दोपस्थितार्थद्वयस्यैकत्वाध्यवसायादिति । व्यङ्ग्यस्य द्वितीयार्थस्य तदङ्गत्वमित्याह—तदङ्गं चेति । प्रकाशे तु 'वाच्यतां नीतः' इत्येतावदेवोक्तम् । तदङ्गं तु व्यङ्ग्यं स्फुटत्वान्नोपन्यस्तम् । अन्ये तु—'वाच्यस्याङ्गता नीतः' इति प्रकाशपाठः । उपमानोपमेयभावश्च व्यङ्ग्य एव । रामत्वं प्राप्तमिति रामधर्मप्राप्तिमात्राभिधानात्तावता नोपमाया अप्रतीतेः । वाच्यश्च व्यतिरेकालंकारः । राम-

---

१. जनस्थान इति । कस्यचित्कवेरियमुक्तिः । मया रामत्वं रामरूपत्वमाप्तं प्राप्तम् । कुशलवसुता तु नाधिगता न प्राप्ता । कुशलं परिणामसुरसमुद्वेगनिरासे निपुणं वा वसु धनं यस्य तत्ता । कुशलवौ सुतौ यस्याः सा तथाभूता च । कथं रामत्वं प्राप्तमित्याकाङ्क्षायामाह—जनस्थान इत्यादि । कनकस्य मृगो मार्गणं प्रार्थना वा तत्र तृष्णयान्धिता विवेकरहिता धीर्यस्य । कनके मृगतृष्णया निष्फलाशयान्धिता वा धीर्यस्य तथाभूतेनैव । कनकमृगे मारीचे तृष्णयान्धितधिया । अन्धितया धियेति कर्मधारयो वा । जनानां स्थाने ग्रामनगरादौ भ्रान्तमेव । जनस्थाने दण्डकारण्ये भ्रान्तमिति श्लेषोपस्थितयोरभेदारोपाद्रामत्वोपपत्तिः । 'विद्वन्मानसहंस-' इत्यादिवत् । एवमग्रेऽपि । वै निश्चितं देहीति वचो वचनं प्रतिपदं प्रतिस्थानमुद्गतमश्रु यत्र तथा प्रलपितम् । रामपक्षे—वैदेहीति वचः । वैदेही सीता । भर्तुर्भरणकर्तुर्धनिकस्य परिपाटीषु सेवारचनासु का घटना अलमत्यर्थं न कृता तद्वदेति । अथवा काभर्तुः कुत्सितस्य भर्तुर्वदनपरिपाटीषु मिथ्याभाषणप्रकारेषु घटना उपपत्तिरलमत्यर्थं कृतेत्यर्थः । 'वदनपरिपाटीषु मुखविवलनादिषु सत्सु तदुन्नयनार्थं घटना उपायः कृत इत्यर्थः' इत्यन्ये । रामपक्षे तु लङ्कायाः भर्तू रावणस्य वदनानां मुखानां परिपाट्यां पङ्क्तिविषूणां शराणां घटना संयोजना कृतेत्यर्थः । अत्र शब्दशक्तिमूलानुरणनरूपस्य द्वितीयार्थव्यङ्ग्यस्य ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

वाच्य एवार्थशक्तिमूलस्याङ्गभावो यथा—

'आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥'

अत्रार्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेण तदङ्गतयैव स्थितः । समासोक्तौ 'उपोढरागेण विलोल-' इत्यादौ सर्वत्र प्रतीयमानार्थोपस्कृतवाच्यस्यैव प्राधान्यात् । अयं च पादपतनेनेति श्लिष्टशब्द-

---

सादृश्येऽपि तस्मादाधिक्यस्य कुशलवसुता न त्वधिगतेत्यनेनोक्तेः । न चानेन न्यूनत्वमेवेति शङ्क्यम् । दु खित्वेनोपमायां तस्याधिक्यप्रयोजकत्वात् । सादृश्यस्वरूपायाश्चोपमाया व्यतिरेकाङ्गत्वं स्पष्टमेव' इत्याहुः । तन्न सम्यक् । रामत्वमित्यनेन शक्त्या रामधर्ममात्राप्रत्यायनात् । लक्षणया तु सादृश्यप्रतीतिरपि स्फुटैवेति न किंचिदेतत् । किंच वाच्यस्य व्यतिरेकालंकारस्य सादृश्यं विना सिद्ध्यभावाद्वाच्यसिद्ध्यङ्गमेवोपमारूपं व्यङ्ग्यं स्यान्नापराङ्गमिति ज्ञेयम् । **आगत्येति** । वियोगविसंष्ठुलाङ्गी क्षपितत्रियाम आगत्य प्रसादयतीति साधारणार्थसामर्थ्यव्यङ्ग्योऽप्रकृतो नायकनायिकयोर्वृत्तान्तः पादपतनेन प्रसादनरूपो व्यवहारे वाच्ये किरणपतनेन कमलिनीविकासनरूपे वृत्तान्तेऽध्यारोपेण वाच्यवृत्तान्तोत्कर्षकतयैव स्थितो नतु प्रधानतयेत्यर्थः । तत्र हेतुमाह—**समासेति** । 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् । यथा समस्तं तिमिरांशुकं तया पुरोऽनुरागाद्गलितं न लक्षितम् ॥' इत्यादावित्यर्थः । वृत्तान्तद्वयप्राधान्ये हि वाक्यभेदः स्यादतो विशिष्टबोधे तात्पर्यम् । तत्र चमत्कारानुरोधात्प्रकृतत्वाच्च प्रकृतवाच्योपस्कारकतया अप्रकृतवृत्तान्तस्यैव विशेषणत्वमुचितमिति भावः । अतएव समासेन सक्षेपेणोक्तिरित्युच्यते । **प्राधान्येनेति** । अर्थानामेव वियोगादीनां बहुत्वेनेत्यर्थः । अन्यथासि-

---

१. 'आगत्येति । मानिनीं प्रति स्वापराधाल्पत्वसूचनायान्यनायकनायिकावृत्तान्तमारोप्य दर्शयतो नायकस्योक्तिरियम् । हे तन्वङ्गि, सहस्ररश्मिः सूर्यः क्वचिद्द्वीपान्तर एव क्वचिन्नायिकान्तरगृहे क्षपिता नीता त्रियामा रात्रिर्येन तथाभूतोऽपि प्रभात एत्य आगत्य संप्रत्यधुना कुपितां प्रति त्वरानौचित्याच्छनैरम्भोजिनीं कमलिनीमेव नायिकां पादानां किरणानां पतनमधःसयोग एव पादे चरणे पतनं प्रणामस्तेन प्रसादयति विकासयत्येवानुनयत्येतत्पश्येत्यन्वयः । कीदृशीम् । वियोगः संबन्धाभाव एव वियोगो विरहस्तेन विसंष्ठुलाङ्गी संकुचिताङ्गीमेव विसंष्ठुलाङ्गी संतापकार्श्यादिना विषमाङ्गीमित्यर्थः । तथाच खण्डितापि पादप्रणामेन प्रसीदति न पुनर्भवतीति तात्पर्यम् । अत्र श्लिष्टपादादिपदाभावेऽपि सहस्ररश्मिः क्वचिदपि क्षपितत्रियाम एत्याम्भोजिनीं विकासयतीत्येतावतापि नायकनायिकावृत्तान्तव्यक्तिसंभवादश्लिष्टपदबाहुल्याच्चार्थशक्तेः प्राधान्यात्तन्मूलत्वव्यपदेश इति ज्ञेयम्' इत्युदाहरणचन्द्रिकासंक्षेपः.

सद्भावेऽपि न शब्दशक्तिमूलत्वेन व्यपदेश्यः, किं त्वर्थशक्तिमूलत्वेन । प्राधान्येन व्यपदेश इति न्यायात् । तद्व्यतिरेकेणापि नायकनायिकावृत्तान्तव्यक्तिसंभवाच्च । न चोपमात्र व्यङ्ग्या । 'उल्लास्य काल–' इत्यादिवच्छ्लेषाभावात् । न च वाच्यसिद्ध्यङ्गत्वम् । रविकमलिनीवृत्तान्तस्यैतन्नैरपेक्ष्येणैव सिद्धेरिति ।

वाच्यसिद्ध्यङ्गं द्विधा—एकवक्तृकपदवाच्याङ्गमन्यवक्तृकपदवाच्याङ्गं च ।

'[१]भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

अत्र हालाहलरूपो विषशब्दार्थो व्यङ्ग्यः । जलेऽभिधानियमनात् । स च जलदभुजगेति रूपणस्य वाच्यस्य सिद्धिं करोति । अन्यथोपमासंदेहसंभवात् ।

---

द्धत्वादपि न पादपद्प्राधान्यमित्याह—**तद्व्यतिरेकेणापीति । श्लेषाभावादिति** । तथा च नायिकाद्युपस्थापकपदाभावाद्व्यज्यमानवृत्तान्तावच्छेदकत्वेनैव तत्प्रतीतेर्नोपमाध्वनिरिति भावः । न चाप्रकृतवृत्तान्तारोपस्य समासोक्त्यलंकारत्वात् 'वस्तुरूपः' इति प्रकाशानुपपत्तिरिति वाच्यम् । अप्रकृतवृत्तान्तारोपविषयप्रकृतवृत्तान्तस्य समासोक्तिरूपतया तदेकदेशस्यालंकारत्वाभावात् । **एकवक्तृकेति** । व्यञ्जनपदसमानकर्तृकेत्यर्थः । भ्रमिमिति प्रलय इन्द्रियचेष्टाविरहः । तमोऽन्धकाररूपदर्शनम् । रूपणस्य रूपकस्य । सिद्धिं निश्चयम् । अन्यथेति । हालाहलरूपव्यङ्ग्याभावे हि भुजगसदृशजलदजन्यत्वस्य जलेऽन्वयसंभवादुपमा समञ्जसैव । भुजगाभिन्नजलदजन्यत्वस्यापि संभव इति तयोः संदेहः स्यात् । हालाहले तु व्यङ्ग्यत्वे सति जलाभिन्नत्वेनाध्यवसिते भुजगाभिन्नजलदजन्यत्वस्यैव संभवः, न तु भुजगसदृशजलदजन्यत्वस्येति रूपकनिश्चय इति भावः । न च व्यङ्ग्यहालाहलाभिन्नत्वेनावगते जले भुजगसदृशजलदजन्यत्वं संभवतीत्युपमाया अपि संभव इति वाच्यम् । भ्रमाद्यष्टविधकार्योत्पादकत्वसामञ्जस्याय हालाहलप्राधान्यस्यैवोचितत्वात् । यद्यपि प्रसिद्धार्थसंभवेन प्रकरणेनाप्रसिद्धेऽर्थेऽभिधा नियन्तुं शक्यते । तथा सति निहतार्थत्वस्य दोषत्वानुपपत्तेः, तथाप्यप्रकृतोपस्थितिर्नान्वयबोधौपयिकी । तद्विषयस्योत्सर्गतस्तात्पर्याविषयत्वात् । अतः प्रकृतोपस्थित्यावश्यकत्वाद्व्यञ्जनया

---

१. 'भ्रमिमिति । जलदो मेघ एव त्रासकत्वाद्भुजगः सर्पस्तज्जं विषं जलमेव हालाहलं कर्तृ वियोगिनीनां भ्रम्यादि कुरुत इत्यन्वयः । भ्रमिर्दिशां भ्रमणामिव दर्शयन्कश्चिदान्तरो विकारश्चेतसोऽनास्था वा । अरतिर्विषयानभिलाषः । अलसं हृदयं यासां तत्ता । प्रलयो नष्टचेष्टता । मूर्च्छा बाह्याभ्यन्तरेन्द्रियवृत्तिनिरोधः । तमस्तमोगुणस्योद्रेकेणान्ध्यम् । मूर्च्छैव तम इति रूपकमिति कश्चित् । शरीरस्य सादोऽवसादः । पीडेत्यर्थः । मरणं प्रसिद्धम् । मरणपदेन तत्पूर्वावस्थोच्यत इति केचित् । अत्राप्रकृतेन व्यङ्ग्यं हालाहलं जलदभुजगेतिरूपकस्य वाच्यसिद्धिकृत् । अन्यथा जलदस्य भुजगत्वायोगेन भुजग इव जलद इति पूर्वपदार्थप्रधानोपमितसमासाश्रयणेनोपमालंकारापत्तेः । व्यङ्ग्याभिन्नत्वेनाध्यवसिते तु जले भुजगत्वोपपत्तेरुत्तरपदार्थप्रधानरूपकसिद्धिरिति विभावनीयम्' इत्युदाहरणचन्द्रिकासंक्षेपः.

यथा वा मम—

'तादृग्भूतरसप्रसादकतकक्षोदाम्बुधारायिता
जीयासुः कविरत्न खान भवतस्तास्ता वचोभङ्गयः।
अर्थान्विग्रहिणः पुरातनतरान्सद्यो नवान्कुर्वती
याभिः कल्पमहौषधीभिरगदंकारायते भारती॥'

अत्र रसप्रसाद इत्यत्र जलप्रसादरूपोऽर्थो व्यङ्ग्यः। स च वाच्यायाः कतकक्षोदाम्बुधारोपमाया अङ्गम्।

अन्यवक्तृकशब्दवाच्यस्य सिद्ध्यङ्गं यथा—

'गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चितवपुर्गोपीं हरिः पातु वः॥'

अत्राच्युतेत्यनेन सोल्लुण्ठेन त्वं मद्विषये च्यवस इति व्यर्थमेवावस्थानमिति। यद्वाच्युतो धैर्यादस्खलितस्त्वमतो व्यर्थमवस्थानमिति। दर्शनेनेत्यादिना संभोगेनैव तृप्तिरिति। किं त्वेवमित्यादिना द्वयोरकीर्तिर्जातैव तद्वृथैवात्मानं वञ्चयाव इति खेदश्च व्यज्यते। तच्च 'इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसां' इत्येतद्वाच्यस्य सिद्धिकृत्। तद्व्यक्तिं विनैतद्विशेषणपदार्थस्य शरीरालाभात्।

---

पश्चादप्रकृतोपस्थितिरिति युक्तम्। दोषता तु निहतार्थत्वस्य प्रकृतोपस्थितिविलम्वकृतान्यत्र। प्रकृते तु विवक्षितरूपकानुगुणत्वान्न दोषत्वमित्यूह्यम्। तादृग्भूतेति। खानेति यवनप्रभोः कस्यचित्संबोधनम्। कविषु रत्नभूतेति तद्विशेषणम्। भवतस्तास्ता प्रसिद्धा वचसामुक्तीनां भङ्गयो रचनाप्रकारा जीयासुरुत्कर्षेण वर्तन्ताम्। किंविधाः। तादृग्भूतेऽनिर्वाच्ये रसस्य शृङ्गारादेः प्रसादे गुणविशेषे कार्ये कतकस्य निर्मलीसमाख्यौषधिविशेषस्य क्षोदश्चूर्णं तद्युक्ता याम्बुधारा तद्वदाचरणशीलाः। ताः काः। याभिः कल्पोक्तमहौषधीरूपाभिर्भारती अगदंकारो वैद्य इवाचरति। आचारमेवाह—पुरातनतरानतिजीर्णान्विग्रहः शरीरं तद्वतोऽर्थान्सद्यो नवान्कुर्वतीत्यन्वयः। सोल्लुण्ठेन साभिप्रायेण। एतद्विशेषणेति। इत्यामन्त्रणेत्यादिविशेष-

१. 'गच्छामीति। गोपीमाश्लिष्यन्नालिङ्गन्हरिर्वो युष्मान्पातु रक्षत्विति संबन्धः। कीदृशः। पुलकाना रोमाञ्चानामुत्करेण समूहेनाञ्चिता व्याप्ता तनुर्यस्य सः। कीदृशीं गोपीम्। इति पूर्वार्धोक्तं यदामन्त्रणं संबोधनमच्युतेत्येवरूपं तस्य या भङ्गी रचना तया स्खलितत्वव्यञ्जनद्वारा सूचितं यद्वृथावस्थानं स्थितिस्तेन यः खेदस्तेनालसाम्। अथ वामन्त्रणभङ्गिभ्यां सूचितौ यौ वृथावस्थानखेदौ ताभ्यामलसामित्यर्थः। भङ्गिरुक्तिरचना दर्शनेन भवत इत्यादिरूपा। इतीति किम्, हे अच्युत नाम कृष्ण, अहं गच्छामि। कुत इत्यत आह—दर्शनेनेत्यादि। भवतो दर्शनेन किं तृप्तिरुत्पद्यते, अपि तु नेत्यापाततोऽर्थः। तथा च निष्फलमवस्थानमिति भावः। अवस्थाने वाधकमप्याह—किंत्विति। एतच्च प्रत्युतेत्यर्थ-

अस्फुटं यथा—

'[१]अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥'

अत्रादृष्टो यथा न भवसि वियोगदुःखं च यथा नोत्पद्यते तथा कुर्या इति व्यङ्ग्यं सहृदयस्यापि न स्फुटमवभासते ।

संदिग्धप्राधान्यं यथा—

'[२]हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'

अत्र चुम्बितुमैच्छदिति व्यङ्ग्यम् । युगपल्लोचनत्रयव्यापारणं वाच्यम् । तयोश्च प्राधान्ये साधकबाधकमानाभावेन संदेहः । वाच्यस्याप्यलौकिकत्वेन चमत्कारकारित्वादुत्कण्ठातिशयव्यञ्जकत्वाच्च ।

तुल्यप्राधान्यं यथा—

'[३]ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥'

---

म् । एवं विजनस्थयोरेकान्तगतयोरावयो· सतो प्रत्युत हतजनः कुत्सितो लोकोऽन्यथा भावयति रत्यर्थं गताविति सभावयतीति वाच्योऽर्थ । व्यङ्ग्यस्तु—हे अच्युत विजनेऽस- द्धनायिकादर्शनेऽपि धैर्यच्युतिरहित, भवतो दर्शनेन किं तृप्तिरुत्पद्यते, अपि तु सभोगे- व । कि त्वेवमित्यादिनान्यथा संभावनमावश्यकम् । तद्धैवात्मान वञ्चयाव इति वृथाव- थानसहितखेद । तत्रोत्पद्यत इत्येतेन वृथावस्थानम् । किं त्वेवमित्यादिना खेद इति । चेत्यामन्त्रणेत्युत्तरार्धस्य सिद्धिकृत ।' इत्युदाहरणचन्द्रिकासंक्षेप ·

१· 'अदृष्ट इति । कस्याश्चित्प्रिय प्रत्युक्ति । भवत्यदृष्टे सति दर्शनस्योत्कण्ठा । दृष्टे सति वेच्छेदभीरुता । जायत इति शेष । विच्छेदो वियोगस्तद्विषये भयशीलतेत्यर्थ· । इत्थं चादृष्टेन ष्टेन वा भवता कृत्वा सुख न लभ्यते । मयेति शेप । भवतेति हेतौ तृतीया । अत्राद- र्शन वियोगभय चेत्युभय परिहरणीयमिति व्यङ्ग्यमस्फुटम् ॥' इत्युदाहरणचन्द्रिकासक्षेप · २ 'हरस्त्विति । कुमारसभवे पद्यमिदम् । चन्द्रोदयस्यारम्भ उत्पत्तिकालेऽम्बुराशिरिव किंचिदीषत्परिवृत्तं च्युत धैर्यं यस्य तथाभूतो हरस्तु बिम्बफलवदधरोष्ठो यत्र तथाविधे, बिम्बफलमधरयतस्तौ बिम्बफलाधरौ । तथाभूतावोष्ठौ यत्र तथाविधे वा उमायाः पार्वत्या मुखे विलोचनानि व्यापारयामास सचारयामासेत्यन्वय· । अत्रोदयाधिक्ये धैर्यच्युतेराधिक्या- दारम्भपर्यन्तानुधावनम् । विलोचनानीति बहुवचनेनोत्कण्ठातिशयो व्यज्यते । ओष्ठद्वय मुखं चेति त्रिषु त्रयाणा सचारणलाभाय तदिति कश्चित् । अत्र चुम्बितुमैच्छदिति व्यङ्ग्यस्य वाच्यस्य च सदिग्ध प्राधान्यम् । युगपल्लोचनत्रयसंचारणस्योत्कण्ठातिशयपर्यवसानतया सौन्दर्यात् ।' इत्युदाहरणचन्द्रिकासंक्षेप ३. 'ब्राह्मणेति । परशुरामदूतस्य रावण प्रति वचनम् । ब्राह्मणानामतिक्रमोऽवमानस्तस्य त्यागो भवतामेव भूतये । भवतीति शेष· । न तु ब्राह्मणानाम् । जामदग्न्ये जीवति तेषामनिष्टस्यासभवादिति भाव· । भवतामिति

अत्र जामदग्न्यः क्षत्राणामिव रक्षसामपि क्षयं करिष्यतीति व्यङ्ग्यमिव वाच्यमपि प्रधानमेव । दुर्मनायत इति गम्भीरोक्त्या चमत्कारित्वात्, विग्रहवत्संधेरपि विवक्षितत्वाच्च ।

काक्वाक्षिप्तं यथा—

'मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥'

अत्र मथ्नामीति व्यङ्ग्यम् । तच्च वाच्यस्य निषेधस्य सहभावेनैव व्यवस्थितम् । तादृशकाकुं विना वाच्यस्य बाधितत्वेनाप्रादुर्भावात् । हठेनैव तदाक्षेपाद्वेत्युक्तं प्राक् ।

असुन्दरं यथा—

'वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं ॥'

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यम् । तस्माद्वाच्यं चम-

---

णेत्यर्थः । वाणीरेति । 'वानीरनिकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहक-

---

बहुवचनेन सकलसभाक्षेपः । अन्यथा ब्राह्मणातिक्रमस्यात्यागे तथा तादृशम् । जन्मप्रभृति सकलरहस्यवेदीत्यर्थः । मित्रं जामदग्न्यो दुर्मनायते क्षुब्धान्तःकरणो भवतीत्यर्थः । सामीप्याभिप्रायेण वर्तमाननिर्देशः । तथा च तत्क्षोभे सकलराक्षसक्षयरूपोऽनर्थो दुर्वारः स्यादिति व्यज्यते । अत्र जामदग्न्यः क्षत्रियाणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यं दुर्मनायत इति वाच्यं च गम्भीरोक्त्या तुल्यप्राधान्यम् । विग्रहवत्संधेरपि विवक्षितत्वात्' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'मथ्नामीति । वेणीसंवरणे संधिश्रवणकुपितस्य भीमसेनस्येयमुक्तिः । अत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमस्य न मथ्नामीत्युक्तिर्विरुद्धेति नञा काकुः प्रतीयते । तया च नञर्थान्तरं व्यज्यमानमुच्चारितनञर्थान्वितं प्रतीयत इत्यभावाभावरूपं मथ्नाम्येवेत्यवधारणं गम्यते । एवमग्रेऽपि । उरस्तो हृदयात् । सुयोधनस्योरू इति द्वितीयाद्विवचनम् । भवता न तु मम प्रजानां वा । स्वबुद्ध्या राज्यत्यागात् । अत्र क्रोधातिशयेन मथनादिक्रियासु वर्तमानताभिमानः । भविष्यत्सामीप्ये वा वर्तमानवद्व्यपदेशः । दुःखेन योधनीयत्वाभावाभिप्रायेण दुर्योधनपदं विहाय सुयोधनपदप्रयोग इति द्रष्टव्यम् । अत्र नञ्काक्वा हठेनाक्षिप्तत्वाद्व्यङ्ग्यं गुणीभूतम्' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'वाणीरेति । गृहपार्श्ववर्तिवेतसनिकुञ्जे दत्तसंकेताया निकुञ्जोड्डीनपक्षिकोलाहलतर्कितनायकप्रवेशाया गुरुजनपारतन्त्र्येण गृहकर्मणि रन्धनादौ व्यापृताया अवस्थावर्णनमिदम् । सीदन्तीति वर्तमाननिर्देशादवसादस्याविरामः सूच्यते । तथा श्रवणसमकालं तत्कार्यस्यावसादस्य कथनरूपातिशयोक्त्या उत्कण्ठातिशयो व्यज्यते । अत्राङ्गानि सीदन्तीति वाच्याद्दत्तसंकेतो लतागहनं प्रविष्ट इति व्यङ्ग्यमस्फुटम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

त्कारकारि । शब्दश्रवणसमकालमेव सर्वाङ्गावसादसंतन्यमानतारूपस्य तस्यातिसौन्दर्यादुत्कण्ठातिशयपर्यवसन्नत्वात् ।

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥ २ ॥**

पूर्ववद्ध्वनेरिव । चकारो भिन्नक्रमः । पूर्ववच्चेत्यर्थः । यथायोगं यथासंभवम् । तेनायमर्थः—न केवलमेत एव गुणीभूतव्यङ्ग्यस्य भेदाः किं त्वर्थान्तरसंक्रमितवाच्यत्वादिभिर्यथा ध्वनेर्भेदास्तथा असंभविनो विहायास्यापि तैरुपाधिभिः शुद्धभेदाः । संकरसंसृष्टिभ्यां योजने च तेषामेषां च संकीर्णभेदा अपि बोद्धव्याः । असंभविनश्च वस्तुमात्रेणालंकारव्यक्तिनिबन्धनाः । तदुक्तं ध्वनिकृता—

'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥' इति ।

अत्र ध्वन्यङ्गता व्यङ्ग्यतया । ध्रुवं ध्वन्यङ्गता ध्वनिनैव ता व्यज्यन्ते । तद्व्यञ्जकस्य ध्वनित्वमेवेत्यर्थः । कुतः, काव्यवृत्तेस्तदाश्रयात्काव्यवृत्तेस्तदभिसंधानपूर्वकत्वात् । वस्तुमात्रापेक्षयालंकारस्य चारुतानियमादित्यर्थः । ननु यद्यलंकारापेक्षया वस्तुमात्रस्य नातिशयनियमस्तदा कथमलंकारेण वस्तुमात्रव्यञ्जने ध्वनित्वमिति चेत्, उच्यते—स एवार्थो वाच्यः सन्न तथा चमत्करोति यथा व्यङ्ग्यतापन्न इत्यनुभवसिद्धम् । अतो वाच्यता अपकर्षहेतुः, व्यङ्ग्यता उत्कर्षायेति स्थितम् । यत्र चालंकारेण वस्तुमात्रं व्यङ्ग्यं तत्रालंकारस्य वाच्यत्वेन किंचिदपकर्षात् । वस्तुमात्रस्य च व्यङ्ग्यत्वेन किंचिदुत्कर्षाद्युज्यत एव ध्वनित्वम् । यत्र तु वस्तुनालंकारो व्यज्यते तत्र वस्त्वलंकारयोर्वाच्यत्वव्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षाविति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः । इदं तु चिन्त्यम् । एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत् । अगूढत्वादिनिबन्धने तु तस्मिन्को वारयितेति । यत्पुनरष्टानामेव भेदानां संकीर्णत्वमात्रातिदेशकमिदं सूत्रमिति व्याख्यानं तदबोधात् । तथासति हि यथायोगमित्यनेन वस्तुव्यङ्ग्यालंकाररूपभेदपर्युदासवैयर्थ्यम् । संकरादीनां तथाप्यव्याहतेः ।

पूर्वं सजातीययोगो ध्वनेरुक्तः । इदानीं विजातीययोगमाह—

**सालंकारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः ।**

सालंकारैरिति विभिन्नार्थैकरूपनानाशब्दैकशेषः । एकत्रालंकारपदस्य भाव-

---

मेव्याप्टताया वध्वा सीदन्त्यङ्गानि ॥' **संतन्यमानतेति** । अनुपरम इत्यर्थः । वर्तमाननिर्देशात् ।

ननु वस्तुव्यङ्ग्यालंकृतीनां प्रधानभूतव्यङ्ग्यव्यञ्जकतया ध्वन्यङ्गत्वेऽपि तासां गुणीभूतव्यङ्ग्यत्वस्य न क्षतिरत आह—**व्यङ्ग्यतयेति । तथाप्यव्याहतेरिति ।** पर्युदासाभावेऽपि संभवादित्यर्थः । वस्तुमात्रव्यङ्ग्यालंकृतेर्गुणीभूतव्यङ्ग्यान्तर्भावेऽप्यु-

प्रधानत्वात् । तथा च तैरेवालंकारैरलंकारसहितैश्च तैरित्यर्थः । तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्यालंकारेण च ध्वनेर्योग इति पूर्वापराभ्यामुक्तं भवति । तदुक्तं ध्वनिकृता—

'सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।
संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥' इति ।

स ध्वनिः सालंकारैर्गुणीभूतव्यङ्ग्यैः स्वैः प्रभेदैः सह संकरसंसृष्टिभ्यां बहुधा पुनरप्युद्द्योतत इत्यन्वयः ।

**अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी ॥ ३ ॥**

एवं ध्वन्यादिभेदैस्तत्प्रभेदैश्च योजनेऽतिप्रभूता संख्या भवतीत्यर्थः । एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवीभवतीति सप्रयोजनं ध्वनिभेदोपदर्शनम् ।

यदुक्तं ध्वनिकृता—

'ध्वनेर्यः स गुणीभूतव्यङ्ग्यस्यात्मा निदर्शितः ।
एतेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥' इति ।

तदेवमनन्तानां ध्वननव्यापारयोगिनां ध्वनीनां गुणीभूतव्यङ्ग्यानां च काव्यभेदानामनुगतोपाधिना संकलने त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात् । तथा हि किंचिद्व्यङ्ग्यं वाच्यसहं किंचिच्च तदसहम् । वाच्यत्वसहत्वं स्वभिधया प्रतिपाद्यमानस्यापि चमत्कारकारित्वम् । तयोराद्यं वस्तुमात्रमलंकारश्च । अलंकारस्य प्राधान्येऽपि यथालंकारत्वं तथोक्तं प्राक् । रसादिलक्षणस्त्वर्थो न कदाचिदपि वाच्यत्वं सहते । स हि सामान्यतो रसभावादिपदैर्विशेषतः शृङ्गारनिर्वेदादिपदैर्वाभिधीयमानश्चमत्कारकारी स्यात् । न त्वेवम् । अभिधानेऽपि विभावाद्यप्रतीतौ चमत्काराभावात् । विभावादिप्रतीतौ त्वनभिधानेऽपि व्यक्तस्य चमत्कारकारित्वादित्यन्वयव्यतिरेकाभ्यां विभावादिमुखेनैव प्रतीयमानस्तथेति निर्णीयते । तेनासौ व्यङ्ग्य एव चमत्कारी । ननु विभावादिवाचकपदैर्लक्ष्य एवास्तु रसादिः । न हि विभावादिवाचिपदं विना तत्प्रतीतिरिति चेत्, न । मुख्यार्थ-

---

क्ताष्टभेदसंकरादे. संभवादिति भाव । पूर्व चतुर्थोल्लासे । **तैरेवेति ।** गुणीभूतव्यङ्ग्यैरेव । समासोक्तिरसवदाद्यलंकाररूपैरुपमाद्यलंकारसहितैश्चेत्यर्थः । पूर्वापराभ्यां चतुर्थपञ्चमगतग्रन्थाभ्याम् । स्वै. प्रभेदैरर्थान्तरसंक्रमितवाच्यादिभिः । **ध्वनेर्य इति ।** यो ध्वनेरात्मार्थान्तरसंक्रमितवाच्यादिप्रकारः स गुणीभूतव्यङ्ग्यस्यापि प्रदर्शित इत्यर्थः । एतेन भेदप्रदर्शनेन । ध्वननव्यापारो व्यञ्जना । तद्वत्त्वं च ध्वनेर्गुणीभूतव्यङ्ग्यस्य चेत्युभयं ध्वनिपदेनोक्तम् । व्यङ्ग्यत्रैरूप्यस्योभयत्र सत्त्वात् । **उक्तं प्रागिति ।** ब्राह्मणश्रमणन्यायेनेति चतुर्थ उक्तमित्यर्थः । रसादीत्यादिना अलक्ष्यक्रमः सर्वोऽपि संगृह्यते । वृत्तिगतस्य 'स्वप्नेऽपि' इत्यस्य व्याख्यानं कदाचि-

---

१. 'पदैर्वा' ख.

बाधादिविरहात्। ननु व्यञ्जनायाः शशविषाणायमानत्वात्कुतो व्यङ्ग्यत्रैरूप्यकृतो भेद इति चेत्, उच्यते। लक्षणामूले वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न संभवतीति प्राक्प्रतिपादितम्। अभिधामूलेष्वपि शब्दशक्तिमूलो द्वितीयोऽर्थस्तेन सममुपमा वा व्यङ्ग्यैवेति निर्विवादम्। अभिधाया नियमनात्। अर्थशक्तिमूलेऽप्येवमङ्गीकर्तव्यम्। यतः पदेभ्यः प्रथमं पदार्थस्मृतिः। अथ पदार्थविशेषाणाम[1]न्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः। ततो व्यङ्ग्यप्रतीतिरिति तृतीयकक्षायां कुतोऽभिधायाः प्रसरणम्। द्वितीयकक्षायामेव तदनपेक्षणात्। यतोऽभिहितान्वयवादेऽशक्य एवान्वय आकाङ्क्षादिवशेन प्रतीयते। शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति च सर्वसिद्धम्। येऽप्यन्विताभिधानवादिनः "देवदत्त गामानय' इत्यादिप्रयोजकवृद्धवाक्यं श्रुत्वा तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्त[2]मर्थमानीयमानमालोक्य अयमेतद्विषयकैतत्क्रियागोचरकार्यताज्ञानवांस्तद्विषयकचेष्टावत्त्वात्तद्विषयकप्रवृत्तिमत्त्वाद्वा मद्वदिति प्रयोज्यवृद्धस्य ज्ञानमनुमिमीते। ततः कारणं विना कार्यानुपपत्त्या अखण्डवाक्यस्यान्वय[3]व्यतिरेकाभ्यां तज्ज्ञानेन कार्यत्वकारणत्वरूपां शक्तिमवधारयति। अथ ज्ञेयसंबन्धं विना वाक्यस्य सा शक्तिरनुपपन्नेत्यर्थापत्त्या अखण्डवाक्यार्थेनाखण्डवाक्यस्य वाच्यवाचकभावरूपं संबन्धमवधारयति।

यदुक्तम्—

'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥'

---

दर्पीति। **बाधादीति**। आदिना रूढिप्रयोजनसंग्रहः। तेन यष्टीत्यादिवत्तात्पर्यानुपपत्त्यापि न लक्षणसंभवः। विभावादिवाचिनां रसादिवाचकत्वप्रसिद्ध्यभावेन रूढ्यभावात्। रसादीनामानन्दमयसंविद्विश्रान्तिरूपतया प्रयोजनान्तरस्याप्यभावात्। अतो वृत्त्यन्तरमावश्यकमित्यर्थः। **उपमा वेति**। वस्तुमात्रध्वनावुपमाया असत्त्वात्क्वचिदुपमेति दर्शयितुं वाशब्दः। पदार्थविशेषाणां गवादिपदार्थगोत्वादिसामान्याक्षिप्तगवादिव्यक्तीनाम्। अन्वयविशेषरूपस्य गवाद्यन्वितकर्मत्वादिरूपस्य। **सर्वसिद्धमिति**। अन्यथा वाक्यभेदस्य दोषत्वानापत्तेरिति भावः। **येऽपीति**। प्राभाकरा इत्यर्थः। एतच्च 'इत्याहुः' इत्युत्तरग्रन्थेनान्वितम्। **अयमिति**। प्रयोज्यवृद्ध इत्यर्थः। एतच्छब्देन गवादिरुच्यते। द्वितीयेन तेनानयनादिक्रिया। तथा च गोविषयकानयनक्रियागोचरकार्यताज्ञानवानित्यर्थः। क्रियाजनकप्रवृत्तेः सविषयत्वात्तज्जन्यचेष्टाया अपि याचितमण्डनन्यायेन सविषयत्वम्। प्राचीनतार्किकमते इच्छादीनामेवेति ज्ञेयम्। **तद्विषयकेति**। गोविषयकचेष्टावत्त्वादित्यर्थः। एवं चेष्टया साक्षाज्ज्ञानानुमानमुक्तम्। कदाचिच्चेष्टयानुमितया प्रवृत्त्या तदनुमानमित्याह—**तद्विषयकेति**। अत्र च यो यद्विषयकचेष्टावान् यद्विषयकप्रवृत्तिमान्वा स तद्विषयकतत्क्रियागोचरकार्यताज्ञानवानिति सामान्यतो व्याप्तौ मद्वदिति दृष्टान्तः। अत्रैव वृद्धसंमतिमाह—**यदुक्तमिति**। प्रत्यक्षपदं करणपरम्। तत्र श्रोत्रेण शब्दं पश्यति

---

१. 'अन्वयरूपविशेषस्य' ख. २. 'अर्थं देशान्तरनीयमानं' ख. ३. 'व्यतिरेकिणः' ख.

'अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्यावबुध्येत संबन्धं त्रिप्रमाणकम् ॥' इति ।

त्रिप्रमाणकमिति जात्यपेक्षया त्रित्वं न तु व्यक्त्यपेक्षया । एवमखण्डयोः संबन्धमवधार्य विशेषतो व्युत्पाद्यते । कथम् । इत्थम्—अनन्तरं तेनैव प्रयोजकेन 'चैत्र, अश्वमानय', 'देवदत्त, गां नय' इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्यावापे कस्यचिदुद्धारे सति यस्य वाक्यभागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकावुपलभते तत्र तस्य शक्तिमवधारयति । तच्च शक्त्यवधारणमन्वित एव पदार्थे । प्रथममन्वय एव वाक्यस्य शक्तिग्रहात् । पदार्थमात्रशक्तावुपजीव्यविरोधात्[1] । व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च । न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः । व्यवहारेणैवाद्यव्युत्पत्तेः । व्यवहारस्य च प्रवृत्तिनिवृत्तिरूपस्य पदमात्रेण कर्तुमशक्यत्वात् । अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु संकेतग्रहादन्विता एव पदशक्याः । त एव च वाक्यार्थमिति न वाक्यार्थबोधे शक्तेर्विरामः । न त्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते योग्यतादिवशादिति युक्तम् । ननु तथापि संसर्गविशेषोऽशक्य एव । पदार्थसामान्यान्वित एव शक्तिग्रहात् । अन्यथा 'गामानय' इति पदं श्रुत्वा 'अश्वमानय' इत्यादिवाक्ये तदेवेदमानयपदमित्यादि प्रत्यभिज्ञा[2] न स्यात् । पूर्वस्य गवान्वितानयनपदस्याश्वान्वितानयनेऽशक्तत्वेनार्थभेदेन[3] भेदा-

---

साक्षात्करोतीत्यर्थः । तथा चक्षुषा वृद्धैरभिधेयान्गवानयनादींश्च साक्षात्करोतीत्यर्थः । श्रोतुः प्रयोज्यवृद्धस्य प्रतिपन्नत्वं कार्यताज्ञानवत्त्वं चेष्टालिङ्गरूपेणानुमानेनावबुध्येतेत्यग्रेतनेनान्वयः । अन्यथानुपपत्त्या कारणं विना कार्यानुपपत्त्या द्वयात्मिकां कार्यकारणत्वरूपां शक्तिं बोधेज्जानीयादित्यर्थः । अर्थापत्त्या तदर्थसंबन्धं विना वाक्यस्य तज्ज्ञानजनकत्वानुपपत्त्या संबन्धं वाच्यवाचकभावरूपमवबुध्येतेत्यर्थः । संबन्धाभावे हि तद्वाक्यादर्थान्तरस्यापि बोधः स्यादित्यतिप्रसङ्ग इति भावः । **त्रिप्रमाणकमिति** । प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयमूलकमित्यर्थः । **जातीति** । प्रत्यक्षत्वाद्युपाधिविवक्षयेत्यर्थः । प्रत्यक्षद्वयमर्थापत्तिद्वयमनुमानं चेति प्रमाणव्यक्तीनां पञ्चत्वादिति भावः । **वाक्यभागस्येति** । गोपदादेरित्यर्थः । वाक्यार्थभागस्य गवाद्यर्थस्य । **उपजीव्येति** । वाक्यादन्वितज्ञानकल्पनमुपजीव्यम् । तत्सिद्ध्यर्थं संबन्धकल्पनमुपजीवकम् । उपजीव्येन तद्विरोधो न युज्यते । तन्मूलत्वादित्यर्थः । नन्वलभ्यतयान्वयांशे न शक्तिकल्पना किं तु पदार्थस्वरूपांश एवेति न विरोध इत्यत आह—**व्यवहारेणेति** । उपस्थापनादनुमानात् । तथा च प्रवृत्त्यनुमितेऽन्वितज्ञानेऽन्वयव्यतिरेकाभ्यां वाक्यस्य शक्तिग्रहात्तद्भागस्यापि तत्तदन्वयभाग एवावापोद्वापाभ्यां शक्तिग्रहः । अन्यलभ्यत्वे शाब्दत्वानुपपत्तेरिति भावः । तदाह—**नन्विति । सामान्यान्वित एवेति** । कारकान्वि-

---

१. 'बाधात्' ख. २. 'प्रत्यभिज्ञानं स्यात्' क. ३. 'शक्यत्वेन' ख.

दिति चेत्, न । पदार्थत्वेन सामान्येन विशेषाणामन्वये[1] शक्तिग्रहात् । अन्वितानां च विशेषरूपत्वात् ।" इत्याहुः । तेषामपि मते सामान्येनैव रूपेण विशेषः शक्यो न तु विशेषरूपेण । तथा च पदार्थान्तरसामान्यान्विते पदानां शक्तिः । गवादिविशेषान्वितस्तु विशेषो वाच्य एव । तस्मादभिहितान्वयवादेऽनन्वित ... । अन्विताभिधाननये तु पदार्थसामान्यान्वितः स्वार्थः संकेतविषयः ...ादिविशेषान्वितानयनादिरूपस्त्वसंकेतित एवेत्यवाच्य एव वाक्यार्थः ।

यदपि कैश्चिदुच्यते—'शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रापि ...ब्द एव निमित्तम् । यतो नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते' इति । ...दप्ययुक्तम् । शब्दस्य ह्यर्थे निमित्तत्वं कारकत्वं ज्ञापकत्वं वा । न प्रथमम् । ...ब्दस्यार्थानुत्पादकत्वात् । चरमं पुनरनुमन्यते परं तु संकेतवत्त्वेन ज्ञातस्य । ज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वेऽतिप्रसङ्गात् । न चान्वयविशेषे ...केतग्रहः । अस्तु विशेष एव संकेतग्रह इति चेत्, लोष्टाद्यन्वितानयनादेर्वि...पस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या । तथा च तत्र संकेतग्रहे ...ब्दात्तदुपस्थितिः शब्दाच्च तदुपस्थितौ संकेतग्रह इत्यन्योन्याश्रयात् । तस्मा...ैमित्तिकानुरोधेन निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

अथ "सोऽयमिषोरिव 'दीर्घदीर्घतरो व्यापारः' इति, 'यत्परः शब्दः स शब्दार्थः' इति च 'निःशेष–' इत्यादौ विधिरेव वाच्यः" इति भट्टमतोपजीविनः । अस्यार्थः–यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं च रिपोर्विधत्ते तथैक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते । अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव । किंच यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति 'निःशेष–' इत्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति[2] । ते तात्पर्यवाचोयुक्तेस्तात्पर्यमजानन्तः पशवः । तद्वाक्यवर्तिपदोपस्थापित एव हि तात्पर्यमुच्यते न प्रतीतमात्रे । तथाहि भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति

---

तानयनशक्तमानयनपदं क्रियान्वितगोशक्तं गोपदमित्यर्थः । **विशेषाणामिति** । गवानयनादीनां विशेषाणामेव हि सामान्यरूपेण शक्तिग्रहविषयत्वम् । तेन प्रत्यभिज्ञाया विशेषबोधस्य च प्रवृत्त्यङ्गस्योपपत्तिरित्यर्थः । **अवाच्य एवेति** । किंतु समभिव्याहृतपदानामाकाङ्क्षादिवशादेव प्रतीयत इति भावः । शब्दस्य निमित्तत्वे मानमाह—**यत इति** । कल्पनायां चोपस्थितत्वाच्छब्द एव निमित्तं कल्प्यत इति भावः । **उपस्थापकान्तराभावेनेति** । लोष्टान्वितानयनं कदाप्यगृहीतवतः पुरुषस्येत्यर्थः । **तात्पर्यवाचोयुक्तेरिति** । यत्पर इत्यादिवाक्यस्येत्यर्थः । किं तर्हि तद्वाक्यतात्पर्यं तदाह—**तद्वाक्येति** । तद्वाक्यवर्तिपदोपस्थापितेष्वनेकेष्वर्थेषु यत्परो विधिः स शब्दस्य विधिवाचकस्यार्थः । स्वार्थान्वितत्वेन प्रतिपाद्य इत्यर्थः । एतदेवोपपादयति—**तथाहीत्यादिना** । सिद्धाना लोहितोष्णीषदध्यादिद्रव्याणां

---

१ 'एवान्वये' ख.　२. 'एवेति' ख.

सिद्धान्तः। अस्यार्थः—भूतं सिद्धं भव्यं साध्यं तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यत इति। कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया साध्वीभूतया स्वक्रियया योगात्साध्यायमानतामाप्नुवन्ति। स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति। ततश्च यथा दहनेनादग्धमात्रं दह्यते न तु दग्धमपि तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते न तु प्राप्तमपि। यथा ऋत्विक्प्रचरणेऽन्यतः प्राप्ते 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यनेन लोहितोष्णीषत्वमात्रं विधीयते न तु ऋत्विक्प्रचरणं वा। उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्। हवनस्यान्यतः सिद्धौ च 'दध्ना जुहोति' इत्यनेन दध्नः करणत्वं न तु दधि हवनं वा। एवं 'रक्तं पटं वय' इत्यादौ रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा असिद्धावेकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यावदेव विधेयं तावत्येव तात्पर्यम्। विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं 'शब्दोपात्त एव तात्पर्यम्' इति। यदि च प्रतीतमात्रे तात्पर्यं तदा 'पूर्वो धावति' इत्यादौ पूर्वादिसमानसंवित्संवेद्यतया प्रतीतेऽपरार्थेऽपि कदाचित्तात्पर्यं स्यात्। ननु तद्वाक्यवर्तिपदोपस्थापित एव तात्पर्यमिति न व्याप्तिः। 'विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्क्थाः' इत्यत्र विषं भुङ्क्ष्वेति वाक्यस्य मा चेत्यादिवाक्यार्थे तात्पर्यादिति। मैवम्। यत एतदेकमेव वाक्यम्। चकारस्यैकवाक्यतासूचकत्वात्। अन्यथा तद्वैयर्थ्यप्रसङ्गात्। न चाख्यातवाच्यक्रिययोः साक्षादन्वयः संभवति। 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति न्यायात्। सुहृद्वाक्यं चैतत्। अतो भवितव्यमत्रान्वयेन। ततो विषभक्षणादप्येतद्गृहभोजनमनिष्टहेतुरतः सर्वथा नास्य गृहे भुङ्क्था इति वाक्यार्थः। तथा च तद्वाक्यस्य पदोपस्थापित एव

---

कर्तव्यतारूपविध्यन्वयसंभवाय कर्तव्यक्रियाङ्गत्वम्। तस्य व्यापारं विनोदासीनानामसंभवाच्छिरोवेष्टेनावदानग्रहणादिक्रियायोगं चोक्तासाध्यक्रियायोगेन साध्यायमानत्वात्तेषां विध्यन्वये नियामकं तात्पर्यम्। तच्च 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादप्राप्ते पर्यवस्यतीति सदृष्टान्तमाह—**ततश्चेति**। ऋत्विजां प्रचरणं तत्तदनुष्ठानम्। **अन्यत इति**। श्येनयागे ज्योतिष्टोमातिदेशादित्यर्थः। **हवनस्येति**। 'अग्निहोत्रं जुहोति' इत्यनेन प्राप्तावित्यर्थः। **न तु दधीति**। केवलमित्यर्थः। दधिवत्तत्करणताया अप्यप्राप्तेः। प्रकाशेऽपि 'दध्यादेः करणत्वमात्रम्' इति मात्रचा हवनव्यावृत्तिर्बोध्या। वेद इव लोकेऽपि विधेरप्राप्तांश एव तात्पर्यमित्याह—**एवमिति**। **गुणानां चेति**। गुणानामङ्गानां परार्थत्वात्फलवत्प्रधानार्थत्वात्परस्परमसंबन्धः। कुतः। समत्वात्। गुणप्रधानभावेन सर्वत्रान्वयो भवति न तु गुणयोः प्रधानयोर्वा गुणत्वस्य प्रधानत्वस्य वोभयत्र समत्वादाकाङ्क्षाविरहादिति जैमिनिसूत्रार्थः। **सुहृदिति**। अतो विषमित्यादिवाक्ये स्वातन्त्र्येण स्वार्थपरत्वायोगान्मा चास्येति मुख्यवाक्यार्थे गुणत्वेन स्वार्थान्वयो वाच्यः। स च वमित्याह—**तत इति**। मा चेति

१. 'साधनं' ख.

तात्पर्यमिति सिद्धम् । तस्मात् 'यत्परः शब्दः' इत्यादि यदुक्तं तत्तात्पर्याज्ञानात् ।

यदपि 'सोऽयमिषोरिव-' इति तदप्ययुक्तम् । यतः शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात्तदा 'चैत्र, पुत्रस्ते जातः, कुमारी ते गर्भिणी' इत्यादिवाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात् । अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा हर्षादयस्तु न तत्प्रत्याय्या इत्युच्यते तर्हि लक्षणीयेऽप्यभिधैव स्यादिति लक्षणोच्छेदः । किमिति च 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रेण भगवाञ्जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयांबभूव । सर्वत्रैवाभिधाप्रसङ्गे उत्तरस्य दौर्बल्ये बीजाभावात् । सूत्रं तु प्रकृतार्थविच्छेदकत्वेऽपि बहूपकारकत्वाद्दुरूहत्वाच्च व्याक्रियते—श्रुतिलिङ्गादयः षडिह विनियोजकाः । तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयो न संभवतीत्येकेनापरस्य बाधो वक्तव्यः । स च बलवता दुर्बलस्येति स्थिते दौर्बल्यप्रतिपादकं सूत्रं श्रुतिलिङ्गेत्यादि । अस्यार्थः—श्रुत्यादीनां समवाये एकत्रोपनिपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद्दुर्बलम् । कुतः, अर्थविप्रकर्षात्पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात् । यथा चैतत्तथोदाहरणे स्फुटीकरिष्यते । तत्र निरपेक्षो रवः श्रुतिः । यथा—'व्रीहीनवहन्ति' इति । अत्र क्रियाफलभागित्वं[2] कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति । अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम् । यथा—'बर्हिर्देवसदनं दामि' इति । अत्र लवनार्थप्रकाशकतया बर्हिर्लवने विनियोगः । परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम् । यथा—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन 'देवस्य त्वा' इत्यादि भागस्यापि तत्र विनियोगः । लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद्वाक्यान्तरेण संबन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम् । यथा—'समिधो यजति' इत्यादौ । अस्य हि

---

निषेधेन बलवदनिष्टहेतुत्वस्यावगतेरविकलरूपबलवत्त्वस्यावधिसाकाङ्क्षत्वात्तत्त्वेन विषभोजनस्यान्वय इत्यर्थ । **न तत्प्रत्याय्या इति** । न पुत्रस्त इत्यादिशब्दप्रत्याय्या इत्यर्थ । शब्देन ह्यर्थप्रतीतिद्वारा हर्षादयो जन्यन्ते न तु तत्प्रतीतिः । सा तु हर्षादिलिङ्गैर्नेत्रविकासादिभिरिति भावः । ननु गङ्गाद्यर्थप्रतिपादनद्वारा तीरादिप्रतिपादनस्याभिधयैव संभवान्नास्मन्मते लक्षणा नामातिरिक्तवृत्तिरिति तदुच्छेदो न दूषणमित्यतो दूषणान्तरमाह—**किमिति चेति** । **सर्वत्रैवेति** । श्रुतिस्थल इव लिङ्गादिस्थलेऽपि शब्दश्रवणानन्तरं प्रतीयमानानां सर्वेषामर्थानामभिधयैव प्रतीतौ लिङ्गादीना दौर्बल्यहेत्वभावादित्यर्थ । एतच्चोदाहरणे स्पष्टीकरिष्यते । विनियोजका अङ्गाङ्गित्वरूपविनियोगबोधका । **निरपेक्ष इति** । स्वार्थबोधकशब्दान्तरानपेक्ष

---

१. 'स्थिति' क ग. २. 'क्रियाजन्यफल' क.

दर्शपौर्णमासकथंभावाकाङ्क्षायां पाठवशाच्छेषत्वम् । स्थानं क्रमः । स चानेकस्याम्नातस्य संनिधिविशेषाम्नानम् । यथा—'दब्धिरसि' इत्यत्राग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः । मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम् । तत्राग्नेयाग्नीषोमयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः । 'दब्धिरसि' इत्यत्र तु न लिङ्गादि विनियोजकम् । किं तु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः । समाख्या योगबलम् । यथा—हौत्रमौद्गात्रमित्यादि । तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानि । अथैषां विरोधोदाहरणानि—तत्र श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दुर्बलत्वं यथा—'कदा चन स्तरीरसि नेन्द्र सश्चसि' इत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति । अत्र चेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थापने विनियोगः प्रतिभाति । अन्यप्रकाशस्यान्यत्र विनियोगायोगात् श्रुत्या गार्हपत्योपस्थापने स प्रतीयते । गार्हपत्यमिति द्वितीया हि कर्मविभक्तिकतया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति । क्रियाजन्येष्टफलभागित्वस्य[1] तदर्थत्वात् । एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वम् । क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात् । तदत्र श्रुतिलिङ्गयोर्विरोधः । न च वाच्यं निरपेक्षया द्वितीयया शेषित्वमात्रं प्रतीयते न त्वैन्द्रीमृचं प्रति । तच्चाग्नेयीमृचं प्रत्यपि संभवतीति कुतो विरोधः । ऐन्द्र्येति पदमपेक्ष्य विशेषबोधनाद्विरोध इति चेत्, न तर्हि श्रुतेर्विरोधः किं तु वाक्यस्य । तच्च लिङ्गापेक्षया दुर्बलमेवेति । यतः शेषशेषिभावः सामान्यतः श्रुत्यैवावगम्यते । पदान्तरप्रक्षेपात्तु विशेषे व्यवस्थाप्यते विशेषसंबन्धमात्रस्य पदान्तरसंबन्धात्प्रतीतेः । तस्माच्छ्रुत्या सामान्यतः प्रतिपाद्योऽसौ वाक्यलभ्यं विशेषमपेक्ष्य लिङ्गप्रतिपाद्येन विरुध्यते । तत्रायं पूर्वपक्षः—सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका । नह्यसमर्थे श्रुतिसहस्रेणापि विनियोक्तुं शक्यते । यथा वह्निः प्रसेके । जलं वा दाहे । अतो लिङ्गस्य बलवत्त्वादिन्द्रस्योपस्थाने[2]ऽस्या विनियोगः । तदनुरोधितया

---

इत्यर्थः । **स्थानं क्रम इति** । स्थानक्रमशब्दावेकार्थतया प्रसिद्धावित्यर्थः । **संनिधिविशेषेति** । कर्मान्तरव्यापृतेनोपलक्षितमित्यर्थः । तच्च द्विविधं समानदेशत्वं समीपदेशत्वं चेति । तत्राद्यमुदाहरति—**यथेति** । अन्त्य तु विरोधोदाहरणे वक्ष्यते । **विशेषसंबन्धेति** । शेषत्वशेषित्वयोर्निरूपकसंबन्धमात्रस्येत्यर्थः । अयं भाव—प्रधानभूतशेषशेषित्वबोधकतया श्रुतिस्तत्र प्रधानम् । वाक्यं तु तदपेक्षितविशेषसमर्पकं तदङ्गम् । प्रधानेन च व्यपदेशो न तु गुणभूतेनेति श्रुतिलिङ्गयोरेवायं विरोध इति । किं च लिङ्गे बलीयसि सति यस्य बाधस्तेन लिङ्गस्य विरोधो वाच्य । न च लिङ्गस्य प्राबल्येऽत्र वाक्यबाधः । तस्य गार्हपत्यपदस्येन्द्रलक्षकतया द्वितीयायाः सप्तम्यर्थलक्षकतयाप्युपपत्ते । किंतु श्रुतिरेव यथाशक्य-

---

१. 'क्रियाजन्यफल' क. २. 'उपस्थापने' क.

द्वितीया सप्तम्यर्थतया व्याख्येया । गार्हपत्यसमीपेऽनया इन्द्र उपस्थातव्य इत्यर्थः पर्यवस्यति । सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तद्बोधमपि येन लिङ्गं बलवद्भवेत् । तस्य च पूर्वं सत एव ज्ञानं विनियोगान्यथानुपपत्त्या पश्चादुपजायते । लिङ्गं तु विनियोजने श्रुतिमपेक्षते । नह्यनेनेन्द्र उपस्थातव्य इति लिङ्गात्स्वरसतः प्रतीयते । किं त्वीदृगिन्द्र इत्येतावन्मात्रम् । तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथानुपपत्त्या विनियोगः कल्पनीयः । तथा चार्थविप्रकर्षः । तथाहि—श्रुतार्थापत्तिसाधकन्यायेन शब्दोपस्थापितेनैव शाब्दी आकाङ्क्षा पूर्यत इति लिङ्गेनानया इन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया । ततस्तया विनियोगो भवेत् । ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत्प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध एवेति प्रकरणे निराकाङ्क्षे कयानुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्यवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते । लिङ्गवाक्ययोर्यथा पुरोडाशस्य स्थानकरणस्थापनरूपयोः सदनसादनयोः प्रकरणे 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेदः सुमनस्यमानः' इति मन्त्रः पठितः । तत्र कल्पयामीत्यन्तः पूर्वभागः सदने, शेषभागस्तु सादने प्रयोक्तव्य इति लिङ्गात्प्रतिभाति । अयं मन्त्र एकं वाक्यम् । यत्पदाक्षेपेण यत्कल्पयामि तस्मिन्सीदेत्येकार्थावच्छिन्नत्वाद्विभागे साकाङ्क्षत्वाच्च । ततश्चैकवाक्यत्वात्समस्त एवोभयत्र विनियोक्तव्यः 'देवस्य त्वा–' इत्यादिवत् । इति वाक्यादवगम्यते । तदनयोर्विरोधः । अत्र पूर्वपक्षः—अस्यैकवाक्यत्वे निश्चिते पश्चात्तदुपपत्तयेऽभिधानसामर्थ्यं कल्पनीयम् । यत्कल्पितया श्रुत्या विनियोगो भवेत् । यथा 'देवस्य त्वा–' इत्यादिमन्त्रे 'अग्नये निर्वपामि' इति पदयोः समवेतार्थयोरेकवाक्यतया अतादृशां पदान्तराणां सामर्थ्यकल्पना । तथा चैकवाक्यत्वनिर्वाहाय क्लृप्तं सामर्थ्यं न तद्व्याहन्तुमर्हति । किं तु विनियोजिकां श्रुतिं कल्पयत्समस्तमन्त्रविनियोजिकामेव कल्पयतीति वाक्यस्योपजीव्यत्वेन बलवत्त्वात्समस्तस्यैवोभयत्र विनियोग इति । सिद्धान्तस्तु—यद्येकवाक्यतामव-

---

दरूपा बाध्यत इति तयैव लिङ्गस्य विरोध इति । **स्वरूपसदिति** । अन्यथा प्रामाण्यानुपपत्तेरिति भाव । **न त्विति** । अयोग्यतानिश्चयाभावस्यैव शाब्दबोधहेतुत्वादिति भाव.. । **पश्चादिति** । गौणसामर्थ्यस्य ज्ञानमुपजायत इत्यर्थ. । विनियोजनेऽङ्गत्वबोधने । निराकाङ्क्षे श्रुतिकल्पनापेक्षारहिते । सर्वत्र शब्दस्याभिधेति मते तु मन्त्रश्रवणानन्तरमुक्तप्रनाड्या तेनेन्द्र उपस्थातव्य इत्यर्थस्याप्यभिधयैवावगतेः श्रुत्यध्याहारानपेक्षणेन विप्रकर्षाभावाद्दौर्बल्यं न स्यादित्यवधेयम् । **उभयत्रेति** । सदने सादने चेत्यर्थ । प्रधानानुरोधेनाङ्गावृत्तेर्न्याय्यत्वादिति भाव । समस्त इत्यंशे दृष्टान्तः 'देवस्य त्वेत्यादिवत्' इति । तत्र हि निर्वपामिपदैकवाक्यतया देवस्य त्वेत्यादीनां

---

१. 'प्रक्रान्त' क. २. 'स्थान' ख. ३. 'सुषेव' क. ४. 'मेदध' क, 'मेद' ख.

गम्यैव सामर्थ्यमवधार्येत तदोपजीव्यत्वाद्वाक्यं बलवद्भवेत्। न त्वेवम्। प्रत्युतावधृतसामर्थ्यानां संनिहितपठितानां पदानां सामर्थ्यवशेन प्रयोजनैकतया चैकवाक्यत्वावधारणम्। यावन्ति पदानि प्रधानमेकमर्थं प्रतिपादयितुं समर्थानि विभागे साकाङ्क्षाणि भवन्ति तावन्त्येकं वाक्यं भवति। अनुष्ठेयश्चार्थो मन्त्रे प्रकाशमानः प्रधानम्। सदनसादने चात्र तथाभूते। तथा च सदनप्रकाशनसमर्थः पूर्वभागः सादनप्रकाशनसमर्थः शेषभाग इति प्रतीताभ्यां तत्सामर्थ्याभ्यां क्लृप्तेन श्रुतिद्वयेन प्रागेव तद्भागयोः प्रत्येकं विनियोगे सिद्धे तावतैव प्रकरणपाठोपपत्तौ समस्तमन्त्रस्यैकवाक्यताबुद्धिरुत्पन्नाप्याभासीभवति। लिङ्गेन बाधात्। तथा क्लृप्तमपि सामर्थ्यं न श्रुत्यन्तरं कल्पयितुमर्हतीत्यर्थविप्रकर्षाद्वाक्यं दुर्बलम्। तस्माद्यत्रावान्तरवाक्यविरोधि लिङ्गं नास्ति तत्र समवेतार्थकेनैकेन पदेन द्वाभ्यां त्रिभिर्वा सहैकवाक्यता पदान्तराणामपि सामर्थ्यं विनियोजकश्रुतिकल्पनानुकूलं कल्पयति। यथात्रैव 'स्योनं ते' इत्यादिभागानाम्। वाक्यप्रकरणयोर्यथा दर्शपौर्णमासप्रकरणे 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिकः सूक्तवाकनिगदः पठितः। तत्र च 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्रातां अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इत्यवान्तरवाक्यद्वयं श्रूयते। तत्र पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गात्तत्पदमपनीयते। अमावास्यायां तु समवेतार्थत्वात्तत्प्रयुज्यते। तत्रैवं संदिह्यते—इन्द्राग्निपदैकवाक्यतापन्नानि अवीवृधेतामित्यादिपदानि तत्रापनेयान्यथवा प्रयोक्तव्यान्येवेति। तत्र प्रकरणात्प्रयोगः प्रतिभाति। असमवेतार्थतया देवतामात्रस्यापनयनात्। वाक्यात्तु तान्यपनेयानीति प्रतीयते। येन सह यदेकवाक्यतापन्नं तेन सहैव तदपनयनौचित्यात्। तदनयोर्विरोधः। तत्र प्रकरणमेवाङ्गसंबन्धप्रतिपादकम्। अतस्तस्य बलवत्त्वाच्छेषभागः प्रयोक्तव्य एवेति पूर्वपक्षे सिद्धान्तः। प्रकरणं विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकम्। येनैवं भवेत्। किंतु तदपेक्षमेव। कथमन्यथा 'पूष्णोऽहं देवयज्यया प्रजया पशुभिश्च जनिषीय' इति पूषानुमन्त्रणमन्त्रं तद्देवताविरहिणोर्दर्शपौर्णमासयोर्न विनियुङ्क्ते। 'तिस्र एवोपसदः साह्नस्य द्वादशाहीनस्य' इत्यत्र चैकाहविधेयस्यो-

---

विशेषणद्वारा विशिष्टनिर्वापप्रकाशकत्वाद्यथा समस्तमन्त्रस्य निर्वापाङ्गत्वं न तु निर्वपामीत्येतावन्मात्रस्य तथात्रेत्यर्थः। दृष्टान्ते निर्वापरूपार्थैक्यादेकवाक्यत्वनिर्णय। इह तु सदनसादनयोरनुष्ठेयार्थयोर्भेदादेकवाक्यत्वं बाधितम्। प्रत्येकलिङ्गवशाद्भिन्नवाक्यत्वस्यैव निर्णयात्। अतो विभज्यैव विनियोगः पूर्वोत्तरार्धयोरिति सिद्धान्तः। पूर्वोत्तरार्धयोरेकवाक्यतावशेन सामर्थ्यस्य कल्पनीयत्वात्। तत्तद्भागस्य सदनाद्यर्थप्रकाशनसामर्थ्यस्य क्लृप्तत्वादिति विप्रकर्षादित्यूह्यम्। **सूक्तवाकेति**। सूक्तवाकसंज्ञको नितरामुच्चैर्गद्यते पठ्यते तादृशो मन्त्रसमूहः। **प्रकरणादिति**। इतिकर्तव्यताकाङ्क्षारूपप्रकरणस्यामावास्यापूर्णमासीष्ट्योः समत्वादित्यर्थः। **पूषेति**। पूषदे-

---

१. 'भवन्ति' क-ख.

मयागस्वरूपे साह्ने ज्योतिष्टोमादौ द्वादशोपसत्तां न बोधयति । सा पुनर्बहुदिवसविधेया सोमयागरूपाहीननामक्रतुविशेषं नीयते । 'अह्नः खः क्रतौ' इत्यनुशासनात् । स्वरूपालोचनायां तु श्रुत्या लिङ्गेन वाक्येन वा झटिति प्रवृत्तिकेन यद्रूपमपनीयते यद्वान्यत्र नीयते तद्विहायावशिष्टेन प्रकरणाकाङ्क्षा पूर्यते । यत्र तु विरोधिश्रुत्यादिकं नास्ति तत्र प्रकरणं विनियोजकम् । यथा— 'समिधो यजति' इत्यादिबोधितस्य समिधादेः । अत्र तु यथा लिङ्गेनेन्द्रादिभागोऽपनीयते तथा वाक्येन तच्छेषभागोऽपीति क्व पश्चात्प्रवृत्तिकस्य प्रकरणस्यावकाशः । न च तथात्वमस्यासिद्धम् । यतो वाक्ये पदानां संबन्धः प्रत्यक्षसिद्धः । प्रकरणे त्वाकाङ्क्षावशात्कल्पनीयः । तथा च वाक्ये प्रथममेवाभिधानसामर्थ्यं कल्प्यते ततस्तेन श्रुतिस्तया विनियोग इति तृतीयः कालो विनियोगस्य । प्रकरणेन तु प्रथमं वाक्ययोः संबन्धः कल्प्यते ततः सामर्थ्यमथ श्रुतिरथ विनियोग इति चतुर्थः कालः । ततो वाक्यात्प्रथमं शेषभागस्यापनये सिद्धे क्लृप्तापि श्रुतिरकिंचित्करी । वाक्यविरोधादिति । प्रकरणस्थानयोर्यथा— राजसूयस्य प्रधाननानाकर्मात्मकस्य प्रकरणे प्रधानादभिषेचनीयादनन्तरं शौनःशेफोपाख्यानमाम्नातम् । तत्र किं समस्तराजसूये तदङ्गमाहोस्विदभिषेचनीय-

---

त्यमनुमन्त्रणाख्यं मन्त्रम् । यागमनु पश्चान्मन्त्रणं प्रकाशनमिति तदर्थः । **उपसत्तामिति** । उपसन्नामका इष्टिविशेषाः । साहस्याह्ना सहितस्यैकाहस्य ज्योतिष्टोमस्याह्नां तत्संबन्धियागाना समूहोऽहीनः । **विशेषमिति** । सत्रसंज्ञकयागभिन्नमित्यर्थः । सत्राणां यागसमूहरूपत्वेऽप्यहीनसंज्ञत्वाभावात् । एकवचनमहीनत्वसामान्याभिप्रायम् । द्विरात्रत्रिरात्रादीनां बहूनां तथात्वात् । श्रुत्येत्यहीनोदाहरणे तत्राहीनश्रुत्या द्वादशत्वं ज्योतिष्टोमादपनीय द्विरात्रादौ नीयते । पूषानुमन्त्रणं च पूषयागे लिङ्गेन नीयते । प्रकृते तु पूर्णमास्या लिङ्गेनेन्द्राग्निपदमपनीयते । वाक्येन च तदेकवाक्यतापन्नं 'इदं हविः' इत्याद्यपीति बोध्यम् । समिदिति प्रथमप्रयाजनाम । **तथात्वमिति** । पश्चात्प्रवृत्तिकत्वमित्यर्थः । **तथा चेति** । वाक्य इत्यस्य विनियोजके सतीति शेषः । प्रथममेव पदाना समभिव्याहारमकल्पयित्वैव । **अभिधानेति** । इदं हविरित्यर्थविशिष्टेन्द्राग्निदेवताभिधानसामर्थ्यमित्यर्थः । **श्रुतिरिति** । इदं हविरित्यादिनेन्द्राग्निदेवताप्रकाशनीयेत्येवंरूपेत्यर्थः । प्रकरणे तु विनियोजके सतीति पूर्ववत् । वाक्ययोरिन्द्राग्नीपदसहोच्चरितेदं हविरित्यग्नीषोमाविदमित्यनयोः संबन्धो विशिष्टकार्थप्रतिपादकत्वरूपः । ततस्तत्रैव सामर्थ्यम् । तत इदं हविरित्यादिना दर्शपूर्णमासोपकारं दृष्ट्वा दृष्टरूपं यथासंभवं कुर्यादिति श्रुतिकल्पनं तया च विनियोगबुद्धिरिति विप्रकर्ष इत्यर्थः । अत्रापि मन्त्राक्षराणां श्रवणमात्रेण प्रकरणाद्दर्शपूर्णमासाङ्गत्वप्रतीतेरभिधयैव सिद्धेर्वाक्यलिङ्गादिकल्पनाया अप्रसक्तेर्न दौर्बल्यं वाक्यात्प्रकरणस्य परमते भवेदिति ज्ञेयम् । एवमग्रेऽपि **नानाकर्मेति** । इष्टिपशुसोमयागात्मकस्येत्यर्थः । अभिषेचनीयाख्य सोमयागः । शुन शेफो नाम ऋषिपुत्र तस्योपाख्यानमाम्नातं पठितं शौनःशेफमाख्यापयतीति । शुनःशेफः किल हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं पशुत्वेन क्रीतः ।

मात्र इति संदेहः । तत्र प्रकरणस्य बलवत्त्वात्सर्वाङ्गतावगम्यते । स्थानस्य तु बलवत्त्वेऽभिषेचनीयाङ्गता । तदनयोर्विरोधः । यद्यप्याकाङ्क्षासत्त्योरुभयोरपि तुल्यबलता 'अयमेति पुत्रो राज्ञः' इत्यादौ 'गामानय', 'प्रासादं पश्य' इत्यादावुभयविरहेणान्वयाबोधात् । तथापि विनिगमनाविरहादुभयोस्तुल्यबलत्वाच्च विकल्पेनाङ्गतास्त्विति पूर्वपक्षे सिद्धान्तः । आकाङ्क्षासंनिधी द्वे अपि विनियोगप्रयोजिके इत्युभयसंमतम् । राजसूये च कथं स्यादित्याकाङ्क्षा क्षत्रियस्य ... यावदनुवर्तते । संनिधानं च प्राकरणिकत्वेन सर्वदा बुद्धिसंनिहितत्वादस्त्येव । अभिषेचनीये च सत्यपि संनिधाने आकाङ्क्षा उत्थाप्या । तथा च यदोत्थिताकाङ्क्षेण प्रकरणेनैकवाक्यत्वं कल्पनीयं तदा संनिधानादाकाङ्क्षोत्थापनम् । तथ चैकत्र सामर्थ्यकल्पनं श्रुत्युन्नयनं विनियोगः । अपरत्रैकवाक्यताकल्पनं सामर्थ्योन्नयनं श्रुतिकल्पनं विनियोगश्चेत्यर्थविप्रकर्षात्स्थानस्य दुर्बलत्वात्प्रकरणेः सर्वत्र राजसूये शौनःशेफोपाख्यानस्य विनियोगो न तु विकल्प इति । स्थानसमाख्ययोर्यथा—दर्शपौर्णमासप्रकरणे पौरोडाशिकसमाख्याते काण्डे सान्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः श्रूयते । स च प्रकरणाद्दर्शार्थः तथात्वं च तस्य समवेतार्थत्वेनौचित्यात्कस्यचिच्छुन्धने विनियोगाद्भवेत् । शुन्ध

---

स च वरुणाय स्वस्यालम्भे क्रियमाणे तं तुष्टाव । स चैनं ररक्षेत्युपाख्यानस्वरूपम् । ननु स्थानस्यासत्तिरूपस्याकाङ्क्षारूपप्रकरणाद्बलवत्त्वमसंभवि । द्वयोरप्यन्वयबोधहेतुत्वाविशेषात् । अत॰ कथं स्थानादभिषेचनीयमात्राङ्गत्वपूर्वपक्ष इत्याशङ्कते—**यद्यपीति ।** अयमेतीत्यादौ पुत्रपदार्थेन जनितान्वयबोधत्वेनाकाङ्क्षाविरहान्न राज्ञः पुरुषान्वयबोध॰ । गामित्यस्य चासत्त्यभावान्न पश्येत्यनेनान्वयबोध इत्यर्थ॰ । समाधत्ते—**तथापीति ।** अन्यतरस्वारस्यत्यागाङ्गीकारयोर्विनिगमकाभावात्सर्वाङ्गत्वे चाभिषेचनीयसंनिधिस्वारस्यभङ्गापत्तेरभिषेचनीयमात्राङ्गत्वे च प्रकरणस्वारस्यभङ्गापत्तेरुभयानुग्रहाय विकल्पेनाङ्गत्वं भवत्विति पूर्वपक्षाशय इत्यर्थ॰ । **कथं स्यादिति ।** राजसूयेन स्वाराज्यं कथं स्यादित्याकाङ्क्षेत्यर्थ । क्षत्रियस्य धृतिर्नाम सोमयागविशेषस्तत्पर्यन्तमित्यर्थ । पवित्राख्यसोमयागादारभ्येति बोध्यम् । **उत्थाप्येति ।** अभिषेचनीयत्वेन स्वाराज्यसाधनत्वस्य शब्देनानुक्तेस्तेन रूपेणेतिकर्तव्यताकाङ्क्षा न सिद्धेत्यर्थः । **उत्थितेति ।** राजसूयत्वेन रूपेणोत्थिता क्लृप्ताङ्गाकाङ्क्षा यस्य तेन प्रकरणेन । तद्गतयागसमूहेनेत्यर्थः । एकत्र प्रकरणे । अपरत्र स्थानस्थले । अत्र पूर्वपक्षे पवित्राख्यसोमयागे समूहान्तर्गते यस्मिन्पक्षेऽङ्गत्वं तदा तद्विकृतावतिदेशत प्राप्ति । यदा तु केवलाभिषेचनीयाङ्गत्वं तदा पवित्राख्ययागानङ्गत्वात्तद्विकृतौ नातिदेशतः प्राप्तिरिति प्रयोजनं ज्ञेयम् । सान्नाय्यं दधिपयसी । तयो क्रमे समीपस्थे । **पौरोडाशेति ।** पुरोडाशसंबन्धीनि पौरोडाशीनि पात्राणीत्याहत्य तत्पात्राणि प्रतिमन्त्रणाङ्गत्वं समाख्ययोक्तमित्यतिशयार्थमीदृशार्थकथनम् । वस्तुतः पुरोडाशमधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकमित्येव व्युत्पत्ति । अन्यथा पात्रासंबन्धिमन्त्राणां तत्समाख्या न स्यादित्यूह्यम् । अत एव सिद्धान्ते पुरोडाशमन्त्रविशेषयोः

नीयं चात्र द्वयमुपस्थितम् । साम्नाय्यपात्रं पुरोडाशपात्रं च । तत्र समाख्यावशात्पुरोडाशपात्रशुन्धने विनियोगः प्रतिभाति । स्थानवशात्तु साम्नाय्यपात्राणाम् । तदनयोर्विरोधः । तत्र पूर्वपक्षः—पौरोडाशशब्देन पुरोडाशसंबद्धान्युच्यन्ते । तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकमिति । अतः समाख्या श्रुतित एव साक्षाद्विनियोजिका । क्रमस्तु प्रकरणाद्युन्नयनद्वारा तथेति समाख्या बलवतीति । सिद्धान्तस्तु–पौरोडाशिकपदं न पुरोडाशमन्त्रविशेषयोः संबन्धमाह किं तु पुरोडाशविशिष्टं काण्डम् । वैशिष्ट्यानुपपत्त्या तु संबन्धस्तत्र कल्प्यते । सोऽपि न शेषशेषिभावः किं तु संबन्धमात्रम् । तद्द्वारेण तु मन्त्रभेदस्यापि तदनुमानम् । तथा च समाख्ययापि क्रमादिकमुन्नीय विनियोगो न तु श्रुत्यैव । एवं च समाख्यया क्रमोऽनुमेयस्तेन प्रकरणं तेन वाक्यं तेन लिङ्गं तेन श्रुतिस्तया विनियोग इति समाख्यायां षष्ठः कालो विनियोगस्य । स्थाने तु क्रमः प्रत्यक्ष एवेति न कल्पनीयः । तथा च तेन प्रथमत एव प्रकरणमनुमेयं तेन च वाक्यं तेन लिङ्गं तेन श्रुतिस्तया विनियोग इति पञ्चमः कालः । तस्मादर्थविप्रकर्षात्समाख्या स्थानतो दुर्बलेति न पुरोडाशपात्रशुन्धनेऽस्य विनियोगः । कथं तर्हि काण्डस्य पौरोडाशिकसंज्ञा । पुरोडाशसंबन्धिबहुमन्त्रघटितत्वादित्यवेहि । तदयं निर्गलितोऽर्थः—

'एकद्वित्रिचतुष्पञ्चवस्त्वन्तरपकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥
बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥'

इत्यलमतिविस्तरेणेति प्रकृतमनुसरामः ॥

पूर्वोक्त इषुदृष्टान्तो वैषम्यादनुपपन्नः । तथाहि तत्र वेगव्यापारश्च स्वरूपमत एव जनकतया दीर्घदीर्घतरत्वं संभवति । अभिधायास्तु ज्ञातया एवानुकूलत्वाद्व्यङ्ग्यनिष्ठतया चाज्ञानादित्यन्विताभिधानवादेऽपि 'निःशेष–' इत्यादौ विधेर्व्यङ्ग्यत्वमेवेति स्थितम् । किं च यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः

---

संबन्धेऽभिधानमेव निरस्य पुरोडाशविशिष्टकाण्डस्याभिधेयत्वमाह—**किं त्विति** । 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते । नहि संबन्धवाच्यत्वं संभवत्यगौरवात् ॥' इति वार्तिकोक्तेरिति भावः । **संबन्धस्तत्रेति** । अयमेवोपस्थापकतया स्थानपदार्थः । मन्त्रभेदस्य शुन्धध्वमित्यादिमन्त्रविशेषस्य । **वस्त्वन्तरपेति** । श्रुत्यर्थं विनियोगं प्रत्येकादिसंख्या वस्तुव्यवधानप्रयुक्तं लिङ्गादीनां वैषम्यमर्थाच्छ्रुत्यादिभ्यः प्रतीयत इति योजना । **अपेक्षयेति** । पूर्वापेक्षया बाध्यत्वम् । यथा लिङ्गस्य श्रुत्यपेक्षया वाक्यापेक्षया तु बाधकत्वमित्यर्थः । **विधेरिति** । तस्यान्तिकं न गतासीति वाच्यनिषेधविपरीतस्य गतासीति विधिरूपस्यार्थस्येत्यर्थः । नन्वभिधाव्यापारस्य दीर्घदीर्घतरत्वोक्त्यैवेतरसहकारिसापेक्षत्वावगमाच्छ्रुत्यादिपूर्वपूर्वसापेक्षतयैव लिङ्गादेर्बाधकत्वाङ्गीकारान्नोक्तसूत्रविरोधः । तात्पर्यविषयः शब्दाभिधेय इति च सामान्यतः

सोऽभिधयोपस्थाप्यत इत्यन्विताभिधानं तदावश्यं व्यञ्जना स्वीकार्या । अन्यथा 'रुचिं कुरु' इत्यादिशब्दस्य दुष्टत्वं न स्यात् । दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात् । तदर्थस्यान्यानन्वितत्वात् । किं च वाच्यवाचकभावातिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्ट्यापि स्वीकर्तव्यम् । अन्यथा कष्टत्वादयोऽनित्यदोषाः असाधुत्वादयो नित्यदोषा इति विभागो न स्यात् । वाच्यस्याविशेषेण कष्टत्वादीनामपि सर्वत्र दुष्टत्वस्यादुष्टत्वस्य वा प्रसङ्गात् । व्यञ्जनाभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादौ व्यङ्ग्येऽनुकूलत्वं शृङ्गारादौ दुष्टत्वमिति युज्यते विभागव्यवस्था । एवं पर्यायेषु मध्ये कस्यचिदेव कुत्रचित्काव्यानुगुणत्वमित्यपि व्यवस्था न स्यात् । दृश्यते चासौ । यथा—'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।' इत्यादौ न पिनाक्यादिपदमनुकूलम् । किं तु जुगुप्साव्यञ्जकतया कपालिपदमेव । ननु द्वयमप्येतदयुक्तम् । व्यङ्ग्यत्वेनाभिमतस्य वाच्यत्वस्वीकार एवानुकूलत्वप्रतिकूलत्वयोर्व्यवस्थोपपत्तेरिति चेत्, न । अभिधास्वीकारे संकेतग्रहं विना तदनुपस्थितिप्रसङ्गस्योक्तत्वात् । किं च काव्ये शास्त्रे वा वाच्यव्यङ्ग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदोऽवश्यं स्वीकर्तव्यः । वैधर्म्यदर्शनात् । वाच्यो ह्यर्थः सर्वैरेक एव प्रतीयत इति नियतः । व्यङ्ग्यस्तु वक्तृप्रकरणादिवशादनियतः । तथा हि 'गतोऽस्तमर्कः' इति वाक्ये राज्ञः[1] सेनापतीन्प्रति शत्रूणां हठेनामर्दनावसर इति, दूतीनामभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, सख्या वासकसज्जां प्रति प्राप्तप्रायस्ते प्रेयानिति, कर्मकरस्य सहकर्म कुर्वतः प्रति कर्मकरणान्निवर्तामह इति, भृत्यस्य धार्मिकं प्रति सांध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यवशेन बहिर्गच्छतः[2] प्रति दूरं मा गा इति, गृहिणो गोपालकं प्रति सुरभयो गृहं

---

संकेतग्रहान्न तदग्रहदोषः । अत एव नि शेषेत्यादौ तदन्तिकमेवेति विधौ तात्पर्यादभिधैव । प्राथमिकार्थस्तु न मुख्यतया तात्पर्यविषयः । किं तु विध्युपायतयैवेति न तन्मात्रेण वाक्यपर्यवसानमित्यतो दोषान्तरमाह—**किं चेति** । अन्यानन्वितत्वात्तत्त्वेनातात्पर्यविषयत्वात् । नन्वतात्पर्यविषयाननुभावकत्वेऽप्यसभ्यार्थस्मरणमात्रेण दुष्टत्वोपपत्तिरत आह—**किं चेति** । अयं भावः—व्यञ्जनानभ्युपगमे दोषाणां वाच्यार्थधीप्रतिबन्धकत्वेन वाच्यार्थापकर्षकत्वेन वा यथायथं दोषत्वं वाच्यम् । तथासति वाच्यार्थस्य सर्वत्रैकरूपत्वाच्छृङ्गार इव रौद्रेऽपि दुष्टत्वं स्यात् । अदोषत्वे शृङ्गारेऽपि तथात्वं स्यात् । रतिक्रोधादिव्यङ्ग्यभेदेन तु प्रतिकूलत्वानुकूलत्वाभ्यां व्यवस्थोपपत्तेरिति । ननु किंचेत्यादिनोक्तं दोषद्वयमयुक्तम् । व्यङ्ग्यत्वेनाभिमतस्यौजोगुणादेर्मया वाच्यत्वस्यैवाभ्युपगमेन रौद्रादावदोषत्वस्य शृङ्गारादौ दोषत्वस्य चोपपत्तेः । एवं कपाल्यादिपदस्यापि व्यङ्ग्यत्वेन भवदभिमताया जुगुप्साया वाच्यत्वस्यैवाङ्गीकारानुकूलप्रतिकूलत्वानुपपत्तिरिति शङ्कते—**नन्विति** । सेनापती-

---

१. 'राज्ञा' क. २. 'गच्छन्त' ख.

प्रवेश्यन्तामिति, दिवसेऽतिसंतप्तस्य बन्धून्प्रति संतापोऽधुना न भवतीति, आपणिकानां भृत्यान्प्रति विक्रेयवस्तूनि संह्रियन्तामिति, नायकागमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति नागतोऽद्य प्रेयानिति, एकस्यैव वा वक्तुर्बहून्प्रति तत्तत्प्रकरणवशादेवमादिरनवधिर्व्यङ्ग्योऽर्थः प्रकाशते । वाच्यस्तु सर्वान्प्रत्यवि-शिष्ट एव । ननु नैतद्वाच्यवैधर्म्यम् । नानार्थसैन्धवादिपदे नानार्थावगतिदर्श-नादिति चेत्, न । एकवाक्यवर्तिनस्तस्याप्यर्थैक्यनियमात् । यदग्रे वक्ष्यति— 'लक्षणीयार्थस्य नानात्वेऽप्यनेकार्थपदाभिधेयवन्नियतत्वमेव' इति । तथापि यत्र लवणाद्यधिकारिणः प्रति सकलस्वामिनः 'सैन्धवमानय' इति पदप्रयोगस्तत्रा-नियतत्वं दुर्वारमिति चेत्, न । तात्पर्याज्ञानात् । न ह्यत्र सर्वैर्वाच्यैः समं सर्वव्यङ्ग्यानां भेदः प्रतिपाद्यते । किं तु 'गतोऽस्तमर्कः' इत्यस्य वाच्यव्यङ्ग्ययोः । तथा च तद्वाच्यस्य नियतत्वम् । तदर्थपुरस्कारेणैव सर्वेषां व्यङ्ग्यस्यापि प्रतीतेः । तदयं नियतत्वानियतत्वरूपविरुद्धधर्मसंसर्गोऽभिहितः । एवं विलक्षणस्वरूप-कालादिभेदोऽपि भेदको द्रष्टव्यः । वैधर्म्यसत्त्वेऽपि यद्यभेदः स्यात्तदा नीला-नीलादेरपि न क्वचिद्भेदः स्यात् । वैधर्म्यस्याविशेषात् । यदुक्तम्—'अयमेव भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति । सुप्रसिद्धश्च तत्र तत्र स्वरूपभेदे भेदः । तत्र 'निःशेष–' इत्यादौ,

'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥' इत्यादौ ।

---

न्प्रतीत्यादि प्रत्यन्तेषु सर्वेषु वाक्ये इत्यस्यान्वयो द्रष्टव्यः । तत्कथकं प्रति नायकाग-मनकथकं प्रति । **अयमेवेति** । विरुद्धधर्मस्याध्यास आश्रयत्वं यदयमेव भेदो न ततोऽन्य इति प्राचीनानां केषाञ्चिन्मतम् । यदिति सामान्ये नपुंसकम् । अयमेवेति विधेयाभिप्रायं पुंस्त्वम् । 'सा वैश्वदेवी' इतिवत् । तथा कारणभेदो भेदस्य विरुद्ध-धर्मरूपस्य हेतुः । स्वरूपभेदोऽपि निषेधत्वविधित्वादिरूपविरुद्धधर्मे सति भेदः सुप्रसिद्ध । सर्वेषां प्रतीतिविषय इत्यर्थः । **स्वरूपभेद इति** । विरुद्धे यद्बोध्य-तावच्छेदकं रूपं तद्रूपो भेद इत्यर्थः । वक्तरि प्रतिश्लोकवक्तरि । आश्रयो निमि-त्तम् । **पदेति** । पदं च शब्दैकदेशभूतकाकादि च तदर्थः । शब्दार्थौ वर्णाः सघ-

१ 'प्रकरणादि' ख. २. "हे आर्या विद्वांसः, भूधराणां पर्वतानां नितम्बा मध्य-भागाः किमु सेव्या भजनीया उत स्मरेण कन्दर्पेण स्मेराः स्मितयुक्ता या विलासिन्यः प्रमदा-स्तासां नितम्बाः कटिप्रदेशाः सेव्या इति संशये मात्सर्यमेकतरपक्षेणेतरत्रासूयामुत्सार्य त्यक्त्वा मयि वा प्रश्नोत्तरपरिश्रमदानान्मात्सर्यमपहाय विचार्य न त्ववहेलनया समर्यादं मर्यादासहितं यथा स्यात्तथा । सप्रमाणमिति यावत् । कार्यं कर्तव्यमुदाहरन्तु । सयुक्तिकं कथयन्त्वित्यर्थः । किन्विति उतेति च संशयार्थकं सप्तम्यन्तम् (?) 'इदं वदन्तु' इति पाठे निर्धार्येत्यध्या-हृत्येदं कोटिद्वयं निर्धार्य वदन्त्वित्यर्थः । उत्तरार्धमार्योत्तरत्वेन व्याचक्षाणानां त्वभिप्रायं न विद्मः । अत्र वाच्यः संशयः । व्यङ्ग्यस्तु शान्तशृङ्गारान्यतरगतनिश्चय इति स्वरूपवै-लक्षण्यम्' इत्युदाहरणचन्द्रिकासंक्षेपः.

'कथमवनिप दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥'

इत्यादौ च स्वरूपभेदः । प्रथमे हि वाच्यो निषेधरूपो व्यङ्ग्यस्तु विधिरूपः । द्वितीये वाच्यः संशयरूपो व्यङ्ग्यस्तु शान्ते शृङ्गारिणि वा वक्तरि तदुचितैककोटिनिश्चयः । तृतीये वाच्यो निन्दारूपः । प्रतीयमानस्तु स्तुतिरूपः । कालभेदस्तु सर्वत्र । पूर्वं हि वाच्यः प्रतीयते पश्चात्तु व्यङ्ग्य इति वाच्यस्य शब्दमात्रमाश्रयः । प्रतीयमानस्य तु पदशब्दैकदेशीभूतकाक्वादितदर्थवर्णसंघटना इत्याश्रयभेदः । वाच्यस्य व्याकरणकोषादिमात्रेणावगमः । प्रतीयमानस्य तु प्रतिभानैर्मल्येनाप्यधिकेनेति ज्ञापकभेदः । वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्रम् । अन्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्यभेदः । 'गतोऽस्तमर्कः' इत्यादौ दर्शितनयेन वाच्य एकः । प्रतीयमानस्तु नानेति संख्याभेदः ।

'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरम् ।
सभमर पडमग्घाइणि वारिअवामे सहसु एह्निम् ॥'

---

टना रचना चेत्यर्थः । काकोर्ध्वन्यात्मकशब्दविकारत्वात्तदेकदेशत्वम् । एवं प्रत्ययादिरप्येकदेशो बोध्यः । **कस्सेति** । 'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ॥ सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥' सखी नायिका ।

---

१. 'हे अवनिप अवनिं पाति रक्षतीति तथाभूत राजन्, यद्विषां श्रीः शत्रूणा लक्ष्मीः स्वीकृता गृहीता तत्तसाद्धेतोर्दर्पो गर्व· कथं युक्त इति शेषपूरणेनान्वयः । 'दर्पोऽयं' इति पाठे स्वीकृतेऽय दर्प कथमिति सवन्धः । कथंभूताना विद्विषाम्, निशातया तीक्ष्णयासिधारया यद्दलनं छेदन तेन गलिताः पतिता मूर्धानो येषा तादृशानाम् । कथमयुक्तो दर्पस्तत्राह—नन्वित्यादि । नन्विति यत इत्यर्थे । यतो निहतारेर्मारितशत्रोरपि तव वल्लभा प्रियासौ प्रसिद्धा कीर्तिरेभिर्वैरिभि· कि त्रिदिवं स्वर्ग प्रति न नीता । अपि तु नीतैवेत्यर्थ· । कीदृशैः, अपगताङ्गै॰ । हीनाङ्गैरित्यर्थः । तथा च जीवत्येव त्वयि त्वद्वल्लभाया हीनाङ्गै· शत्रुभिरपहरणाद्दर्वोऽनुचित इति निन्दामुखेन स्तुतौ पर्यवसानाद्व्याजस्तुतिरलकारः । अत्र निन्दा वाच्या स्तुतिर्व्यङ्ग्येति स्वरूपभेद·' इत्युदाहरणचन्द्रिकासंक्षेपः·

२. 'कस्सेति । परपुरुषखण्डिताधरतया कुपिते प्रोष्यागते पत्यौ सख्या निरपराधत्वबोधनाय प्रतारणोक्तिरियम् । वारिता अधरदशनपर्यवसायिसभ्रमरपद्माघ्राण निधुवनं च मा कृथा इति निवारितापि वामा निवारिताचरणात्प्रतिकूला । सहस्वेत्यनन्तर पत्युर्गञ्जनमिति शेष· । इदानीमविचारदशायामुपनायिकासनिधौ च । तदा सर्व सुखायासीद वाच्यस्तु दुःखदमिति भावः । अत्र वाच्यार्थस्य सबोध्या सखी विषय, व्यङ्ग्यार्थस्य तु । भ्रमरकृतोऽय व्रणो न तूपपतिकृत इति तं प्रति बोधनात् । अतो विषयभेदः ।'

१. 'राज्ञा' चन्द्रिकासक्षेप·.

इत्यादौ वाच्यार्थस्य संबोध्या सखी विषयः। तत्र हि वाच्योऽर्थः श्रोतुर्व्यवतिष्ठते। प्रतीयमानस्य तु भ्रमरेणास्या अधरः खण्डितो न तूपपतिनेति तत्कान्तः। ममैवं वैदग्ध्यमित्यस्य प्रतिवेशिनी। इदं मया समाहितं पुनरेवं त्वया न विधेयमित्यस्योपपत्तिः। एवं सपत्न्यादिर्विषयोऽपीति विषयस्य भेदः। एवं स्वरूपादिभेदादवश्यमङ्गीकर्तव्यो वाच्यव्यङ्ग्ययोर्भेदः। किं च वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः। यतो वाचकस्य संकेतितार्थापेक्षा। संकेतित एव ह्यर्थेऽभिधा प्रवर्तते। न त्वेवं व्यञ्जकः। अन्यत्रापि व्यञ्जनया प्रत्ययजननात्। यच्चोक्तम्—'तात्पर्यविषये शब्दः प्रमाणं' इति तदितोऽप्यनुपपन्नम्। यतो व्यङ्ग्यस्य वाच्यताभ्युपगमेऽपि नानार्थन्यायेन तात्पर्यादेव नियमो वाच्यः। अन्यथा सर्वत्र सर्वव्यङ्ग्यप्रतीतिप्रसङ्गात्। तथा च यत्र 'वाणीरकुडङ्ग—' इत्यादौ व्यङ्ग्यप्रतीतावपि वाच्य एव चारुत्वविश्रामस्तत्र तात्पर्याविषयो व्यङ्ग्योऽर्थः कथं प्रतीयेत। 'यत्परः शब्दः' इत्युक्तमते तु सुतराम्। एतेन 'तात्पर्यमेव व्यङ्ग्यप्रतीतौ व्यापार' इत्यपि निरस्तम्। तस्मात्तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापारः। नन्वस्तु लक्षणा। नहि वाच्यवल्लक्ष्योऽपि व्यवस्थितो विशेषव्यपदेशहेतुर्वा। यतः 'रामोऽस्मि सर्वं सहे' इत्यत्र रामपदेन सर्वदुःखभाजनत्वम्।

'[1]प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।

---

उपपतिर्जारः। इतीति। इत्यस्य प्रतीयमानस्येत्यर्थः। तत्कान्तस्तस्या नायिकायाः पतिः। **सपत्न्यादिरिति**। प्रियाया एवं दर्शने रोषो नाप्रियाया इति व्यङ्ग्यस्य विषय इत्यर्थः। **स्वरूपादिभेदादिति**। तत्प्रतीतेरित्यर्थः। ननु वाच्यवैधर्म्येण तद्भेदेऽपि सिद्धिः। नानात्वार्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यत्वशब्दार्थान्वयव्यतिरेकानुविधायित्वप्रकरणादिसापेक्षत्वादिलक्ष्यसाधर्म्यस्य व्यङ्ग्येऽपि सत्त्वादिति शङ्कते—**न त्विति**। अन्यत्रापि व्यङ्ग्यत्वाभिमतेऽपि भाक्तेऽपि। तस्मादभिधेयादन्यो भक्तिर्लक्षणा तया मार्गणं प्रकाशनं यस्य स इत्यर्थः। प्रकरणादीत्यादिपदेन वक्त्रादिवैशिष्ट्यपरिग्रहः। **नियतत्वमेवेति**। एकस्मिन्वाक्य इति

---

१. 'प्रत्याख्यानरुचेरिति सीतां प्रति रामस्योक्तिः। हे प्रिये, इति भावनोपनीतां प्रति संबोधनम्। प्रत्याख्याने निराकरणे रुचिर्यस्याः तत्परायाः इत्यर्थः। ते तव क्रूरेण रक्षसा रावणेन समुचितं क्रूरयोग्यं कर्म कृतम्। तच्च त्वया तथा सोढं यथा कुलस्थो जनो मल्लक्षण उच्चैरुन्नतं शिरो धत्ते। श्लाघनीयत्वात्। अन्यथा लाञ्छनेन नम्रीभावापत्तेः। रामेण तु मया प्रेम्ण उचितं योग्यं न कृतम्। किंभूतेन, प्रियं जीवितं यस्य तथाभूतेन। पुनः किंभूतेन, संप्रत्यस्यां दशायां व्यर्थमिदं धनुर्बिभ्रता धारयता। प्रतीकारासमर्थत्वात्। तथा तव व्यापदां विपत्तीनां साक्षिणा द्रष्ट्रा। स्नेहातिशयेन तन्मयीभावादिति भावः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥'

इत्यत्र कातरत्वम् 'रामोऽसौ भुवनेषु विक्रमगुणैः—' इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते। अतो रामपदस्य लक्ष्य एवानेको भवति । अर्थान्तरसंक्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति । एवमन्यत्रापि स्यात् । तदुक्तम्—'भाक्तमार्गेस्तदन्यः' इति । लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्येन स्यात् । अतो नास्त्यतिरिक्त प्रतीयमानः । मैवम् । लक्षणीयस्य नानात्वेऽपि हि नानार्थसैन्धवादिपदाभिधेयस्येव नियतत्वमेव । न खल्वनियतसंबन्धो मुख्येनार्थेन लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिवशेन नियतसंबन्धोऽनियतसंबन्धः संबद्धसंबन्धश्चेति तत्स्वरूपं सोदाहरणमग्रे दर्शयिष्यते किं च 'अत्ता एत्थ णिमज्जइ—' इत्यादौ विवक्षितान्यपरवाच्ये कथं लक्षणा मुख्यार्थबाधाभावात् । ननु तत्रापि तात्पर्याधीनान्वयानुपपत्तिः । 'छत्रिणो यान्ति' इत्यादाविवेति चेत्, न । लक्षणायां प्रयोजननियमात् । तस्य व्यापारान्तरागम्यत्वात् । तदर्थं व्यञ्जनास्वीकारे किं प्रथमतोऽपि[1] लक्षणया अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपेक्षेति चेत्, न । यथा हि संकेतग्रहसापेक्षाभिधा तथा मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसंकेतग्रहस्य च सापेक्षा लक्षणा । तत्कथं रूढेः प्रयोजनस्य वा भावे भवेत् यतः संकेतग्रहसापेक्षात एवाभिधापुच्छभूता सेत्याहुः । किं च न लक्षणाव्यञ्जनयोरभेदः । लक्षणामुपजीव्यातद्व्यापारात् । नापि लक्षणानुगतमेव ध्वननमिति ध्वनेस्तल्लक्षणमिति वाच्यम् । अभिधोपजीवनेनापि भावात् । न च लक्षणाभिधोभयानुसार्येव । वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना । न च वर्णमात्रेऽभिधा लक्षणा वा । नापि शब्दानुसार्येव । विकसन्नर्तकीनेत्रत्रिभागालोकनादावपि[2] प्रसिद्धेः । तस्मादभिधालक्षणातात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो व्यापारोऽनपह्नवनीय एव । तत्र 'अत्ता एत्थ

---

शेषः । व्यङ्ग्यस्य त्वेकत्रैव वाक्ये 'गतोऽस्तं' इत्यादावनियतत्वमुदाहृतम् । ननु लक्षणाप्यनियते कुतो न स्यादत आह—**न खल्विति** । सामीप्यादिनियतसंबन्धिन्येव लक्षणाश्रयणादिति भाव. । **लक्षणामुपजीव्येति** । तथा निमित्तप्रयोजनयोरभेदासभव इति भाव. । **नापीति** । लक्षणान्वयव्यतिरेकानुविधायित्वाद्व्यञ्जनस्य ध्वनेर्व्यङ्ग्यस्य यद्ध्वननं तल्लक्षणमेवाङ्गीकर्तुं युक्तमित्यर्थः । **न चेति** । तथा चान्यतरानुसारित्वनियमादन्यतरस्वरूपैव व्यञ्जना न तु व्यतिरिक्तेत्यर्थः । **वर्णेति** । 'मूर्ध्नि वर्गान्त्यगा—' इति वक्ष्यमाणवर्णानां माधुर्यगुणद्वारा रसभावव्यञ्जकत्वस्य वक्ष्यमाणत्वादवश्यं शक्तिलक्षणान्यतरभेदसिद्धावन्यत्रापि व्यञ्जनयैव बोधसंभव इत्यर्थ । ननु वर्णानामप्येकाक्षरकोषादितो वाचकत्वमस्त्येवेत्यत आह—**नापि शब्देति** । व्यङ्ग्यं नियतसंबन्धादित्रयात्मकमुदाहरिष्यत इत्युक्तं तदुदाहरति—**तत्रेति** । नियत-

---

१ 'प्रथमयापि' ख. २ 'त्रिभागावलोकनादिगतत्वेनापि प्रसिद्धेः' ख.

णिमज्जइ–' इत्यादौ व्यङ्ग्योऽर्थो नियतसंबन्धः । 'कस्स व ण होइ रोसो–' इत्यादावनियतसंबन्धः । 'नियतसंबन्धत्वं च वाच्यव्यङ्ग्यप्रतीत्योरेकविषयतात्मकम् । प्रथमे तस्य भावः । पथिकरूपैकविषयकत्वात् । द्वितीये तु तदभावः । सखीतत्कान्तादिविषयभेदात्' इति केचित् । तन्न सम्यगाभाति । लक्ष्यस्य नियतसंबन्धत्वमेव, व्यङ्ग्यस्य तु तथात्वमन्यथात्वं चेति पूर्वप्रतिपादितस्य हीदमुदाहरणमिति लक्ष्यसाधारणं नियतसंबन्धत्वं वाच्यम् । न चोक्तं तथा भवति । अन्ये तु 'प्रथमे सर्वेषामेव सत्यताप्रतीतिः, द्वितीये तु कान्तस्यैव सत्यतयान्येषां त्वसत्यतयेति नियतानियतसंबन्धत्वम्' इत्याहुः । तदपि न मनोरमम् । यत एवं वाच्यप्रतीतेरेव सत्यत्वासत्यत्वप्रतीतिविषयत्वरूपं वैलक्षण्यमात्रमुच्यते । न तु व्यङ्ग्यप्रतीतेः । तस्मान्नियतसंबन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसंबन्धनियम इति युक्तमुत्पश्यामः ।

संबद्धसंबन्धो यथा—

'विवरीअरए[1] लच्छी बह्मं दट्ठूण णाहिकमलट्ठम् ।
हरिणो दाहिणणअणं रसाउलाझत्ति ढक्केइ ॥'

अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वे तन्निमीलनेन सूर्यास्तमयः । तेन पद्मसंकोच. । ततो ब्रह्मणः स्थगनम् । तस्मिन्सति गोपनीयस्याङ्गस्यादर्शनेन निर्यन्त्रणं निधुवनविलसितमिति संबद्धसंबन्धानि द्योत्यन्ते ।

वेदान्तिनस्तु—"क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिर्धर्मधर्मिभावमपुरस्कृत्य न संभवति । धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्याद्ब्रह्मगोचरो वा । नाद्यः । प्रपञ्चस्य बाध्यत्वात् । नान्त्यः । ब्रह्मणो धर्मशून्यत्वात् । अतः पद-

---

तसंबन्धादिषु मध्ये । **एकविषयतेति** । एकसंबन्धित्वप्रकारकेच्छाविषयत्वमित्यर्थ । **न चोक्तमिति** । लक्ष्यप्रतीतिस्थले वाच्यस्य बाधादप्रतीतेरिति भाव । **तेन वाक्येनेति** । तद्वाक्यजन्यज्ञाने विषयत्वनियम इत्यर्थ । अत्रेत्यादौ व्यङ्ग्यं नियमतस्तद्बोध्यम् । अन्यस्याप्रतीते. । कस्स वेत्यादौ तु सर्वेपामेकव्यङ्ग्याप्रतीतेर्न तथा नियम इति भाव. । **विवरीएति** । 'विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् । हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥' निर्यन्त्रणं शङ्कारहितम् । **क्रियाकारकादीति** । आदिना तद्विशेषणाना सग्रह. । पुरस्कारेण तद्बोधद्वारेण प्रवृत्तिर्वाक्यार्थबोधकता । **धर्मेति** । अपुरस्कृत्यानादृत्य । कारकाणां क्रियाधर्मत्वस्य विशेषणानां नेत्यादीना च कारकविशेषणत्वस्यावश्यकत्वात् । **बाध्यत्वादिति** । तथा च सत्यादिवाक्यं बाधितार्थकं स्यादिति भाव. । **धर्मशून्यत्वादिति** ।

---

१. 'विवरीएति । रसेन सुरतरसावेशेनाकुला सुरतान्निवर्तितुमक्षमा । स्थगयत्याच्छादयति । शेष स्पष्टार्थम् । अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकता तन्निमीलनेन च सूर्यास्तमयस्तेन च पद्मसंकोचस्तेन ब्रह्मणः स्थगनं तस्मिन्सति गोप्याङ्गदर्शनशङ्काविरहेणाप्रतिरुद्ध निधुवनविलसितमिति सबद्धसबन्धानि व्यज्यन्ते ।' इत्युदाहरणचन्द्रिकासक्षेप .

पदार्थविभागमन्तरेणैव 'सत्यं विज्ञानं' इत्यादिवाक्यमखण्डमेवाखण्डब्रह्मवाचकम्" इत्यातिष्ठन्ते। अतस्तन्मतानुसारेण प्रतीयमानेऽपि वाक्यस्य शक्तिरेवेत्यपि न वाच्यम्। यतो व्यवहारमार्गे तैरपि पदपदार्थकल्पनावश्यमङ्गीकर्तव्या। व्यवहारे तेषां भट्टनयस्वीकारात्। यदि च पदार्थकल्पनाविद्यादशायामपि नाङ्गीक्रियते कुतस्तर्हि व्युत्पन्नाव्युत्पन्नविभागः,। वाक्यार्थ एव वाक्यस्य संकेतग्रहमाश्रित्येति चेत्, न। वाक्यार्थस्यापूर्वत्वेनानन्त्यात्। तत्र संकेतग्रहस्याशक्यत्वात्। अविद्यामार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः। पारमार्थिकभेदाभावात्। तस्मात्तन्मतेऽपि विध्यादिर्व्यङ्ग्य एव।

महिमभट्टास्तु—'न तावदसंबद्ध एव वाक्यात्प्रतीयते। सर्वस्मात्सर्वोपलब्धिप्रसङ्गात्। संबद्धाच्च व्यङ्ग्यव्यञ्जकभावो भवन्नानियताद्भवतीति प्रतिबद्धरूपादेव भवतीत्युपेयम्। प्रतिबद्धोऽप्यर्थो न स्वाधिकरणत्वेनाज्ञाते व्यङ्ग्यं प्रतिपादयति। सर्वत्र तत्प्रतीतिप्रसङ्गात्। एवं च व्यङ्ग्यव्यञ्जकभावोऽनुमेयानुमापकभाव एव पर्यवसन्नः। यतो व्याप्तत्वेन सकलपक्षनिष्ठत्वेन च सपक्षसत्त्वविपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमेवानुमानम्। तदेतदुक्तमनुमानं यत्तद्रूप इति तेनानुमानेनानुमित्या रूप्यते न त्वतिरिक्तया व्यक्त्येति हि तस्यार्थः। एवमनुमानादेव व्यङ्ग्यप्रतीतिः।

तथाहि—

'भमॆ[3] धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥'

---

अद्वितीयेन सत्यत्वादिधर्मशून्यत्वादित्यर्थः। इयं च तन्मते वाक्यमखण्डार्थवाचकमिति भ्रान्तस्य शङ्केति ज्ञेयम्। तैर्लक्षणाया एवाङ्गीकारात्। वस्तुवस्तु 'येऽप्याहुः' इत्यादिवृत्तिग्रन्थो वाक्यस्फोटाङ्गीकर्तृवैयाकरणमताभिप्राय एव समञ्जसः। यथाहु— 'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः॥' इति। अविद्यापदेत्यस्य च प्रक्रियादशापन्नैरित्यर्थः। तदप्युक्तं तैरेव— 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं तमीहते' इति। असत्यतया च प्रक्रिया अविद्यापदेनोक्ता। तत्पदश्रवणाच्च वेदान्तिमतमुक्तमित्यभिमान इति ज्ञेयम्। **व्याप्तत्वेनेत्यादि**। व्याप्तेरव्यभिचारितया सामानाधिकरण्यरूपत्वाद्विपक्षावृत्तित्वसपक्षवृत्तित्वयोर्लाभः। रूप्यतेऽनुमापकत्वेन व्यपदिश्यते। न तु व्यञ्जकतयेत्यर्थः। **भमेति**। 'भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन। गोदानदीकच्छनि-

१. 'व्यवहार.' ख. २. 'आनन्त्याच्च' क. ३. 'भमेति। कुसुमाद्यवचयार्थं धार्मिकपरिभ्रमणेन खण्डितसकेतायास्तन्निराकरणायोक्तिरियम्। हे धार्मिक, विस्रब्धो निःशङ्कः सभ्रम। ग्राम इति शेषः। धार्मिकेति साक्षेपोक्तिः। परश्रेयोघातकस्य तत्त्वायोगात्। कुत इत्यत आह—स श्वा यद्भयाद्ग्रामे भ्रमण त्यक्तमासीदद्य तेन गोदानद्योः कच्छ जलप्रायो देशस्तत्संबन्धिनिकुञ्जवासिना दर्पयुक्तेन सिंहेन मारितः। तेनेति प्र-

संकेतनिकेतनीभूतं गोदावरीतीरनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्संचरतो धार्मिकस्य तन्निवारणायाविनयवत्या इयमुक्तिः । तत्र[1] निकुञ्जवासिसिंहकृतया अनिवृत्त्या गृहे भ्रमणविधिर्वाच्यः । स एव निकुञ्जभ्रमणायोग्यतानुमित्यै प्रभवति । यद्यद्भीरुभ्रमणं[2] तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्[3] । निकुञ्जे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धौ पर्यवसनाक्रमणस्य व्यापिका[4] भयकारणाभावोपलब्धिः प्रतीता । तद्विरुद्धं यद्भयकारणं तदुपलब्धेः । यथा नात्र तुषारः स्पर्शो वह्नेः[5] । अनुमानं च–इदं[6] गोदावरीनिकुञ्जं अभीरुभ्रमणायोग्यम् । सिंहवत्त्वादिति । अत्रोच्यते—अभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यं वीरस्वभावस्य वा । विशेषौदासीन्येन तत्सामान्यस्यैव[7] वा । आद्ये व्यभिचारः । प्रभोर्गुरोर्वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा तादृशस्यापि तत्र भ्रमणदर्शनात् । अत एव नान्त्योऽपि । मध्यमे तु विरोधः । स्पर्शादिशङ्कया अपौरुषेयतया वा अतो बिभ्यतोऽपि मृगयादिकुतूहलेन सिंहवद्देशे वीरस्य भ्रमणात् । किं च पक्षे सिंहसद्भावो न मानान्तरेणावधारितः । किं तु पुंश्चलीवाक्यादवधारितः । न च तद्वचनं निश्चायकम् । अर्थेन समं संबन्धानियमात् । इत्यनिश्चयरूपा सिद्धिः । एवं 'निःशेषच्युत–' इत्यादौ चन्दनच्यवनादीन्युपभोगव्यञ्जकतयोपात्तानि । न च तानि तद्व्याप्यानि । कारणान्तरतोऽपि संभवात् । अत एवात्र स्नानकार्यत्वेनोपात्तानि । अतो नैकान्तिकात्कथमनुमानं[8]

---

कुञ्जवासिना दृप्तसिंहेन ॥' व्यापकविरुद्धो व्यापकाभाव. । **प्रतीतेति** । अनिवृत्तेर्भ्रमणहेतुत्वोक्त्या अर्थात्करणभूताया भयहेतुअनिवृत्त्युपलब्धेः कार्यं भ्रमणं प्रति व्यापकत्वप्रतीतिरित्यर्थ. । अत्र चोपलब्धिपदमुपलभ्यमानभयकारणाभावपरमनुपलभ्यमानभयहेतुमतिव्यभिचारवारकं ज्ञेयम् । अत एवानुमाने सिंहवत्त्वादिति हेतुं वक्ष्यति—**यथेति** । तुषारस्पर्शव्यापको हि वह्निभेदस्तदभावे वह्नित्वे वह्नितादात्म्ये वा तुषारस्पर्शाभावानुमितिरित्यर्थ । अत्र च भ्रमणभयकारणाभावयो सहचारसद्गृहे निश्चित इति सपक्षसत्त्वम् । विपक्षासत्त्वं व्याप्तिग्रहादेव ज्ञातम् । व्यापकाभावस्य च भयहेतु सिंहवत्त्वस्योत्तरार्धेन निकुञ्जरूपपक्षधर्मत्वं गृहीतमित्यूह्यम् । **व्यभिचार इति** । यद्यद्भीरुभ्रमणं तत्तदुपलभ्यमानभयकारणाभावपूर्वकमिति व्याप्तिरेवासिद्धेति भाव· । अत एव व्यभिचारादेव । **विरोध इति** । यत्र सिंहस्तत्र सर्वत्र अभीरोरपि वीरस्य भ्रमणयोग्यतासत्त्वात्साध्यहेतुसामानाधिकरण्यस्यैवाभावादित्यर्थ. । ननु यद्यप्युपलभ्यमानभीरुभयकारणवत्तत्तद्भीरुभ्रमणायोग्यमित्युक्तौ नोक्तदोष इति चेत्तत्राह—**किं चेति** । पक्षे निकुञ्जे । **अर्थेनेति** । भ्रान्तादिवच-

---

सिद्धार्थकेन मिथ्या मया नोच्यत इति ध्वन्यते । अत्र निकुञ्जे सिंहसत्त्वात्तथाभ्रमणनिवृत्तिर्व्यज्यते इत्युदाहरणचन्द्रिकासक्षेप..

१. 'तदत्र' ख २. 'यद्भीरु' ख. ३ 'तद्भय' ख ४. 'व्यापकं' ख ५ 'तुषारस्पर्शो वह्निः' ग ६ 'एव' ख. ७. 'सामान्यमेव' ख ८. 'अनुमिति.' ख.

स्यात्। ननु व्यक्तिरपि कथं तैरिति चेत्। अधमपदसाहित्यादिति ब्रूमः। अस्माकमपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेत्। भवेदप्येवं यद्यधमत्वं प्रमाणादवधारितं भवेत्। नत्वेवमस्ति। व्यक्तिरपि कथं तादृशाद्भवेदिति चेत्। धिङ्मूर्ख। व्यञ्जनायां न व्याप्तेर्नापि पक्षधर्मताया निर्धारणमङ्गम्। किं तु संभावितादप्येवंविधादेवंविधोऽर्थः प्रतीयत इति मूकीभव।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णनिर्णयो नाम पञ्चम उल्लासः॥

---

## षष्ठ उल्लासः।

एवं गुणीभूतव्यङ्ग्यभेदे निर्णीते चित्रभेदं दर्शयितुमवसरः। तत्र यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितं तत्प्रभेदाश्चालंकारप्रभेददर्शनेनैव प्रदर्शिता भविष्यन्तीति न किंचिदस्ति तत्र प्रदर्शनीयम्। तथापि प्रदर्शितभेदद्वयमेव तावदनुपपन्नम्। शब्दार्थालंकारयोरन्योन्यनैरपेक्ष्येणानुपलम्भात्। उपलम्भेऽपि वोभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति—

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम्।**
**गुणप्रधानतस्तत्र स्थितिश्चित्रार्थशब्दयोः॥ १॥**

शब्दार्थालंकारयोरेकैकमात्रावस्थानपुरस्कारेण न विभाग। किं तु प्राधान्यपुरस्कारेण[1]। तथा च न काचिदनुपपत्तिरिति भावः। ननु तथापि विभागोऽनुपपन्न एव। यतः केचिच्छब्दालंकारमात्रं केचिच्चार्थालंकारमात्रमुरीचक्रिरे। तत्कस्य मतमाश्रित्य विभाग इति चेत्, सन्त्येव केचिदुभयाङ्गीकारिणः। तथा चोक्तम्—

'रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम्॥
रूपकादिमलंकारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्॥

---

नस्यार्थे व्यभिचारदर्शनादित्यर्थः। **अस्माकमपीति**। अधमपदार्थालोचनेन हिचन्दनच्यवनादेः सभोगाङ्गजातीयत्वावगमान्न व्यभिचार इति भावः॥ इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृतायां प्रदीपप्रभायां पञ्चम उल्लासः॥

**नैरपेक्ष्येणेति**। परस्परासंकीर्णत्वेनेत्यर्थ.। 'स्वच्छन्द–' इत्यादौ नद्यन्तरादाधिक्यरूपव्यतिरेकस्य, 'विनिर्गतं–' इत्यादौ च ससभ्रमेन्द्रद्रुतेत्यनुप्रासस्यापि सत्त्वादिति भावः। ननु 'तारतारतरैरेतैरुत्तरोत्तरतो रुतैः। रतार्ता तित्तिरी रौति तीरे तीरे तरौ तरौ॥' इत्यत्र केवलानुप्रासस्य, 'मध्येव्योम–' इति स्वयमुदाहृते पद्ये

---

[1] 'प्राधान्यत.' ख.

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥' इति ।

अस्यार्थः—अर्थस्यैव विभावादिरूपत्वेन रसव्यञ्जकत्वात्तन्निष्ठो रूपकादिरेवालंकारः कैश्चिदुक्तः । केचित्तु 'काव्यस्यालंकारो वाच्यः । काव्यं च कविकर्म शब्द एवेति तदाश्रिता सुप्तिङां विशिष्टोत्पत्तिरलंकारः । रूपकादिस्त्वर्थाश्रितोऽलंकारो बाह्यः । अलंकारप्रयोगस्तु तत्र गौण एव' इति वाञ्छन्ति । व्युत्पत्तिरेव कथं नार्थालंकार इत्यत आह—तदेतदाहुरित्यादि । शब्दाभिधेयेति । शब्दवदर्थस्यापि कविसंरम्भज्ञाप्यत्वमर्थस्येव शब्दस्यापि रसप्रतीत्युपयोगित्वमत उभयाश्रितोऽप्युभयरूपोऽलंकार इति[1]।

त्र शब्दचित्रं यथा—

'प्रथममरुणच्छायास्तावत्ततः कनकद्युति-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलप्रभः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥'[2]

अत्रार्थालंकार उपमा गुणीभूता । शब्दालंकारस्त्वनुप्रासः प्रधानम् । आसमाप्ति कवेस्तत्रैव संरम्भात् । प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वात् ।

अर्थचित्रं यथा—

'ते[3] दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥'

---

केवलार्थालंकारस्य रूपकस्य चोपलम्भोऽस्तीत्याशङ्क्याह—उपलम्भेऽपि वेति । उभयेति । वक्ष्यमाणोदाहरणे उपमानुप्रासयोः सत्त्वे तृतीयभेदस्य शब्दार्थोभयचित्रस्य

---

१ 'वा' २. 'प्रथममिति । मालतीमाधवे चन्द्रोदयवर्णनमिदम् । मृगलाञ्छनश्चन्द्रः क्षणदामुखे रजनीप्रारम्भे प्रथमं तावदरुणच्छायोऽरुणकान्तिः । तावदित्यवधारणे । अरुणच्छाय एवेत्यर्थः । ततस्तदनन्तरं कनकप्रभः पीतः । तदनु पश्चाद्विरहेणोत्ताम्यन्ती या तन्वी तस्याः कपोलतलस्येव द्युतिर्यस्य सः पाण्डुरवर्णः । ततः सरसायाः स्निग्धाया विसिन्याः कन्दो मृणालं तस्य च्छेदवच्छविः कान्तिर्यस्य । अतिधवलत्वात्तथाभूतः । अत एव ध्वान्तस्यान्धकारस्य ध्वंसे क्षमः समर्थः । अत एव विपक्षजयादुदयतीति । अत्र स्वभावोक्त्युपमयोः सत्त्वेऽपि तकाराद्यनुप्रासप्राधान्याच्छब्दचित्रता ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. त इति । ते प्रसिद्धाः पक्ष्मले पक्ष्मबहुले दृशौ यासां तथाभूतानां कामिनीनामलकाः केशास्तथा खला दुष्टजनाश्च दृष्टिमात्रे पतिता दृष्टिगोचरा अपि न पुनर्मनसा भावितस्वरूपा व्यवहारगोचरा वा अत्र लोके कस्य क्षोभाय धैर्यनाशाय सुस्थत्वाभावाय च न । भवन्तीति शेषः । अपि तु सर्वस्य क्षोभाय भवन्ति । ते के, ये कुटिलतामिव

अत्र शब्दालंकारोऽनुप्रासः स गुणीभूतः। अर्थालंकारस्तु समुच्चयः प्रधानम्। आरम्भादा समाप्ति तन्निर्वाहणात्। यथा चात्र किंचिद्व्यङ्ग्यसत्त्वेऽप्यधमकाव्यत्वं तथोक्तं प्रथमोल्लास एव। एषां भेदाश्चालंकारभेदाद्भवन्तीत्यलंकारनिर्णयेनैव ते निर्णेष्यन्त इति।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे चित्रकाव्यनिर्णयो नाम षष्ठ उल्लासः॥

---

## सप्तम उल्लासः।

एवंधर्मिणि काव्ये सप्रभेदे निरूपिते प्राप्तावसरतया दोषाभावादीनि लक्षणस्थानि विशेषणानि विवेचनीयानि। तेषु च दोषाभावः प्रधानम्। सति दोषे गुणादेरप्यकिंचित्करत्वात्। यदाह—'स्याद्वपुः सुन्दरमपि श्वित्रेणैकेण दुर्भगम्' इति। सति तु दोषाभावे गुणादिक विनापि किंचिदाह्लादसंभवात्। 'अपदोषतैव विगुणस्य गुणः' इति न्यायात्। अतः प्रथमं तस्मिन्निरूपणीयेऽभावस्य स्वरूपतो निरूपणानर्हतया प्रतियोगिनिरूपणाधीननिरूणीयत्वाद्धेयापरिचये तद्धानासंभवाच्च दोषा निरूपणीयाः। न च सामान्येऽविज्ञाते विशेषे जिज्ञासेति तत्सामान्यलक्षणमाह—

---

प्रसङ्गादित्यर्थः। **चित्रार्थेति**। चित्रौ च तावर्थशब्दौ च तयोरित्यर्थः। **समुच्चयः प्रधानमिति**। 'तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्' इति वक्ष्यमाण इत्यर्थः। क्षोभरूपैककार्येऽलकखलयोः समुच्चयोक्तिः श्लेषोपमयोस्तदङ्गत्वात्तस्यैव प्राधान्यम्। नन्वत्र शृङ्गाररसाभिव्यक्तेः कथमव्यङ्ग्यचित्रभेदोदाहरणत्वमित्याशङ्क्याह—**यथा चेति**। 'चित्रस्यैवोद्भटतया चमत्कारित्वेन कवितातात्पर्यविषयत्वाद्रसरूपव्यङ्ग्यस्य चातथात्वाच्चित्रव्यवहारः' इत्युक्तमित्यर्थः। एवं चोभयचित्रेऽपि प्रत्येकभेदसंकरमात्रं न त्वतिरिक्तप्रभेदत्वमित्यूह्यम्॥ इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृतायां प्रदीपप्रभायां षष्ठ उल्लासः॥

**प्रधानमिति**। आवश्यक इत्यर्थः। श्वित्रं कुष्ठम्। ननु दोषत्वस्यापकर्षकत्वरूपस्य प्रसिद्धत्वात्तदवच्छिन्नाभावत्वेन निरूपणं स्यादेवेत्यत आह—**हेयेति**। तथा च विशेषतः प्रतीति विना काव्ये तद्धानं न संभवतीति दोषविशेषनिरूपणमावश्यकमित्यर्थः। **तत्सामान्येति**। काव्यदोषसामान्येत्यर्थः। 'हतिरपकर्षः' इति प्रका-

---

कालता न त्यजन्ति। यथा कुटिलता न त्यजन्ति तथा कालतामित्यर्थः। कुटिलता कुञ्चितत्वं वक्रता च। कालता श्यामता यमरूपता च। कीदृशाः, नीचा ह्रस्वाः क्षुद्राश्च। कृत्रिमविनयाय नीचाङ्गता प्राप्ता वा। सदैव सर्वदैव विलासेन विभ्रमेण सहितं यथा स्यात्तथा अलीके ललाटे लग्नाः। खलपक्षे—विलं रन्ध्रम्। बवयोरभेदात्। तत्रासनमासः प्रहारस्तत्सहितं यथा स्यात्तथा अलीके मिथ्यावचने लग्नाः। सक्ता इत्यर्थः। अत्रार्थश्लेषसमुच्चययोः प्राधान्यादर्थचित्रता।' इत्युदाहरणचन्द्रिकासंक्षेपः।

मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥ १ ॥

मुख्यार्थस्य हतिर्यस्मादिति व्यधिकरणत्वेऽपि गमकत्वाद्बहुव्रीहिः । करणसाधनो हतिशब्द इत्येके । मुख्यत्वमर्थस्य न शक्यत्वलक्षणम् । येनार्थासंगतिः स्यात् । किंत्वन्यदित्याह—रसश्चेति । रस्यत इति व्युत्पत्त्या रसशब्देन भावादिरप्युपसंगृह्यते । नन्वेवं नीरसेषु न कश्चिद्दोषः स्याद्विघात्याभावादित्यत आह—तदाश्रयादिति । आश्रयणमाश्रयः । तथा च तेन रसेनाश्रयणादुपकारित्वेनापेक्षणाद्वाच्योऽपि मुख्य इत्यर्थः । न चैवम् । मुख्यशब्दार्थस्य नानात्वेनाननुगमः । काव्ये प्राधान्येनोद्देशाप्रतीतिविषयत्वेनानुगमात् । तदेवं रसवति सर्व एव दोषाः, नीरसे त्वविलम्बितचमत्कारिवाक्यार्थप्रतीतिविघातका एव हेया इति मन्तव्यम् । नन्वेवं तयोरेव दोषाधारत्वमुचितं, न तु शब्दादीनामित्यत आह—उभयोपयोगिन इत्यादि । अत्र शब्दपदं प्रतिपादनात्मकशब्दनाव्यापारवतोः पदवाक्ययोर्वर्तते । ते नाद्यपदापदाद्वर्णरचने संगृहीते इति प्रकाशकारस्वरस. । न च तत्र बीजाभावः । अन्यथा वर्णस्यापि शब्दपदेनैव प्राप्तौ शब्दाद्या इति बहुवचनासंगतेः । स्यादेतत् । हतिर्विनाशः । न च दोषेण रसो नाश्यते । तस्मादलक्षणमेतत् । नैवम् । हतिशब्दस्यापकर्षवाचित्वात् । नन्वेवं सानुत्पत्तिप्रयोजकेष्वव्याप्तिः । अथानुत्पत्तिरेव हतिशब्दार्थः । तर्हि यत्र रस उत्पद्यत एव परं त्वपकृष्यते तत्राव्याप्तिः । तदेतल्लक्षणमतिदरिद्रदंपत्योः कृशतरनिशावगुण्ठनीयसनमिवैकेनापकृष्यमाणमपरं परिहरति । किं चार्थरूपस्य मुख्यार्थस्यानुत्पत्तिरपकर्षो वा न दोषाधीन इति ।

अत्र ब्रूमः—उद्देश्यप्रतीतिविघातलक्षणोऽपकर्षो हतिशब्दार्थः । उद्देश्या च प्रतीती रसवत्यविलम्बितानपकृष्टरसविषया च । नीरसे त्वविलम्बिता चमत्कारिणी चार्थविषया । तथा च तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम् । यतो

---

शीयव्याख्यानानुरोधादाह—**मुख्यार्थस्येत्यादि । करणेति ।** हन्यतेऽपकृष्यतेऽनेनेत्येवमित्यर्थ । एवं च मुख्यार्थापकर्षकत्वं दोषत्वमिति मतद्वयेऽपि लक्षणम् । प्रकाशविरोधोऽस्वरस एके इत्यनेन ध्वनित. । अर्थासगतिर्लक्षणासगति । रसादिदोषेष्वव्याप्ति (प्तिं दर्शयति)। **विघात्येति ।** विघात्यस्यापकर्षणीयस्य रसस्याभावादित्यर्थ । **काव्य इति ।** काव्ये प्राधान्येन चमत्कारित्वेनोद्देश्याभिप्रेता या प्रतीतिस्तद्विषयत्वमित्यर्थ । तयो रसवाच्ययो. । **शब्दपदमिति ।** शब्द्यते शाब्दबोधविपयीक्रियतेऽर्थोऽनेनेति व्युत्पत्त्येति भावः । **न च तत्रेति ।** शब्दस्योक्तव्युत्पत्त्या पदवाक्यपरत्वे । **उद्देश्यप्रतीतीति ।** उद्देश्या या प्रतीतिस्तस्या विघातोऽनुत्पत्तिरपकर्षो नाम तत्प्रयोजकत्वं दोषत्वमित्यर्थ. । एव सति सर्वत्र लक्षणासमन्वय इत्याह—**उद्देश्या चेत्यादिना ।** अविलम्बितचमत्कारिप्रतीतेरुद्देश्यत्वाद्विशेष्यभूत-

---

१ 'मुख्यस्यार्थस्य' ख. २. 'विभावाद्यभावात्' ख.

दुष्टेषु क्वचिद्रसस्याप्रतीतिरेव, क्वचित्प्रतीयमानस्याप्यपकर्षः क्वचित्तु विलम्बः। एवं नीरसे क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव, क्वचिद्विलम्बेन प्रतीतिः, क्वचिदचमत्कारितेत्यनुभवसिद्धम्। इत्युद्देश्यप्रतीत्यनुत्पादो व्यक्त एव। तद्विघातकता च कस्यचित्साक्षात्। यथा रसदोषाणाम्। कस्यचित्परम्परया। यथा शब्दार्थदोषाणाम्। तेष्वपि कस्यचिदर्थोपस्थितेरभावात्। यथासमर्थत्वादेः। कस्यचिद्विलम्बात्। यथा निहतार्थत्वादेः। कस्यचिद्वाक्यार्थबोधाभावात्। यथा च्युतसंस्कृत्यादेः। कस्यचित्तत्र विलम्बात्। यथा क्लिष्टत्वादेः कस्यचित्सहृदयवैमुख्यव्यग्रताद्यापादनेन। यथा निरर्थकत्वादेः। कस्यचिद्विरुद्ध्युपस्थापनेन विपरीतोपस्थापनेन वा। यथा विरसविरुद्धमतिकृत्वादेरित्यादूहनीयम्। विघातकत्वं च कस्यचिज्ज्ञातस्य। यथा व्याहतत्वादेः। कस्यचित्स्वरूपसत एव। यथा निहतार्थत्वादेः। स चायं द्विविधः—नित्योऽनित्यश्च तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः। यथा च्युतसंस्कृत्यादिः अन्यादृशस्त्वनित्यः। यथाऽप्रयुक्तादिः। अथ विशेषलक्षणानि वक्तव्यानि। तत्र द्विविधोऽप्ययं त्रिविधः। शब्ददोषोऽर्थदोषो रसदोषश्चेति। तत्र शब्दार्थरसानां यथापूर्वमुपस्थितिः प्राथमिकीति तत्क्रमेणैव[1] दोषभेदा निरूपणीया इति शब्ददोषाणां प्राथम्यम्। शब्दस्तु त्रिधा—पदं तदेकदेशो वाक्यं च। एवं च तदाश्रितः शब्ददोषोऽपि त्रिविधः। तत्र पदानां वाक्यघटकत्वेन प्राथम्यात्प्रथमं तद्दोषनिरूपणमिति परमार्थः। तत्रेदं निरूप्यते। एवं पदैकदेशस्य पदापेक्षयापि प्राथम्यात्तद्दोषनिरूपणस्यैव प्राथम्यमर्हति। अत्र भास्करः—'सत्यमुच्यते। परं पददोषेष्वेव यथासंभवं केचित्पदैकदेशदोषाः' इति समादधे तन्नातिमनोरमम्। अस्त्वेवम्। तथापि पदैकदेशदोषत्वेन प्रथमाभिधानापादने किमुत्तरमिति। वयं त्वालोचयामः—उपदेशे तावत्प्राथम्यादिविचारणा। अतिदेशस्तूपदेशानन्तरमेव। न च पदैकदेशे दोषोपदेशः। अतिदेशेनैव तल्लाभे लाघवात्। न च पदैकदेश एवास्तूपदेशः, पदे त्वतिदेश इति वाच्यम्। पदैकदेशावृत्तीनामपि केषांचित्पदवृत्तित्वेन तदर्थं पदेषूपदेशस्यावश्यकत्वादिति।

---

प्रतीत्यनुत्पत्त्या वा विशेषणानुत्पत्त्या विशिष्टप्रतीत्यनुत्पत्ति सर्वत्र दुष्टेष्वस्तीत्यर्थः। **रसदोषाणामिति**। स्वशब्दवाच्यत्वादीनामित्यर्थः। कस्यचिदिति सामान्याभिप्रायमेकवचनम्। **वाक्यार्थेति**। नाथत इत्यादावसाधुत्वज्ञानस्य शाब्दबोधप्रतिबन्धकत्वम्। याचनरूपार्थोपस्थितिस्तु धातुतो भवत्येवेत्याशयेनेदम्। अथ वा पदार्थानुपस्थितिप्रयुक्त एव वाक्यार्थबोध इति द्रष्टव्यम्। **विरसेति**। अमतपरार्थत्वमित्यर्थः। **यथापूर्वमिति**। पूर्वमनतिक्रम्येत्यर्थः। **एवमिति**। सतीति शेष। न च पदैकदेशत्वस्य पदघटितत्वात्पदस्यैव प्राथम्यमिति शङ्कनीयम्। प्रकृतिप्रत्ययत्वादिना निरूपणस्य पदानपेक्षत्वादिति भाव। अर्हतीत्यस्य प्राथम्यमेव कर्तृ। **नातीति**। अतिदेशानुकूलत्वान्मनोरममपि तस्यावश्यवक्तव्यस्यावचनान्ना-

---

१. 'तत. क्रमेणैव' क, 'क्रमेणैव' ग.

पददोषविशेषलक्षणमाह—

**दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**
**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम् ॥ २ ॥**
**संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥ ३ ॥**

दुष्टं पदमिति प्रत्येकमभिसंबध्यते । ननु श्रुतिकटुप्रभृतिशब्दानां लक्षणपरत्वे विभागपरत्वाभावाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इति । उच्यते—रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरुभयोरपि प्रत्ययः । यथा—'घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि भूतेभ्यः' इतीन्द्रियलक्षणसूत्रे गौतमीये । अथैषां लक्षणवाक्यत्वे त्रिधाश्लीलमित्यत्र त्रिधेति निरर्थकम् । तस्य विभागमात्रार्थत्वेन लक्षणेऽनुपयोगादिति चेत् । न । अश्लीलशब्दस्य व्रीडादिव्यञ्जकत्रितयसाधारणैकावयवशक्तिविरहेण नानार्थतया लक्षणत्रयार्थत्वमित्यस्य तदर्थत्वात् । तत्र श्रुतिकटुत्वं यद्यपि श्रुत्युद्वेजकत्वं तच्च पुरुषभेदेनानियतं तथापि तज्जनकतावच्छेदकरूपवत्त्वं विवक्षितम् । तच्च परुषवर्णत्वम् । तच्च दुर्वचत्वम् । उदाहरणम्—

'अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
तन्वङ्ग्यालिङ्गितः कण्ठे कार्तार्थ्यं लभते कदा ॥'

अत्र कार्तार्थ्यमिति पदं परुषवर्णप्रायम् । किं पुनरस्य दूषकताबीजम् । उद्वेगजनकत्वमिति चेत् । न । रौद्रादावपि दोषत्वप्रसङ्गात् । माधुर्यव्यञ्जकरचनामध्यगुम्फितमेव तदुद्वेजयतीति चेत्तत्किं तादृशत्वेन ज्ञातं तत्तथा, उत स्वरूप-

---

विसमीचीनमिति भावः । **कथमिति** । लक्षणवाक्यस्य लक्ष्यलक्षणसम्बन्धबोधकत्वादिति भाव । **रूढीति** । तथा च रूढ्यर्थो लक्ष्यः योगार्थो लक्षणमित्यर्थः । अत्र दृष्टान्तमाह—**यथेति** । जिघ्रतीति घ्राणमित्यादिरूपयोगार्थो लक्षणं बोध्य । तदर्थत्वात्तत्प्रतिपादत्वात् । परुषत्वं निर्वक्ति—**तच्चेति** । तादृशत्वेन माधुर्यव्यञ्जक-

---

१. 'अनङ्गेति । अत्र लोचनैरित्यध्याहार्यम् । तृतीया चोपलक्षणे । तथा च तैरुपलक्षितया तन्वङ्ग्यालिङ्गित स नायकः कदा कार्तार्थ्यं कृतार्थता लभते प्राप्स्यतीत्यन्वय । कदाशब्दयोगे लट् । कीदृशैर्लोचनैः । अनङ्गस्य मङ्गलगृह चासावपाङ्गश्च तस्य भङ्गिभिः प्रकारविशेषैस्तरङ्गितानि सजाततरङ्गाणि तैस्तथाभूतैः । यद्वा तरङ्गितैरिति णिजन्ताद्भावे क्तः । तेनापाङ्गभङ्गीना तरङ्गयुक्तीकरणैर्लक्षितयेति तन्वङ्ग्येत्यस्य विशेषणम् । अथवा आचारक्विबन्ताद्भावे क्त । तेनापाङ्गभङ्गीना तरङ्गवदाचरणैरुत्तरोत्तरविच्छेदरूपैर्लक्षितयेत्यर्थः । करणे वा तृतीया । तन्वङ्ग्यालिङ्गित' संस्तरङ्गितैः कार्तार्थ्यं कदा लभत इति तन्वङ्ग्या तरङ्गितैर्द्वार (?) भूतैरालिङ्गित इति वार्थं इति । अत्र कार्तार्थ्यमिति कठोरवर्णघटितत्वाच्छ्रुतिकटु ।' इत्युदाहरणचन्द्रिकासक्षेपः.

सदेव। नाद्यः। रसविशेषव्यञ्जकत्वाज्ज्ञानेऽपि प्राथमिकतादृशपदश्रवणेनोद्वेगाभावप्रसङ्गात्। न चेष्टापत्तिः। अनुभवविरोधात्। अन्त्ये तु सत्यादयः प्रमाणम्। नह्यविदितविशेषानपि तत्रैव तदुद्वेजयति नान्यत्रेति प्रमाणमस्ति। किं चैवं वैयाकरणादौ वक्तरि किंनिबन्धनो दोषत्वाभावः स्यात्।

अत्रोच्यते—स्वायत्ते शब्दप्रयोगे कर्णोपतापकशब्दप्रयोगेण श्रोतुरुद्वेगो रसापकर्षायेति स एव तद्बीजम्। अत एव प्रतिकूलवर्णादस्य भेदः। तस्य कर्णोपतापाहेतुत्वात्। अत एव चानुकरणे वैयाकरणादौ वक्तरि श्रोतरि वा रौद्रादौ रसे व्यङ्ग्ये नीरसे च काव्येऽस्य दोषत्वाद्भावः। आद्ये तस्यैवानुकरणीयतया स्वायत्त्यभावाद्द्वितीये च तत्स्वभावावगमेनोद्वेगाभावात्। तृतीये च श्रोतुस्तेनानुद्वेगात्। चतुर्थे तदनुगुणत्वेनोद्वेगाहेतुत्वात्। पञ्चमे मुख्यार्थहतेरभावात्। एवमर्थौचित्यप्रकरणादिवशेनाप्यनुद्वेजकतया दोषत्वाभाव उपपद्यते।

च्युतसंस्कृति च्युता स्खलिता संस्कृतिः संस्करणं व्याकरणलक्षणानुगमो यत्र। यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत्तत्तद्भाषायां च्युतसंस्कृतीत्यर्थः। देश्यं तु न लक्षणविरुद्धं किं तु तदविषयः। संज्ञाशब्दानां बहुलवचनेन संस्कृतत्वान्न तत्रातिव्याप्तिः। यथा—

'एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।

---

रचनामध्यगुम्फितत्वेन। **अन्त्य इति**। वस्तुगत्या माधुर्यव्यञ्जकरचनामध्यगुम्फितं न तु तत्त्वेन ज्ञानमिति पक्ष इत्यर्थः। **सत्यादय इति**। 'सत्येन शापयेद्विप्रं' इत्यादि स्मृत्युक्ताः शपथा इत्यर्थः। **नान्यत्रेति**। न रौद्रादिरस इत्यर्थः। ननु माधुर्यव्यञ्जकरचनामध्यगतत्वेन ज्ञातमेवोद्वेजकमित्येवानुभव इत्यतो दोषान्तरमाह—**किं चैवमिति**। **दोषत्वाभाव इति**। वक्त्राद्यौचित्यवशादित्यग्रे वक्ष्यमाण इत्यर्थः। **यद्भाषेति**। संस्कृतभाषाव्याकरणवत्सौरसेन्यादिप्राकृतभाषाव्याक-

---

१. 'एतदिति। पल्लीपतिपुत्र्याः कुचयुगं दिदृक्षोः कस्यचिद्विदग्धस्योक्तिरियम्। हे पल्लीपतिपुत्रि, पल्ली वीथी क्षुद्रग्रामो वा। तत्स्वामिनः पुत्रि, एतद्दृश्यमानमर्थात्तव कुचयुगं पुलिन्दानां शबराणां मध्ये सुन्दरस्तस्य करस्पर्शे क्षमं योग्यं यतो लक्ष्यते तत्तस्मात्कुञ्जराणां करिणां कुलं समूहस्त्वां पत्रैरावृतमाच्छन्नं मा कृथा इत्यनुनाथते याचते इत्यन्वयः। याचनाहेतुगर्भं कुञ्जरकुलविशेषणमाह—कुम्भेत्यादि। कुम्भयोरभयस्याभ्यर्थनां तया दीनम्। तथा च कुचयोः पत्रानावृतत्वे तदासक्तचेतसः शबरस्य मृगयावैमुख्यादभयलाभ इति भावः। तदासक्तमनसः प्रहारपाटवं न स्यादिति वा। कीदृशं कुचयुगम्। मन्दमीषत्पक्वं तेन कठिनं पाण्डुरं च यत्तिन्दुकफलं तद्वच्छ्यामसुदरो मध्यभागो यस्य तं तथाभूतं च तदापाण्डुरं ईषत्पाण्डुरः प्रान्तो यस्य तथाभूतम्। हन्तेति हर्षे लक्ष्यत इत्यनेनान्वयि। सत्त्वाभयदानयोग्यत्वात्पल्लीपतिपुत्रीत्यनेन भीतत्राणौचित्यं ध्वन्यते। अत्र नाथत इति व्याकरणविरुद्धं च्युतसंस्कृति। 'आशिषि नाथः' इति नाथतेराशिष्येवात्मनेपदविधानादत्र च याचनार्थत्वात्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥'

अत्र नाथत इति याचत इत्यर्थे च्युतसंस्कृति। सामान्यतः 'तिप्-' आदिसूत्रेण प्राप्तस्यात्मनेपदस्य नियामकेन 'आशिषि नाथः' इति सूत्रेणानाशिषि तन्निषेधात्। तस्मात् 'नाथति स्तनयुगं' इति पठनीयम्। ननु नाथत इति स्वरूपं संस्कृतमेव। तथा चार्थविशेषेण तथेति वक्तव्यम्। एवं चार्थदोषत्वं प्राप्तमिति। मैवम्। यत्र शब्दपरिवर्तनेऽपि यो दोषोऽनुवर्तते तस्यार्थदोषत्वम्। यस्तु तथासति निवर्तते तस्य शब्ददोषत्वमिति विभागात्। अत्रार्थाप्रतीतिर्दूषकताबीजमिति नित्यदोषत्वम्। अनुकरणे त्वर्थपरत्वाभावाद्दोषत्वाभावः।

अप्रयुक्तं तथानुशासनसिद्धमपि कविभिर्न प्रयुक्तम्। यथा—

'यथायं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा॥'

अत्र 'दैवतानि पुंसि वा' इत्यनेनाम्नातोऽपि पुंलिङ्गो दैवतशब्दः कविभिर्न क्वापि प्रयुक्तः। नन्वत्र किं दूषकताबीजम्। न तावच्छक्तिविरहः। तत्सत्त्वात्। शक्तिस्मृतिविरह इत्यपि नास्ति। शब्दानुशासनेन तद्ग्रहे स्मृतौ प्रतिबन्धकाभावादिति चेत्, पदार्थोपस्थितिविलम्बस्तद्बीजम्। अत एव श्लेषयमकादावदोषत्वम्। उद्भटालंकारसंपत्त्या प्रतीत्यविलम्बस्य तत्रानुद्देश्यत्वात्। वस्तुतस्तु तादृशकविसमयविलङ्घनप्रयोजनानुसंधानव्यग्रतया मुख्यार्थविच्छित्तिर्दूषकताबीजम्। अत एवानुकरणे दोषत्वाभावः। यमकादावप्यदोषत्वम्। अन्यत्राप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावादिति।

असमर्थमित्यल्पार्थे नञ्। तेन यत्तदर्थं परिपठितमपि प्रकृतस्थले विवक्षितार्थसामर्थ्यरहितमित्यर्थः। समर्थस्यैवासामर्थ्यं विरुद्धमिति चेत्। न। उपसंदानोपजीवित्वात्सामर्थ्यस्य। यथा हनधातोः पद्धतिजघनजङ्घादिषु पदादिपदोपसंदानेन मार्गाद्यर्थोपसंदानेन वा गतौ सामर्थ्यम्, न पुनरविशिष्टस्य। यथा—

---

रणस्यापि सत्त्वादित्यर्थः। देश्यं तत्तद्देशभाषारूपम्। संज्ञाशब्दा डित्थादयः। लडहादयश्च प्राकृताः। 'उणादयो बहुलम्' इतिवत् 'लडहादयो बहुलम्' इति प्राकृतसूत्रात्। अर्थाप्रतीतिर्वाक्यार्थाप्रतीति पदार्थाप्रतीतिर्वा। उभयानङ्गीकारे तु सहृदयवैमुख्यं बोध्यम्। पदार्थोपस्थित्यविलम्बेऽपि दोषत्वानुभवादाह—**वस्तुत-**

---

१. 'यथेति। अयं यथा यादृशो दारुणाचारः क्रूराचरणः। सर्वदैव न कदाचिद्विभाव्यते दृश्यते तथा तदनुरूपोऽस्य दैवत उपास्यः पिशाचोऽथवा राक्षस इति मन्ये इत्यन्वयः। 'यथा यतस्तथा तत इत्यर्थः' इति केचित्। 'दैवतानि पुंसि वेत्याम्नातेऽपि दैवतशब्दः (पुंलिङ्गे) कविभिरप्रयुक्तत्वं दोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥'

अस्यार्थानुपस्थितिर्दूषकताबीजमिति नित्यता ।

निहतार्थं निहतः प्रसिद्धेनार्थेनाप्रसिद्धतया व्यवहितो विवक्षितोऽर्थो यस्य तत् । गूढेऽप्यर्थे क्वचित्प्रयोगान्नाप्रयुक्तसंकरः । उदाहरणम्—

'यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥'

अत्र शोणितपदम् । अस्य रुधिरे प्रसिद्धिः । अप्रसिद्धिस्तूज्ज्वलीकृतत्वरूपे विवक्षितार्थे । दूषकताबीजं प्रसिद्धस्यैव द्रागुपस्थित्या विवक्षितस्य विलम्बोपस्थितिः । अतो यमकादावदोषत्वम् । तत्रोपस्थितिविलम्बस्यापि सहृदयसंमतत्वेनाविलम्बानुद्देश्यत्वात् ।

अनुचितार्थमनुचितो विवक्षितार्थतिरस्कारकोऽर्थो यस्य तत् । यथा—

'तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥'

---

स्त्विति । मार्गाद्यर्थेति । मार्गाद्यर्थोपस्थितिसहकारेणेत्यर्थः । क्वचिदिति श्लेषयमकादिव्यतिरिक्तस्थलेऽपि क्वचिदित्यर्थः । अप्रयुक्तस्य तु श्लेषयमकादिनिर्वाहार्थ एव प्रयोग इति ततो भेदः । उज्ज्वलीकृतत्वेति । आरक्तीकृतत्वेत्यर्थः । शोण करोतीति ण्यन्तात्क्तप्रत्ययेऽयमर्थो विलम्बितः । रूढ्या रुधिरस्यैव द्रागुपस्थितेः । विवक्षितेति । विवक्षितार्थस्य शौर्यादेस्तिरस्कारो बुद्धिप्रतिबन्धस्तज्जनको जनकज्ञानविषयोऽर्थो यस्येत्यर्थः । प्रतिबन्धकत्वं च कातरत्वादेः शौर्यविरोधिनो

---

१. तीर्थेति । सत्कृतिः पुण्यं तद्वशात्सुराणां स्रोतस्विनी नदी गङ्गा तां प्रति हन्ति । गच्छतीत्यर्थः । शेषं स्पष्टम् । अत्र 'हन हिंसागत्योः' इत्यनुशासनेऽपि केवलस्य हन्तेर्गतिबोधनेऽसमर्थत्वम् । पद्धतिरित्यादिषु पदादिपदोपसदानसापेक्षत्वात् ।' इत्युदाहरणचन्द्रिकासंक्षेपः २. 'सक्रियः'-ख-ग.पुस्तकयोः. ३. 'यावकेति । यावकस्यालक्तकस्य रसेनार्द्रो यः पादस्तेन यः प्रहारस्तेन शोणिता आरक्तीकृताः कचाः केशा यस्य तथाभूतेन दयितेन प्रियेण रुधिरभ्रमात्साध्वसेन भयेन तरला व्याकुला अत एव मुग्धा विलोक्येयं साध्वसाकुलेत्यालोच्य सहसा अप्रसाद्यैव परिचुम्बितेत्यर्थः । सहसा शीघ्रमिति वा । विलम्बे भ्रमापगमसंभावनात् । अत्र शोणितशब्दस्य रुधिरत्वविशिष्टे प्रसिद्धिबाहुल्यादारक्तीकरणरूपेऽर्थे निहतार्थत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'तपस्विभिरिति । या गतिस्तपस्विभिः सुचिरेण चिरकालेन लभ्यते या च प्रयत्नतः प्रयत्नेन सत्रिभिरनेकदिनसाध्यसत्राख्ययज्ञकारिभिरिष्यते कालान्तरभावित्वान्न पुनस्तदैव लभ्यते तां गतिं रणः सङ्ग्राम एवाश्वमेधस्तत्र पशुतां वध्यतामुपागता अत एव यशस्विन आशु शीघ्रं प्रयान्तीत्यन्वयः । अत्र पशुतामित्यनुचितार्थम् । कातरत्वाभिव्यक्त्या वर्णनीयस्य शौर्यस्य तिरस्कारात् ।' इत्युदाहरणचन्द्रिकासंक्षेपः

अत्र शौर्ये प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातरतामभिव्यनक्ति । तदर्थे तस्या दर्शनात् । विरुद्धमतिकृत्तु पदान्तरसापेक्षं तथेति तस्माद्भेदः । दूषकताबीजं च विवक्षिततिरस्कारकार्योपस्थितिः । अतोऽस्य नित्यदोषत्वम् ।

निरर्थकमविवक्षितार्थकम् । वृत्तनिर्वाहमात्रप्रयोजनकमिति यावत् । अत एव वाक्यालंकारभूतं यमकादिनिर्वाहकं च खल्वादिपदमदुष्टम् । तच्च निपातरूपं चादिपदं बहुवचनादि च । उदाहरणम्—

'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥'

अत्र हिपदम् । अर्थस्याविवक्षितत्वात् । दूषकताबीजं त्वस्य चिन्त्यताम् । तद्धि न तावदर्थानुपस्थितिः । पदान्तैररेव यावदभिधेयोपस्थापनात् । न चैवमवाचकादौ । तत्र तदभिधेयस्य वाक्यार्थघटकस्य पदान्तैररनुपस्थापनात् । नापि प्रतिकूलवर्णवद्रसविरोधिता । चादीनां सार्थकत्वस्थलेऽपि रसविरोधित्वप्रसङ्गात्स्वरूपस्य ताद्रूप्यादिति । उच्यते—निरर्थकं प्रयुञ्जानस्य वचसि सहृदयानां वैमुख्यं दूषकताबीजम् । प्रयोजनानुसंधानव्यग्रता वा ।

अवाचकं विवक्षितधर्मविशिष्टस्य विवक्षितधर्मिणः क्वापि न वाचकं यत्तदित्यर्थः । अत एवासमर्थाद्भेदः । तस्य क्वचिच्छक्तिस्वीकारात् । एतादृशविशिष्टविरहश्च क्वचिद्धर्मिणि शक्तावपि विवक्षिते प्रकारे शक्तिविरहात् । क्वचित्प्रकारे शक्तावपि धर्मिणि शक्तिविरहात् । क्वचित्प्रकारधर्मिणोरुभयोरपि शक्त्यभावात् । तत्राद्यं द्विधा—अपेक्षितयोगमनपेक्षितयोगं च । तयोराद्यं यथा—

'अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥'

अत्र पूर्वार्धे दारिद्र्यरूपापद्विघातकतया दातृत्वं विवक्षितमिति द्वितीयार्धे

---

व्यञ्जनादित्याह—अत्रेति । तदर्थे पशुपदार्थे । तस्याः कातरतायाः । बहुवचना-

---

१. 'उदिति । उत्फुल्लं विकसितं यत्कमलं तस्य केसराणां परागो धूलिस्तद्वद्गौरा द्युतिर्यस्यास्तथाभूते इति गौरीविशेषणम् । ममाभिवाञ्छितं प्रसिध्यत्विति संबन्धः । अत्र हिशब्दो निरर्थकः । छन्दःपूरणमात्रप्रयोजनकत्वात् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अवन्ध्येति । दुर्योधननिग्रहाय युधिष्ठिरमुद्बोधयन्त्या द्रौपद्या इयमुक्तिः । देहिनः शत्रुमित्ररूपा यथाक्रमम् । अवन्ध्यः सफलः कोपो यस्य तथाभूतस्य । एवमापदां निहन्तुर्नाशयितुः । दातुरिति यावत् । स्वयमेव प्रयत्नं विना वश्या भवन्ति । उक्तमर्थं व्यतिरेकमुखेनापि द्रढयितुमाह—अमर्षेत्यादि । अमर्षः क्रोधः स चावन्ध्यो बोध्यः । तच्छून्येन भवादृशेन विद्विषा शत्रुणा अर्थाच्छत्रुरूपस्य दरो भयं न भवति । तथा जातं हार्दं स्नेहो यस्य तेन मित्रेण जन्तुना जन्तुमात्रेण । अदात्रेति यावत् । जनस्यार्थान्मित्ररूपस्यादरो न भवतीत्याकारप्रश्लेषेणार्थः । भयादरयोश्चाभावकथनेन भङ्ग्यन्तरेण वश्यत्वाभाव एवोक्त इति द्रष्टव्यम् । अत्र जन्तुपदं विवक्षितेनादातृत्वेन रूपेणावाचकम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

तद्वैपरीत्यप्रदर्शकं जन्तुपदमदातरि प्रयुक्तम्। तत्र च जायत इति योगमपेक्ष्य तस्य शक्तत्वेऽपि न विवक्षितया अदातृतया प्रकारेण सेत्यवाचकम्। अनपेक्षितयोगं तथा—

'हा धिक्सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विश्लेषरुजान्धकारितमिदं दग्धं दिनं कल्पितम्।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना॥'

अत्र दिनपदं प्रकाशमयमित्यर्थे विवक्षितम्। तामसीत्यनेन लब्धस्य तमोमयत्वस्य वैपरीत्याभिधानायोपादानात्। तत्र च धर्मिणि योगमनपेक्ष्यैव रूढ्या दिनत्वेन शक्तम्, न पुनः प्रकाशमयत्वेनेत्यवाचकम्। द्वितीयं यथा—

'जलं जलधरे क्षारमयं वर्षति वारिदः।
इदं बृंहितमश्वानां ककुद्मानेष हेषते॥'

अत्र जलधरशब्दस्य जलधारकत्वे प्रकारे सामर्थ्येऽपि न समुद्रे धर्मिणि सामर्थ्यम्। यद्यपि योगशक्तिस्तत्राप्यस्त्येव तथापि रूढ्या प्रतिबन्धादनस्तिकल्पैव।

तृतीयं तूपसर्गसंसर्गादर्थान्तरगतमन्यथा च। तयोराद्यं यथा—

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।

---

१. 'हा धिगिति। रात्रौ स्वप्ने उर्वशीं दृष्टवतः पुरूरवस उक्तिरियम्। यत्र रात्रौ सा उर्वशीरूपा शशिमुखी मया दृष्टा सा किल तामसी तमस्विनी कल्पितेति लिङ्गविपरिणामेन संबध्यते। धात्रेति विभक्तिविपरिणामेन। किलेत्यरुचावलीके वा। शशिसत्त्वे तमस्वित्वानौचित्यात्। अत एव हेति खेदे। धिगिति निन्दायाम्। तथा तस्या विच्छेदो विरहस्तद्रूपया रुजा व्याधिनान्धकारित सजातान्धकारमिदमनुभूयमानं कालरूपं वस्तु दग्धं दुःखदायित्वेन निन्द्यम्। दिनं प्रकाशमयं कल्पितम्। हा धिगित्यत्रापि योज्यम्। इत्थं धाता विधिः कुशलेऽभीष्टे सदैव सर्वदैव विधुरः प्रतिकूलः। किं कुर्मः। विधेरवर्जनीयत्वादिति भावः। न चेद्विधुरस्तत्तदाधुना मे मम जीवलोको जीवनाखिलकालस्तादृग्यामवतीमयः पूर्वोक्तप्रियादर्शनयुक्तरात्रिस्वरूपः कथं नो न भवतीत्यर्थः। कल्पितेत्यत्र मयेत्यस्य कर्तृत्वेनान्वयप्रदर्शनं तु केषांचिदविचारितरमणीयमेव। 'किल संभाव्यवार्तयोः। हेत्वरुच्योरलीके च' इति हैमः। अत्र दिनपद विवक्षितप्रकाशमयत्वविशिष्टावाचकम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. एतदुदाहरणमुदाहरणचन्द्रिकाया न व्याख्यातम्. ३. 'जङ्घेति। भर्तुः शिवस्य नृत्तानुकारे तालल्याश्रितनर्तनानुकरणदशायां भवान्या अभिनव इदंप्रथमतया नृत्यप्रवृत्तो दण्डपादः प्रसह्योर्ध्वीकृतोऽत एव दण्डाकारः पादो जयतीति संबन्धः। 'नृत्य पदार्थाभिनयो नृत्तं तालल्याश्रयम्' इति संगीतरत्नाकरः। 'प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयते' इति च। कीदृशः। निजा भवानीसंबन्धिनी तनुरेव स्वच्छा लावण्यस्य वापी तत्संभूत यदम्भोज तस्य शोभां विदधत्। विशेषतो

भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥'

अत्र विदधातिर्धारणे प्रयुक्तः । न च धारणे धारणत्वे वा समर्थः । स्वसंसर्गेण करणे नियमितशक्तित्वात् ।

अन्त्यस्तु वाक्यनिष्ठावाचकतायां 'प्राभ्रभ्राड्–' इत्यादावुदाहरिष्यते । तदेवं निर्दूषणे प्रकाशे यत् 'असमर्थं धर्मधर्मिणोर्द्वयोरपि शक्तिविरहः । अवाचके तु धर्ममात्रे सः । विदधदित्युदाहरणं त्ववाचकप्रकरणमध्ये समर्थस्यैव' इति प्रलपितं तद्वाक्यावाचकत्वोदाहरणानवलोकननिबन्धनं संदर्भविरुद्धं चेत्यनादेयम् । दूषकताबीजं तु विवक्षितार्थानुपस्थितिरिति नित्य एवायम् ।

त्रिधाश्लीलमिति । अश्रीरस्यास्तीत्यर्थे सिध्मादित्वाल्लच्प्रत्ययः । कपिलकादित्वाद्रेफस्य लत्वम् । तथा च कान्त्यभाववदिति पर्यवसन्नम् । कान्त्यभावश्चातिप्रसक्त इति व्रीडाजुगुप्सामङ्गलव्यक्तिहेतुकस्तद्विशेषो वक्तव्यः । न चैतत्त्रयेऽनतिप्रसक्तमनुगतं रूपमस्तीति व्रीडादिहेतुकाकान्तिमत्सु नानार्थोऽयमश्लीलशब्द इत्यर्थः । तच्च प्रत्येकं त्रिविधम् । क्वचिद्विवक्षितस्यैवार्थस्य व्रीडाद्यालम्बनत्वात् । क्वचिदविवक्षितस्य निर्वाहिणस्तथात्वात् । क्वचित्तादृशार्थस्यानिर्वाहिणोऽपि स्मृतिमात्रहेतुत्वात् । एषु क्वचित्किंचिदुदाह्रियते । तत्र व्रीडाव्यक्तावर्थान्तरस्य तथाभावो यथा—

'साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥'

---

दीति पदैकदेशोदाहरणविषयम् । **स्वसंसर्गेणेति** । वीत्युपसर्गसंबन्धेनेत्यर्थ. करणे विधाने । निर्वाहिण प्रकृतार्थान्वयिन· । **तत्रेति** । अर्थान्तरस्येत्यनन्तरं नि-

---

विभ्रदित्यर्थ । एतदेव जङ्घेत्यादिना विशेपणचतुष्टयेन समर्थयति—जङ्घाकाण्डमेवोरु महन्नाल यत्र । जङ्घाकाण्ड चोरुश्च तयो समाहारो जङ्घाकाण्डोरु तदेव नाल यत्रेति वार्थः । इव नखकिरण एव लसन्ति केसराणि तेषामाल्या पङ्क्त्या करालो दन्तुरः । प्रत्यग्रस्यार्द्रस्यालक्तकस्य भाना कान्तीना प्रसरा एव किसलयानि नवपत्राणि यस्य तथाभूतः । किसलयपदस्य पद्मपत्रेऽपि गौण्या प्रयोग । मञ्जु मनोज्ञं मञ्जीर नूपुरमेव भृङ्गो यत्र सः । एवं च सत्युपमानधर्मस्याम्भोजशोभाया दण्डपादे समारोप समर्थितो भवति 'ज्योत्स्नाभस–' इत्यादिरूपकैरिव रात्रौ कापालिकी समारोप । तत्र प्रधानीभूतस्यारोपस्योपमानारोपरूपत्वाद्रूपकत्वम् । इह तु तदभावान्निदर्शनारूपत्वमित्येतावान्पर विशेष । न चोपमानाप्रसिद्ध्या उपमायाः कल्पनासंभवात्कथमेषा निदर्शनेति वाच्यम् । वस्तुतोऽप्रसिद्धावपि कविसमयबलेन बहुश उपमानदर्शनात् । अत्र निजपद विवक्षिता पार्वतीतनुं न बोधयति । निजादिपदाना स्ववाक्यमुख्यविशेषगामित्वस्य व्युत्पत्तिसिद्धत्वात् ।' इत्युदाहरणचन्द्रिकासक्षेप..

१. 'विससर्गेण' ग. २. 'साधनमिति । यस्य राज्ञः सुमहत्साधनं सैन्यं विलोक्यते

अत्र सैन्यार्थस्य साधनशब्दस्य पुंव्यञ्जनमर्थान्तरम्।

जुगुप्साव्यक्तौ तथाभूतार्थस्मृतिमात्रहेतुत्वं यथा—

'लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथवा नतिमृते तेनानिशं चुम्बिता॥'

अत्र वायुशब्दोऽपानवायुं स्मारयति। न तु तदर्थतया वाक्यमुपपद्यते।

अमङ्गलव्यक्तौ विवक्षितस्यैवार्थस्य तथात्वं यथा—

'मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नोऽद्य जातः।
रतिविलुलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्ही॥'

अत्र विनाशशब्दस्य विवक्षित एवार्थोऽमङ्गलः।

एवं त्रिषु भिन्नभिन्नप्रकारोदाहरणेन प्रत्येकं त्रिप्रकारत्वमूहनीयम्। न्याय-साम्यात्। दूषकताबीजं त्वनुभवसिद्धरसापकर्षकताद्दशार्थोपस्थितिः। नीरसे तु

---

बर्हिण इति शेष। तथाभावो हेतुत्वम्। तथाभूतार्थेति। जुगुप्सालम्बनेत्यर्थः।

---

यदन्यस्य न विलोक्यते। असाधारणमित्यर्थः। तस्य धीशालिनो नीतिज्ञस्याराल्लिता कोपेन कुटिलीकृता भ्रुव कोऽन्यः सहेतेत्यर्थः। अत्र साधनशब्दः पुंव्यञ्जनरूपार्थान्तरोपस्थापकतया व्रीडादायी। इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'लीलेति। अन्यस्य वनितया न त्वन्यया वनितया। तदै(यै)व क्रोधातिशयान्निःशङ्कं दष्टोऽधरो यस्य तथाभूतः। कश्चिल्लीलार्थेन तामरसेन कमलेनार्थात्स्ववनितया आहतः सन्केसरैस्तल्लग्नपरागैर्दूषिते आकुले ईक्षणे यस्य तथाभूत इव च्छलेन नेत्रे व्यामील्य स्थितः। ततस्तदीयधूर्तत्वानभिज्ञतया कुड्मलितेन तदाकारीकृतेनाननेन तस्य नायकस्य। 'तत्र' इति पाठे नेत्रयोः। वायुं फूत्कारं ददती स्थिता सा मुग्धा तेन नायकेन नतिमृते प्रणामं विनैवानिशं चिरं चुम्बिता। तत्र हेतुः—भ्रान्त्या धूर्ततयाथवेति। अस्याः कोपोऽपगत इति भ्रान्तिः। कोपानपगमेऽपि सापराधत्वदशायामपि निराबाधं चुम्बेयमिति धूर्तता। अत्र वायुशब्दोऽपानवायुस्मारकतया जुगुप्सादायी।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'मृद्विति। विक्रमोर्वशीये उर्वशीविरहिणः पुरूरवस उक्तिरियम्। मृदुना मन्देन पवनेन विभिन्नो विकसितः। घनो निबिडश्चासौ रुचिरश्चासौ कलापो मयूरपिच्छं मत्प्रियाया उर्वश्या विनाशाददर्शनादद्य निःसपत्नः सदृशरहितो जात इत्यन्वयः। सुकेश्याः शोभनकेश्या उर्वश्याः केशपाशे सत्येष बर्ही मयूरः कं हरेदनुरञ्जयेत्। न कमपीत्यर्थः। विस्तृतकलापसाम्याय विशिनष्टि—रतौ विलुलितः शिथिलो बन्धो यस्य तथाभूते। तथा कुसुमैः सनाथे युक्ते। तेन चन्द्रकसाम्यम्। 'वर्हः' इति त्वपपाठः। 'पिच्छबर्हे नपुंसके' इत्यनुशासनात्'। इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'विगलित' ख-ग. ४. 'बर्हः' ख ग.

चमत्कारापकर्षकत्वं तस्याः । अथवा तादृशार्थोपस्थित्या श्रोतुर्वैमुख्यं तद्बीजम् । अत. शमकथायां दोषत्वाभावः । तादृशोपस्थितेः शमपोषकत्वात् । भाव्यमङ्गलादिसूचने कामशास्त्रस्थितौ च न दोषत्वम् । वैमुख्याभावात् । शिवलिङ्गभगिनीब्रह्माण्डादिशब्देषु तु [1]संवीतगुप्तलक्षितेष्वसभ्यार्थानुपस्थितेः ।

संदिग्धं विवक्षिताविवक्षितोभयार्थोपस्थापनानुकूलस्वरूपद्वयसंदेहविषयः । यथा—

'[2]आलिङ्गितस्तत्रभवान्संपराये जयश्रिया ।
आशी.परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यामिति पदं बन्दीशब्दे सप्तम्यन्तं वन्द्याशब्दे द्वितीयान्तं वेति संदेहः । प्रथमे हठगृहीतमहिलायां कृपां कुर्विति, द्वितीये नमस्यामाशीःपरम्परामित्यर्थोपपत्तौ साधकबाधकप्रमाणाभावात् । दूषकताबीजमुद्देश्यनिश्चयाभावः । अतो यत्र संदेह एवोद्देश्यस्तत्र यत्र च वाच्यादिमहिम्ना प्रकरणादिवशेन वा निश्चयस्तत्र चादोषत्वम् ।

अप्रतीतमिति नञोऽल्पार्थतया शब्दानुशासनातिरिक्तशास्त्रमात्रप्रसिद्धमित्यर्थः । अत एवाप्रयुक्ताद्भेदः । तस्यान्यत्रापि प्रसिद्धे. । उदाहरणम्—

'[3]सम्यग्ज्ञानमहाज्योतिर्गलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम् ॥'

अत्राशयशब्दो मिथ्याज्ञानजन्यवासनार्थः । स चैवं योगशास्त्र एव प्रसिद्धः । एवं शास्त्रान्तरप्रसिद्धमप्यूह्यम् । दूषकताबीजं तच्छास्त्रानभिज्ञस्यार्थानुपस्थितिः । अत एव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः स्वयमेव वा परामर्शस्तत्र न दोषत्वम् । प्रत्युत व्युत्पत्तिसूचकतया गुणत्वम् ।

---

मात्रपदेन प्रकृतार्थान्वयित्वव्यवच्छेदः । **संवीतेति** । शिवपदार्थेन संवीतमाच्छादितमिवेत्यर्थः । केवलस्यैव लिङ्गपदस्याश्लीलत्वं न तु शिवपदसंबद्धस्येत्यनुभवात् । भगिनीपदे तु रूढ्याश्लीलार्थो गुप्त । ब्रह्माण्डपदे त्वण्डपदेन गौण्या लक्षितस्य जगत प्रतीतेर्नाश्लीलतेति ज्ञेयम् । 'समुन्नीत' इति त्वपपाठ । सरस्वतीकण्ठाभरणे 'संवीत' इत्येव पाठस्य दर्शनात् । **स्वरूपद्वयेति** । कवितात्पर्यविषयत्वेन सप्तम्य-

---

१ 'समुन्नीत' ख २ 'आलिङ्गित इति । संपराये युद्धे जयश्रियालिङ्गितस्तत्रभवान्पूज्यस्त्वमाशी परम्परामाशीर्वादपरम्परामर्थाज्जितशत्रुप्रयुक्ता कर्णे कृत्वा आकर्ण्य कृपा कुर्विति संबन्ध । तत्र संपराय इति वा । अत्र बवयोरभेदाद्वन्दनीयामित्यर्थकवन्द्याशब्दस्य द्वितीयान्तं रूप किं वा गृहीतमहिलायामिति कृपाविषयसमर्पकवन्दीशब्दस्य सप्तम्यन्तमिति संदेहः ।' इत्युदाहरणचन्द्रिकासंक्षेप ३. 'सम्यगिति । सम्यग्ज्ञान तत्त्वज्ञान तदेव महाज्योतिस्तेन दलितो नाशित आशयो मिथ्याज्ञानवासना यस्य । तत्ताजुषो नरस्य विधीयमानं क्रियमाणमप्येतत्कर्म विहितनिषिद्धरूप बन्धन बन्धजनक न भवेदित्यर्थ. । अत्राशयशब्दो मिथ्याज्ञानवासनाया योगशास्त्रमात्रे प्रयुक्त इत्यप्रतीतत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेप .

ग्राम्यं ग्रामे केवले लोके प्रसिद्धं न तु शास्त्रेऽपि । अत एवाप्रयुक्ताद्भेदः' इत्येके । अपरे तु 'देश्यमनेन संगृह्यते । कटिशब्दादयस्तु नोदाहर्तव्याः । किं तु गल्लभल्लादयः' इत्याहुः । तदुभयमप्यसत् । कटिशब्दस्य शास्त्रेऽपि प्रसिद्धस्य व्युत्पन्नस्य चोदाहरणत्वेन दर्शितत्वात् । तस्मात्समस्तलोकप्रसिद्धम् । तस्मिन्देशे सर्वलोकैर्यदाख्यया यद्वस्तु व्यवह्रियते तदित्यर्थः । तेन देश्यमपि संगृहीतम् । अत एवाग्रे खादनपानगल्लादय उदाहरणीयाः । कमलमहिषीदध्यादयश्च प्रत्युदाहर्तव्याः । उदाहरणम्—

'राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥'

अत्र कटिशब्दः । लोकानभिज्ञं प्रति तदर्थानुपस्थितिर्दूषकताबीजमिति ऋजवः । वस्तुतस्तु नागरोपनागरौ विहाय ग्राम्यशब्दप्रयोगाद्वक्तुर्वैदग्ध्योन्नयनेन श्रोतुर्वैमुख्यं तदित्यालोच्यते । अत एव विदूषकादावधमेवक्तरि न दोषत्वम् । तस्य तथैवौचित्येन वैरस्याभावात् । कटिशब्दे तु ग्राम्यताप्रयोजकं नाश्लीलत्वमिति न तत्संकरः ।

नेयार्थं नेयोऽर्थो यस्य तत् । नेयत्वं च—

'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते चाधुना काश्चित्काश्चिन्नैव त्वशक्तितः ॥'

इत्यनेन रूढिप्रयोजनाभ्यां विना या लक्षणा निषिद्धा तद्विषयत्वम् । यथा—

'शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥'

अत्र चपेटादिपदं निर्जितत्वे लक्षणया प्रयुक्तम् । न च तत्रास्य रूढिर्न वा

---

न्तद्वितीयान्तत्वादिरूपद्वयप्रकारको य सदेहस्तद्विषय इत्यर्थः । समस्तेत्यस्य विवरणं **तस्मिन्देश इत्यादि** । नागरो विदग्धमात्रप्रसिद्ध. । तत्सदृशस्ततः किंचिदून उपनागर. । **ग्राम्यताप्रयोजकमिति** । व्रीडाद्यालम्बनत्वरूपमश्लीलत्वं न ग्राम्यताप्रयोजकम् । अपि तु विदग्धाविदग्धसाधारणप्रयुक्तत्वमेवेति न सांकर्यशङ्केत्यर्थ. । तेन क्वचिदुपधेयसंकरेऽप्युपाधेरसकरान्न दोष इति भाव· । **चपेटादीति** । तत्रेकं

---

१. 'राकेति । राका पूर्णचन्द्रा पूर्णिमा तत्सबन्धी यो विभावरीकान्तश्चन्द्रस्तस्य सक्रान्ता द्युतिर्यत्र तथाभूत तव मुख, तपनीयस्य सुवर्णस्य शिलाया· शोभा यत्र सा कटिर्नितम्बश्च मनो हरत इत्यन्वय. । अत्र कटिशब्दो ग्राम्य· । पामरसाधारण्येन प्रयुज्यमानत्वात् । इत्युदाहरणचन्द्रिकासक्षेपः. २. 'शरदिति । हे तन्वि, ते तव मुखं कर्तृ समुल्लासी य· पूर्णिमासबन्धी शर्वरीप्रियश्चन्द्रस्तं चपेटापातनस्य करतलप्रहारस्यातिथिं पात्र करोतीत्यन्वय· । अत्र मुख्यार्थबाधाच्चपेटाशब्देन निर्जितत्व लक्ष्यते । तथा निर्जितत्वस्य यदापातनं सबन्धस्तत्पात्र करोतीत्यर्थ· पर्यवस्यति । रूढिप्रयोजनान्यतरविरहेणानिषिद्धलाक्षणिकत्वरूप नेयार्थम्' इत्युदाहरणचन्द्रिकासक्षेपः.

प्रयोजनम् । मुख्यशब्दार्थातिरेकिणोऽर्थस्याप्रतीतेः । दूषकताबीजं च वृत्त्यभावेनार्थानुपस्थितिरिति नित्योऽयं दोषः ।

अथ भवेत्क्लिष्टमित्यादि क्लिष्टादिकं दुष्टं पदं समासगतमेवेत्यभिसंबन्धः । तदयमर्थः—क्लिष्टत्वादिदोषत्रयं पदान्तरसाहित्येनैव संभवति । तथा च यदि तयोः पदयोः समासस्तदैव समासेनैकपद्यात्पददोषता । असमासे वाक्यदोषत्वमेव । इतरेषां तु समासेऽसमासे च पददोषत्वम् । द्वितीयपदनैरपेक्ष्येणैव दुष्टत्वादिति ।

तत्र क्लिष्टमर्थप्रतीतौ क्लेशवत् । यतो विवक्षितस्यान्वितविशेषस्य प्रतिपत्तिर्विलम्बिता तदित्यर्थः । निहतार्थादौ तु पदार्थोपस्थितिरेव विलम्बितेति ततो भेदः । विलम्बश्चाप्रत्यासत्तेर्वा, सामान्यशक्तात्प्रकरणाद्यभावे विवक्षितविशेषस्य झगनुपस्थितेर्वा । आद्ये वाक्यमात्रदोषत्वम् 'धम्मिल्लस्य—' इत्यादौ । अन्त्ये पददोषत्वमपि । तद्यथा—

'अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥'[1]

अत्रात्रिलोचनसंभूतेत्यादौ सामान्यतोऽन्वयबोधाविलम्बेऽप्यत्रिलोचनसंभूतेत्यादिना चन्द्रादेर्न द्रागुपस्थितिः । अन्यस्यापि तथाभावान्नियामकस्याभावाच्च । अतः कुमुदैरित्यस्य व्यवधानेनोपस्थितिः । इदमेव च 'अत्रिदृष्टेः समुद्भूतस्योद्योतेनावभासिभिः' इति पाठे द्वितीयप्रभेदे वाक्यदोषोदाहरणं द्रष्टव्यम् । दूषकताबीजं प्रतीतिविलम्बः । प्रहेलिकादौ तु तस्येष्टत्वाददोषत्वम् । मत्तोक्त्यादौ तु गुणत्वमपि तदौचित्यात् ।

'अविमृष्टविधेयांशम्' अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् । प्राधान्यं च विधिप्रतीतियोग्यता । सा चानुपसर्जनीभूतत्वे सत्युद्देश्यानन्तर्यम् । अतो 'न्यक्कारो ह्ययमेव–' इत्यादौ 'क्षणमप्यमुक्त–' इत्यादौ वा

---

लक्षकमितरत्तात्पर्यग्राहकमिति भावः । **मुख्यशब्दार्थेति** । निर्जितमिति मुख्यशब्देन प्रतिपाद्यो योऽर्थस्तद्व्यतिरिक्तस्येत्यर्थः । मुख्यशब्दप्रयोगादलभ्यं हि शैत्यपावनत्वं प्रयोजनं, न चेह तथा प्रतीयमानमस्ति । **वृत्त्यभावेनेति** । उक्तहेतुकलक्षणाया एव वृत्तित्वव्युत्पत्तेरिति भावः । अर्थप्रतीतौ वाक्यार्थप्रतीतौ । **पदार्थोपस्थितिरेवेति** । शक्यतावच्छेदकरूपेण प्रकृतपदार्थोपस्थितिरेवेत्यर्थः । इह तु शक्यतावच्छेदकस्य प्रकृताप्रकृतसाधारण्यात्तेन रूपेणोपस्थितावप्यन्वितविशेषानुपस्थितिमात्रमित्यर्थः । **अन्यस्यापीति** । चक्षुर्ज्योतिषोऽपीत्यर्थः । आदिना चन्द्रोद्ग-

१. 'अत्रीति । हे भूपाल, तव चेष्टितं चरित्रमत्रेर्मुनिविशेषस्य लोचनात्संभूतं यज्ज्योतिश्चन्द्ररूपं तस्योद्गमेनोदयेन भासनशीलैरर्थात्कुमुदैः सदृशमत्यर्थमतिशयेन शोभत इत्यर्थः । अत्र पूर्वार्धेन कुमुदरूपार्थबोधे क्लेशात्क्लिष्टत्वम्' इत्युदाहरणचन्द्रिकासंक्षेपः.

नाव्याप्तिः । प्रथमे उक्तरूपप्राधान्याभावेन द्वितीये विधेयस्य प्रसज्यप्रतिषेधस्यानिर्देशेन विशिष्टविरहसत्त्वात् । उदाहरणम्—

'मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥'

अत्र नगरीरक्षण एव यत्प्रयासस्तन्मूर्ध्नां महिमा मिथ्येति मिथ्यात्वं विधेयम् । अप्राप्तत्वात् । अत एव च नानुवाद्यम् । प्राप्तत्वे तु मिथ्यामहिम्नामफलत्वमेवोचितम् । अतः किमेतत्फलमित्यादिना नाभिसंबन्धः स्यात् । तच्च बहुव्रीहावन्यपदार्थे गुणीभूतम् । विशेषणप्राधान्ये समासाननुशासनात् । किं चोद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते । न च समासे पृथक्पदादुपस्थितिः । अपृथगुपस्थितौ च न तथा व्युत्पत्तिरिति । एवं समासान्तरेऽप्यविमृष्टत्वं द्रष्टव्यम् । तत्र कर्मधारये यथा—

'स्रस्तां नितम्बादवरोपयन्तीं पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥'

---

मभासित्वेन कुमुदस्यापि न द्रागुपस्थिति । चन्द्रविकास्यकुसुमान्तरसाधारण्यादित्युक्तम् । तच्चेति मिथ्यात्वं चेत्यर्थः । **विशेषणेति** । एकार्थीभावभङ्गप्रसङ्गादित्यर्थः । वैरूप्यादप्येकस्मिन्समस्तपदे उद्देश्यविधेयभावो न संभवतीत्याह—**किं चेति** । प्राप्तत्वेनावगतं ह्युद्देश्यम् । अप्राप्तत्वेनावगतं च विधेयम् । न चैकस्मात्पदा-

---

१. 'मूर्ध्नामिति । रामसेनया लङ्कायां वेष्टितायां रावणस्योक्तिः' । मम मूर्ध्नां दोष्णां हस्तानां चेहास्मिन्वानरापादानके नगरीरक्षणे यत्प्रयास एतदेव फलं किमित्यन्वयः । किमित्यनेनोक्तमनौचित्यं समर्थयितुं मूर्ध्नां दोष्णां च क्रमेण विशेषणद्वयमाह—उद्वृत्तेत्यादिना । उद्वृत्तमुद्धतं यत्कृत्तं कर्तनं तेनाविरला सान्द्रा गलाद्गलन्ती या रक्तस्य संसक्ता अविच्छिन्ना धारा तया धौतौ प्रक्षालितौ यावीशाङ्घ्री शिवचरणौ तत्प्रसादेनोपनतो लब्धो यो जयस्तेन जगति जातो मिथ्याभूतो महिमा येषामिति मूर्धविशेषणम् । कैलासस्योल्लासने उद्धरणे या इच्छा तस्या व्यतिकरस्य संबन्धस्य पिशुनः सूचकश्चासावुत्सर्पी उत्कटो दर्पस्तेनोद्धुराणां समर्थानामिति दोष्णां विशेषणम् । कैलासेन विमानगतिनिरोधे जाते तमुद्धर्तुमान्दोलितवान्रावण इति पुराणम् । तथा चैवंविधानामेतत्फलमनुचितमित्यतो महिमा मिथ्येति मिथ्यात्वस्य विधेयत्वं विवक्षितम् । अत एव समासे गुणीभावेन तदनिर्वाहादविमृष्टविधेयांशत्वदोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः । २. 'स्रस्तामिति । कुमारसंभवे कामस्य हरं प्रत्यभियोगे सहायभूता पार्वती 'अदृश्यत स्थावरराजकन्या' इति कुलकादिनोपक्रम्यैतत्पद्यम् । कथंभूता स्थावरराजकन्या । नितम्बात्स्रस्तां विगलितां केसरो वकुलस्तत्संबन्धिपुष्पमालारूपां काञ्चीं पुनः पुनर्वारंवारमवरोपयन्तीं नितम्बे निवेशयन्तीं । कामिव । स्मरेण न्यासीकृतां निक्षेपीकृतां कार्मुकसंबन्धिनीं द्वितीयमौर्वीमिव । अत्रैव किमिति न्यस्ता

अत्र द्वितीयत्वं मौर्व्यामुत्प्रेक्ष्य विधेयम्। तच्च समासे गुणीभूतम्। 'मौर्वी द्वितीया' इति पाठे तु निराबाधा प्रतीतिः। नन्वत्र काञ्च्यां द्वितीयमौर्वीत्वं विशिष्टमेवोत्प्रेक्ष्यमतो नोक्तदोषावकाश इति चेत्। न। तथापि हि विशेषणांशस्य द्वितीयत्वस्य प्राधान्यम्। द्वितीयसद्भावे एकस्य न्यासीकरणौचित्यात्। मौर्वीत्वं तु तस्याप्रयोजकम्। अन्यस्यापि सद्वितीयस्य तदौचित्यादिति वस्तुविशेषपरिचायकतामात्रम्। तस्माद्विशिष्टविधावपि विशेषणमत्र प्राधान्येन वक्तव्यम्। अत एव 'आ कडारादेका संज्ञा' इत्यत्रैकत्वस्याप्राधान्यप्रसङ्गभयेन समासो नाकारीति व्याख्यातारः। अन्यथा तत्राप्येकत्र संज्ञिन्युद्देश्ये एकत्वविशिष्टसंज्ञाविधाने दोषो न स्यात्।

बहुव्रीहावेव तद्धितार्थगुणीभूतेऽन्यपदार्थे गुणीभावो यथा—

[1]'वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥'

अत्र वरेषु मार्गणीयानां धर्माणां वैकल्यदर्शनप्रस्तावाज्जन्मन्यलक्ष्यत्वं विधित्सितम्। तच्च समासे न्यग्भूतम्। 'अलक्षिता जनिः' इति पाठे तु पौर्वापर्यविपर्ययसत्त्वेऽपि समासनिबन्धनमप्राधान्यं निवर्तते।

नञ्समासे यथा—

[2]'आनन्दसिन्धुरतिचापलशालिचित्त-
संदाननैकसदनं क्षणमप्यमुक्ता।

---

दनेकरूपेणोपस्थितिरित्यर्थः। अयमेव चैकप्रसरताभङ्ग इत्युच्यते। यथा—'वषट्कर्तुः प्रथमभक्ष' इत्यत्र प्राप्तभक्षानुवादेन प्राथम्यविधौ। तत्राप्येकार्थीभावभङ्गप्रसङ्गेन

---

नान्यत्रेत्यत आह—स्थानविदेति। आश्रयसाद्गुण्येन गुणप्रकर्ष इत्येतदेव स्थानं समर्पणयोग्यमिति जानतेत्यर्थः। अत्र न्यासीकरणौचित्येन पर्यवसानगत्या द्वितीयस्यैवोत्प्रेक्षणीयत्वात्तस्य च समासे गुणीभावादविधेयत्वदोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

१ 'वपुरिति। तत्रैव वटुवेषधारिणः शिवस्य पार्वतीं प्रति वचनम्। भो बालमृगाक्षि, वरेषु यद्रूपकुलधनादि समस्तं मृग्यतेऽन्विष्यते त्रिलोचने हरे तद्व्यस्तमेकैकमपि किमस्ति। अपि तु नेत्यर्थः। बालमृगाक्षीतिसंबोधनेनैवंविधसौन्दर्यशालिन्यास्तव विरूपवरप्रार्थनमनुचितमिति व्यज्यते। एकैकस्याप्यभावं दर्शयति—वपुरित्यादिना। विरूपाणि विषमाणि सोमसूर्याग्निरूपत्वाद्भीषणानि वाक्षीणि यस्य तथाभूतं वपुः। अलक्ष्यमज्ञेयं जन्म यस्य तस्य भावस्तत्ता। अस्तीति शेषः। दिगम्बरत्वेन नग्नतया वसु धनं निवेदितम्। कथितमित्यर्थः। अत्र जन्मनि विधित्सितमलक्ष्यत्वं समासे गुणीभूतम्।' इत्युदाहरणचन्द्रिकासंक्षेपः। २ 'आनन्देति। विरक्तं नायकं प्रति नायिकासखीनामियमुक्तिः। यस्मात्सखी भवता सर्वदैव क्षणमप्यमुक्ता न त्यक्ता तस्या उदन्तो वार्ता तच्चिन्तापि तव सम्प्रत्यधुना तान्तिं ग्लानिं तनोति। वैराग्यात्। अतोऽस्मान्धिग्धिक्। एवंविधसखीदुःखदर्शित्वादतिशोच्या वयमित्यर्थः। किंभूता

या सर्वदैव भवता तदुदन्तचिन्ता
तान्ति तनोति तव संप्रति धिग्धिगस्मान् ॥'

अत्रावान्तरवाक्येऽमुक्तेत्यनेन।

'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम्।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥'

इत्यत्रेव प्रसज्यप्रतिषेध एव विधेयो न तु—

'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥'

इत्यत्रात्रस्तत्वाद्यनुवादेनात्मगोपनादिवदमुक्ततानुवादेनान्यत्किंचिद्विधेयमस्ति। न च समासे नञः प्रसज्यप्रतिषेधोऽर्थः किंतु पर्युदास एव। तदुक्तम्—

'विधेर्यत्र प्रधानत्वं प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥' इति।

कथं तर्हि 'अश्राद्धभोजी' इत्यादौ प्रसज्यप्रतिषेधलाभः। पर्युदासेनाक्षेपात्। ननु पर्युदासार्थोऽभुक्तत्वमेव विधीयतां फलाविशेषादिति चेत्। भवेदप्येवं यदि तथा सति क्षणमपीत्यनेन संबन्धः स्यात्। स हि मुक्तत्वेनैव प्रतियोगिना

---

समासानुपपत्तेरुक्तवैरूप्यस्य च प्रसङ्गादिति। **विधेर्यत्रेति।** यत्र विधेः कर्तव्यतायाः प्राधान्यं प्रतिषेधे निवर्तनारूपेऽप्रधानता अविवक्षा स पर्युदासः। यथा 'नेक्षेतोद्यन्तं (आदित्यं)' इत्यादावनीक्षणसंकल्पकर्तव्यताप्राधान्यादीक्षणप्रतिषेधस्य चाविवक्षणात्। एतत्क भवतीत्यपेक्षायामाह—**यत्रेति।** उत्तरपदेनेति स्वोत्तरनामधात्वन्यतरपदार्थेन। संबध्यत इति शेषः। **आक्षेपादिति।** श्राद्धं न भोक्ष्य

---

सखी। आनन्दस्य सिन्धुः समुद्रः। अतिचापलशालिनश्चित्तस्य संदानन बन्धनं तस्यैकं सदनं स्थानम्। तत्रैव चित्तस्य विश्रान्तिरिति। अत्रामुक्तेति पर्युदासप्रतीतिर्न तु विधेयस्य मुक्ता नेति प्रसज्यप्रतिषेधस्येत्यविमृष्टविधेयांशत्वदोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

१. 'प्रसज्यप्रतिषेधमुदाहृत्य दर्शयति—नवेति। विक्रमोर्वशीये विरहिणः पुरूरवस इयमुक्तिः। अयं नवो जलधरः संनद्धः कवची हन्तुमुद्यतो वा दृप्तनिशाचरो न। भवतीति शेषः। एवमग्रेऽपि विशेषदर्शनेन पूर्वसजातभ्रमविषयनिषेधो नञो गम्यमानभवनक्रियान्वयाद्द्रष्टव्यः। इदं सुरधनुरिन्द्रधनुर्दूरमाकृष्टं तस्य राक्षसस्य शरासनं न। 'नाम' इति पाठे वितर्के नामेति। अयमपि पटुस्तीव्रो धारासारो धारावर्षः बाणपरम्परा न। कनकस्य निकषः कषणरेखा तद्वत्स्निग्धा दीप्तिमती विद्युत्। मम प्रियोर्वशी न भवतीत्यर्थः। केचित्तु नञ्काका तत्तदारोपपर्यवसितानेव वाक्यार्थानाहुः' इत्युदाहरणचन्द्रिकासंक्षेपः।

२. 'जुगोपेति। अगृध्नुरलुब्धः। असक्तोऽनासक्तः। शेषं स्पष्टम्। अत्रात्रस्तताद्यनुवादेनात्मगोपनादेर्विधेयत्वात्पर्युदासेऽपि नाविमृष्टविधेयांशत्वदोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

विवक्षितः । न च पर्युदासे तथा संभवः । नन्वेवमपि नाविमृष्टविधेयांशता । विधेयस्यानुपस्थितेः । किं तु धारणे विदधदितिवदवाचकत्वमेव स्यात् । समासेऽर्थान्तरनिरूढत्वादितिचेत् । न । प्राधान्येनानिर्देशस्य तथाप्यक्षतेः । अत एव 'प्राधान्येनानिर्दिष्टो विधेयांशो यत्र' इत्याह वृत्तिकृत् न त्वप्राधान्येन निर्दिष्ट इति । तर्हि विदधदित्यस्याप्यत्रैवान्तर्भाव इति चेत् । न । तदर्थस्यानिर्दिष्टस्याप्यविधेयत्वात् । अमुक्तेत्यस्याविमृष्टविधेयांशस्यावाचकप्रवेश इति चेत् । न । उभयोरसंकीर्णस्थलसंभवे क्वचित्संकरेऽप्यदोषात् । दूषकताबीजं च विवक्षितार्थाप्रत्ययः । तस्मान्नित्यदोषोऽयम् ।

विरुद्धमतिकृत्पदान्तरसंनिधानेन प्रकृतप्रतीतिन्यक्कारकप्रतीतिजनकम् । तच्चेदमनेकधा प्रवर्तते । क्वचित्समासान्तरविग्रहेण । यथा—

'सुधाकरकराकारविशारदविचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥'

अत्राकार्यं कार्यमन्तरेण मित्रमिति विवक्षितम् । अकार्ये मित्रमिति तु प्रतीयते । क्वचिन्नामपदयोः समासे विरुद्धार्थनिरूढपदघटनया । यथा—

'चिरकालपरिप्राप्तिलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥'

अत्र कण्ठग्रहार्थतया विवक्षितो गलग्रहशब्दो रोगविशेषे निरूढः । क्वचिद्विवक्षितविशेषपरत्वे पदवैयर्थ्यप्रसङ्गेनाविवक्षितविशेषपरत्वग्रहात् । यथा—

'न त्रस्तं यदिनाम भूतकरुणासंतानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।

---

इति संकल्पस्य मतवाचिणिनिप्रत्ययानुरोधेन लक्ष्यमाणत्वात्तस्य च श्राद्धभोजनवर्णनं विनानुपपत्तेरिति भावः । **नन्वेवमपीति** । अभवन्मतयोगप्रसङ्ग एव तत्सांकर्यं स्वयमेव निराकरिष्यति । **पदान्तरेति** । अनेनाश्लीलानुचितार्थनिहतार्थव्युदासः ।

---

१. 'सुधेति । सुधाकरश्चन्द्रस्तस्य कराः किरणास्तदाकार निर्मलतया तत्सदृशं विशारद प्रगल्भ च विचेष्टितं यस्य सः । असावेकोऽकार्यमित्रं यः कार्ये उपाधौ मित्रं कार्यमित्रम् । पश्चान्नञ्समासेन कार्यनिरपेक्षं मित्रमित्यर्थः । तस्य किं वर्णयामहे । अर्थाद्गुणान् । 'विद्वत्सुप्रगल्भौ विशारदौ' इत्यमरः । अत्राकार्ये मित्रमिति विरुद्धमतिकृत् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'चिरेति । कान्ता चिरकालाद्या परिप्राप्तिः समागमस्तेन लोचनयोरानन्ददायिनः कान्तस्य गलग्रहं गलस्य ग्रहो ग्रहणमालिङ्गनं विदधातीन्वयः । अत्र गलग्रहशब्दो रूढ्या रोगविशेषोपस्थापकतया विरुद्धमतिकृत् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'नेति । दाशरथिमुद्दिश्य परशुरामोक्तिः । धनुर्व्यारुजता भञ्जता तेन प्रकृतेन दाशरथिना यदि नाम भगवतो भवानीपतेर्देवात्त्र त्रस्तं भीतं तत्पुत्रस्तु स्कन्दोऽथवा स्कन्द इव प्रियोऽहं शिष्यः कथ विस्मृत इत्यन्वयः । यदिनामशब्दोऽखण्डः संभावनायाम् । एतत्संभाव्यमित्यर्थः । कोपात्तेनेति विशिष्य नामाग्रहणम् । भवानी-

तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥'

अत्र भवस्य पत्नीत्यर्थे भवानीति सिद्धम् । तथा च भवपत्नीपतौ प्रतीयमाने भवातिरिक्तः स द्राक्प्रतीयते । नहि भव एवाभिधेये भवपत्नीपतिरिति प्रयोगो योग्यः सचेतसाम् ।

क्वचित्समासैक्येऽपि समस्यमानपदयोर्द्व्यर्थतया । यथा—

'गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहंकारः पायाद्वः सोऽम्बिकारमणः ॥'

अत्राम्बिकारमणपदयोर्गौरीप्रीतिकरत्ववन्मातृस्वामित्वमप्यर्थः । दूषकताबीजं विवक्षितार्थतिरस्कारकार्थोपस्थितिः । अतो यत्र विरुद्धोऽर्थो विवक्षित एव तत्रादोषत्वम् ।

क्लिष्टादिदोषविशेषेषु समासगतत्वनियमविधानाच्छ्रुतिकटुप्रभृतिष्वनियमोऽभ्यनुज्ञातः । तत्रासमासगतमुदाहृतमेव । समासगतेषु श्रुतिकटु यथा—

'सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥'

समासादैकपद्यम् । एवं च्युतसंस्कृत्यादयो द्रष्टव्याः ।

उक्तान्पददोषान्पदैकदेशे वाक्ये चातिदिशति—

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥ ४ ॥**

---

पतेरत्रासे हेतुगर्भं विशेषणम्—भूतेत्यादि । भूतेषु यः करुणासतानः कृपासमूहस्तेन शान्त आत्मा यस्य तथाभूतात् । मदान्धो यस्तारकासुरस्तस्य वधाद्विश्वस्य देवगणस्य दत्त उत्सवो येनेत्युत्कर्षगर्भं विशेषणम् । स्कन्द इव प्रिय इत्यनेन धनुर्भङ्गोपेक्षासभावनाविरहसूचनम् । अहमित्यनेन क्षत्रियकुलान्तकत्वसंक्रमितवाच्येन धनुर्भङ्गकर्तुः साहसकारित्वातिशयो व्यज्यते । अत्र भवानीपतेरिति विरुद्धमतिकृत् । भवस्त्रीपतिरित्यर्थकादस्मात्पत्यन्तरप्रतीतेः ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'गोरपीति । सोऽम्बिकाया रमणो महेशो वो युष्मान्पायादित्यन्वयः । स कः, यद्वाहनता प्राप्तवतो गोर्वृषस्यापि सविधे निकटे सोऽप्यतिक्रूरतया प्रसिद्धोऽपि गिरिसुतायाः पार्वत्याः सिंहो निरहंकारः सौम्यः । भवतीति शेषः । अत्राम्बिकाया मातू रमण इति विरुद्ध प्रतीयते ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'सेति । विरहिणो रामस्येयमुक्तिः । सुधायाः सान्द्रास्तरङ्गाः सुधासान्द्रतरङ्गाः सुधासान्द्रतरङ्गाः संजाता ययोस्ते सुधासान्द्रतरङ्गिते तथाविधे विलोचने यस्याः सा सीता दूरे । स्थितेति शेषः । अयं बर्हिणां मयूराणा यन्निर्ह्रादनमव्यक्तशब्दस्तदर्हस्तद्योग्यः कालो घनसमय एव कालोऽन्तकश्च समुपागत इत्यन्वयः । अत्र समासगतं श्रुतिकटुत्वम् । एवमितरेषामपि समासगतत्वं बोध्यम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

च्युतसंस्कारेत्यादिर्भावप्राधानो निर्देशः । एते श्रुतिकट्वादिपदप्रवृत्तिनिमित्तभूता । श्रुतिकटुत्वादय इत्यर्थः । अत्र यत्र पदान्तरसाहित्येन पदानां दुष्टत्वं स वाक्यदोषः । न चासाधुत्वसमर्थनिरर्थकानां दुष्टत्वे पदान्तरसाहित्यापेक्षेति तत्त्रितयोपासनमिति संप्रदायः । तदसत् । 'सोऽध्यैष्ट—' इत्यादिश्रुतिकटोर्दुष्टत्वे पदान्तरसाहित्यस्यानपेक्षणीयतया तदुदाहरणविरोधात् । न च तत्रापि तथैवेति वाच्यम् । परुषवर्णारब्धत्वस्य स्वत एव सत्त्वात् । तथात्वेऽपि वा 'स पातु वो दुश्च्यवनः' इत्याद्यप्रयुक्ताद्युदाहरणाव्याप्तिः । न हि तत्रापि दुष्टत्वे पदान्तरापेक्षेति वक्तुमपि शक्यते । किं चावाचकमप्यसमर्थसमानशीलं किमिति नापास्तमिति सर्वव्याख्यानेषु विनिगमकं वक्तव्यमिति ।

अत्र ब्रूमः—विवक्षितधर्मिप्रत्यायकशब्दवृत्तित्वे सति । नानापदवृत्तित्वमेवात्र वाक्यवृत्तित्वमभिप्रेतम् । 'न्यक्कारो ह्ययमेव—' इत्यत्रापि नाव्याप्तिः । उद्देश्यविधेयाभिधायकयोर्द्वयोरपि दुष्टत्वात् । अत एवाविमृष्टविधेयांशमित्यत्रांशपदोपादानम् । 'योऽसौ सुभगे तवागतः' इत्युदाहरणे प्रकाशे स्फुटमेतत् । एवं च युक्तं च्युतसंस्कृत्यादिव्युदसनम् । न चासमर्थसहोदरस्यावाचकस्यापि व्युदासो युक्तः । तेनापि केनचिद्विवक्षितधर्मिज्ञापनात् । यथोदाहृतेन जन्तुपदेन । व्युदस्तेषु पुनर्न कोऽपि प्रभेदो विवक्षितधर्मिप्रतिपादक इति ।

तत्र श्रुतिकटुवाक्यगतं यथा—

'सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥'

व्यक्तम् ।

---

न च तत्रापीति । सोऽध्यैष्टेत्यादावपि वाक्यस्य श्रुतिकटुत्वं पदमात्रगतात्तस्मादन्यदतः सापेक्षमेवेत्याशङ्क्याह—**तथापीति** । **नहीति** । अप्रयुक्तत्वस्य पदमात्रधर्मत्वदिति भावः । ननु वाक्येऽप्यप्रयुक्तत्वादस्त्येवेति वादिनं प्रत्याह—**किंचेति** । सर्वव्याख्यानेषु दर्शितप्रकारेषु । **विवक्षितेति** । अत्र विवक्षितधर्मिप्रत्यायकनानापदवृत्तित्वोक्तौ वाक्यनिष्ठावाचकत्वे 'प्राभ्रभ्राड्–' इत्यादावसंभव. । सर्वेषां पदानां विवक्षितधर्मिप्रत्यायकत्वाभावात् । अतः पृथक्सत्यन्तम् । तादृशकिंचिच्छब्दगतत्वाच्च न दोषः । च्युतसंस्कृत्यादित्रयं तु न तथेति तदपासनम् ।

---

१. 'च्युतसंस्कृत्यसमर्थनिरर्थकानपास्योक्तदोषान्वाक्यगतत्वेनोदाहरति—सोऽध्यैष्टेति । भट्टिकाव्यगतमिदं पद्यम् । स राजा दशरथो वेदानध्यैष्टाधीतवान् । त्रिदशान्देवानयष्टापूजयत् । पितॄनतार्प्सीदतर्पयत् । 'अपारीत्' इति पाठेऽप्ययमेवार्थः । 'पॄ तर्पणे' इति धात्वनुसारात् । बन्धून्सममंस्त समानितवान् । षड्वर्गं कामक्रोधलोभमोहमदमात्सर्याणां षण्णां वर्गं समुदायं व्यजेष्ट विजितवान् । नीतावरंस्त रेमे । अरीन्समूलघातं न्यवधीच्च । समूलं हतवानित्यर्थः । अत्रानेकपदगतत्वेन श्रुतिकटुत्वस्य वाक्यदोषत्वम् । एवमन्येषामपि ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अप्रयुक्तं यथा—

'स रातु वो दुश्च्यवनो भावुकानां परम्पराम्।
अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान्॥'

अत्र दुश्च्यवनशब्द इन्द्रे, अनेडमूकशब्दश्चैडमूकेऽप्रयुक्तः।

निहतार्थं यथा—

'सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः।
अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः॥'

अत्र सायकशब्दः खड्गे, मकरध्वजशब्दः समुद्रे, क्षमाशब्दो भूमौ, अब्जशब्दश्चन्द्रे, श्लोकशब्दो यशसि च प्रयुक्तः। न चैतेषामेतेषु प्रसिद्धिभूयस्त्वम्। अतः प्रसिद्धैः शरमदनक्षान्तिपद्मपद्यैरर्थैर्निहतार्थाः।

अनुचितार्थं यथा—

'कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो।
शरज्ज्योत्स्नाकान्तस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह॥'

अत्र कुविन्द इति तन्तुवायं, पटयसीति पटं करोषीति, गुणेति तन्तुं नग्नेति वस्त्रहीनं, यश इत्यकारप्रश्लेषादयशः, विगताच्छादनमित्यवसनमित्यर्थानुपश्लोक्यमानापकर्षद्योतकतयानुचितान्प्रकाशयन्ति।

---

१. 'स रात्विति। स प्रसिद्धो दुश्च्यवन इन्द्रो वो युष्माकं भावुकानां मङ्गलानां परम्परां रातु ददातु। च परमसंमतान्शत्रूननेडमूकताद्यैर्मूकबधिरताद्यैर्दोषैः करणभूतैर्द्यतु खण्डयतु। नाशयत्वित्यर्थः। 'अनेडमूक उद्दिष्टः शठे वाक्छ्रुतिवर्जिते' इति मेदिनी। अत्र दुश्च्यवनानेडमूकशब्दावप्रयुक्तौ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'सायकेति। हे अवनिप राजन्, ते तव श्लोको यशोऽब्जस्य चन्द्रस्य रुचिवद्भास्वरो भातितरां शोभतेतरामित्यन्वयः। कीदृशस्य, सायकः खड्गः सहायो यस्य तथाविधो बाहुर्यस्य तथाविधस्य। मकरध्वजेन समुद्रेण नियमिता परिच्छिन्ना या क्षमा भूमिस्तस्या अधिपतेः। सार्वभौमस्येत्यर्थः। अत्र सायकमकरध्वजक्षमाब्जश्लोकशब्दनां शरमदनक्षान्तिपद्मपद्येषु प्रसिद्धिबाहुल्यात्प्रकृतार्थतिरोधानम्। 'सायकः शरखड्गयोः' इति विश्वः।' इत्युदाहरणचन्द्रिका सक्षेपः. ३. कुविन्द इति। राजानं प्रति कवेरुक्तिः। हे विभो, त्वं तावत्कुविन्दः। कुं पृथ्वी विन्दति लभते इति कुविन्दः। लब्धपृथ्वीक इत्यर्थः। अभितः समन्ताद्गुणानां शौर्यादीना ग्रामं समूहं पटयसि पटूकरोषि। ख्यापयसीति यावत्। अत एवैते नग्ना बन्दिनो दिशि दिशि तव यशो गायन्ति। तथाप्येवंविधे वैभवे सत्यपि त्वत्कीर्तिस्त्री इह लोके विगतमाच्छादनमावरणं यत्र तथा भ्रमतीति व्याजस्तुतिः। कुरूपत्वादुपेक्षामाशङ्क्य परिहरति—शरदिति। शरज्ज्योत्स्नावद्गौराणि स्फुटानि दृश्यानि विकटानि सुन्दराणि यानि सर्वाङ्गाणि तैः सुभगा। सुन्दरीत्यर्थः। अत्र कुविन्दस्तन्तुवायस्त्वं गुणग्रामं तन्तुसमूहमभितः सव्यापसव्यतुरीचालनेन पटयसि पटं करोषि। अत-

अवाचकं यथा—

'[1]प्राभ्रभ्राड्विष्णुधामाप्यविषमाश्वः करोत्ययम्।
निद्रां सहस्रपर्णानां पलायनपरायणाम्॥'

अभ्रे भ्राजत इत्यभ्रभ्राड् जलदः। प्रकृष्टोऽभ्रभ्राड् यत्र तद्विष्णुधामेत्यस्य विशेषणम्। अत्र प्राभ्रभ्राडिति प्रकृष्टजलदे, विष्णुधामेति विष्णुपदे, विषमाश्व इति सप्ताश्वे, निद्रेति संकोचे सहस्रपर्णेति सहस्रदले प्रकृष्टजलदत्वादिना प्रकारेणावाचकानि कानिचिच्चात्र धर्मिणि शक्तान्येवेति यथोक्तवाक्यदोषत्वम्।

अश्लीलेषु व्रीडादायि यथा—

'[2]भूपतेरुपसर्पन्ती कम्पना वामलोचना।
तत्तत्प्रहरणोत्साहवती मोहनमादधे॥'

अत्रोपसर्पन्तीति सुरतारम्भं, प्रहरणेति ताडनविशेषं, मोहनमिति निधुवनं चार्थान्तरप्रतिपादयद्व्रीडादायि।

जुगुप्सादायि यथा—

'[3]तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम्॥'

अत्र वान्तोत्सर्गशब्दौ छर्दितपुरीषार्थतया, प्रवर्तनमिति पुरीषत्यागार्थान्तरतया जुगुप्सां प्रयच्छन्ति।

---

एडमूको वाक्श्रुतिहीन.। **शक्तान्येवेति**। विष्णुस्थानत्वरूपयोगे नाकाशवाचकं

---

एव त्वत्तो लब्धवस्त्रा एते नग्ना वस्त्रहीना दिशि दिशि तव यशो गायन्ति तथाप्येव वस्त्रसमृद्धावपि त्वत्कीर्तिरूपा स्त्री विगताच्छादन वस्त्ररहितं भ्रमतीत्यर्थान्तर स्तूयमानस्य राज्ञोऽपकर्षगमक प्रतीयत इत्यनुचितार्थत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'प्राभ्रेति। अय विषमाश्वो विषमसंख्या अश्वा यस्य सः सप्ताश्वः। सूर्य इति यावत्। विष्णुधाम विष्णुपदमाकाशमाप्य प्राप्य सहस्र पर्णानि पत्राणि येषा तेषा कमलानां निद्रां संकोच पलायनतत्परा करोति। पद्मानि विकासयतीत्यर्थः। कीदृश विष्णुधाम, अभ्रे भ्राजत इत्यभ्रभ्राड् जलदः प्रकृष्टोऽभ्रभ्राड्यत्र तथाभूतम्।' इत्युदाहरणचन्द्रिकासंक्षेप..
२. 'भूपतेरिति। कम्पना सेना उपसर्पन्त्यागच्छन्ती वामं भ्रुकुटीविषमं लोचनं यस्यास्तादृशी। तत्तत्प्रहरणैः शस्त्रैरुत्साहवती च मोहन व्याकुलीभावमर्थाच्छत्रूणामादधे चकार। अत्र रमणायोपगच्छन्ती कम्पयुता सुन्दरलोचना तत्तत्प्रहरणैः कामशास्त्रोदितजघनादिताडनैरुत्साहवती मोहन सुरतमादधावित्यर्थान्तर व्रीडाजनक प्रतीयते।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'तेऽन्यैरिति। येषां कवीनामितरार्थग्रहे इतरनिबद्धार्थग्रहे प्रवर्तन प्रवृत्तिः स्यात्तेऽन्यैर्वान्त छर्दितं समश्नन्ति भक्षयन्ति परेषामुत्सर्गं पुरीष च भुञ्जते इत्यन्वयः। अत्र प्रवर्तनशब्दः पुरीषोत्सर्गरूपमर्थान्तर जुगुप्सितं व्यञ्जयति।' इत्युदाहरणचन्द्रिकासक्षेप..

अमङ्गलार्थं यथा—

'पितृवसतिमहं[1] व्रजामि तां सह परिवारगणेन यत्र मे।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम्॥'

अत्र पितुर्गृहं पावने वंश इति च विवक्षिते पितृवसतिपावकान्वयशब्दौ श्मशानवह्निसंबन्धरूपामङ्गलार्थान्तरौ।

संदिग्धं यथा—

'सुरालयोल्लासपरः[2] प्राप्तपर्याप्तकम्पनः।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम्॥'

अत्र सुरालयेति देवगृहमदिरामन्दिरयोः प्राप्तपर्याप्तकम्पन इति प्राप्तसैन्यत्वप्राप्तकम्पत्वयोरुपस्थापकम्। एवमग्रेऽपि।

अप्रतीतं यथा—

'तस्याधिमात्रोपायस्य[3] तीव्रसंवेगताजुषः।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे॥'

---

१ 'पितृवसतिमिति। शोकपीडितायाः कस्याश्चिदियमुक्तिः। अहं परिवारजनेन सह तां पितुर्वसतिं गृहं व्रजामि गच्छामि। यत्र पितृवसतौ पावकान्वये पवित्रे वंशे पावकानां पावित्र्यकारकाणां पित्रादीनामन्वये संबन्धे सतीति वा। हृदयं न शेषितं शोकरूपं शल्यकं कुत्सितं शल्यं यस्य तथाभूतं सपदि तत्कालं भवतीत्यन्वयः। पितृवसतिपावकान्वयशब्दौ श्मशानवह्निसंबन्धरूपामङ्गलार्थगमकौ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

२. 'सुरेति। सुरालयो देवगृहं मदिरामन्दिरं वा। तत्रोल्लासो हर्षस्तत्परः। प्राप्ता पर्याप्ता पूर्णा कम्पना सेना येन। प्राप्तं पर्याप्तं बहु कम्पनं वा येन सः। मार्गणा बाणाः। मार्गणं याचनं वा। तत्र प्रवणो रतः। भास्वन्ती उज्ज्वला भूतिः समृद्धिर्भस्म वा यस्य एवंभूत एष राजा जनो वा विलोक्यतामिति संदेहः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'तस्येति। कस्यचित्सखायं प्रति मित्रवृत्तान्तोक्तिरियम्। हे सखे, तस्यास्मन्मित्रस्य स नायिकाविशेषसंगमविषयको यत्नः प्रियस्य तन्नायिकासंगमस्य प्राप्तौ सत्यां फलितः। किंभूतस्य। अधिका मात्रा प्रमाणं यस्य तथाविध उपायो दूतीसंप्रेषणादिर्यस्य तथाभूतस्य। तथा तीव्रः संवेगस्त्वरा यस्य स तथा तत्ताजुषः। कीदृशो यत्नः। दृढभूमिर्दृढा स्थिरा प्रतिबन्धकानपनेया भूमिर्विषयः संगमरूपो यस्य स इति प्रकृतोऽर्थः। इतरस्तु—हे सखे, तस्य पुरुषस्य स चित्तैकाग्रतास्थितिविषयको यत्नः प्रियस्यात्मसाक्षात्कारस्य प्राप्तौ सत्यां फलितो मोक्षरूपफलभाग्जातः। फलप्राप्तौ हेतुगर्भं विशेषणद्वयमाह—अधिमात्रेति। अधिमात्रः प्राग्भवीयसंस्काराददृष्टवशादुत्कट उपायः श्रद्धादिर्यस्य सः। तथा तीव्रः परमः संवेगो वैराग्यं यस्य स तथा तत्ताजुषः। तदुक्तं पातञ्जलभाष्यव्याख्यायां वाचस्पतिमिश्रैः—'उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्काराददृष्टवशाद्येषां ते तथोक्ताः। संवेगो वैराग्यम्। तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनाददृष्टवशादेव' इति। श्रद्धादयश्च 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' इति सूत्रोक्ता वेदितव्याः। एवं च मृदुमध्याधिमात्रोपायानां त्रयाणां प्रत्येकं

अधिमात्रो दृढज्ञानवानुपायो यमादिर्यस्य । तीव्रः परमः संवेगो वैराग्यं यस्य तत्तायुक्तस्य । दृढभूमिर्दृढसंस्कारः । मृदूपायो मध्योपायोऽधिमात्रोपायश्चेति त्रिविधा अपि योगिनः प्रत्येकं मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेगश्चेति त्रिविधः । अत्राधिमात्रादयः शब्दा योगशास्त्रमात्रप्रसिद्धाः ।

ग्राम्यं यथा—

'[1]ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुपः ।
करोति खादनं पानं सदैव तु यथा तथा ॥'

अत्र गल्लभल्लमानुषखादनपानशब्दा ग्राम्याः ।

नेयार्थं यथा—

'[2]वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं वेदय सांप्रतम् ॥'

अत्र वस्त्रवैदूर्यशब्देनाम्बरमणेर्विवक्षितत्वाद्वस्त्रशब्देन गगनं विवक्षितम् । न चास्य तत्र शक्तिरिति वाचकत्वलक्षणेन शक्यसंबन्धेनाम्बरपदं लक्षयति । तस्माच्च गगनप्रतीतिः । यद्वा स्ववाचकवाच्यत्वलक्षणशक्यसंबन्धेन गगनमेव लक्षयतीति लक्षितलक्षणा लक्षणा वेति वस्तुगतिः । एवं वैदूर्येत्यस्य मणौ चर-

---

विष्णुधामेति तथा प्राभ्रभ्राडित्यपियोगेन । तया विपमाश्व इति चेत्यर्थ । लक्षित-

---

मृदुमध्यतीव्रसवेगैस्त्रिभिभेदैर्नव योगिभेदा भवन्तीति । एव च 'तीव्रसवेगानामासन्न' इति सूत्रात्फलप्राप्तिर्युक्तेति भावः । कीदृग्यल· । दृढभूमि· दीर्घकालादनैरन्तर्यसत्कारवत्तया दृढा व्युत्थानसस्कारैरनभिभूता भूमिर्विषयश्चित्तैकाग्रतास्थितिरूपो यस्य सः । व्युत्थान च चित्तस्य समाधिशून्यतयावस्थानमिति । अत्र च 'भद्रात्मन' इत्यादिवत्प्रकृतनायकस्य योगिनिरूपितोपमा व्यज्यते । तत्राधिमात्रादिशब्दा योगशास्त्रमात्रप्रसिद्धा· । अत्राधिमात्रादिशब्दाना योगशास्त्रमात्रप्रसिद्धत्वेनाप्रतीतत्व दोष· ।' इत्युदाहरणचन्द्रिकासक्षेप .

१ 'ताम्बूलेति । ताम्बूलेन भृतः पूर्णो गल्ल कपोलो यस्य सोऽयं मानुप सदैव यथा खादनं भक्षण पानं च करोति तथा तु तथैव भल्ल समीचीन जल्पति । वदतीत्यर्थ । नैसर्गिकत्व चात्र साधर्म्यम् । अत्र गल्लादिशब्दा ग्राम्याः ।' इत्युदाहरणचन्द्रिकासक्षेपः २ 'वस्त्रेति । सखी विबोधयन्त्या· कस्याश्चिदुक्तिः । हे सखि, वस्त्रमम्बरमाकाशं तस्य वैदूर्यमणि सूर्यस्तस्य चरणैः पादै किरणैर्निष्कम्पा निश्चला भूमि· क्षत निरस्त सत्त्वरजोभ्या पर तमो यस्यास्तथाभूता कृता । सांप्रतमधुना नेत्रयोर्युद्ध द्वन्द्व वेदय बोधय । उद्घाटयेत्यर्थ । अत्र वस्त्रादिशब्दाना स्ववाचकाम्बरादिपदवाच्यत्वरूपशक्यसवन्धेनाकाशादिपु लक्षणारूढिप्रयोजनान्यतराभावान्निषिद्धेति । अथवा स्वशक्यवाचकत्वसवन्धेनाम्बरादिपद लक्ष्यते । तेन च गगनप्रतीतिः । द्विरेफपदलक्षितेन भ्रमरपदेनेव भ्रमरस्य ।' इत्युदाहरणचन्द्रिकासंक्षेप·.

णेत्यस्य पादे सत्त्वरज:परेत्यस्य तमसि निष्कम्पेत्यस्य चाचलायां भूमौ युद्धमित्यस्य द्वन्द्वे वेदयेत्यस्य बोधने लक्षणैव। न च तद्बीजं रूढिः प्रयोजनं वेति नेयार्थत्वम् ॥

क्लिष्टं यथा—

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

अत्र कुरङ्गशावाक्ष्या धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे प्रतीतिव्यवधानम् ।

अविमृष्टविधेयांशं यथा—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।

---

१. 'धम्मिल्लस्येति । कुरङ्गशावाक्ष्या धम्मिल्लस्य केशपाशस्य शोभां प्रेक्ष्य अपूर्वा अद्भुता या बन्धे व्युत्पत्तिः कौशलं बन्धस्य व्युत्पत्ती रचना वा तस्या हेतोः कस्य मानसं न रज्यति हृष्यतीत्यन्वयः । अपूर्वा बन्धव्युत्पत्तिर्यस्येति धम्मिल्लविशेषणं वा । अपूर्वबन्धेऽर्थाद्धम्मिलस्य व्युत्पत्तिर्निपुणता यस्या इति नायिकाविशेषणं वा । अत्रानासन्नतया क्लिष्टत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'न्यक्कार इति । रामेण राक्षसक्षये क्रियमाणे क्षुब्धान्तःकरणस्य रावणस्य स्वाधिक्षेपोक्तिरियम् । अरयो यत् । सन्तीति शेषः । अयमेव मे न्यक्कारो निन्दा । अन्येषां पराभवादिर्मम पुनर्वशीकृतजगत्त्रयस्यारिसत्त्वमेव न्यक्कार इत्यर्थः । बहुवचनेनैतावत्कालमेकोऽपि रिपुर्नासीत्सांप्रतमकस्माद्बहवो जाता इति न्यक्कारातिशयो ध्वन्यते । तत्रापि तेष्वरिपु मध्येऽसौ रामस्तापसः । मुख्य इति शेषः । तापसत्वेन निर्वीर्यत्वं शस्त्रानभिज्ञत्वं च सूच्यते । तथा च तपस्विसहस्रभक्षकस्य ममैकस्तपस्वी रिपुरित्यत्यन्तमेव न्यक्कार इति भावः । सोऽपि तापसोऽप्यत्रैव मत्समीप एव राक्षसकुलं निहन्ति न तु बालवृद्धस्त्रीष्वेकमपि त्यजतीति न्यक्कारातिशयः । अहो आश्चर्यम् । एवं सत्यपि रावणो जीवति । अथवा अहो इति खेदे । रावणो जीवति काका न जीवतीत्यर्थः । शक्रजितं धिग्धिक् । वीप्सया निन्दातिशयः । प्रबोधितवतेति णिजन्ताद्भावे क्तः । ततो मतुप् । प्रबोधनकर्मभूतेनेत्यर्थः । एवंविधेन कुम्भकर्णेन किम् । प्रयोजनमिति शेषः । एवं स्वर्ग एव ग्रामटिका क्षुद्रग्रामस्तद्विलुण्ठनेन वृथोच्छूनैर्वृथा पुष्टैरेभिर्भुजैर्विंशतिसंख्यैः किं प्रयोजनम् । न किमपीत्यर्थः । भुजैरिति बहुवचनेन बहुभिरपि भुजैर्द्विभुजं शत्रुं प्रति प्रतीकाराक्षमतया न्यक्कारो व्यज्यते । अत्र च किंपदेन भुजवैयर्थ्यं वृथापदेन च तदुच्छूनत्ववैयर्थ्यमुक्तमिति न पौनरुक्त्यम् । वृथात्वस्य पूर्वमसिद्धत्वादनुवादासंगतिः वृथोच्छूनतया वैफल्यस्यौचित्यतया तत्त्वात्तदभिधानसंगतिश्च वृत्तिकृतैव दर्शितेति । अत्रायपदन्यक्कारपदयोरुद्देश्यविधेयार्थकत्वेन विवक्षितयोः पौर्वापर्यविपर्ययो दोषः । 'यच्छब्दयोगः प्राथम्यं' इत्याद्युद्देश्यलक्षणम् । तथा 'अनुवाद्यमनुक्त्वैव नाभिधेयमुदीरयेत्' इत्यादिवृद्धवचनेन तयोः पौर्वापर्यस्य नियमितत्वात् ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥'

अत्र प्राप्तनरिसत्त्वमयमित्यनूद्याप्राप्तं न्यक्कारत्वं विधीयते। अतोऽयमेव न्यक्कार इति वाच्यम्। 'अनुवाद्यमनुक्त्वैव नाभिधेयमुदीरयेत्' इति वृद्धवचनात्। अन्यथा तु वैपरीत्येन विलम्बेन वा तथाभावः प्रतीयेत। अयं न्यक्कार इत्युभयोः पदयोर्दुष्टत्वाद्वाक्यदोषत्वम्। अतएव समासगतमेव दुष्टं पदमित्युक्तम्। अपि चात्र वृथोच्छूनैरित्यसंगतम्। उच्छूनत्वमात्रस्यैवानुवादौचित्यात्। न तु वृथात्वविशेषितस्य। किमेभिरित्यनेन वृथात्वस्यैव विधेयत्वात्। अर्थभेदोपगमेऽपि किमेभिरिति वैफल्याभिधानविरोधात् वृथोच्छूनस्य तदौचित्यात्। ननु न्यक्कारोऽयमित्यत्र वैपरीत्येन विधेयत्वप्रत्ययादर्थदोष एवायं स्यादिति चेत्, न खल्वत्र विवक्षितोऽर्थो दुष्टः। किं तु क्रमविशेषादविवक्षितार्थप्रत्यय एवेति शब्दविशेष एवापराध्यति। शब्दान्तरेण तत्प्रतीतेरवैकल्यात्। यथा विरुद्धमतिकृति।

न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमत्वाभ्यामेवायं वाक्यदोषः। किं तु वैधेयानुपस्थित्यापि। यथा—

'अपाङ्गसंसर्गितरङ्गितं दृशोर्भ्रुवोररालान्तविलासवेल्लितम्।
विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥'

---

लक्षणेति। लक्षितेनाम्बरपदेन गगनबोधनादित्यर्थः। **अर्थभेदोपगमेऽपीति।** उच्छूनतायाः क्षुद्रस्वर्गलुण्ठनं न फलमिति वैयर्थ्यमन्यत्, भुजवैफल्यं तु स्वपराजयदर्शनादन्यदिति भेदाङ्गीकारेऽपीत्यर्थः। एवं चाप्रयुक्तानुवादत्वरूपोऽर्थदोषोऽपि

---

१. 'अपाङ्गेति। नायकागमनोत्सवं निवेदयन्त्याः सख्या इयमुक्तिः। तवेत्यस्य षष्ठ्यन्तत्रयेऽप्यन्वयः। हे सुभगे, यो नायकस्तव दृशोरपाङ्गससर्गि नेत्रान्तसंबद्धं तरङ्गितं चालनं तथा भ्रुवोरराले कुटिलेऽन्ते विलासेन वेल्लितं नर्तनं एवं च तनोर्विसारि सर्वाङ्गव्यापि रोमाञ्चनमेव कञ्चुकं च तनोति। यस्मिन्दृष्टे तवैव भवतीत्यर्थः। असौ नायक आगत इत्यन्वयः। अत्र यस्तनोत्यसावागत इति यच्छब्दार्थानुवादेन तदर्थपरामर्शकतया असावित्यस्य विधेयसमर्पकत्वमभिप्रेतं न संभवति। यच्छब्दसांनिध्येन प्रयुज्यमानस्यादसादेर्यच्छब्दार्थगतप्रसिद्धिबोधकतयानुवाद्यकोटिप्रविष्टार्थकत्वात्। एवं च यच्छब्दः स्वार्थपरामर्शकतच्छब्दाद्यभावात्साकाङ्क्ष एवावतिष्ठते। तदाहुः—'यत्तदोर्नित्यमभिसंबन्धः' इति। स चायमुपात्तयोः स्पष्ट एव। अनुपादानं तु त्रिप्रकारम्—यच्छब्दस्यैव तच्छब्दस्यैवोभयोर्वेति। तत्र यच्छब्दानुपादानेऽपि प्रक्रान्तप्रसिद्धानुभूतार्थकेन तच्छब्देन यच्छब्दाक्षेपात्संबन्धः। क्वचिच्चानुपात्तस्य तच्छब्दस्य यच्छब्देनोत्तरवाक्यगतेनाक्षेपात्। क्वचिदर्थसामर्थ्यादुभयोरप्यनुपात्तयोराक्षेपादिति। तदेतत्तत्र तत्रोदाहरणे स्फुटीकरिष्यते। इत्युदाहरणचन्द्रिकासंक्षेपः।

अत्र योऽसाविति पदद्वयमुद्देश्यविधेयार्थकतया विवक्षितम्। उद्देश्यवाचिनो यच्छब्दस्य स्वार्थपरामर्शकतच्छब्दापेक्षितत्वात्। न चैतत्तत्प्रतिपादकम्। यच्छब्दसांनिध्येनादसादीनां प्रसिद्धपरामर्शकत्वात्। ननु केवलयोरपि यत्तदोः प्रयोगदर्शनात्सापेक्षत्वमेवानयोरसिद्धम्। उच्यते—अनयोः परस्परार्थापेक्षार्थकत्वं नियतमेव। एतदेवोच्यते 'यत्तदोर्नित्यसंबन्ध.' इति। स चाभिसंबन्धः शाब्द आर्थो वा। तत्र द्वयोरुपादाने शाब्दः। यथा 'स दुर्मतिः श्रेयसि यस्य नादरः' इति। एकस्य द्वयोरपि वानुपादाने त्वार्थः। अनुपात्तस्यापि सामर्थ्यादेवाक्षेपात्।

तत्र तच्छब्देन यच्छब्दाक्षेपः प्रक्रान्तप्रसिद्धानुभूतार्थकेन। यथा—

'[1]कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥

अत्र स इति प्रक्रान्तं राजानमाह।

'[2]द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥'

अत्र सेति प्रसिद्धा।

'[3]उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।

---

दर्शितः। अत्रेति। उद्देश्यविधेयबोधानुकूलतयाभिप्रेतमित्यर्थ.। अनुवाद्यधर्मवत्तया यच्छब्दोपस्थितं तच्छब्देन परामृश्यमिह विधेयं बोध्यते। तच्छब्दस्य च तच्छब्दार्थकेत्यर्थ.। यथा—'यो रक्तवासास्तमानय' इत्यादाविति भाव.। **यच्छब्दसांनिध्येनेति**। यच्छब्दानन्तरत्वेनेत्यर्थ.। तथा च यः प्रसिद्ध इत्युद्देश्यस्यैव

---

१. 'कातर्यमिति। रघुवंशे राज्ञोऽतिथेर्वर्णनम्। कातर्यं कातरता। केवला शौर्यहीना। केवलेति लिङ्गविपरिणामेन शौर्यमित्यनेनापि सबध्यते। सिद्धिमर्थात्कार्यस्य। उभाभ्यां नीतिशौर्याभ्यामन्वियेषान्विष्टवान्। स प्रक्रान्तो राजा। 'चापलचेष्टितम्' इति पाठे चापल चपलता तत्प्रयुक्त चेष्टितमित्यर्थ.। अत्र प्रक्रान्तार्थकेन तच्छब्देन यच्छब्दाक्षेपादन्वयबोधः।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'द्वयमिति। कुमारसभवे बटुवेषेण पार्वती छलयतो महादेवस्योक्तिरियम्। कपालिन. कपालधारिणः शिवस्य समागमप्रार्थनया हेतुभूतया सप्रति तवैव निश्चये सति द्वयं शोचनीयता गतं प्राप्तम्। पूर्वं त्वेकैव चन्द्रकला शोच्यासीदित्यर्थ.। कलावतश्चन्द्रस्य सा प्रसिद्धा कला अस्य लोकस्य नेत्रकौमुदी आह्लादकतया नेत्रयोश्चन्द्रिकारूपा त्व चेत्यन्वय.। अत्र गतमिति भूतनिर्देशेनावश्यभाव्यत्वं सूच्यते। कपालिनो नेत्रकौमुदीत्येताभ्या च शोचनीयत्वस्य युक्तता ध्वन्यते। अत्र प्रसिद्धार्थकेन तच्छब्देन यच्छब्दाक्षेपादन्वयबोध.।' इत्युदाहरणचन्द्रिकासक्षेप'. ३. उत्कम्पिनीति। रत्नावल्या वासवदत्ता (सागरिका) दग्धा संभाव्य तामनुध्याय शोचतो वत्सराजस्योक्तिरियम्। हे प्रिये, क्रूरेण दहनेन दारुणतया त्वं सहसैवाकस्माद्दग्धा

क्रूरेण दारुणतया सहसैव दग्धा
　धूमाञ्चितेन दहनेन न वीक्षितासि ॥'

अत्र ते इत्यनुभूते । त्रिष्वप्येतेषु यच्छब्दोपादानं नावश्यापेक्षणीयम् । तदभावेऽप्याक्षेपादेव यः पूर्वोक्तगुणवान्, या प्रसिद्धा, ये अनुभूते इति च प्रत्ययाविघातात् । यच्छब्दस्तूत्तरवाक्यगत एव सर्वत्र तच्छब्दाक्षेपसमर्थः । यथा—

'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥'

यथा च मम—

'मातर्भारति वत्सवत्सलतया किं नाम नाचर्यते
　मित्राणि स्थिरताविवेकविनयाः कार्यं सुहृत्प्रार्थितम् ।
इत्यालोच्य विमुच्य मामिह मनागन्तर्हितं स्थीयतां
　यावत्त्वादृशविप्रयोगसुलभा लक्ष्मीर्मया लभ्यते ॥'

पूर्ववाक्यगतस्तु तदाक्षेपासमर्थतया तदुपादानमेवापेक्षते । यथात्रोदाहरणे पूर्वार्धपादयोर्व्यत्यासे ।

ननु पूर्ववाक्यगतोऽप्ययं तदाक्षेपसमर्थः । यथा 'तच्चक्षुर्यदि हारितं कुवलयैः' इत्यादाविति चेत् । सत्यम् । समर्थो न तु सर्वत्र । किं तु यदीत्येतावद्रूपस्त्र-

---

त्रमर्पकत्वान्न विधेयसमर्पकतेत्यर्थः । **मातरिति** । हे मातर्भारति, वत्से शिशौ या वत्सलता स्नेहवत्त्वं तया कि नाम नाचर्यते कि त्वकार्यमपि क्रियत इत्यालोच्य विचार्य, तथा भो मित्राणि सुहृद. स्थिरताविवेकविनयाः, सुहृदा प्रार्थितं कर्तव्यमित्यालोच्य इह राजसभाया मा विमुच्य मनागन्तर्हितं यथा तथा स्थीयताम् । कियत्पर्यन्तं तत्राह—यावत्त्वादृशानां विप्रयोगेण विरहेण सुलभा श्रीर्मया लभ्यते । तावदित्यर्थाद्गम्यते । अतस्तदनुपादानेऽपि न दोष इति भाव । **नन्विति** । अयं यच्छब्द । **तदाक्षेपेति** । तत्रैव पद्ये 'तदा का सुधा' इति तच्छब्दाक्षेपसमर्थः

---

न वीक्षितासि । सौन्दर्यातिशयशालिन्यास्तव दर्शने सति क्रूरेणापि दहनेन दग्धुमशक्यत्वादिति भाव । अदर्शनहेतुमाह—धूमेति । धूमेनाञ्चितो युक्तस्तेन । 'धूमान्वितेन' इति पाठ स्पष्टार्थ एव । किंभूता त्वम् । उत्कम्पिनी उत्कटकम्पवती । भयेन परिस्खलितोंऽशुकान्तो वसनप्रान्तो यस्या सा तथाभूता । प्रतिविधुरे कातरे ते अनुभूते लोचने क्षिपन्ती । अत्रानुभूतार्थकेन तच्छब्देन यच्छब्दाक्षेप· । इत्युदाहरणचन्द्रिकासङ्क्षेप ·

१. 'साध्विति । पुष्करै· पद्मै साधु कृतं यदभिरामतया सौन्दर्येणाधिके चन्द्रमसि सति मीलितं मुकुलितम् । पुनरिति त्वर्थे । तेन चन्द्रेण तु साहस धाष्टर्यमनुष्ठितम् । कृतमित्यर्थ· । किंभूतेन । जयिन्युत्कर्षशालिनि कामिनीमुखे सत्युद्यतोदयं प्राप्तवता । अत्रोत्तरवाक्यगतेन यच्छब्देन पूर्ववाक्ये तत्साधु कृतमिति तच्छब्दाक्षेप ।' इत्युदाहरणचन्द्रिकासङ्क्षेपः·

त्पर्यायः । उत्तरवाक्यगतस्तु सकलरूपस्तथेति विशेषः । यद्वा यदीत्यव्ययं न तु यच्छब्दः । तच्च भिन्नस्वभावमेव । एवं चेच्छब्दोऽपि[1] ।

द्वयोरप्यनुपादानेऽप्यार्थो यत्तदोः संबन्धः । यथा—

'ये[2] नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

अत्र य उत्पत्स्यतेऽस्ति वा मम समानधर्मा तं प्रति यत्न इति स्फुटमेवावगम्यते । यथाश्रुते हि न पूर्वार्धेन कथमप्यन्वयः ।

यत्तु 'प्रक्रान्ताद्यर्थकस्य तच्छब्दस्य यच्छब्दापेक्षैव न' इति व्याख्यानं तद्व्यक्तिविवेकाद्यनालोचननिबन्धनं प्रकाशकृदनभिमतं च । यदयं यच्छब्दोपादानं नापेक्षते' इत्याह । न तु 'यच्छब्दं नापेक्षते' इत्यादि । तस्माद्यथाव्याख्यातमेवादरणीयम् । एवं च 'योऽसौ सुभगे' इत्यत्र तच्छब्दस्यानुपादानादाक्षेपासंभवाच्च यच्छब्दः साकाङ्क्षः ।

ननु स्यादेवैतत् । यदि तच्छब्दार्थकोऽयमदःशब्दो न स्यादिति चेत्, तर्हि मदसस्तच्छब्दपर्यायता । तथा सति

'असौ[3] मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥'

---

पूर्ववाक्यगतोऽपीत्यर्थः । द्वयोरपीति तु प्रसङ्गादुदाहृतं न तु प्रकृतोपयोगितयेति ज्ञेयम् । **तस्मादिति** । 'शाब्दी साकाङ्क्षा शब्देनैव पूर्यते' इति न्यायादपेक्षास्त्येव । परंतु क्वचिन्न्यूनपदत्वरूपो दोषो नास्ति । यत्र प्रक्रान्तार्थकादिषु शीघ्रमध्याहारेण प्रतीतिरित्येतावन्मात्रमेव सम्यगिति भावः । **आक्षेपासंभवाच्चेति** । यच्छब्दस्य

---

१. चेदिति शब्दोऽपि क. २. 'य इति । भवभूतेरियमुक्तिः । न इति 'असदो द्वयोश्च' इत्येकत्वे बहुवचनम् । तेन ममेत्येकवचनाविरोधः । नामेति क्रोधे कुत्सने वा । 'नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरोक्तेः । ये नाम केचिज्जना इह लोके ममावज्ञामवधीरणं प्रथयन्ति कुर्वन्ति ते किमपि जानन्ति । अपि तु न किमपीति काका अर्थः । अतस्तान्प्रत्येष यत्नो मालतीमाधवाख्यप्रकरणारम्भरूपो न । भवतीति शेषः । अत्र अन्यस्य परार्थत्वाद्विशेषनिषेधस्य शेषाभ्यनुज्ञानफलकत्वात्क प्रतीति जिज्ञासायामुत्तरार्धम् । कालोऽयं निरवधिरनन्त इति हेतोः कोऽप्येको मम समानधर्मा य उत्पत्स्यते पृथ्वी विपुला विस्तृतेति हेतोश्चास्ति वा तं प्रति यत्न इति यत्तच्छब्दयोर्वाशब्दस्य चाध्याहारेण योजनीयम् । इयता कालेनानुत्पन्नस्य कथमुत्पत्स्यमानत्वं विद्यमानत्वे वा कथमदृश्यत्वमित्याशङ्काद्वयं क्रमेण हेतुद्वयेन परिहृतम् । अत्र यत्तदोरभावेऽप्यर्थसामर्थ्यादुभयाध्याहारेणान्वयः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'असाविति । असौ दृश्यमानचिह्नो वसन्तकालो लङ्कातो हनूमानिवागत । कीदृशः । मरुता वायुना चुम्बिता-

इत्यत्राऽदश्शब्दस्तच्छब्दार्थमेवाभिदध्यान्न त्विदमर्थम् । अथात्र वैयात्यादि च्छापत्तिमालम्बसे तर्हि—

'[1]करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥'

इत्यत्र स इत्येतत्पुनरुक्तं स्यात् । अदश्शब्देन तदर्थाभिधानात् ।

नन्वर्थान्तरमस्य न निषेधामः किं त्वनुजानीमस्तदर्थकत्वम् । कथमन्यथा—

'[2]योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥'

इत्यत्रेदंशब्दस्यापि तच्छब्दार्थकता । इदमदसोः समानशीलत्वादिति चेत्, सत्यमात्थ । परंतु यच्छब्दाव्यवहितानन्तरवर्ती समानाधिकरणस्तच्छब्दोऽपि प्रसिद्धिमात्रे निरूढः किं पुनरिदमादिः । यथा—

---

पूर्ववाक्यगतत्वादिति भाव । **तच्छब्दार्थमेवेति** । एवं च यच्छब्दप्रयोगापत्ति-

---

उस्पृष्टाः केसरा वकुला नागकेसरा वा यस्मिन्स । हनूमत्पक्षे मरुता पवनाधिष्ठातृदेवतारूपेण पित्रा चुम्बिता केसरा सटा यस्य । प्रसन्न यत्ताराधिपस्य चन्द्रस्य मण्डल तदग्रणीरग्रेसरो यस्य, प्रसन्नताराधिप एव मण्डलाग्रणीर्यस्येति वा । तथाभूतो वसन्तः, पक्षे ताराभिधाया स्त्रियोऽधिप सुग्रीवस्तस्य मण्डलं राष्ट्र सैन्य वा तत्राग्रणीर्मुख्यः । वियुक्तामी रामाभी रमणीभिरातुरया कातरया दृष्ट्या वीक्षितो वसन्त । विरहोद्दीपकत्वात्, पक्षे वियुक्तेन रामेणातुरयोत्सुकया दृष्ट्या वीक्षित इत्यर्थ । अत्रासावित्यसात्तच्छब्दार्थाप्रतीतेर्नादसस्तदर्थकत्वम्'इ त्युदाहरणचन्द्रिकासक्षेपः.

१ 'प्रतीतौ विवदमानं प्रति वाक्यमाह—करवालेति । योऽसौ प्रसिद्ध कर्ण स भूपतिना दुर्योधनेन यदि तत्र कार्ये सेनापत्ये विनियुज्येत ततस्तदा कृत पाण्डवराज्यत्यागादि कृतं सफल स्यादित्यर्थ' । कीदृश । करवालेन खड्गेन करालो भीषणो दोर्बाहुरेव सहायो यस्य तथाभूत । तथा युधि सङ्ग्रामे विजयार्जुनयोः पार्थकार्तवीर्ययोरेको मल्लः प्रतीकारसमर्थ । विजयनामा योऽर्जुन' पार्थ इति वा । 'विजयार्जनैकमल्लः' इति पाठे विशिष्टस्य जयस्यार्जने सपादने एकमल्लः प्राधान्येन समर्थ इत्यर्थ । अत्रासावित्युक्त्वा पुनः स इति तच्छन्दनिर्देशात्तच्छब्दार्थकत्वं तस्य नास्तीति गम्यते ।' इत्युदाहरणचन्द्रिकासक्षेप'. २. 'य इति । परमेश्वर प्रति भक्तस्योक्तिरियम् । हे ईश, इद निखिलमर्थमण्डल प्रपञ्चजात य पुरुषोऽविकल्प विकल्पः सशयस्तद्रहित यथा स्यात्तथा भवद्वपुर्भवत्स्वरूप पश्यति । वाधाया सामानाधिकरण्यम् । परमार्थतोऽसत्त्वेन तद्बोधेन भवन्तमेव पश्यतीत्यर्थ । यथाश्रुते जडस्य प्रपञ्चस्य परमब्रह्मस्वरूपत्वाभावादसगते । अस्यात्मैक्यदर्शिनो नित्यसुखिन प्रकाशमाननित्यानन्दस्यात्मपक्षेणात्मरूपेण जगति प्रपञ्चे परिपूरिते व्याप्ते आच्छादिते । वाधित इति यावत् । कुतः कस्माद्भयम् । न कुतोऽपीत्यर्थः । 'द्वितीयाद्वै भय भवति' इति श्रुते । अत्र यच्छब्दव्यवहितोपात्तत्वादिदशब्दस्तदर्थपरामर्शकः ।' इत्युदाहरणचन्द्रिकासक्षेप .

'यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम्॥'

इत्यादौ। तस्मात् 'योऽविकल्पं-' इत्यत्रेव व्यवधानेनादःप्रयोगो युक्तः, न त्वव्यवधानेन।

कथं तर्हि—'न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्' इत्यत्र तच्छब्दो न प्रसिद्ध्यर्थ इति चेत्, य इत्यत्र विच्छेदेन व्यवधानात् योऽसावित्यत्र तु संधिना यच्छब्दैकनिविष्टैकदेशत्वेनाविच्छेदात्। ननु भवेदेवं यदि यत्तदोर्नित्योऽभिसंबन्धः स्यात्। स एव तु नास्ति। कथमन्यथा 'यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे' इत्यत्रैकयत्परामृष्टस्यैकेन तदा परामर्शेऽपि द्वितीययच्छब्दान्निराकाङ्क्षा प्रतीतिः। द्वितीयतत्पदाभावात्। न च तत्राक्षेपोऽपि यदः पूर्ववाक्यगतत्वादिति। मैवम्। न खल्वेकेनैव रूपेण यत्तद्भ्यां परामर्शनियम इति ब्रूमः। किं त्वेकस्य ताभ्यां परामर्श इति। तथा चात्रापि पापात्मकं वस्तु येनकेनचिद्विशेषद्वयेन यत्पदाभ्यां परामृष्टं तत्पदेन तु पापत्वेनैकेनेति को विरोधः। वस्तुतस्तु यद्यदिति न पदद्वयम्। किं तु 'नित्यवीप्सयोः' इति सूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः। तथा चादेशिनैकेन यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण पापपरामर्शः। आदेशस्तु साकल्येन संबन्धपरताग्राहक इति यत्पदीयेनैव तेन तदुपपत्तौ न तत्पदेऽपि। यत्र तु तत्पदेऽपि वीप्सा तत्र न यत्पदेऽप्यादेशः किं तूभाभ्यां रूपद्वयेन सर्वोपस्थानमिति सारम्।

---

रिति भावः। **परंत्विति**। 'यत्तया मेलनं' इत्यादिवारणाय समानाधिकरण इति। एवं लिङ्गवचनभेदेऽप्यनेनैव वारणम्। **विशेषद्वयेनेति**। कामकृतत्वाकामकृतत्वादिरूपेणेत्यर्थः। अत्रायं पर्यवसितोऽर्थः—यच्छब्दोपस्थितार्थवृत्तिकिंचिन्निष्ठविधेयतानिरूपितोद्देश्यतासंबन्धेनान्वयबोधे यच्छब्दव्यवहितोच्चरिततच्छब्दजन्योपस्थितिर्हेतुः। एवं तच्छब्दार्थनिष्ठविषयतयान्वयबोधे यत्पदजन्योपस्थितिर्हेतुः। तत्र द्वयोरुपादानं मुख्यम्। अनुपादानं तु यत्रैकेनापराक्षेपस्तत्र प्रतीत्यविलम्बान्न दोषाय। यथा प्रक्रान्ताद्यर्थकतच्छब्दप्रयोगे यच्छब्दस्य। उत्तरवाक्यगतयच्छब्दप्रयोगे च तच्छब्दस्य। अन्यत्र त्वन्यतरानुपादाने न्यूनपदत्वं दोषः। आक्षेपासामर्थ्येन प्रतीतिविलम्बादिति। यत्र तु 'यद्यत्पापं' इत्यादौ यत्पदद्वयं तत्पदं चैकं

१. 'यत्तदिति। वेणीसंहारे भीमस्योक्तिः। अस्य भूपतेर्युधिष्ठिरस्य तत्प्रसिद्धं यदूर्जितमुद्भटमत्युग्रं क्षात्रं तेजः प्रतापरूपम्। आसीदिति शेषः। तदा द्यूतप्रसङ्गेऽक्षैः पाशकैर्दीव्यता क्रीडतानेन राज्ञा नूनं तदपि तेजो हारितम्। अर्थाच्छत्रुभिर्गृहीतमित्यर्थः। राज्यं हारितमेव तदेव नूनं तेजोऽपीत्यपिशब्दार्थः। अत्र यच्छब्दानन्तरवर्ती तच्छब्दोऽपि प्रसिद्धिपरामर्शकः। किं पुनरिदमादिरिति योऽसावित्यत्रोक्तदोषो वज्रलेपायित इति सिद्धम्।' इत्युदाहरणचन्द्रिकासंक्षेपः।

असमासवत्समासेऽप्यनेकपदगतत्वेनास्य वाक्यदोषत्वम् । यथा—

'[1]किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥'

अत्र कलत्रे तातसंबन्धस्यानुजे चार्यसंबन्धस्योत्कर्षाधायकत्वेन विधित्सितयोः समासाद्गुणीभावः । वाक्यदोषत्वं तु यथा तदुक्तम् । सोऽयं षष्ठीतत्पुरुषसमासः । एवं समासान्तरेऽपि ।

विरुद्धमतिकृद्यथा—

'[2]श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥'

---

तत्र यत्पदद्वयोक्तं धर्मद्वयावच्छिन्नमेकरूपेण तच्छब्देन परामृश्यते । अथवा 'वीप्सायां द्विर्भावः' इत्येकेनैवादेशिना साकल्येनोपस्थितं तत्पदेन परामृश्यते वीप्सा तु तात्पर्यग्राहिकेति न तत्पदेऽप्यपेक्ष्यते । यत्र तु तत्पदेऽप्यावृत्तिस्तत्र नादेशः । उभयत्र तद्वैफल्यात् । अतो रूपभेदेनाभ्यामुपस्थितिरिति । आदेशपक्षे व्यापकत्वप्रतीतिः पक्षान्तरे तु नेति विशेष इति । **तदुक्तमिति** । नानापदवृत्तित्वादिति पूर्वमुक्त-

---

१ 'किं लोभेनेति । रामस्य वनवासे हेतुं चिन्तयतो लक्ष्मणस्योक्तिरियम् । स विनयार्जवादिमत्त्वेन प्रसिद्धो भरतो लोभेन विलङ्घित आक्रान्तः किम् । येन भरतेनैतद्वनवासादिकमेव कपटेन मात्रा करणभूतया । मातृद्वारेति यावत् । कृतम् । संपादितमित्यर्थः । येन पुत्रलोभरूपेण हेतुना मात्रा कर्तृभूतया एतदेव वरप्रार्थनाच्छलेन कृतमिति वा । अनौचित्यकारित्वेन कोपान्नामाग्रहणम् । अथवा मे मध्यमा माता कैकेय्येव स्त्रीणां निसर्गसिद्धां लघुतां क्षुद्रतां गता प्राप्ता किमिति वितर्कः । एवकारेण भरतस्य व्यवच्छेदः । पुनर्विमृश्याह—मिथ्यैतदिति । एतन्मम चिन्ताविषयीभूतं द्वितयमपि भरतस्य लुब्धत्वं मातुः क्षुद्रत्वं च मिथ्या । कुत इत्यत आह—आर्येति । इतिशब्दो हेतौ । असौ गुरुर्भरतः । विमर्शेन कोपापगमान्मान्यत्वेन नामाग्रहणम् । आर्यस्य श्रेष्ठस्य रामस्यानुज इति हेतोराद्य माता तातस्य दशरथस्य कलत्रं भार्येति हेतोर्द्वितीयं चेत्यर्थः । तर्हि केनैतत्कृतं तत्राह—अनुचितमिति । विधात्रानुचितं कृतमिति मन्ये इति संबन्धः । अत्रानुचिताकरणे हेतुत्वेन विधित्सितस्यानुजे आर्यसंबन्धस्य कलत्रे तातसंबन्धस्य गुणीभावादविमृष्टविधेयांशता दोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'श्रितेति । सामोपायलब्धसिद्धीनां राज्ञां वर्णनमिदम् । अद्य ते राजानो विग्रहस्य युद्धस्य क्षपणेन त्यागेन गतमसुखं दुःखं येषां तथाविधाः शेरते । निश्चिन्ततया निद्रां कुर्वन्तीत्यर्थः । कीदृशाः । श्रिता आश्रिता क्षमा क्षान्तिर्यैस्तथाभूताः । रक्तानुरक्ता भूर्लक्षणया तद्गतनिखिलजना येषु तादृशाः । शिवेन कल्याणेनालिङ्गिता मूर्तयो येषां तथाभूता इति । अत्र श्रिता क्षमा भूमिर्यैस्तथा रक्तस्य रुधिरस्य भुवः स्थानानि शिवाभिः क्रोष्ट्रीभिरालिङ्गितमूर्तयो विग्रहस्य

अत्र क्षान्तिमन्तोऽनुरक्तभुवः कल्याणालिङ्गिता युद्धक्षपणेन दुःखाभाववन्तः शेरत इति विवक्षिते भूमिपतिता रुधिरस्थानानि शिवाभिरालिङ्गिताः शरीरक्षपणेन गतप्राणेन्द्रियाः शेरत इति विरुद्धं प्रतीयते । अमतपरार्थे विरुद्धोऽप्यर्थो विवक्षित इति ततो भेदः । न च प्रकाशितविरुद्धसंकरः । तत्रार्थस्यात्र तु शब्दस्य व्यञ्जकतया विशेषात् ।

पदैकदेशे यथासंभवमुदाहरणानि तत्र श्रुतिकटु यथा—

'अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥'

एकत्रपदे वर्णद्वयकटुत्वे पददोषत्वम् । पदस्यैव कटुत्वप्रतीतेः । एकस्यैव तथात्वे पदैकदेशदोषत्वम् । न चैवं 'सोऽध्यैष्ट–' इत्यादौ प्रत्येकं पददोषाभावात्कथं वाक्यदोषतेति वाच्यम् । नहि नानापददुष्टत्वे वाक्यदोषता किं तु नानापदवृत्तितामात्रेण । सा च पदावच्छेदेन तदेकदेशावच्छेदेन वेति को विशेषः । त्वादित्यस्य कटुत्वासंमतौ,

'तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥'

अत्र सिद्ध्यै लब्ध्यै इत्युदाहार्यम् ।

निहतार्थं यथा—

'यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।

---

शरीरस्य क्षपणेन नाशेन गता असव खानीन्द्रियाणि च येषा तथाभूताः शेरते निद्रान्तीति विरुद्धप्रतीतिः ।' इत्युदाहरणचन्द्रिकासक्षेपः

१. 'अलमिति । कस्याचित्कामिन्यामनुरक्तस्य कस्यचित्कामुकस्येयमुक्ति' । चपलत्वादिहेतवोऽङ्गनासगमनिष्ठतया योजनीया । तथा चातिचपलत्वादस्थिरत्वात्स्वप्न· स्वप्नसृष्टिः मन्त्रादिनासदर्थप्रकाशन माया तत्सदृशत्वात् । परिणतिविरसत्वाद्विरहादिदु'खानुबन्धित्वाच्चाङ्गनाया' सगमेनालं प्रयोजनाभाव इति तत्त्वं परमार्थ शतकृत्वोऽनेकवार यदि यद्यप्यालोचयामस्तदपि तथाप्यन्तरात्मा हरिणाक्षी न विसरतीत्यन्वयः । अत्र त्वादित्येकदेश श्रुतिकटु· ।' इत्युदाहरणचन्द्रिकासंक्षेप. २. तद्गच्छेति । कुमारसम्भवे कामं प्रतीन्द्रोक्तिः । हे काम, तत्तस्मात्सिद्ध्यै कार्यसिद्ध्यर्थं गच्छ । कार्यं किं तत्राह— देवाना सर्वेषा न ममैव कार्यं स्कन्दोत्पत्तिरूप कुरु । शिवयोः सगमैकलभ्येऽस्मिन्नर्थे कि मयेति शङ्कायामाह—अर्थोऽयमिति । अर्थान्तरेणोमामहेश्वरसगमेन लभ्य एव लभ्योऽप्ययं स्कन्दोत्पत्तिरूपोऽर्थोऽङ्गस्य स्वरूपस्य लब्ध्यै लाभाय प्रत्ययं शिवस्य पार्वतीवशतासम्पादनेन कारणमर्थात्त्वामपेक्षते । अत्रोमामहेश्वरसगमस्य वक्तुमयोग्यत्वादर्थान्तरत्वेनोक्तिः । क किमिव । बीजाङ्कुर उदयात्प्रागम्भो जलमिव । अङ्गेति कामसबोधनमिति केचित् । 'प्रत्ययमुत्तम त्वा' इति क्वचित्पाठ । अत्र चतुर्थ्यन्तपदद्वयैकदेश· कटु ।' इत्युदाहरणचन्द्रिकासक्षेप. ३. 'यश्चेति । तत्रैव हिमालयवर्णनम् । यश्च

बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥'

अत्र मत्ताशब्दः । स हि क्षीवायां सुप्रसिद्ध ।

निरर्थकं यथा—

'आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम् ।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥'

अत्र दृशामिति बहुवचनमविवक्षितार्थमेव वृत्तपूरणायोपात्तम् । एकस्याः कुरङ्गेक्षणाया दृग्बहुत्वाभावात् । 'अलसवलित—' इत्यादिवद्व्यापारभेदाद्बहुत्वमिति चेत् । न । तत्रेक्षणैरितिवदत्र तदनुपादानात् । न च भावसाधनतया दृक्छब्द एव व्यापारे वर्तते । विशेषणानन्वयप्रसङ्गात् । एवं कुरुत इत्यात्मनेपदमपि निरर्थकम् । प्रधानक्रियाफलसंबन्धस्य कर्तर्यविवक्षणात् । ननु 'आशिषि नाथ.' इतिवत्कर्त्रभिप्रेतक्रियाफलत्वाभावे आत्मनेपदमसाध्वेव न तु निरर्थकम् । नाथत इत्यपि वा निरर्थकमेव । अविशेषात् । एवं द्वयोरर्थयोर्बहुवचनमसाध्वेवेति । उच्यते—'आशिषि नाथः' इत्यनेनाशिष्यात्मनेपदं नियमयतानाशिषि तदभावो बोध्यते । तस्माद्याचने तस्य युक्तमसाधुत्वम् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेन तु कर्त्रभिप्रेतक्रियाफलविवक्षायां तन्नि-

---

मित्यर्थः । **प्रधानक्रियाफलेति** । पानक्रियाफलं हि जगज्जयरूपं तत्संबन्धो मन्मथगतत्वेन विवक्षितो न कुरङ्गेक्षणागतत्वेनेत्यर्थ । अवयवाभिप्रायेण प्रत्ययां-

---

हिमालय शिखरैः करणभूतैर्धातुमत्ता गैरिकादिधातुमतो भावस्तत्ता तां विभर्तीत्यन्वयः । कीदृशीम् । अप्सरसां विभ्रमार्थं विलासार्थं मण्डनान्यलंकरणानि तिलकपत्रिकादीनि तेषां सपादयित्रीम् । तथा बलाहकानां मेघानां छेदेषु खण्डेषु विभक्तो रागो यस्यास्तथाभूताम् । अकालसंध्यामिवेत्युत्प्रेक्षा । तदकालेऽपि तद्वद्भासनात् । अत्र मत्तेत्येकदेशः क्षीवार्थे सुप्रसिद्ध इति निहतार्थता ।' इत्युदाहरणचन्द्रिकासक्षेप ।

१ 'आदाविति । रुदत्या विरहातुरायाः कस्याश्चिद्वर्णनमिदम् । कुरङ्गेक्षणा काममतिशयेनाश्रुपयसा संप्रत्येव दृशां निषेकं कुरुत इत्यन्वयः । उत्प्रेक्षते । चेतोभुवो देवस्य मदनस्य भल्लीनां बाणविशेषरूपाणां पानकर्मेवेति । इवशब्दस्यार्थवशाद्भिन्नक्रमत्वम् । धारातैक्ष्ण्यायाल्प पङ्केन लिप्त्वाग्नौ सताप्य पयसा क्षालनं पानकर्मस्वरूपम् । तत्र लेपतापयोः संपादनाय दृशां विशेषणमाह—आदावित्यादि । आदौ प्रथममञ्जनपुञ्जेन लिप्तं वपुः स्वरूपं यासां तथाभूतानाम् । भल्लीनामप्यङ्गारचूर्णाञ्जनेन लेपात्तथाभूतत्वम् । ततोऽनन्तरं श्वासानिलेनोल्लासितः सधुक्षितोऽत एव प्रोत्सर्पन्सार्वाङ्गव्यापी यो विरहानलस्तेन संतापितानां चेति भिन्नक्रमश्चकारः । भल्लीनां तु भस्त्राश्वासानिलोल्लासितेन प्रोत्सर्पता विरहसदृशेनानलेन संतापितत्वमवसेयम् । अत्र दृशामिति बहुवचनमनर्थकम्' इत्युदाहरणचन्द्रिकासक्षेप ।

यमयता पराभिसंबन्धविवक्षायां तन्निषेधः प्रतिपाद्यत इति तत्रैवासाधुत्वम्। न तु कर्त्रभिप्रेतत्वाभावमात्रे। अत एव 'कर्त्रभिप्राय इति किम्। पराभिप्रेतक्रियाफले मा भूत्' इत्यवोचत्। न तु कर्त्रभिप्रेतक्रियाफलत्वाभाव इति। न चात्र पराभिप्रेतक्रियाफलत्वं द्योत्यम्। किं तु कर्त्रभिप्रेतक्रियाफलत्वाद्योतनमात्रमिति नासाधुत्वम्। एवं 'बहुषु बहुवचनम्' इत्येतत्सूत्रं बहुवचनं नियमयद्द्व्येकयोरुपस्थितयोस्तन्निषेधति। न तु बहुत्वविवक्षामात्रे। दशामित्यत्र च न द्वित्वैकत्वे विवक्षिते येनासाधुत्वं स्यात्। किं तु बहुत्वाविवक्षामात्रमित्यनर्थकतैवेति युक्तमुत्पश्यामः। एतेन 'अवयवाभिप्रायेण निरर्थकत्वं समुदायाभिप्रायेण त्वसाधुत्वमेव' इति चण्डीदासमतमनादेयम्।

अवाचकं यथा—

'[1]चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः॥'

अत्र विजेय इति यत्प्रत्ययः क्तप्रत्ययार्थे प्रयुक्तस्तत्रावाचकः।

अश्लीलेषु व्रीडादायि यथा—

'[2]अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव॥'

अत्र पेलेति पेलवशब्दैकदेशो गुह्याङ्गस्मारकतया व्रीडादायी।

---

शाभिप्रायेण समुदायः पदम्। **अनादेयमिति**। असाधुत्वस्योक्तरीत्या प्रसक्त्यभावादिति भावः। न च नाथत इत्यत्रापि पदैकदेशदोषत्वापत्तिरिति वाच्यम्।

---

१. 'चापेति। रावणदूतस्य परशुरामं प्रतीयमुक्तिः। हे राम, तव 'चापाचार्यो धनुर्वेदाध्यापकस्त्रिपुरविजयी महादेवः। तथा कार्तिकेयः स्कन्दो विजेयो विजितः। शस्त्रेण व्यस्त उत्सारित उदधिः सदनं गृहम्। पृथिव्या दत्ताया परशुरामस्य निवासाय शस्त्रतापितेन समुद्रेण भूर्दत्तेति पुराणप्रसिद्धिः। इयं भूः पृथ्वी हन्तकारो ग्रासषोडशकरूपोऽतिथये देयो बलिः। तद्वत्कश्यपाय दत्तेत्यर्थः। एतत्सर्वं प्रशस्तिहेतुरस्त्येव। न कस्याप्यत्र संदेहः। किमु किं तु रेणुकाया स्वमातुः कण्ठबाधा कण्ठच्छेदनं कृतवता तव परशुना बद्धस्पर्धश्चन्द्रहासनामा रावणस्य खड्गो लज्जत इति भङ्ग्या एवंविधनिन्द्यकर्मकारिणा त्वया सह स्पर्धितुं रावणो लज्जत इत्युक्तं भवति। अत्र विजेय इति यत्प्रत्ययः क्तप्रत्ययार्थेऽतीतत्वेऽवाचकः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. अतिपेलवमिति। शठोऽतिपेलवं कोमलमतिपरिमिता अल्पा वर्णा यत्र तथाविधं लघुतरमतिमन्दमुदाहरति वदति। पुनरिति त्वर्थे। परमार्थतस्तु स शठः कालकूटेन विषेण घटितमिव हृदयं वहति। तथा च कृत्रिमतया तद्वाक्यमश्रद्धेयमिति तं प्रत्याप्तस्योपदेशोऽयम्। अत्र पेलेत्येकदेशो लाटभाषाया वृषणरूपगुह्याङ्गबोधकतया व्रीडादायी।' इत्युदाहरणचन्द्रिकासंक्षेपः.

जुगुप्सादायि यथा—

'[1]यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥'

अत्र पूयेति पूयव्यञ्जकतया जुगुप्सादायि ।

अमङ्गल्यं यथा—

'विनयप्रणयैककेतनं सततं [2]योऽभवदङ्ग तादृशः ।
कथमेष स तद्वदीक्ष्यत तदभिप्रेतपदं समागतः ॥'

अत्र प्रेतेति भागोऽमङ्गल्यस्मारकः ।

संदिग्धं यथा—

'[3]कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥'

अत्र चरभागो 'भूतपूर्वे चरट्' इति चरट्प्रत्ययो वा 'चरेष्टः' इति टान्तश्चरधातुर्वेति संदेहात्पूर्वं साधुरिति वा साधुषु चरतीति वार्थ इति संदेहः ।

नेयार्थं यथा—

'[4]किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥'

---

आशीरूपप्रकृत्यर्थासंभवप्रयुक्ततया प्रत्ययासाधुत्वस्य पददोषत्वस्य तत्राभ्युपग-

---

१. 'य इति । कस्यचिन्महापुरुषस्य प्रशंसनमिदम् । सोऽय पूर्वोक्तगुणवान्महापुरुषः कस्यचिदेव पुण्यशालिनः पुंसो दृशोः पतति । गोचरीभवतीत्यर्थः । स कः । यः सुरसरिद्गङ्गा तन्मुखानि तत्प्रधानानि तत्प्रभृतीनि वा तीर्थानि तेषां सार्थे समूहे स्नानेन तथा शास्त्रस्य वेदान्तादेः परिशीलनेनाभ्यासेन यत्कीलनं संस्कारदार्ढ्यं तेन पूयते पवित्रो भवति । कीदृशः । सौजन्यमानयोर्जनिरुत्पत्तिस्थानम् । तयोर्जनिरुत्पत्तिर्यस्मादिति वा । 'सौजन्यमान्य' इति पाठे सौजन्यमान्या जनिरुत्पत्तिर्यस्येत्यर्थः । ऊर्जितानां बलवतामूर्जितं बलम् । ऊर्जितानां बलानामपि बलमिति वा । अत्र पूयेत्येकदेशो विकृतरुधिररूपपूयव्यञ्जकतया जुगुप्सादायी ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'विनयेति । हे अङ्ग, यः सततं विनयप्रणययोरेकं केतनं स्थानं तादृशस्तत्तद्गुणवत्त्वेन प्रसिद्धोऽभवत् । सोऽद्य तस्याभिप्रेतमभिलषितं पदमर्थान्नीचं समागतः प्राप्तः सन् तद्वत्पूर्ववत्कथमीक्ष्यता दृश्यताम् । नीचपदप्राप्त्या गुणलोपादिति भावः । तदेतत्सखायं प्रति कस्यचित्पूर्वप्रवृत्तमैत्रीकस्य पुरुषस्य वृत्तान्तकथनम् । अत्र प्रेतेत्येकदेशोऽमङ्गलार्थः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'कस्मिन्निति । अस्य पुरुषस्य । उत्तपते दीप्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'किमिति । भूपालमौलीनां माला तत्त्वेनाध्यवसिता पङ्क्तिस्तत्र महामणेर्मेरुस्थानीयमणेरस्य राज्ञः किमुच्यते किं वर्ण्यते । न किमपि वर्णयितुं शक्यम् । यस्य तेजो

अत्र वचोबाणशब्दो गीर्वाणे विवक्षितः । न च तत्र समर्थः । गीर्वाणशब्दयोरेव समस्तयोस्तदर्थरूढिर्न तु तत्पर्यायान्तराणाम् । अत एव गीःशरादिशब्दोऽपि तत्रासमर्थः । पर्यायपरिवृत्त्यसहत्वात् । तस्माद्वचःशब्देन गीःशब्दो लक्ष्यते न च तत्र रूढिः प्रयोजनं वेति नेयार्थता । एवं जलध्यादिशब्देऽपि पदपरिवर्तनं द्रष्टव्यम् । परं तु तत्रोत्तरपदमेव परिवृत्त्यसहम् । वडवानलादौ तु पूर्वपदमेवेति तदन्यपरिवर्तनेऽप्यदोषः । नन्वसमर्थत्वं विवक्षितार्थप्रतीतिसमर्थ्यविरह एवोच्यताम् । स च प्रसिद्ध्यभावात्समयाद्यभावाद्वेत्यप्रयुक्तावाचकनिहतार्थादयोऽप्यसमर्थभेदा एव भवितुमर्हन्तीति किमिति पृथङ्निर्दिष्टा इति चेत्तथ्यमात्थ । परं त्वन्यैरलंकारकारैर्भेदेन दर्शिता इति तथा निर्दिष्टाः । किं च वैजात्याभावेऽपि शिष्यबुद्धिवैशद्याय प्रभेदा वक्तव्या एवेत्यतोऽपि विभज्योक्ता इति ।

अथ वाक्यमात्रदोषलक्षणमाह—

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५ ॥
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ॥ ६ ॥
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।

अत्रापि रूढियोगाभ्यामर्थद्वयोपस्थितौ लक्षणवाक्यत्वोपस्थितिः । वाक्यमेव तथा प्रतिकूलवर्णत्वादिकं वाक्य एव दोषो न तु पदादिष्वपीत्यर्थः ।

तत्र प्रतिकूलवर्णं विवक्षितरसादेः प्रतिकूला अननुगुणा वर्णा यत्र तत् । अनुगुणत्वं वर्णानां गुणविवेचनावसरे वक्ष्यते । शृङ्गारे यथा—

'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥'

---

मात् । अत्र तु प्रकृत्यर्थाबाधेन तद्वैलक्षण्यादिति । **वाक्यमेवेति** । यद्यप्येक-

---

वचोबाणैर्गीर्वाणैर्देवैः सुदुर्लभ विभाव्यते । ज्ञायत इत्यर्थः । अत्र वचःशब्देन स्वशक्त्यनिरूपितवाचकत्वमवन्धेन गी शब्द एव लक्ष्यते । गीर्वाणशब्दयोरेव मिलितयोर्देवेषु रूढत्वात् । न च शब्दलक्षणाया रूढिः प्रयोजन वेति नेयार्थत्वम् ।' इत्युदाहरणचन्द्रिकासक्षेप·.

१ 'लक्ष्यलक्षण' क. २. 'अकुण्ठेति । नायिकासंगमोत्सुकस्य कस्यचिदियमुक्तिः । हे कलकण्ठि । कलो मधुरस्वरस्तद्युक्तः कण्ठो यस्यास्तथाविधे इति दूतीसंबोधनम् । विरहातुरतया कोकिलाया वा । मा कम्बुकण्ठ्या· । शङ्खसदृशग्रीवाया नायिकायाः कण्ठे· क्षणं कुरु । तदालिङ्गनशालिन कुर्वित्यर्थः । कण्ठस्यार्तिं तदालिङ्गनौत्सुक्यरूपामुद्धरापहर । कीदृश माम । आकण्ठ कण्ठपर्यन्तमकुण्ठाप्रतिहता । उत्तरोत्तरवर्धमानेति यावत् । तथाविधा या उत्कण्ठा तया पूर्णम् । व्याप्तमित्यर्थ· । अत्र शृङ्गारे 'अटवर्गा·' इत्यादिना प्रतिषेधट्टाकारप्रतिकूल इति प्रतिकूलवर्णत्व दोष ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र टवर्गः शृङ्गारप्रतिकूलः 'अटवर्गः–' इत्यादिना निषेधात् ।

रौद्रे यथा—

'देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहात् ।
तान्येवाहितहेतिघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥'

अत्र मृदवो वर्णाः प्रतिकूलाः । ओजस्विनि रसे विकटवर्णत्वस्य दीर्घसमासत्वस्य चानुगुणत्वात् । यथा—

'प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥'

इत्यत्र । यत्र तु न क्रोधश्चतुर्थपादे तत्र शिथिल एव प्रयोगः । अपरुषस्यापि रौद्रादिविरोधितयास्य न श्रुतिकटुभेदत्वम् । न च श्रुतिकटोरेव तद्विशेषत्वम् ।

---

स्मिन्नपि पदे टकारादिसत्त्वे प्रतिकूलवर्णत्वं प्रसज्यते तथापि वाक्यगतत्वेनैव रसा-

---

१. 'देश इति । वेणीसंहारेऽश्वत्थाम्न कर्णं प्रतीयमुक्तिः । यस्मिन्नरातीना शत्रूणां शोणितरूपैर्जलै पञ्च ह्रदा· पूरिताः । अर्थात्परशुरामेण । सोऽयं कुरुक्षेत्ररूपो देशः । तातस्य द्रोणस्य केशग्रहाद्धेतोः क्षत्रात्क्षत्रियादेव धृष्टद्युम्नात्तथाविध कार्तवीर्यार्जुनाज्जमदग्नेरिव परिभवः अहिताना शत्रूणा या हेतयः शस्त्राणि तेषा घस्मराणि भक्षकाणि अतएव गुरूणि श्रेष्ठानि मे मम भास्वन्ति भास्वराणि अस्त्राणि ब्रह्मास्त्रादीनि तान्येव यानि मत्तातेन परशुरामात्प्राप्तानि । अतः क्रोधनो द्रोणात्मजो मल्लक्षणो जनो यद्रामेण परशुरामेण कृतं पितृवैरनिर्यातन तदेव कुरुत इत्यन्वय· । अत्र रौद्रे मृदवो वर्णा· प्रतिकूला' ।' इत्युदाहरणचन्द्रिकासंक्षेप .

२. 'प्रागिति । कृतपिनाकधनुर्भङ्गं रामं प्रति भार्गवोक्ति । स परशु क्षणात्त्वत्कण्ठपीठातिथिर्भवत्विति संबन्धः । स क । येनानेन जगत्सु देवो हरः । खण्डपरशुरिति ख्याप्यते प्रसिद्ध· क्रियते । हरेण स्वपरशोरेकः खण्डः परशुरामाय दत्त इति प्रसिद्धि· । यद्वा खण्डयतीति खण्डस्तथाभूत· परशुर्यस्येत्येव ख्याप्यते । रिपुखण्डनेन तन्नामत्वेन प्रसिद्धः क्रियत इत्यर्थ· । तेन यद्धनुस्त्वया खण्डित तत्परशुना त्वमपि खण्डनीय इति ध्वन्यते । कीदृशः परशुः । प्राक्पूर्वमप्राप्तो निशुम्भो नमनं भङ्गो वा येन तथाभूतस्य शाम्भवस्य धनुषो या द्वेधाविधा द्वैधीकरण तेनाविर्भवन्यः क्रोधस्तेन प्रेरितो यो भीमो भयानको भार्गवस्य मम भुज एव स्तम्भस्तेनापविद्ध· क्षिप्त· । अत एवाशिथिलो वेगवत्तर· । तथा उद्गता ज्वाला दीप्तिर्यस्य तथाभूत· । अत्रागच्छतः परशोरनिवारणीयत्वद्योतनायातिथित्वोक्ति । तस्य च पीठारोहणौचित्यात्पीठत्वारोप इति बोध्यम् । अत्र चतुर्थपादे गुरुस्मरणेन भावोद्रेकात्तदौचित्येन मसृणवर्णविन्यासः । पादत्रये तु रौद्रप्राधान्यात्तदुचितो विकटवर्णविन्यास इति ।' इत्युदाहरणचन्द्रिकासंक्षेप..

तस्य सकृत्प्रयोगेऽप्यात्मलाभात्। अस्य तु वाक्यव्यापित्वेन। अत एवास्य न पददोषत्वम्। एकत्र तादृशवर्णप्रयोगस्य रसाविरोधित्वात्। दोषत्वबीजमप्यस्य रसविरोधित्वमेव। अत एव नित्यदोषोऽयम्। नीरसादावात्मलाभाभावात्। श्रुतिकटोस्तु नीरसादावात्मलाभादनित्यत्वमिति महान्भेदः। इदं तु चिन्त्यम्—रौद्रादिरसे श्लोकार्धपर्यन्तं समासेनैकपदे मृदुवर्णप्रायेऽस्य न कथं पददोषत्वमिति। अथान्यसाहित्येन दोषत्वं वाक्यदोषत्वं निरपेक्षदोषत्वं च पददोषत्वमिति चेत्, न। एवं हि क्लिष्टादावपि पददोषत्वं न स्यात्। बहुना यादृशविवक्षया क्लिष्टत्वं पददोषत्वेनोक्तं तयेदमपि तथेति न्यूनः पददोषत्वविभागः।

उपहतलुप्तविसर्गम्। उपहतविसर्गं लुप्तविसर्गं चेति द्वयमित्यर्थः। उपहता ओत्वं प्राप्ता लुप्ता वा विसर्गा यत्रेति बहुवचनान्तो विग्रहः। एकविसर्गस्य तथात्वेऽवैरस्यात्। उपघातश्चोत्वप्राप्तिः। उपघातान्तरस्य दोषान्तरत्वे प्रवेशात्। तेन नैरन्तर्येणौत्वप्राप्तबहुविसर्गत्वं तथा लुप्तविसर्गत्वं च लक्षणे। द्वयोरेकमुदाहरणम्—

'धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभान्विताः॥'

दूषकताबीजं बन्धपारुष्येण सहृदयोद्वेगः। अत एवायं नित्यः। अत्रापि चिन्त्यम्—'भूयो महीयोऽतियशोविभूषितः' इत्यादौ कथं न पददोषत्वमस्येति।

विसंधि विरूपः संधिः संनिकर्षो यत्र। वैरूप्यं च त्रिधा—विश्लेषोऽश्लीलत्वं कष्टत्वं च। विश्लेषस्तु प्राप्तस्य श्लेषस्य संहिताकार्यस्याभावः। स च 'अन्यत्र तु विभाषया' इति वचनादैच्छिक आनुशासनिकश्च। तत्रान्त्यः प्रगृह्यादित्वात्, 'पूर्वत्रासिद्धम्' इत्यादिना विसर्गादिलोपासिद्धेर्वा। तेष्वाद्यः सकृदपि वर्तमानो दोषाय। इच्छानिबन्धनत्वेनाशक्तिमूलकतया प्रथमत एव सहृदयोद्वेजकत्वात्। अन्त्यौ त्वसकृत्। आनुशासनिकत्वेनाशक्त्यनुन्नायकतया बन्धपारुष्येणैव हि तस्य दोषत्वम्। तच्चासकृत्प्रयोग एव। त्रैरूप्यवतामनुगमश्चान्य-

---

नुकूल्यप्रातिकूल्ययोरनुमतसिद्धत्वाद्वाक्यदोषत्वमेवेति तात्पर्यम्। **द्वयमित्यर्थ इति**। यद्यप्युपहितलुप्तान्यतरविसर्गत्वमेकं लक्षणं संभवति तथापि गौरवाद्वैरस्यस्य भेदेनानुभवाच्च दोषद्वयमित्युक्तम्। **बहुवचनान्त इति**। वृत्तौ त्वेकवचनं जात्यभिप्रायमिति भावः। उपघातान्तरस्य स्वरूपभ्रंशस्य। **दोषान्तरेति**। लुप्तत्वाद्युपायदोषेत्यर्थ.। **अन्यत्र त्विति**। 'संधिरेकपदे नित्यो नित्यो धातूपसर्गयोः।

---

१ 'तत्तेन' क. २. 'धीर इति'। अत्र स इति सावधारणम्। तेनात्र जगति स एव नृपो धीरत्वादिगुणयुक्त इत्यन्वयः। वर. श्रेष्ठ आकारो यस्य सः। यस्य भृत्याः सेवका बलेनोत्सिक्ता दृप्ताः। बुद्ध्या प्रभया तेजसा चान्विता युक्ता इत्यर्थः। अत्र पूर्वार्धे रोत्वप्राप्तिरूपाद्विसर्गोपघातादुत्तरार्धे च तल्लोपाद्बन्धशैथिल्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'तत्रैरूप्य' क.

तमत्वेन । अश्लीलवन्नार्थत्वमेव वा । एवं त्रिप्रकारके विश्लेषे आद्यप्रकारद्वयं यथा—

'राजन्विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥'

अन्त्यो यथा—

'तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदारकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥'

दूषकताबीजमस्योक्तम् । अश्लीलत्वं यथा—

'वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्पतते पत्त्री ततोऽत्रैव रुचिं कुरु ॥'

अत्र 'चिङ्कु' इत्यश्लीलम् ।

---

नित्य समासे द्रष्टव्यो ह्यन्यत्र तु विभाषया ॥' इति वचनम् । अन्यत्र वाक्ये । असकृदित्यत्र दोषायेत्यनुषज्यते । तत उदित इत्यादौ लुप्तविसर्गत्वं नाशङ्कनीयम् ।

---

१. 'राजन्निति । हे राजन्, भवतस्तानि चरितानि विभान्ति शोभन्ते । यानि रसातले पातालेऽन्तर्गभीरप्रदेशे इन्दोर्द्युतिं दधति धारयन्ति । इन्दुवत्प्रकाशमानानि सन्तीत्यर्थः । धीर्नीत्यनुसारिणी बुद्धि । दोर्बल बाहुबलं ते उभे विजयस्य संपदं सपत्तिमेत्य प्राप्य भातः शोभेते । किंभूते । अतितते अतिविस्तृते । उचितयोरवसरयोरनुवृत्ती अनुसरणे आतन्वती कुर्वाणे । यथोचितावसरानुसारेण प्रवर्तमाने इत्यर्थः । 'उचितानुवृत्तिम्' इति क्वचित्पाठः । अत्र पूर्वार्धेऽनित्यतया ऐच्छिक सध्यभाव सकृदपि दोष । उत्तरार्धे तु 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यानुशासनिकप्रगृह्यसंज्ञाप्रयुक्तत्वादसकृदेव ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'तत इति । पतिंवरा प्रति सख्या इयमुक्ति । तत. पूर्वोक्तात्पितुरयमुदित उत्पन्नः । कस्मात्क इव । उच्चैरत्युच्चादुदयाचलादिन्दुरिव । कीदृश. । उदारेण महता हारेण हारिणी मनोहारिणी द्युतिर्यस्य सः । इन्दुस्तूदारहारवद्धारिद्युति. । एवंविधोऽयं निजवंशे मुक्तामणिवच्चकास्ति दीप्यते । मुक्तामणेरपि वंशे समुत्पत्ते । कीदृश । उदात्ता उत्कटा कान्ता रमणीया कान्तिर्यस्य तथाभूत । तथानर्घ श्रेष्ठोऽमूल्यश्चेति । अत्र यलोपासिद्धत्वप्रयुक्तः संध्यभाव ।' इत्युदाहरणचन्द्रिकासंक्षेप. ३ 'वेगादिति । नायकाधिष्ठित संकेतस्थान बोधयन्त्या दूत्या इयमुक्ति । हे सखि, अय पत्त्री पक्षी वेगादुड्डीय गगने चलन्नुत्पतते उत्त्रस्तो भवति । ततस्तस्मादत्रैव प्रवेशे रुचिं प्रीतिम् । अवस्थितिमिति यावत् । कुर्वित्यन्वय । कीदृशः । डामरमुत्कट चेष्टितं यस्य स । 'डामर डमरुवाद्यं तद्वच्चेष्टित यस्येत्यर्थ ' इत्यन्ये । अत्र चलण्डामरेति रुचिं कुर्विति च संनिकर्षरूपसंध्युपस्थापिताभ्या लण्डाचिङ्कुशब्दाभ्या पुव्यञ्जनयोन्यङ्कुरयो प्रतीतिरित्यश्लील संधि. । लाटदेशभाषाया चिङ्कुशब्देन योन्यग्राभिधानादिति ।' इत्युदाहरणचन्द्रिकासंक्षेप..

कष्टत्वं यथा—

'उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।
नात्रर्जुः क्षमते गन्तुं शिरो नमय तन्मनाक्॥'

अत्र दूषकताबीजं पददोषप्रस्तावे उक्तमिति। अत्रापीदं चिन्त्यम्—समासे-नैकपद्येऽश्लीलकष्टेच्छानिबन्धनविश्लेषाणामश्लीलकष्टासाधुमध्यप्रवेशे लोपासिद्धि-निबन्धनविश्लेषस्य पदेऽपि सद्भावात्कथमस्य न पददोषत्वम्। यथा—'भूः उच्चैर्सिह उदात्तयश उदारः' इति। वयं तु तर्कयामः—सकलप्रभेदभिन्ना ए दोषा दूषणान्तरासंकीर्णा वाक्य एवेति वाक्यमेव तथेति नियमार्थः। अतए न पददोषविभागन्यूनतापि तादृशस्यैव पदवृत्तेस्तत्र विभागादिति।

हतवृत्तम्। हतं वृत्तं यत्र तत्। हतत्वं चाश्रव्यत्वं गुरुकार्याक्षमपादान्त्य लघुवर्णत्वं प्रकृतरसाननुगुणत्वं वा। अन्यतमत्वेनैषामनुगमः। अश्रव्यत्वं च लक्षणाननुगमाद्यतिभङ्गात्स्थानविशेषे गणविशेषयोगाच्च। यद्वा हतत्वमश्रव्य त्वमेव। तच्च गुर्वादिनियमरूपलक्षणाननुगमाद्यतिभङ्गात्स्थानविशेषे गणविशेष योगात्। शिखरिण्यादावन्त्यस्य लघोर्गुरुकार्याक्षमत्वात्प्रकृतरसाननुगुणत्वाच्च तत्राद्यं यथा—

'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः॥'

---

तत्प्रयुक्तसंध्यभावस्यैव वैरस्याधायकत्वेन दोषत्वात्। **असाधुमध्यप्रवेशेऽपीति**। ततश्च तेषा पददोषत्वे इष्टापत्तिरित्यर्थः। **दूषणान्तरेति**। पदे तु लोपासिद्धिनिबन्धनविश्लेषस्यासंकीर्णत्वेऽप्यश्लीलकष्टेच्छानिबन्धनानामश्लीलादिसंकर-स्योक्तत्वान्न सकलप्रभेदानामसकीर्णता। एवं प्रतिकूलवर्णत्वमपि शृङ्गारे समस्त-पदगतं श्रुतिकटुत्वेनापदस्थसमासत्वेन च सकीर्णम्। तथोपहतलुप्तविसर्गत्वमप्रयु-क्तसकीर्णमिति भावः। तादृशस्यैव दोषान्तरासंकीर्णसकलभेदस्यैव। **लक्षणान-नुगमादिति**। वृत्तौ लक्षणानुसरणेऽपीत्यपिना तदननुसरणस्यापि ग्रहणमित्या-शयः। अन्यथा छन्दोभङ्गेऽप्यदुष्टकाव्यत्वापत्तेः। अश्रव्यत्वस्य सर्वत्रानुभवाल्लाघवा-त्तत्त्वमेव दोष। अन्यत्तु तत्प्रयोजकमित्याह—**यद्वेति**। **यस्मिन्पञ्चेति**। श्रुतिवाक्यमिदम्। अत्र पञ्चजनशब्देन रूढ्या प्राणचक्षुःश्रोत्रान्नमनांस्युच्यन्ते। 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः।' इति वाक्यशेषात्। पञ्चजनाः कतीत्यपेक्षाया पञ्चेति विशेषणम्। तथा च यस्मिन्परमे-

---

१. 'उर्वीति। अध्वगं प्रति कस्यचिदुपदेशोक्तिरियम्। अत्र मरुदेशस्यान्ते समीपे चारुरवस्थितिर्यस्यास्तथाभूता उर्वी महती तर्वाली तरुपङ्क्तिः। अस्तीति शेषः। अत्र ऋजु यथा स्यात्तथा गन्तु न युज्यते। तत्तस्मान्मनागीषच्छिरो नमय नीचैः कुर्वि-त्यन्वयः। 'क्षमते' इति पाठे जन इत्यध्याहार्यम्। अत्र सर्वेः श्रुतिकटुत्वम्।' इत्युदाहरण-चन्द्रिकासक्षेपः २ एतदुदाहरण काव्यप्रकाशे नास्तीत्युदाहरणचन्द्रिकाया न व्याख्यातम्।

अत्र श्लोके पञ्चमस्य गुरुत्वाच्छन्दोभङ्गः ।

यतिभङ्गो वर्णवृत्ते यथा—

'अमृतममृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥'

अत्र हरिणीच्छन्दसि षष्ठे दशमे च यतिरुचिता । चतुर्थे तु पादे तद्भङ्ग इत्यश्रव्यता ।

मात्रावृत्ते स्थानविशेषे गणविशेषप्रयोगो यथा—

'जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण ।
अह णवरँ जस्स दोसो पडिपक्खेहि वि पडिवण्णो ॥'

अत्रार्यायां द्वितीयतृतीयौ सगणभगणौ । तौ च तथाविधौ छन्दःशास्त्रेण दुःश्रवत्वेन प्रतिपादितौ ।

---

श्वरे प्राणादयः पञ्च पञ्चजनाख्या आकाशश्च प्रतिष्ठितस्तमेव धीरो ब्राह्मणो विज्ञाय निश्चित्य प्रज्ञा तत्त्वबुद्ध्यभ्यासं कुर्वीतेत्यर्थः । **छन्दोभङ्ग इति** । 'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्' इति वचनादिति भावः । **चतुर्थे त्विति** । वदतु यदिहेति षष्ठे हकारे यतिभङ्ग इत्यर्थः । यतिरुपरम । 'वदतु मधुरं यत्स्यादन्यत्प्रिया रदन(दशन)च्छदात्' इति तु युक्तम् । **जं इति** । 'यत्परिहर्तुं तीर्यते मनागपि न सौन्दर्यगुणेन । अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः ॥' [इति च्छाया] ।

---

१ 'अमृतमिति । अत्र द्वितीयममृतपद स्वादुतरत्वरूपार्थान्तरसंक्रमितवाच्यम् । स्वादुतरत्वायोगव्यवच्छेदो व्यङ्ग्यः । तथा चामृतममृतं स्वादुतरमत्र कः संदेहः । मधून्यप्यन्यथा न अमधूनि न । मधून्येवेत्यर्थः । मधुराण्येवेति यावत् । चूतस्याम्रस्यापि प्रसन्नरस स्वच्छरसं फलमधिकमधुरम् । कः संदेह इत्यनुषज्यते । पुनरिति परत्वित्यर्थकम् । परतु रसानामन्तरं तारतम्य वेत्तीति तथाभूतो रसानामान्तर मर्म वेत्तीति तथाभूतो वा जनो मध्यस्थः पक्षपातरहितः सन्निह जगति प्रियाया दशनच्छदादधरात् । तदपेक्षयेत्यर्थः । स्वादु मधुर यदन्यत्स्यात्तत्सकृदेकवारमपि वदतु । तथा च जगति न तादृशं विद्यत इति भावः । अत्र हरिणीच्छन्दसि षष्ठवर्णे प्रतिपादे यतिरुचिता । चतुर्थपादगते षष्ठे हेतिवर्णे परपदस्थानेन यतिभङ्गादश्रव्यत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः २. 'जं परीति । मानवती प्रति दूत्याः समाधानोक्तिरियम् । तथाविधमेतत्कामचेष्टित यत्सौन्दर्यगुणेन रमणीयतारूपेण गुणेन मनागीषदपि परिहर्तुं न तीर्यते न शक्यते । अथ च यस्य दोषः पूर्वोक्तापरिहार्यत्वरूपः प्रतिपक्षैरपि ब्रह्मचार्यादिभिः केवल प्रतिपन्नोऽङ्गीकृतो न तु परिहृतः । त्वत्कान्तस्य तु केव कथेति तस्य दैवादन्यवनितासंगमेऽपि कोपातिशयो न विधेय इति भावः । अत्रार्यायां द्वितीयस्य 'हरिउ' इत्यन्तर्गुरोः सगणस्य 'तीरइ' इति तृतीयस्यादिगुरोर्भगणस्य चाश्रव्यत्वं छन्दःशास्त्रसिद्धम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः

पादान्तलघोर्गुरुकार्याक्षमत्वं यथा—

'विकसितसहकारतारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः॥'

अत्र 'वा पादान्ते' इति पादान्तस्य गुरुत्वाच्छन्दोभङ्गाभावेऽपि प्रथमपादान्तवर्तिनो रिकारस्य लघोर्गुरुकार्यकरणाक्षमत्वम्। इन्द्रवज्रादिषु तु तत्कार्यक्षमत्वाददोषः। तस्मात् 'हारिप्रमुदितसौरभ–' इति पठनीयम्। न केवलं प्रथमतृतीयपादयोरेवायं दोषः। किं त्वन्ययोरपि। तत्र चतुर्थे यथा—

'अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
संभाराः किल तेऽन्य एव विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थला-
द्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च॥'

अत्र 'वस्त्राण्यपि' इति पाठे गुरोरेव संयोगपरतया स्वरवृद्धौ लघुरपि गुरुकार्यकारी संपद्यते। एवं द्वितीयपादेऽप्यूह्यम्। एषु चाश्रव्यता सहृदयोद्वेजिनी दुष्टताबीजम्। अतो नित्यदोषोऽयम्।

प्रकृतरसाननुगुणत्वं यथा—

'हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव।
मुग्ध विदग्ध सभान्तररत्न क्वासि गतः क्व वयं च तवैते॥'

---

स्रगणेति। वर्णत्रयात्मक एकैको गणः। तत्र 'हरिउं' इति द्वितीयो गण·

---

१. 'विकसितेति। वसन्तो मुनेरपि मानसं हरतीत्यन्वयः। कीदृशः। विकसितानां सहकाराणामाम्रवृक्षाणां तार उद्भटो हारी मनोहरश्च यः परिमलस्तेन गुञ्जिता गुञ्जनयुक्ताः पुञ्जिताः पुञ्जीभूताश्च द्विरेफा भ्रमरा यत्र तथाभूत। अथवा तथाविधः परिमलो यत्र स चासौ गुञ्जितपुञ्जितद्विरेफश्चेति विग्रह। मुनिमनोहारकत्वसमर्थनाय वसन्तगतप्रकर्षाधायकतया विवक्षितस्य तथाविधपरिमलस्य शब्दतो वसनान्वयसंभवे अर्थतस्तत्संबन्धानुधावनस्यानुचितत्वात्। पुनः कीदृक्। नवकिसलयानि नवपल्लवा एव चारूणि मनोहराणि चामराणि तै· श्री· शोभा यस्य सः। अत्राद्यपादान्तस्थस्य रिकारस्य गुरुत्वानुशासनेऽपि तत्कार्याक्षमतयाश्रव्यत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेप·. २. 'अन्या इति। कस्यचिद्राज्ञो वर्णनमिदम्। स एष युवा विधिना यैः पदार्थैः सृष्ट उत्पादितस्तास्तदन्तर्गतगुणरूपाणां रत्नानां संबन्धिन्यो रोहणस्य रत्नोत्पत्तिस्थानभूतपर्वतविशेषस्य भुवो भूमयोऽन्या·। विलक्षणा इत्यर्थ। एवमग्रेऽपि। मृदुपादानभूतपार्थिवभागरूपा। संभारा उपकरणानि। स क। यत्र यस्मिन्दृष्टे सति द्विषां करतलादस्त्राणि पतन्ति स्त्रीणां नितम्बस्थलाद्वस्त्राणि च पतन्तीति योज्यम्। श्रीमदित्यादि मूढेत्यादि च द्विषां स्त्रीणां च विशेषणम्। मोहश्च द्विषां भयप्रयुक्तः स्त्रीणां कामावेशादित्यूहनीयम्। अत्र श्लोकान्त्यस्य गुरुकार्याक्षमत्वम्' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'हा नृपेति। राज्ञि मृते तदीयानां विलापोऽयम्। मुग्ध सुन्दर, सभान्तरे सभामध्ये रत्नभूत, त्वं क्व गतोऽसि। तव संबन्धिन एते ईदृगवस्था वयं च क्व। वनखण्डे गतः स इति शेष·।

इदं दोधकवृत्तं शोकाननुगुणम् । तद्विरोधिहास्यव्यञ्जकत्वात् । अस्य च प्रतिकूलवर्णत्वं दुष्टताबीजम् । नीरसे च नास्यात्मलाभ इति नित्यदोषता ।

न्यूनाधिकेत्यादि । न्यूनपदमधिकपदं कथितपदं चेत्यर्थः । तत्र न्यूनपदं न्यून पदं वाचकशब्दो यत्र तत् । द्योतकन्यूनतायां त्वनभिहितवाच्यत्वमिति विशेषः । उदाहरणम्—

'[1]तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'

अत्र पादत्रयमध्येऽस्माभिरिति, खिन्ने इत्यस्य पूर्वमित्थमिति च पदं नास्ति । आवश्यके च ते । अन्यथा कर्तुरलाभादेकवाक्यत्वासंभवाच्च तदर्थस्य विवक्षितत्वात् । अर्थश्चैतादृग एव विवक्षित इति शब्दस्यैवायमपराधः । यत्र त्वर्थ एव न तावद्दूरं विवक्ष्यते तत्रार्थ एव दुष्ट इति साकाङ्क्षत्वं दोषान्तरमिति द्रष्टव्यम् । विवक्षिताप्रतिपत्तिश्च दूषकताबीजम् । अतो झटित्याक्षेपतस्तल्लाभेऽदोषत्वम् ।

अधिकपदं यथा—

'[2]स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्ध[3]समन्वितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोऽपि ॥'

---

'सोऽन्तगुरु.' इति वचनात्सगण. । 'तीरइ' इति च तृतीयो भगण· । 'भ आदिगुरु.' इत्युक्तेः । **पादत्रयमध्य इति** । दृष्ट्वेत्यत्रोषितमित्यत्र स्थितमित्यत्र च कर्तुरपेक्षणात् । इत्थमित्यभावे चैकवाक्यत्वासंभवात् तत्सत्त्वे तु तथाभूतनृपतनयादर्शनादित. खिन्न इत्येकवाक्यतासभव इत्यर्थः । **झटितीति** । 'मा मा मानद–'

---

प्रत्येक हापदेन नृपत्वादे प्रत्येकं प्राधान्येन शोकोद्दीपकत्व व्यज्यते । इद दोधकवृत्तं हास्यव्यञ्जकतया शोकाननुगुणम् ।' इत्युदाहरणचन्द्रिकासक्षेप .

१ 'तथाभूतामिति । तृतीयोल्लासे व्याख्यातमेतत् । अत्र वल्कलधरैरित्यस्य विशेष्यसाकाङ्क्षत्वात् स्थितमित्यस्य च कैरिति कर्तृसाकाङ्क्षत्वादस्माभिरित्यपेक्षितम् । तथा खेदमित्यनन्तरमित्थमित्यपि । अन्यथा खेदपदस्य पूर्वोक्तार्थहेतुकत्वालाभेन हेतुमाकाङ्क्षत्वापत्तेर्मात्सर्यानौचित्यापरिपोषाच्च न्यूनपदत्वम् । न च दृष्ट्वा खिन्ने इत्यन्वयादित्थमिति व्यर्थमिति वाच्यम् । दृष्ट्वेत्यस्य गुरुणैवान्वयात् । अन्यथानौचित्यासगतेरिति दिक् ।' इत्युदाहरणचन्द्रिकासक्षेप २ 'स्फटिकेति । कस्यचिद्विदुषो वर्णनमिदम् । स प्रकृतो विद्वान्कोऽपि । लोकोत्तर इत्यर्थ । कीदृक् । स्फटिकाकृतिवन्निर्मल· स्वच्छान्त'करण· । अत एव प्रकाममत्यर्थं प्रतिसक्रान्त निशात तीक्ष्णम् । तीक्ष्णमतिवेद्यमिति यावत् । शास्त्रतत्त्वं शास्त्रस्याबाधितार्थो यत्र तथाभूत· । एवमविरुद्धा समन्विता सगता उक्तियुक्तिरुक्तियोजना यस्य स· । पुन कीदृश । प्रतिमल्लाना प्रतिवादिनामस्तमयस्य लक्षणया पराभवस्योदयः प्रादुर्भावो यस्मात्तथाविध । कदापि केनाप्यपरिभूतानामपि पराभवकर्तेत्यर्थः । अत्राकृतिपदमधिकम् ।' इत्युदाहरणचन्द्रिकासक्षेप . ३. 'समर्थितोक्ति' क.

अत्र स्फटिकमेव निर्मलतायामुपमानं विवक्षितम्। उपात्तेऽप्याकृतिपदे यथाकथंचित्तेनैवोपमितिपर्यवसानादित्याकृतिपदमधिकम्। न तु व्यर्थत्वादपुष्टार्थेन संकर इति वक्ष्यते। न केवलं समास एव पदाधिक्यं किं त्वसमासेऽपि। यथा—

'इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथो विकारः।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा॥'

अत्र कृतमधिकम्। पूर्वार्धवत्तेन विनैव प्रतीतिपर्यवसानात्। कृतं प्रत्युत प्रक्रमभङ्गमावहति। पूर्वार्धेऽकरणात्। तथा च 'यदपि च न कुरङ्गलोचनानां' इति पठनीयम्। निष्प्रयोजनशब्दश्रवणेन श्रोतुर्वैमुख्यं दूषकताबीजम्। अतो हर्षादावभिव्यङ्ग्ये न दोषत्वम्।

कथितपदं यथा—

'अधिकरतलतल्पं कल्पितस्वापलीला-
परिमिलननिमीलत्पाण्डिमा गण्डपाली।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम्॥

अत्र लीलापदं वारद्वयमुपात्तम्। दूषकताबीजं च कवेरशक्त्युन्नयनेन श्रो-

---

इत्यादावायासयेत्यादिक्रियायाः शीघ्रं प्रतीत्या दोषत्वाभावो वक्ष्यत इति शेषः। यथाकथंचिदाकृतिपदस्य स्वरूपपरतया। **न त्विति**। इदं हि व्यर्थम्। तदर्थस्यावयवसंयोगविशेषस्याविवक्षितत्वात्। अपुष्टार्थं तु न तथा। विततत्वाद्यर्थस्य विवक्षितत्वेऽप्यर्थलभ्यत्वेनानुपादेयत्वादिति वक्ष्यत इत्यर्थः। **कृतमिति**। कृतमि-

---

१. इदमिति। इह जगति पुंसा जरास्वपि वृद्धावस्थास्वपि यन्मान्मथः कामसबन्धी विकार इदमनुचितं वैरस्याधायकत्वादयुक्तम्। तथायमक्रमोऽप्रशस्ता परिपाटी। कुसंप्रदाय इत्यर्थः। बाल्ययौवनजरासु विद्याविषयोपभोगधर्मा इति शास्त्रोक्तसंप्रदायस्यैवावस्थानुरूपतया समीचीनत्वात्। यदपि च नितम्बिनीना स्त्रीणा जीवित रत वा स्तनपतनमवधिरुत्तरावधिर्यस्य तथाभूत न कृतम्। अर्थाद्विधात्रा। तदप्यनुचितम्। पूर्वोक्तादेव हेतोः। अत एव कुसप्रदायश्चेति योज्यम्। अत्र कृतमित्यधिकम्।' इत्युदाहरणचन्द्रिकासंक्षेपः। २. 'अधिकरतले कपोलमाधाय चिन्तयन्ती नायिका प्रति सख्या इयमुक्तिः। हे सुतनु, करतलरूपे तल्पे इत्यधिकरतलतल्पम्। सप्तम्यर्थेऽव्ययीभावः। कल्पिता स्वापलीला यया तथाभूता परिमिलनेन करतलघर्षणेन रक्तिमोदयान्निमीलस्तिरोभवन्पाण्डिमा यस्यास्तादृशी तव गण्डपाली गण्डस्थली कर्त्री कस्य यूनः स्मरनृपतेर्लीलाया वशीकरणरूपाया यौवराज्याभिषेकमञ्जसा तत्त्वतो व्यञ्जयति सूचयतीति कथयेत्यन्वय। यः स्मरेण स्वत कर्तुमशक्यं तवैवंविध स्वापोद्दि करोति स ध्रुव वृद्धेन स्मरेण यौवराज्येऽभिषिक्त इति भावः। अनेन कंदर्पादप्यधिक वशीकारकत्वं व्यज्यते। अत्र लीलेत्यस्य द्विःप्रयोगात्कथितपदत्वम्।' इत्युदाहरणचन्द्रिकासक्षेप।

तुर्वैमुख्यम् । अतो लाटानुप्रासादावदोषत्वम् । अशक्त्यनुन्नयात् । इदं तु चिन्त्यम्—समासे प्रत्येकस्मिन्नपि पदे व्यवधानाल्लाटानुप्रासविरहेऽप्यस्य संभवात्कथं न पददोषत्वमिति ।

पतत्प्रकर्षम् अलंकारकृतस्य बन्धकृतस्य वा प्रकर्षस्य यत्रोत्तरं पातो निकर्षः ।

यथा—

'कः[1] कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कं कं कः कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥'

सूकराद्यभिधानेऽपि विकटबन्धकृतोऽनुप्रासकृतश्च प्रकर्षः सिंहाभिधाने पतितः । दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैरस्यम् । रसानुगुणतया तत्पातेऽपि न दोष. ।

समाप्तपुनरात्तम् । समाप्तं सत्पुनरात्तम् । वाक्ये समाप्ते पुनस्तदन्वयिशब्दोपादानं यत्रेत्यर्थः । यत्तु समाप्ते वाक्येऽविशेषविधायि विशेषणान्तरोपादानवत्त्वं तल्लक्षणम्' इति, तन्न । 'प्रागप्राप्त–' इत्यादौ वाक्यान्तरारम्भे विशेषणान्तरानुपादाने तल्लक्षणविरहेण तत्रानित्यदोषत्वव्युत्पादनविरोधात् । उदाहरणम्—

---

त्यधिकमित्यर्थ । कृतं पठितम् । **तत्पातेऽपीति** । प्रकर्षपातेऽपीत्यर्थ. । यथा— 'प्रागप्राप्त–' इत्यादौ 'येनानेन–' इत्यादि चतुर्थपादे । **समाप्तं सदिति** । तथा च कर्मधारयसमास. । जनितान्वयबोधं सत्पुनरुपात्तम् । शब्दान्तरस्य स्वेन सहैकवाक्यत्वाय पुनरावृत्तमित्यर्थ । अस्य विशेषं दर्शयति—**वाक्य इत्यादिना** । तदन्वयिशब्दस्तदन्वयिबोधकशब्दः । कैश्चिद्दर्शितं विषयं दूषयितुमुपन्यस्यति— **यत्त्विति** । **अविशेषेति** । प्रकृतोपयुक्तविशेषाबोधकेत्यर्थः । तेन 'अद्यापि स्तनवेपथुं जनयति श्वास प्रमाणाधिक.' इत्यत्र प्रमाणेत्यादि विशेषणान्तरोक्तौ न

---

१ 'क केति । कस्कादित्वात्तु कस्क इति युक्तम् । पञ्चानन सिंहो यतो यस्मात्सिंह्याः स्नेहेन यो विलास. कण्डूयनादिस्तेन बद्धा स्थिरीकृता वसति स्थितिर्येन तथाभूतो वर्तते । अत. क. क सूकरः कुत्र न घुरेद्भीम शब्द कुर्यात् । अपि तूत्तममध्यमाधमरूपः सर्व एव सर्वत्र । 'घुर भीमार्तशब्दयो.' इति दीपिका । 'घुरेत्पर्यटेत्' इति महेश. । कीदृक् । घुर्घुरायिता तादृशशब्दवती या घुरी नासिका । तया घोरो भीषणः । 'घुरी घोरं सूकरमुखाग्रम्' इत्यन्ये । 'घुरी वाद्यविशेषस्तद्वद्घोरः' इत्यपरे । एव क करी हस्ती कमलानामाकरमुत्पत्तिस्थान विगतकमल कर्तुं नोद्यत. । अपि तु सर्व. सर्वमपि । के केऽरण्यमहिषाः कानि वनानि नोन्मूलयेयुः । अपि तु सर्वाणि । स्वाश्रयोन्मूलनेन मदौत्कट्य सूच्यते । एवं च राजनि व्यसनशीले क्षुद्रा अपि भौमिका निर्मर्यादा भवन्तीति प्रस्तुतध्वननादप्रस्तुतप्रशसालंकार । अत्र वाच्यस्य सूकरादेरुत्तरोत्तरमुत्कृष्टतया तथैव समुचितस्य बन्धप्रकर्षस्य भङ्ग । उत्तरोत्तर तदपकर्षस्य स्फुटत्वात् ।' इत्युदाहरणचन्द्रिकासक्षेप..

'क्रेंकारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झंकारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्काणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः॥'

अत्र 'तनोतु वः' इति समाप्तमेव वाक्यं 'नववय-' इत्यादिविशेषणेनोपात्तम्। निराकाङ्क्षत्वं च दूषकताबीजम्। अतश्चानित्यदोषोऽयम्। वाक्यान्तरारम्भे तदभावात्।

अर्धान्तरैकवाचकम्। द्वितीयार्धगतमप्रधानहेत्वाद्यर्थकमेकं वाचकं यत्र तत्। यथा—

'मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च॥'

अत्र भूः सदर्भा तन्मसृणचरणपातं गम्यतामिति वाक्यम्। तत्र च तदित्यर्धान्तरगतम्। अत्र निराकाङ्क्षता दुष्टिबीजम्। श्रुतमात्रस्यैव भूसदर्भत्व-

---

दोष इत्यर्थः। प्रागप्राप्त–इत्यादौ हि येनेत्यादिना न परशोर्विशेषणान्तरमुच्यते किं तु परशोरेव प्रकृतपरामर्शियत्पदार्थविशेषणतेत्युक्तलक्षणासंभव इत्यर्थः। अथवा सामानाधिकरण्यपदार्थरूपविशेषणान्तरोपादानं नास्तीति तात्पर्यम्। **तदभावादिति**। यच्छब्दादिना निराकाङ्क्षत्वाभावादित्यर्थः। अत एवात्रापि 'यो नववयो-

---

१. 'क्रेंकार इति। स्वगृहं प्रस्थितान्पथिकान्प्रति कस्यचित्कवेरियमुक्तिः। तन्व्याः कञ्चुलिकाया अपसारणेऽर्थाद्भवद्भिः क्रियमाणे सति यो भुजयोराक्षेपो धूननं तेन स्खलतां कङ्कणानां क्काणः शब्दो वो युष्माकं प्रेम प्रीतिं तनोत्विति संबन्धः। कीदृश इत्यपेक्षायां क्रेंकार इत्यादीनि पञ्च रूपकाणि। क्रेंकार इति धनुर्ध्वनेरनुकरणम्। सुरतक्रीडार्थं पिक्यस्ता एव वा पिक्यः कोकिलाः। रतिरेव विलासादिफलोत्पत्तिस्थानत्वान्मञ्जरी तत्संबन्धिनां मधुलिहां झंकारः। रतिमञ्जरीमधुलिहां लम्पटतया तत्त्वेनाध्यवसितानां कामुकानां झंकारो हर्षोद्भवचुम्बनादिशब्दः। लीलार्थं वा चकोरी लीलैव वा चकोरीति पूर्ववत्। नववयस्तारुण्यं तस्य लास्याय तत्तद्विलासादिरूपनृत्ताय वेणुस्वनो वंशीध्वनिः। अत्र समाप्तमेव वाक्यं नवेत्यादिविशेषणेन स्वान्वयाय पुनरुपात्तम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'मसृणेति। जनकपुत्री सीता पथि मार्गे पथिकानां वधूभिरश्रुपूर्णैर्लोचनैर्वीक्षितं इति पूर्वोक्तप्रकारेण शिक्षिता चेत्यन्वयः। इति किम्। हे बाले, यतो भूः सदर्भा दर्भाङ्कुरसहिता। तस्मान्मसृणो मन्दश्चरणपातो यत्र तथा गम्यताम्। एवम् यतो घर्म आतपः कठोरस्तीक्ष्णस्तस्मान्मूर्ध्नि सिचयस्य वस्त्रस्यान्तं प्रान्तं विरचयेति। अत्र पूर्वार्धान्वयिनस्तदित्यस्यार्धान्तरगतत्वात्प्रतीतिविलम्बः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

स्याक्षेपादिना हेतुत्वप्रतीतेः। यस्य तु कर्त्रादेर्न तथा प्रतिपत्तिस्तस्यार्थान्तरोपादानेऽप्यात्मलाभ एव नास्ति। तल्लाभेऽपि वा न दोषत्वमिति।

अभवन्मतयोगम्। अभवन्नभिमतो योगो यत्र। न चाविमृष्टविधेयमध्येऽस्यान्तर्भाव। उपजीव्यत्वेन भेदात्। इति केचित्। वस्तुतस्तु तत्र पदार्थयोरुपस्थितयोरन्वयो भवत्येव। परं त्वनभिमतेनाप्राधान्यादिना रूपेण। अत्र तु संबन्ध एव तयोर्न प्रतीयत इति महान्भेदः। नन्वेवमभवन्मतयोगमित्यत्र योगे मतत्वविशेषणानर्थक्यमिति चेत्, न। एकवाक्यस्थपदोपस्थापितत्वादिरूपस्य योगस्यापि सत्त्वात्। मतत्वं चान्वयबोधविषयत्वमित्यप्रसङ्गः। एतच्च क्वचिद्विभक्तिभेदात्। यथा—

'येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
लीलापानभुवश्च चन्दनतरुच्छायासु यैः कल्पिताः।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम्॥'

अत्र यैरित्यस्य विशेष्यतया क्षपाचारिशब्दार्थो विवक्षितः। न च तेन ततस्तथायोगः प्रतीयते। विभक्तिभेदात्। अथ यैर्लीलापानभुवः कल्पिता

---

लास्याय' इत्युक्तौ न दोष इति ज्ञेयम्। **कर्त्रादेरिति**। यथा—'तव तुल्यः प्रभो नास्ति भुवनत्रितयोदरे। राजा न[य]दयाशील–' इत्यादावित्यर्थः। **आत्मलाभ एवेति**। अप्रधानेत्युक्तदोषस्वरूपस्यैवाभावादिति भाव। **तल्लाभेऽपीति**। यथाश्रुत इत्यर्थः। निराकाङ्क्षत्वस्य दूषकताबीजस्याभावादित्यर्थः। योगोऽन्वयबोध। **उपजीव्यत्वेनेति**। अविमृष्टविधेयांशत्वस्य मतयोगभावप्रयोजकत्वेनेत्यर्थः। **पदार्थयोरिति**। परस्परान्वयित्वेन विवक्षितयोरित्यर्थः। तथा च तत्रान्वयविशेषाभाव। इह तु तत्सामान्याभाव इति भाव। **नन्विति**। अन्वयसामान्याभावविवक्षायां विवक्षितार्थकमतत्वविशेषणमन्वये व्यर्थम्। प्रत्युताविमृष्टविधेयांशसंकीर्णतापादकमेव स्यादिति भावः। नात्र विवक्षितार्थकतया मतशब्दप्रयोग। किं तु शाब्दबोधविषयत्वार्थकतयेति समाधत्ते—**नेति**। तथान्वयो-

---

१ 'येषामिति। हनुमता लङ्कायां दग्धायां वीरराक्षसानधिक्षिपतः कस्यचिद्रावणं प्रतीयमुक्तिः। हे प्रभो, येषां क्षपाचारिणां निशाचराणां प्रतापोष्मभिः कर्तृभूतैस्ताः प्रसिद्धास्त्रिदशानां देवानामिभस्यैरावतस्य दानसरितो मदजलनद्यः पीताः। शोषिता इत्यर्थः। तथा यैर्नन्दनस्येन्द्रक्रीडावनस्य तरूणां छायासु लीलया यत्पानमर्थान्मद्यस्य तस्य भुवो भूमयः कल्पिता रचिताः। येषां हुंकृतयो हुंकाराः कृतोऽमरपतेरिन्द्रस्य क्षोभो याभिस्तथाभूता। आसन्निति शेषः। तैः क्षपाचारिभिस्तव परितोषकारि प्रवादोचितं सभायां कथनयोग्यं प्रवादस्य सख्यातेरुचितं वा किंचित्किं विहितम्। अपि तु न किंचिदित्यन्वयः। अत्र यैरित्यस्य क्षपाचारिपदार्थेनाभिमतोऽन्वयो न भवति। भिन्नविभक्तिकत्वात्।' इत्युदाहरणचन्द्रिकासंक्षेपः।

येषां प्रतापोष्मभिरित्यादिप्रकारेण यच्छब्दाभिधेययोरेव तथान्वयोऽस्तु किं विशेष्यान्तरविवक्षयेति चेत्, न । अनुवाद्यानां हि विधेयेनैव साक्षादन्वयः न तु तदनन्तर्भाव्यनुवाद्यान्तरेण । गुणत्वस्योभयत्र तुल्यतया विशेष्यत्वविनिगमनाया अशक्यत्वात् । तदेतदुक्तम्—'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति । अत एव 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति ।' इत्यारुण्यादीनां पिङ्गाक्ष्यादिभिर्नान्वयो नापि गवा । तस्या अपि क्रयसाधनत्वेन गुणत्वात् । किं तु क्रयेणैव । कथं तर्हि धर्म्यन्तरस्थैरारुण्यादिभिः क्रय इति चेन्न । आरुण्यादीनां गवान्तानामार्थसमाजात् । तर्हि तद्वदेवात्राप्यार्थ एव समाजोऽस्त्विति चेत्, भवेदेवम् । यदि तद्वत्समानविभक्तित्वं भवेत् । कथं तर्हि भवत्यभिमतो योग इति चेत्, 'क्षपाचारिभिः' इति पाठे कथम् । सकलयत्पदनिर्दिष्टानां तत्पदेन परामर्शे तेषां सर्वेषां क्षपाचारित्वावगतेः । क्वचिन्न्यूनतादिनिबन्धनो यथा—

'त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥'

---

ऽभेदसंसर्गेण विशेषणविशेष्यभावेनान्वय. । 'य· शुक्लवासास्तमानय' इत्यादिषु यत्प-च्छब्दजन्यतादृशबोधस्य समानविभक्तिकत्वाभावेऽपि दर्शनादिति भाव । **अनुवाद्यानां हीति** । यत्पदनिर्देश्यानां हीत्यर्थ. । विधेयेन विधेयत्वेन स्वार्थबोधकतच्छब्दार्थेनैव । **गुणत्वस्येति** । यच्छब्देन यादृशधर्मविशिष्टं निर्दिष्टं तत्तत्पदविधेये गुणभूतम् । यथा—'यः शुक्लवासास्तमानय' इत्यादौ शुक्लवसनादेर्विधेयानयनाङ्गत्वेन गुणत्वमित्यर्थ । यथाश्रुतेऽनुवाद्यस्य विधेयं प्रति प्रधानत्वाद्गुणत्वोक्तेरसंगतेः । **धर्म्यन्तरस्थैरपीति** । 'वाससा क्रीणाति' इति वचनात्क्रयसाधनवस्तुपरिच्छेदकतयाप्यारुण्यादि क्रियाङ्गं स्यादित्यर्थः । **आर्थसमाजादिति** । परस्पराकाङ्क्षयार्थतः परस्परनियमादित्यर्थः । ननु क्षपाचारिभिरित्युक्तावपि येषामित्यादिषष्ठ्यन्तान्वयानुपपत्तिरित्याशयेन पृच्छति—**कथमिति** । भिन्नविभक्तिकेनापि तत्पदेन सक-

---

१. 'त्वमेवमिति । नायिका प्रति दूत्या इयमुक्तिः । हे सुभगे, त्वमेवं दृश्यमानोत्कर्षं सौन्दर्यं यस्यास्तथाभूता । स च । प्रकृतनायकोऽपीत्यर्थ· । चकारस्याप्यर्थत्वात् । रुचिरतायाः सुन्दरतायाः । परिचित· सबन्धी । इह ससारे कलाना चातुरीणा परा सीमानं काष्ठां युवामेव भजथ आश्रयथ· । 'सीमान्त' इति पाठेऽपि स्फुट एवार्थः । तत्तसादित्येवंविधं वां युवयोर्द्वन्द्व मिथुन दिष्ट्या भाग्येन सवदत्यपि परस्परयोग्यमपि भवति । अत· पूर्वोक्ताच्छेषमवशिष्ट समागमरूप यदि स्यात्तदानीमिह द्वन्द्वे विद्यमानया गुणितया जित स्यादित्यनुषङ्गेणान्वयः । तदैव गुणिताया उत्कर्षोऽन्यथा वैफल्यादपकर्ष इति भावः । अत्र यदीत्यस्याभावाच्चदित्यस्य च तदर्थाबोधकत्वादभिमतान्वयालाभः ।' इत्युदाहरणचन्द्रिकासंक्षेपः·

अत्र शेषसंपत्तेर्गुणिता जयप्रयोजकत्वान्वयो विवक्षितः । स च द्विधा संभवति—यदित्यस्य चेदित्यर्थकतया, तद्यदि पदार्थयोर्विवक्षया वा । तयोर्यदि प्रथमे तात्पर्यं तदावाचकता । द्वितीये तु न्यूनपदत्वमिति । न च न्यूनपदस्याप्यत्रैवान्तर्भावः । क्वचिन्न्यूनपदेऽप्यध्याहारादिना मतयोगसंभवे विलम्बादेरदुष्टत्वसंभवात् । क्वचिदाकाङ्क्षाविरहाद्यथा—

'सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
　देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
　तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥'

अत्र पूर्वार्धार्थेनोत्तरार्धस्य योगो विवक्षितः, न च कथंचित्संपद्यते । तथाहि—अर्थानां वाक्यार्थयोगः क्रियात्वेन वा कारकत्वेन वा संबन्धित्वेन वा एषां विशेषणतया वा हेतुत्वलक्षणत्वादिना वा तदादिना पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद्वाक्यैकवाक्यतया वा भवेत् । तत्र कोदण्डादेः प्रथमतृतीयपञ्चमपष्ठाः पक्षास्तद्विशेपणता चासंभाविता एव । कारकत्वमपि कर्मकर्तृभावाभ्यामन्यत्र घटते । तत्राकर्णनक्रियायां पदार्थमात्रस्य कर्मत्वे विवक्षिते 'कोदण्डं शरान्' इत्यादि स्यात् । अथ परस्परान्विता मिलिताः पदार्थाः कर्म, न प्रत्येकम् । अतो न प्रत्येकवाचकात्कोदण्डादिशब्दाद्द्वितीयेति चेत्, तर्हि शुद्धप्रातिपदिकार्थमात्रार्थकत्वात्कोदण्डः शरा

---

लयच्छब्दार्थपरामर्शे क्षपाचार्यभेदलाभ इत्याह—**सकलेति** । **तद्यदीति** । शेप यत्तद्यदि स्यादितीत्यर्थ । **अध्याहारादिनेति** । आदिपदेन लक्षणापरिग्रह· । तथा च स्वरूपायोग्यविषये प्रकृतदोष इति विपयभेद इति भाव· । उत्तरार्धस्य तदर्थस्य । **कर्मत्व इति** । कर्मविशेषणत्वादित्यर्थ । येनेत्युत्तरवाक्यगतयच्छब्दाक्षिप्तेन हि तच्छब्देन कर्म समर्प्यते तत्राभेदेन कोदण्डादेरन्वये समानविभक्तिकत्वस्यापेक्षितत्वात्प्रत्येक द्वितीया स्यादित्यर्थ· । **अथेति** । परस्पर कर्तृकर्मभावेनानन्विता· समुदिता· कोदण्डादयस्तच्छब्दोपात्तकर्मविशेपणमिति न प्रत्येकं द्वितीयापत्तिरित्यर्थ । **तर्हीति** । कर्तृकर्मभावान्वये हि तद्बोधकविभक्तिप्रसङ्गः

---

१ 'सङ्ग्रामेति । खण्डप्रशस्तौ पद्यमिदम् । सङ्ग्राम एवाङ्गण निर्भयसचारात् । आगतेन भवता चापे समारोपिते मौर्व्यामारोपिते सति । देवेति सबोधनम् । येन येन सहसा झटिति यद्यत्समासादितं प्राप्त तदाकर्णयेति सबन्ध । केन कि समासादितमित्याकाङ्क्षायामुत्तरार्धम् । तत्र च समासादितमित्यस्य वचनादिविपरिणामेन समासादिता· समासादित समासादित समासादितेत्येवमनुषङ्गो बोध्य· । भूमण्डलेन च राज्ञ· समासादन स्वस्वामितयेत्यवगन्तव्यम् । अत्र कोदण्डादीना कर्तृकर्मभावेनान्वयोऽभिमतो न सभवति । विभिन्नलिङ्गवचनतया । कोदण्डेन शराः समासादितमित्यन्वयायोगात् । आकर्णनक्रियाकर्मत्वेनान्वये कोदण्ड शरानित्याद्यापत्तेरभवन्मतयोगत्व दोषः ।' इत्युदाहरणचन्द्रिकासक्षेपः·

इत्यादि प्रथमा स्यात्। 'माहिषं दधि सशर्करं पयः' इत्यादिवत्। अथ समासादनक्रियायां कोदण्डादीनां कर्तृतया शरादीनां तु कर्मभावेनान्वय इति चेत्, न शराः समासादितमित्यनन्वयात्। किं च येन यत्समासादितं कोदण्डेन शराः समासादितास्तदाकर्णयेति पर्यवसाने कर्त्रोः कर्मणोश्च भेदः प्रतीयेत न चाकाङ्क्षानिवृत्तिः स्यात्। अथ यच्छब्दस्य बुद्धिस्थवाचकतया कोदण्डादिपदार्थ एव यच्छब्दार्थः। तथा च यच्छब्दार्थस्य क्रियान्वये कोदण्डादीनामन्वयो जात एवेति चेत्, न। एवं हि कोदण्डादीनां पुनरुपादानं व्यर्थमेव स्यात्। तस्मादस्ति कश्चित्प्रकारकृतस्तदर्थयोर्भेद इति तदवच्छिन्नतया योगः कथंचिदुपपादनीयः। एतेनाक्षिप्ततच्छब्दार्थत्वमपि निरस्तम्। अथ कर्तृकर्मणोर्विशेषणानि कोदण्डादीनीति चेत्, न। कोदण्डेन येन शरा यत्समासादितं तदाकर्णयेति वाक्यार्थपर्यवसाने पुनर्विशेषानुक्तावाकाङ्क्षया अनिवृत्तिप्रसङ्गात्, शरा यदित्याद्यन्वयबाहुल्यप्रसङ्गाच्च। अत एव 'कोदण्डादिशरादिकर्तृकर्मणी। तद्विशेषणं तु यच्छब्दार्थ इत्यपि व्युदस्तम्। अथ येन

---

स्यात्। तदभावे तु प्रत्येकं साधुत्वार्था प्रथमा स्यादित्यर्थः। अत्र दृष्टान्तमाह—**माहिषमिति**। 'माहिषं दधि सशर्करं पयः कालिदासकविता नवं वयः। एणमांसमबला च कोमला स्वर्गशेषमुपभुञ्जते जनाः॥' इत्यत्र हि माहिषदध्यादिसमुदायस्याभेदेन स्वर्गशेषपदार्थे कर्मणि समन्वयः। वृत्तौ वाक्यार्थपदं पदार्थसमुदायपरम्। यथाश्रुते प्रथमाया आपादनासंभवात्। 'परस्परान्विता' इति पाठस्तु प्रामादिक एव। वाक्यार्थकर्मताया अनुपदमेव शङ्क्यमानत्वाच्चेति बोध्यम्। **अथेति**। एवं च कोदण्डादेः प्रत्येकं समुदितस्य वा नाकर्णनक्रियान्वयो येन प्रत्येकं द्वितीया प्रथमा वा स्यात्। किं तु समासादनक्रियायामुपात्तविभक्तिभिरेव वाक्यार्थाना चाकर्णनक्रियायां कर्मत्वेनान्वय इत्यर्थः। समासादितमिति लिङ्गवचनविपरिणामेनान्वयमाशङ्क्याह—**किं चेति**। कर्त्रोः येनेति कोदण्डेनेति पदोपात्तयोः कर्मणोः। यद्यदिति शरा इत्यादिपदोपात्तयोः। **भेद इति**। येन कोदण्डेनेत्येवमभेदान्वयाबोधादित्यर्थः। इष्टापत्तिमाशङ्क्याह—**न चेति**। येन यदित्यस्य विशेषानुक्तेरिति भावः। येन येनेत्यनेनैव बुद्धिस्थकोदण्डादिबोधकेनाकर्णनक्रियाकर्मत्वेन कोदण्डादेरन्वयान्न तेषामनन्वय इति शङ्कते—**अथेति**। अस्मिन्पक्षे उत्तरार्धवैयर्थ्यम्। यच्छब्दार्थतात्पर्यग्राहकत्वे तु तदेवोपादेयं न येनेत्यादीत्याह—**एवं हीति**। प्रकारकृतो बुद्धिस्थकोदण्डत्वादिप्रकारभेदकृतः। तदर्थयोर्यच्छब्दकोदण्डादिशब्दार्थयोः। **आक्षिप्तेति**। उत्तरवाक्यस्थयच्छब्दाक्षिप्तेत्यर्थः। **अथेति**। कर्तृकर्मणोर्यच्छब्दोपात्तयोः। **विशेषणानीति**। कोदण्डेन येनेत्येवं पूर्वार्धैकवाक्यतापन्नानीत्यर्थः। अत एवोक्तदोषात्। येन कोदण्डेनेति कोदण्डादिविशेषणत्वं यत्पदार्थस्येति पक्षेऽपि साकाङ्क्षत्वम्। शरा यदित्याद्यसामञ्जस्यं च तुल्यमित्यर्थः। **अथेति**। अत्र प्रश्नवशेन कोदण्डादेर्यत्पदार्थाभेदलाभ उत्तरवाक्यस्यासंबद्धार्थकत्वपरिहारश्च भवतीति भावः। असौ प्रश्नः। उत्तरेण प्रश्नो

यदिति सामान्यतोऽवगमात्केन किमिति विशेषप्रश्ने कोदण्डेन शरा इत्याद्युत्तररूपाणि वाक्यान्तराणीति चेत्, न । तादृशप्रश्नाश्रवणात् । अथासावुन्नीयते एवमुत्तरालंकारोऽपि लभ्यत इति चेत्, न । येन यदासादितं तदाकर्णयेति प्रतिज्ञाय प्रश्नं विनापि कोदण्डादिनिर्देशसंभवेन तदुन्नयनासिद्धेः । ननु चासादितमित्यस्य क्रियापदस्य वचनादिविपरिणामेनानुषङ्गे कोदण्डेन शराः समासादिता इत्यादिवाक्यान्तरारम्भे को दोष इति चेत्, वाक्यभेदः । पूर्वापरार्धयोरनन्वयतादवस्थ्यात् । लोके तादृशवाक्यभेदेऽपि दोषाभावात्तथा प्रयोग इति ।

व्यङ्ग्यस्यापि विवक्षितयोगाभावेऽस्यावतारो यथा—

'चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥

अत्र रेणुकाकण्ठबाधाजन्यनिन्दया भार्गवस्य योगो विवक्षितः तन्निन्दाप्रकरणात् । परशोः स्वक्रियापाटवेनानिन्दनीयत्वाच्च न च तथा प्रतीयते । कृतवतेति तृतीयया परशुनैव संबन्धावगमात् । 'कृतवतः' इति पाठे तु भार्गवे निन्दायोगः प्रतीयते, यदि तु परशुनिन्दानन्तरं विदग्धोक्त्या भार्गवेऽपि निन्दावगमस्तदा कृतवत्त्वस्यानेन योगाद्वाच्यायोगोदाहरणमेवैतत् । तथाहि स्पर्धायोग्यत्वोपपत्तये परशुस्वामिनो महादेवशिष्यत्वादीनि विशेषणान्युपात्तानि तथा तदयोग्यत्वोपपादनाय तस्यैव कश्चिद्धर्मो वक्तुमुचित इति भार्गवेण कृतव-

---

न्नयने उत्तरालंकारो वक्ष्यत इत्ययं पक्षो युक्त इत्यर्थः । दूषयति—**नेति** । सामान्यतोऽभिहितस्यार्थस्य पर्यवसानाय प्रश्नं विनाप्युत्तरवाक्योपपत्तेः प्रश्नोन्नयनासंभवात् । यत्र प्रश्नोन्नयनं विना वाक्यान्तरानुपपत्तिस्तत्रैव तदुन्नयनेनालंकारत्वोपगमात् । यथा—'वाणिअअ हत्थिदन्ता कुत्तो अम्हाणं—' इत्याद्युदाहरणे । तर्हि निर्दुष्ट एवायं पक्षः । आसादितमित्यस्य लिङ्गवचनविपरिणामेनान्वयोपपत्तेरिति शङ्कते—**नन्विति** । वैरस्याप्रसक्त्या लोके दुष्टत्वाभावेऽपि काव्ये तत्प्रसक्त्या दोषत्वमवर्जनीयमित्याह—**लोक इति** । **संबन्धावगमादिति** । निन्दाप्रयोजकरेणुकाकण्ठबाधाकारित्वसंबन्धावगमादित्यर्थः । **विदग्धेति** । अन्यनिन्दाव्याजेनान्यनिन्दोक्तिरूपयेत्यर्थः । अनेन भार्गवेण । ननु कृतवत्त्वस्य भार्गवान्वयविवक्षाया किं मानमत आह—**तथा हीति** । परशोर्हि स्पर्धनीयत्वं स्वामिद्वारकमिति तत्प्रयोजकविशेषणानि भार्गव एव यथोक्तानि । तथा तद्व्यतिरेकप्रयो-

---

१. 'चापाचार्य इति प्रागेव व्याख्यातम् । अत्र रेणुकाकण्ठच्छेदकारित्वस्य भार्गवेण योगोऽभिमतः । तन्निन्दाप्रस्तावात् । न चासौ संभवति । कृतवतेति तृतीयान्तस्य परशुनान्वयादिति स एव दोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः ।

त्वस्यान्वयो विवक्षितो न प्रतीयत इति दुष्टत्वम्। एवं च चण्डीदासादिव्याख्यानमनादेयम्।

क्वचित्समासाच्छन्नतया मतयोगाभावः। यथा—

'चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः॥'

अत्र सङ्ग्रामाध्वरस्य ऋत्विगादिषु सर्वत्रान्वयो विवक्षितो न तु प्रतीयते। समासच्छन्नत्वात्।

क्वचिद्व्युत्पत्तिविरोधात्। यथा—

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥'

अत्र तनुपदार्थस्य पार्वत्या योगोऽभिमतो दण्डपादेन प्रतीयते। वाक्ये यत्प्रधानं तत्रैव निजादिपदव्युत्पत्तेः। दूषकताबीजमिष्टप्रतीतिविरह इति नित्यदोषोऽयम्।

अनभिहितवाच्यमित्यावश्यके ण्यः। तेनानभिहितं वाचकपदातिरिक्तमवश्यवाच्यं यत्र तदित्यर्थः। वाचकपदानभिधाने न्यूनपदत्वव्यवस्थापनात्। यत्तु "न्यूनपदेऽप्रतीतिमात्रमत्र तु विरुद्धा प्रतीतिरित्यनयोर्भेदः। 'अप्राकृत–'

---

जकमपि तत्रैव वक्तुमर्हम्। अतो विवक्षिताप्रतीतिरिति भावः। एवं चेत्यनन्तरं सतीति शेष। **वाक्ये यत्प्रधानमिति**। प्रधानक्रियाकर्त्रन्वितस्वार्थबोधकत्वव्युत्पत्तेरित्यर्थ। आदिपदेन स्वात्मादिपदपरिग्रह। अनभिहितमनुक्तम्। वाच-

---

१. 'चत्वार इति। वेणीसहारे दुन्दुभिध्वानमाकर्ण्य रणयज्ञ प्रवर्तेत इत्युक्त्वा भीमस्योक्तिरियम्। चत्वारो युधिष्ठिरव्यतिरिक्ता वय भ्रातर ऋत्विजः। अर्थात्सङ्ग्रामाध्वरे। एवमग्रेऽपि योज्यम्। स सर्वज्ञत्वेन प्रसिद्धो भगवान्हरिः श्रीकृष्णः कर्मणामुपदेष्टोपदेशकः सदस्यापरनामधेय.। सङ्ग्रामाध्वरे दीक्षितो गृहीतनियमो नरपतिर्युधिष्ठिर.। पत्नी द्रौपदी गृहीतं व्रत दुर्योधनवधपर्यन्त वेणीसयमरूप यया तथाभूता। सपत्नीकस्यैव यज्ञाचरणौचित्यात्। कौरव्या दुर्योधनाद्याः शत भ्रातर पशव.। तत्तुल्यतया वध्यत्वात्। प्रियाया द्रौपद्याः परिभव सभाया केशाम्बराकर्षणादिरूपस्तज्जनितस्य क्लेशस्योपशान्तिरेव फलम्। राजन्याना क्षत्रियाणामुपनिमन्त्रणायाह्वानाय हतो दुन्दुभि स्फीतं स्निग्ध यथा स्यात्तथा रसति। शब्दायत इत्यर्थ.। ताडने स्निग्धशब्दोदयाज्जयसूचनम्। 'यशोदुन्दुभि' इति पाठे यश एव दुन्दुभिरिति रूपकम्। स्फीतमिति यशोविशेषण वा। अत्र ऋत्विगादीनामध्वरसभवस्याभिमतस्यासभवः स्पष्ट'।' इत्युदाहरणचन्द्रिकासक्षेपः.

इति वक्ष्यमाणोदाहरणे च मत्संबन्धित्वेन वीरशिशुप्राप्तिरेव विरुद्धा प्रतीतिः" इति कस्यचिद्व्याख्यानं तदनुभवविरुद्धम्। तथानुभवस्याप्रतीतेः। इदं चान्यथावाच्यस्यान्यथाभिधानाद्वा, अवाचकस्य द्योतकादेरनभिधानाद्वा। आद्यं यथा—

'अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्याहृतस्य मम नाम तथापि नास्था।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
सौन्दर्यसारसमुदायमयः पदार्थः॥'

अत्राहमपहृतोऽस्मीति प्रकारेणापहृतत्वस्य विधिर्वाच्यः। तेन वाक्यद्वयसंपत्तौ तथापीत्युपपद्यते। द्वितीयवाक्यगतत्वेनैव तस्य प्रतीतेः। नन्वयमविमृष्टविधेयांश एवेति चेत्, न। नहि विधेयाविमर्शमात्रमत्र दूषणम्। किं तु तथापीत्यस्यासंगतिरपि। तदनुरोधेनैव ह्यपहृतत्वस्य विधेयत्वाभ्युपगमो न तु तत्प्राधान्यात्। एतेन 'अवान्तरवाक्येन विधेयाविमर्शः' इति समाधानमनादेयम्। बीजाभावात्। 'क्षणमप्यमुक्त—' इत्यवान्तरवाक्य एव तदुदाहरणाच्च। अस्तु वात्रोदाहरणे विधेयाविमर्शस्तथापि द्वितीयभेदे तदसंकरमात्रेणैव दोषभेदव्यवस्थितेः। यथा—

'एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्ती।

---

कपदातिरिक्तमर्थाद्योतकम्। अर्थादेर्वाचकत्वमते तु स्वातन्त्र्येणाप्रयोज्यम्। वाचकपदातिरिक्तेत्यनेन विवक्षितमिति ज्ञेयम्। तथानुभवस्य तत्संबन्धितया वीरशिशुकानुभवस्य। **द्वितीयवाक्येति**। तस्य द्वितीयवाक्यगतत्वेनैव वाक्यार्थप्रतीतेरित्यन्वयः। नन्वास्थाप्रसञ्जकतयापहृतत्वस्य प्राधान्यमावश्यकमतो विधेयाविम-

---

१. 'अप्राकृतस्येति। रामेण धनुर्भङ्गे कृते जनकस्योक्तिरियम्। दृष्टैश्चेति भिन्नक्रमचकारेण श्रुतत्वसमुच्चयः। अप्राकृतस्य यत्किंचित्कौतुकानाकर्षणीयस्यात्यद्भुतैर्दृष्टैः श्रुतैश्च चरितातिशयैर्यद्यप्येषा हृतस्य वशीकृतस्य मम तथापि तेषु नास्था। अनादर इत्यर्थः। एष पुरोवर्ती रामो वीरशिशुकाकृतिर्वीरबालकाकृतिरप्रमेयस्यापरिमितस्य माहात्म्यस्य साराणां य समुदायस्तन्मयः कोऽप्यनिर्वाच्यः पदार्थः। वर्तत इति शेषः। अत्र तथापीत्यस्य यद्यपीत्येतत्साकाङ्क्षतया यद्यप्यपहृत इति वाच्यं न च तथोक्तमित्यनभिहितवाच्यत्व दोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'एषोऽहमिति। उषाहरणे स्वप्ने उषानिरुद्धयोर्वास्तवं संगमं निगूढं सपाद्यागतस्य कामस्येयमुक्तिः'। एषोऽहं कामोऽसुरराजस्य बाणस्य सुतामुषाख्यां स्वप्नेऽनिरुद्धेन प्रद्युम्नसुतेन या घटना समागमस्तेनाधिगतं प्राप्तमभिरूपं योग्यं लक्ष्म्याः सौन्दर्यश्रियः फलं यया तथाभूतां विधाय संपाद्य प्राप्त आगत इत्यन्वयः। कीदृशः। अद्रितनयाया मुखपद्माज्जन्म यस्य तथाभूतः। दाहानन्तरं हरेण वरे दत्ते गौरीवदनात्कामोत्पत्तिरिति पुराणप्रसिद्धिः। पुनः कीदृक्। सुरासुरमनोरथानां दूरवर्ती।

स्वप्नेऽनिरुद्धघटनाधिगतानुरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥'

अत्र सुरासुराणामपि मनोरथस्य दूरवर्तीत्यप्यर्थोऽवश्यवाच्यः। अन्यथान्यमनोरथविषयत्वं प्रतीयते। असमासेऽप्येष दोषो यथा—

'प्रणयभङ्गपराङ्मुखचेतसस्त्वयि निबद्धरतेः प्रियवादिनः।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः॥'

अत्र लवमपीत्यप्यर्थोऽवश्यवाच्यः। अन्यथा लवनिषेधे स्थूलप्रतीतिप्रसङ्गात्। दूषकताबीजं प्रथमेऽनभिमतप्रतीतिः अन्त्ययोस्तु विरुद्धप्रतीतिरिति नित्यदोषोऽयम्।

अपदस्थेति। अस्थानस्थपदमस्थानस्थसमासं चेति द्वयमित्यर्थः। अस्थानस्थत्वं चायोग्यस्थानस्थत्वम्। तयोराद्यं यथा—

'प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि॥'

---

र्थोऽस्त्येवेत्यत आह—**अस्तु वेति**। द्वितीयभेदे द्योतकानुक्तिरूपे। **अप्यर्थ इति**। अतश्चापिरवश्यवाच्य इति भावः। एवमग्रेऽपि। अन्वयप्रतियोगिसंनिधि-

---

सुरासुरैर्मनसाप्यचिन्त्यगतिरित्यर्थ.। अन्यथेन्द्रियान्तरगम्यत्वसभावनापत्ते.। अत्राप्यर्थोऽवश्यवाच्योऽनभिहितः।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'प्रणयेति। विक्रमोर्वशीये उर्वशीं प्रति पुरूरवस उक्तिरियम्। हे मानिनि, मामकमपराधस्य लव लेश पश्यसि। यतो यस्मादपराधलेशाद्दासभूत जन मल्लक्षण त्यजसीत्यन्वयः। कीदृशस्य मम। त्वयि निबद्धरतेः स्थिरानुरागस्य। तथा प्रियवादिनः। एवं प्रणयभङ्गे पराङ्मुख तद्भीरु चेतो यस्य तथाभूतस्य। एव विशेषणत्रयस्यापराधलेशाभावोपपत्त्याभिप्रायगर्भत्वात्परिकरालंकारः। अत्रापि लवमपीत्यवश्य वाच्यम्। अन्यथा लवनिषेधेऽपि स्थूलसभावनापत्तेः।' इत्युदाहरणचन्द्रिकासंक्षेपः. काव्यप्रकाशपुस्तकेष्वस्मिञ्श्लोकपूर्वार्धे प्रथमद्वितीयपादयोर्व्यत्यय. उदाहरणचन्द्रिकायामपि 'त्वयीति' इत्येव प्रतीक गृहीतमस्ति.
२. 'प्रियेणेति। किरातार्जुनीये जलक्रीडावर्णने पद्यमिदम्। काचिन्नायिका प्रियेण कान्तेन विपक्षसनिधौ सपत्नीसमक्ष सग्रथ्य सम्यग्ग्रथित्वा पीवरौ पीनौ स्तनौ यत्र तथाविधे वक्षस्युपाहिता निहितां जलेनाविला म्लानामपि स्रज माला न विजहौ न परित्यक्तवतीत्यन्वयः। कुत इत्याकाङ्क्षायामाह—वसन्ति हीत्यादि। हि यस्मात्प्रेम्णि गुणा वसन्ति न वस्तुनि। प्रेमसत्त्व एव वस्तुन उपादेयत्वचित्ताकर्षकत्वयोर्दर्शनात्तदभावे चादर्शनादन्वयव्यतिरेकाभ्या प्रेमैवोपादेयं चित्ताकर्षकं च भवतीति तदेव गुणवदित्यर्थः। तथा च सपत्नीसमक्ष निर्माय प्रेमपूर्वक कान्तेन हृदि निहितायाः स्रजो जलाविलतया सौरभाभावेऽपि प्रेमास्पदतयापरित्याज्यत्व युक्तमिति भाव.। अत्र नकारोऽस्थानस्थः। न काचित्, अपि तु सर्वा इति विरुद्धप्रतीतिप्रसङ्गात्।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र न काचिदिति न योग्यं नञः स्थानम्। प्रतियोगिसंनिधिर्हि तथेति न युक्तम्। तद्व्यवधानेऽपि 'न खलु न खलु बाणः संनिपात्योऽयमस्मिन्' इत्यादौ निरवद्यप्रयोगदर्शनात्। परं तु न काचिद्विजहौ अपि तु सर्वा एव विजहुरिति विरुद्धप्रतीतिप्रसङ्गादयोग्यं स्थानमेतत्। विरुद्धप्रतीतिजननादिव विवक्षितोपयोगस्य पदस्योपयोगासंभवादपि स्थानस्यायोग्यत्वम्। यथा—

'लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकंधरेन्दुशकलेनान्तःकपोलस्थलम्।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया
प्रोन्मृष्टः करपङ्कजेन कुटिला ताम्रच्छविः पातु वः॥'

अत्र कुटिलाताम्रच्छवित्वं नखलक्ष्मशङ्काबीजमिति तत्पूर्वमेव प्रयुज्यमानमुपयुज्यते न तु पश्चादिति स्पष्टं दुष्टिबीजम्। नित्यश्चायम्।

अस्थानस्थसमासं यथा—

'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।

---

१. 'लग्न इति। शितिकधरस्य महादेवस्येन्दुशकलेन चन्द्रखण्डेन निद्रान्तरे स्वापमध्येऽन्तःकपोलस्थल कपोलस्थलमध्ये लग्नो मुद्राङ्कस्तदाकारचिह्न वो युष्मान्पातु रक्षत्विति संबन्धः। कपोलस्थलं तु महादेवस्येति केचित्। पार्वत्या इत्यन्ये। शितिकधरपदोपादानस्वारस्यात्तु चरमपक्ष एव युक्त प्रतिभाति। कीदृशेनेन्दुशकलेन। केल्या क्रीडया यः कचग्रहस्तेन श्लथा शिथिला या जटा तस्या लम्बो लम्बन यस्य तथाभूतेन। एवं च कपोलसबन्धोपपत्ति। कीदृशो मुद्राङ्क। पार्वत्या नखलक्ष्मणि नखचिह्ने शङ्किता संजातशङ्का या सखी तस्या नर्मस्मितेन लीलास्मितेन या व्रीडा लज्जा तया हेतुभूतया करपल्लवेन प्रोन्मृष्टो मार्जित। तथाविधस्मितेन व्रीडा यस्या इति पार्वत्या विशेषणमित्यन्ये। पुनः कीदृक्। कुटिलश्चासावाताम्रच्छविरीषदारक्तकान्तिः। इदमेव च नखलक्ष्मशङ्काबीजमिति। तत. पूर्वमेवैतत्पदस्थान युक्तम्।' इत्युदाहरणचन्द्रिकासक्षेप. २. 'अद्यापीति-। असौ दृश्यमानः शशी तत्क्षणे उत्फुल्लद्विकसद्यत्कैरवं कुमुदं तस्य कोषः कुड्मल एव कोपः खड्गपिधान तस्मान्नि.सरतामलीना श्रेणी पङ्क्तिरेव कृपाणः खड्गस्त कर्षतीत्यन्वय.। कुत इत्याकाङ्क्षाया हेतुमुत्प्रेक्षते—अद्यापीत्यादि। एष मानः सीमन्तिनीनां हृदि अद्यापि मत्सांनिध्येऽपि स्थातुं वाञ्छति। धिङ्निन्द्यमिदमिति क्रोधादिवेत्यर्थः। अतएवालोहित आरक्त.। कोपेन रक्तिमोदयात्। हृदि तिष्ठासाया हेतुगर्भं तद्विशेषणमाह—स्तनेति। स्तनावेव शैलौ तद्रूपेण दुर्गेण विषमेऽनाक्रमणीये। शशी कीदृक्। प्रोद्यन्तो दूरतर प्रसारिताः कराः किरणा एव करा हस्ता येन तथाभूतः। खड्गाकर्षणेऽपि हस्तस्य तथात्वात्। 'प्रोद्यन्' इति पाठे भिन्नमेव शशिविशेषणम्। 'तत्क्षणात्' इति पाठे तत्क्षणात्कर्षतीत्यन्वयः। अत्रास्थाने दीर्घसमास। पूर्वार्धे एव क्रुद्धोक्तौ तदौचित्यात्। इत्युदाहरणचन्द्रिकासक्षेपः.

उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणो-
त्फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणीं शशी ॥'

अत्र पूर्वार्धे क्रुद्धस्य शशिन उक्तिरिति तत्समासस्य योग्यं स्थानं न पुनः कवेरुक्तिरुत्तरार्धमित्यस्थानसमासता। न च प्रतिकूलवर्णत्वान्तर्भावः। समासस्यावर्णरूपत्वात्। नापि पतत्प्रकर्षता। प्रथमवृत्तस्य प्रकर्षस्याग्रे त्यागे हि तत्संभवः। अत्र तु तद्वैपरीत्यम्। किं चोभयत्रोचितस्यैव प्रकर्षस्याभावे तत्संभवः। अत्र त्वेकतरत्रैव समासौचित्यमिति। दूषकताबीजं सहृदयवैमुख्यम्।

संकीर्णं वाक्यान्तरपदेन मिश्रम्। यथा—

'[1]किमिति न पश्यसि कोपं पादनतं बहुगुणं गृहाणेमम्।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥'

अत्र पादनतं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण कोपं मुञ्चेति वाक्यत्रयेऽन्योन्यवाक्यस्थपदमादायानभिमतं प्रतीयते। इदमेव च दुष्टिबीजं प्रतीतिविलम्बो वा। एकवाक्ये क्लिष्टत्वमिति ततो भेदः।

गर्भितं जातगर्भम्। अन्तःस्थितवाक्यान्तरं वाक्यमित्यर्थः। [2]तत्तु वाक्यं क्वचित्स्वभावत [3]एवैकम्। क्वचित्तु वाक्यैकवाक्यतयैकीभूतम्। तत्राद्यं यथा—

'[4]परापकारनिरतैर्दुर्जनैः सह संगतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥'

अत्र वदामि भवतस्तत्त्वमिति वाक्यान्तरं प्रथमवाक्ये स्थितम्। द्वितीयं यथा—

'[5]लग्नं रागावृताङ्ग्या सुचिरमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥'

---

१. 'किमितीति। मानिनी प्रति सख्या इयमुक्तिः। अत्र पादगत पादप्रणत बहुगुण हृदयनाथ किमिति न पश्यसि। इम कण्ठे गृहाण। मनसस्तमोरूपं कोप मुञ्चेति वाक्यत्रय परस्परपदसकीर्णम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'तत्र' ख. ३. 'समासतः क. ४. 'परेति। स्पष्टम्। अत्र सगतिर्न विधेयेति वाक्यं वदामीत्यादिवाक्यान्तरेण गर्भितम्। एव च सगतेः सदसत्त्वसशयः अन्त्यपादे कर्म साकाङ्क्षत्व चेति दूषकताबीजमिति केचित्।'-इत्युदाहरणचन्द्रिकासक्षेप. ५. 'लग्नमिति। अत्रासियष्टिरसतीत्वेन श्रीः राजपत्नीत्वेन कीर्तिश्च दूतीत्वेनाध्यवसिता बोध्या। यस्य राज्ञः कीर्तिरम्बुधि प्रति गतेत्यन्वयः। फलमुत्प्रेक्षते—श्रियो नियोगादाज्ञया इति तत्संदेश गदितु वक्तुमिवेति। सदेशस्वरूप लग्नमित्यादि भृत्येभ्य इत्यन्तम्। तदर्थस्तु—हे अम्बुधे, रागो रुधिरलौहित्यमेवो रागोऽनुरागस्तेनावृत व्याप्तमङ्ग यस्यास्तथाभूतया ययै-

अत्र तत्सक्तोऽयं न किंचिद्गणयति तेन भृत्येभ्यो दत्तासीति वाक्यैकवाक्यमध्ये विदितं तेऽस्त्विति वाक्यान्तरं स्थितम्, प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकारित्वात्प्रकाशितविरुद्धम्। प्रतीतिविच्छेदोऽत्र दुष्टिबीजम्। अतो न यत्र प्रतीतिर्विच्छिद्यते तत्र नायं दोषः।

प्रसिद्धिहतमिति।

'मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥'

इति। प्रसिद्धिमतिक्रान्तम्। यथा—

'महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥'

रवो मण्डूकादिशब्दे कविप्रसिद्धो न तूक्तविशेषणे सिंहनादे। न चावाच-

---

योग्यत्वं तदभावश्चायोग्यत्वमिति मतं दूषयति—**प्रतियोगीति। विरुद्धमतिकारित्वादिति**। एतत्परित्यागे ममापराध इति बुद्धिर्न कार्येत्येतदर्थं मयैतज्ज्ञापितमिति पर्यवसानात्। विदितमित्यनुक्तौ हि जामातृशिक्षाप्रकारश्चिन्तनीय इत्ये-

---

वासियष्ट्या खड्गयष्ट्येह सङ्ग्रामेऽरीणां कण्ठे सुदृढं यथा स्यात्तथा लग्नम्। या चासियष्टिरिह सङ्ग्रामे मातङ्गा गजा एव मातङ्गाश्चण्डालास्तेषामुपरि पतन्ती परेषां शत्रूणां पुरुषैरेव प्रकृष्टपुरुषैर्दृष्टा। तेन प्रकृष्टसाक्षिसत्त्वान्मिथ्यात्वशङ्कानिरासः। तस्यां खड्गयष्ट्यां सक्तः सबद्ध एव तस्यां सक्तोऽनुरक्तोऽयं मम भर्ता राजा न किंचिद्युक्तायुक्तं गणयति विचारयति। यथाश्रुते तु किंचित्षाड्गुण्यादिकं न गणयतीत्यर्थः। तेन युक्तायुक्तगणनाभावेन हेतुमाह भृत्येभ्यो दत्तासीद् ते मत्पितुर्विदितमस्त्विति। तेन राज्ञेति कर्तरि तृतीयेति केचित्। खड्गपक्षेऽङ्ग रेखाविशेष इति दीपिकायाम्। एवमनया भङ्ग्या शौर्यदातृत्वयशसामुत्कर्षो वर्णितः। अत्र भृत्येभ्य इत्यन्तवाक्यैकवाक्यमध्ये विदितमित्यादिवाक्यान्तरं प्रविष्टमिति विशेषः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

१. 'महाप्रलयेति। वेणीसंवरणे रणकोलाहलमाकर्णयतोऽश्वत्थाम्न इयमुक्तिः। अयमर्थः समरोदधेः सङ्ग्रामरूपाब्धेः संबन्धी तत्सकाशाद्वा पूर्वमभूतोऽभूतपूर्वो रवः सिंहनादो मुहुर्वारंवारं कुतः कस्माद्धेतोरस्तीति प्रश्नः। कीदृशः। महता प्रलयमारुतेन क्षुभितानां पुष्करावर्तकानां मेघविशेषाणां प्रचण्डमुग्रं घनं निबिडं च यद्गर्जितं तस्य प्रतिरवस्य प्रतिध्वनेरनुकारी सदृशः। तथा श्रवणयोर्भैरवो भीषणः। एवं स्थगिता आच्छादिता। व्याप्तेति यावत्। रोदसी द्यावापृथिव्योरन्तरालमेव कंदरा गुहा येन तथाभूतः। अत्र रवशब्दस्य मण्डूकादिशब्द एव कविप्रसिद्धिर्नत्वेवंविधे वीराणां गर्जित इति तदतिक्रमः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

कसंकरः। तुल्येनैव रूपेणोभयत्र शक्तिसत्त्वेऽप्येकत्रैव कविप्रयोगनियमात्। अत एवायं वाक्यदोषः। विशेषणविशेष्यसंनिधानेन विशेषपरत्वादिति।

भग्नप्रक्रममिति। भग्नः प्रक्रमः प्रस्तावौचित्यं यत्र तत्। तच्चानेकधा व्यवस्थितम्।

तत्र प्रकृतेः क्रमभङ्गो यथा—

'नाथे निशाया नियतेर्नियोगादस्तंगते हन्त निशापि याता।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति॥'

अत्रास्तंगत इति गमेः प्रकृतेः प्रस्तावे यातेति यातेः प्रकृतिक्रमभङ्गः। भिन्नाभ्यामुपस्थापितं भिन्नवद्भातीति कुलाङ्गनानां स्वामिसदृशावस्थाप्रतीतिर्न संभवति। तस्मात् 'गता निशापि' इति युक्तः पाठः। ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति वामनसूत्रम्। अत्रापि कथितपदं दुष्टमनुपदमेवोक्तम्। तथा च पुनर्गमेः प्रयोगो दुष्टः स्यादिति चेत्, न। उद्देश्यप्रतिनिर्देश्यातिरिक्तं ह्येकं पदं द्विःप्रयोगनिषेधविषयः। तादृशे तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। यथा—

---

तदर्थ. सदेश इत्येव स्यादिति भावः। **अत एवेति**। वक्ष्यमाणहेतोरेव। तमेवाह—**विशेषणेति**। संनिधानं समभिव्याहारः। **औचित्यमिति**। यथाश्रुते कथितपदस्य प्रक्रमभङ्गदोषवारकतया गुणत्वमेव सर्वत्र स्यात्। औचित्यस्य तु क्वचिदेव सत्त्वादन्यत्र कथितपदत्वस्य दोषवत्त्वमुपपन्नमित्याशयः। प्रक्रमपदस्य पूर्वोपक्रान्तपरत्वे 'महीभृत. पुत्रवत.' इत्यादौ पुत्रपदे प्रक्रमभङ्गो न स्यादतः प्रस्तावः प्रक्रमपदार्थतयोक्त इति ज्ञेयम्। **यातेरिति**। पाठादिति शेषः। **भिन्नाभ्यामिति**। संज्ञाभेदेऽर्थभेदप्रत्ययस्यौत्सर्गिकत्वादिति भावः। **उद्देश्येति**। उद्देशस्योक्तस्यैव पुनः कथनं प्रतिनिर्देशः। तच्च क्वचिदुद्देश्यतयोक्तस्य विधेयतया, क्वचिद्विधेयतयोक्तस्योद्देश्यतया। तत्र नाथ इत्यत्र चन्द्रास्तगमने निमित्ते निशाया अपि तद्विधीयते। उदेतीत्यादौ विधेयतयोक्तस्य ताम्रत्वस्य ताम्र एवास्तमेतीत्युद्देश्यतया निर्देशः। इदं चोपलक्षणम्। लाटानुप्रासेऽर्थान्तरसंक्रमितवाच्ये चादुष्टत्वस्य वक्ष्यमाणत्वात्। 'ते हिमालयं—' इत्यादावस्मै इत्युद्देश्यस्य तच्छब्देन प्रति-

---

१. 'नाथ इति। निशाया नाथे चन्द्रे नियतेर्दैवस्य नियोगादस्तं गते सति निशापि तद्वधूरस्तं याता। हन्तेति हर्षे। स च दशानुरूपत्वात्। इदमेवार्थान्तरन्यासेन समर्थयति—कुलाङ्गनानामिति। हि यस्मात्कुलाङ्गनाना दशानुरूपं पतिविनाशदशायोग्यमतोऽनुगमनात्परमन्यद्भद्रतर शोभनतर न समस्ति। नास्तीत्यर्थः। अत्र गते इति गमधातोः प्रक्रमादग्रेऽपि तत्प्रयोग एवोचितो न तु यातेति याधातोरिति प्रकृतेः प्रक्रमभङ्गः।' इत्युदाहरणचन्द्रिकासक्षेपः.

'[1]उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥'

अत्र 'रक्त एवास्तमेति च' यदि क्रियेत तदा पदान्तरप्रतिपाद्यमानः स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवदधीत । प्रत्ययस्य यथा—

'[2]यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति लक्ष्मीः ॥'

अत्र तुमुनः क्रमे सनोऽभिधानमेकरूपताप्रतीतिं स्थगयति । 'सुखमीहितुं ।' इति युक्तः पाठः । सर्वनाम्नो यथा—

'ते[3] हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥'

अत्रास्मै इतीदमा प्रक्रमात्तद्विसृष्टा इत्यत्राप्यनेन विसृष्टा इत्येव वाच्यम् । न च तदिदमोरर्थभेदः । इदमः प्रस्तुतप्रत्यक्षपरामर्शकत्वात् । अन्यथा तयोः पर्यायतापत्तेः । पर्यायस्य यथा—

'[4]महीभृत पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥'

---

निर्देशो ज्ञेयः । **एकरूपतेति** । यश प्रभृतिफलार्थिनां निरुत्सुकत्वादिविशिष्टानां

---

१. उदेतीति । निगदव्याख्यातम् । एव चोद्दिष्टप्रतिनिर्देशरूपतया कथितपदत्वाख्यदोषानवताराद्यथाप्रक्रान्तमेव ताम्रपद प्रयुज्यते तथा दर्शितोदाहरणेऽपि प्रक्रान्तमेव प्रयोक्तुमुचितमिति सिद्धम् ।' इत्युदाहरणचन्द्रिकासक्षेप. २. 'यश इति । किरातार्जुनीये द्रौपद्या इयमुक्तिः । यशोऽधिगन्तुमित्यादीनामभियोगभाजामित्यनेनान्वयः । अधिगन्तु लब्धुम् । मनुष्येषु संख्या गणनामतिवर्तितुमतिक्रम्य वर्तितुम् । मनुष्यदुर्लभमुत्कर्ष प्राप्तुमिति यावत् । निरुत्सुकानामौत्सुक्यरहितानाम् । अभियोगभाजामुद्योगवताम् । अङ्कमुत्सङ्गम् । अत्र सन्प्रत्ययप्रयोगात्तुमुन्प्रत्ययप्रक्रमभङ्ग ।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'त इति । कुमारसभवे पद्यमिदम् । ते मरीच्यादयो मुनयो हिमालयमामन्त्र्य पृष्ट्वा पुनः शूलिन महादेव प्रेक्ष्यास्मै शूलिने सिद्धमर्थ गौरीविवाहघटनारूप प्रयोजन निवेद्य कथयित्वा तेन शूलिना विसृष्टा आज्ञप्ता. खमाकाशमुद्ययुरुत्पेतुरित्यर्थ. । अत्रेदम. प्रक्रमभङ्ग. ।' इत्युदाहरणचन्द्रिकासक्षेप.. ४. 'महीभृत इति । इदमपि तत्रत्यमेव पद्यम् । पुत्रवतोऽपि महीभृतो हिमाचलस्य दृष्टिस्तस्मिन्गौरीरूपेऽपत्ये तृप्तिं दिदृक्षापूर्ति न जगाम । न प्रापेत्यर्थ । अत्र दृष्टान्तमाह—अनन्तेत्यादि । हि यत. अनन्तपुष्पस्य मधोर्वसन्तस्य सबन्धिनी द्विरेफाणा भ्रमराणां माला पङ्क्तिश्चूते आम्रे सविशेष. स.तिशयसङ्ग आसक्तिर्यस्यास्तथाभूता । भवतीति शेषः । अत्र द्विरेफमाला सादृश्यातिशयाद्वसन्तदृष्टित्वेनाध्यवसिता बोध्या । अत्र पुष्पसामान्यसत्ताया तद्विशेषादरदृष्टान्तेन दार्ष्टान्तिकेऽप्यपत्यसामान्यसत्ताभिधानार्थमपत्यवत इत्येव वक्तुमुचित न तु विशेषतः पुत्रवत. इति । दृष्टान्तवैषम्यापत्तेः । अतः प्रक्रमभङ्गः । पर्यायत्वं त्वेकधर्मिवाचकतया

अत्रापत्येषु बहुषु सत्स्वपि तस्मिन्नपत्ये स्नेहातिशयविवक्षणादपत्यशब्दे प्रयोक्तव्ये पुत्रशब्दप्रयोगात्पर्यायप्रक्रमभङ्गः । केचित्तु 'असति पुत्रे सुतायां स्नेहो युक्तस्तस्य तु सत्यपि पुत्रे तस्यां सोऽभूदिति विवक्षणान्नात्र दोषप्रतीतिः' इति समादधिरे । तदयुक्तम् । अनन्तपुष्पस्य चूते इति दृष्टान्तवैधर्म्यप्रसङ्गात् । तत्र च सामान्यविशेषभावेनोपादानाद्दार्ष्टान्तिके तथैवौचित्यात् । तस्मात् 'अपत्यवतोऽपि' इति युक्तः पाठः । न चात्रापि बहुत्वालाभाद्दृष्टान्तवैषम्यम् । अपत्यान्यस्य सन्तीति बह्वर्थ एव मतुपो विधानात् । एतेन "साधुरेव 'पुत्रवतः' इति पाठः इत्यतः केचिदित्यनेन सांप्रदायिका इत्यर्थकेन वृत्तिकृतोऽत्रानुमतिरेव" इति चण्डीदासमतमनादेयम् । अथापत्यपुत्रशब्दयोः कथं पर्यायता । तत्र केचित्, 'अपत्यपर्यायोऽपि पुत्रशब्द । अन्यथा पुत्रीत्यत्र स्त्रीप्रत्ययस्य कुत्रान्वयः' इत्याहु । तन्न युक्तम् । तथा सति दोषस्यैवाप्रसङ्गात् । अपत्यार्थकत्वाविशेषात् । तस्मात्पर्यायत्वमेकार्थप्रतिपादकत्वमात्रम् । न त्वेकप्रकारकप्रतीतिजनकत्वमपीति । अत एव लघुतामुपक्रम्यागरीयानित्युक्तावपि पर्यायक्रमभङ्ग उच्यते । यथा—

'विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृप श्रियः ॥' इति ।

अत्रैव विपदापदोरुपसर्गप्रक्रमभङ्गो द्रष्टव्यः । 'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुताभागपदं नृपश्रियाम्' इति पाठो युक्त. । यदि न च्छन्दोभङ्गः ।

---

नियतलक्ष्मीप्राप्तेरेकरूपतया विवक्षितत्वादिति भाव । तथा सतीति । पुत्रशब्दस्यापत्यसामान्यार्थत्वे सतीत्यर्थ । अयं भाव —अत्र हि दृष्टान्तानुरोधेन सामान्यविशेषभावेनापत्यप्रतीतिर्विवक्षिता । सा च शब्दभेदेऽप्युपपद्यते न दोषप्रसक्ति. । उद्देश्यप्रतिनिर्देश्यस्थल एवैकरूपताप्रतीत्यनुरोधेन शब्दभेदे दोषोपगमात् । इह च तदभावादिति । अत एव उक्तपर्यायरूपत्वोपगमादेव । विपदित्यादौ कारणमालाया पूर्वविहितविपदादेरुत्तरत्रानुवाद्यत्वादुद्देश्यप्रतिनिर्देश्यभाव इति शब्दभेदे पूर्वस्योत्तरत्र हेतुत्वप्रतीते. स्थगनं न दोष इति ज्ञेयम् । वृत्तौ युक्तमित्ययुक्तम् । छन्दोभङ्गप्रसङ्गात् । अत. शेषं पूरयति—यदि नेति । कर्मकारकवाचकस्येत्यनन्तरं प्रस्तावौचित्यभङ्ग

---

गौणं न तु मुख्यमिति बोध्यम् । एतेन 'पुत्रे सत्यपि कन्यायामधिकप्रीतिरिति विवक्षणान्न दोष ' इति समाधान निरस्तम् । इति कृत पल्लवितेन ।' इत्युदाहरणचन्द्रिकासक्षेप'

१. 'विपद इति । किरातार्जुनीये द्रौपद्या इयमुक्ति । अविक्रम पराक्रमरहितम् । आपदा उपेत युक्त जनमायतिरुत्तरकालशुद्धी रहयति त्यजति । निरायतेरायतिरहितस्य जनस्य लघुता नीचता नियता । अगरीयान्गौरवहीनो जनः श्रियो लक्ष्म्याः पदमाश्रयो न । भवतीति शेष । नृपेति युधिष्ठिरसंबोधनम् । अत्रापदित्युपसर्गप्रक्रमभङ्ग अगरीयानिति पर्यायस्य चेति ।' इत्युदाहरणचन्द्रिकासक्षेपः.

'काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः ॥'

अत्र काचिदित्युपक्रम्य काश्चिदिति वचनप्रक्रमभङ्गः । तस्मात् 'काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निश्रीकाः' इति पठनीयम् । 'कम्पमाना' इति च 'कम्पमापुः' इति पठनीयम् । शतृशानचोर्गुणीभूतक्रियान्तराभिधायकत्वनियमात् । न चात्र क्रियान्तरं प्रधानमस्ति ।

'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।

---

१. 'काचिदिति । पार्थिवाना राज्ञा प्रस्थाने यात्रायां पुरोऽग्रे भावि उत्पत्स्यमानमशिवममङ्गल नार्यः स्त्रिय इत्यनेन प्रकारेण शशसु सूचितवत्य. । कथमित्याकाङ्क्षायामाह—काचिदित्यादि । काचिन्नारी रजोभि कीर्णा व्याप्ता रजस्वला सती दिवमन्तरिक्षमनुविदधावनुचकार । तस्या अपि रजोभी रेणुभिर्व्याप्तत्वात् । पतिवियोगदु खेन भूमिपतनाद्रेणुभिः कीर्णेत्यर्थः' इति केचित् । कीदृशी । मन्दा वक्त्रेन्दोर्मुखचन्द्रस्य लक्ष्मीः शोभा यस्यास्तथाभूता, द्यौरपि मन्दवक्रसदृशचन्द्रशोभा बोध्या । काश्चिन्नार्योऽश्रीकाः शोभाहीना दिश इवान्तर्दाह दधिरे । दिग्दाहस्याप्यमङ्गलसूचकत्वात् । कीदृश्यः । उद्भ्रान्त सत्त्व चित्त यासा तथाभूता· । दिक्पक्षे उद्भ्रान्तानि सत्त्वानि प्राणिनो यासु तथाभूता इत्यर्थ । तथान्या नार्य· प्रतिपदं वात्या इव भ्रेमुर्भ्रमण चक्रु· । एवमपरा नार्यो भूमिवत्कम्पमाना अशिव शशसुरिति सबन्धः । वात्याभ्रमणभूकम्पयोरशुभसूचकत्वं प्रसिद्धम् । अत्र काचिदित्येकवचनप्रक्रमादग्रे तद्भङ्गः । एवं कम्पमाना इत्याख्यातप्रक्रमभङ्गोऽप्यूह्यः ।' इत्युदाहरणचन्द्रिकासक्षेप'. २. 'गाहन्तामिति । शाकुन्तले आश्रमे शकुन्तलादर्शनान्निवृत्तमृगयाभिलाषस्य राज्ञो दुष्यन्तस्य सेनापतिं प्रतीयमुक्ति· । तत्रोपक्रमे 'अद्य तावत्' इति श्लोकशेषः सर्ववाक्यान्वयी बोध्यः । महिषा· शृङ्गैर्मुहुर्वारंवार ताडितमुत्फालितं निपानसलिलं कूपसमीपजलाशयसबन्धिजलं गाहन्तामालोडयन्तु । त्रासापगमेन प्रकृतिस्वाच्छन्द्यात् । सेयं महिषजातिरुक्ता । एवमग्रिमयोरपि जातिकथनमुन्नेयम् । छायाया बद्धं कदम्बकं समूहो येन तन्मृगकुलं रोमन्थमुद्गिलितकवलचर्वणमभ्यस्यतु । त्रासात्पलायनपरतयान्योन्यवार्तानभिज्ञ विस्मृतरोमन्थं चाधुना तदपगमे सति संभूय रोमन्थाभ्यासं करोत्वित्यर्थः । कदम्बाना बहुत्वात्कुलस्यान्यपदार्थत्वोपपत्तिः । एव वराहपतिभिः । सूकरश्रेष्ठैर्विश्रब्धं विश्वासयुक्त यथा स्यात्तथा पल्वलेऽल्पसरसि मुस्ताया· प्रसिद्धौषधिविशेषस्य क्षतिरुत्खनन क्रियताम् । तथेद नानाविधदानवसेनाविनाशकमस्मद्धनुश्च शिथिलो ज्याबन्धो यस्य तथाभूत सद्विश्रामं लभताम् । यद्वासदिति पञ्चमीबहुवचनान्त पृथक्पदम् । असत्सकाशाद्विरत भवत्वित्यर्थ· । अत्र गाहन्तामिति कर्तृतिङः प्रक्रमात्क्रियतामित्यत्र तद्भङ्गः ।' इत्युदाहरणचन्द्रिकासक्षेप .

विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥'

अत्र गाहन्तामिति कर्तृकारकवाचकतिङः प्रक्रमे क्रियतामिति कर्मकारकवाचकस्य । 'विश्वस्ता रचयन्तु सूकरवराः' इत्यदुष्टम् ।

'अकलिततपस्तेजोवीर्यप्रथिम्नि तपोनिधा-
ववितथमदाध्माते रोषान्मुनावभिगच्छति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥'

अत्र तेजोवीर्यरोषौ क्रमेणोपक्रम्य तदुभयोचितयोः पादोपसंग्रहधनुर्ग्रहणयोः पौर्वापर्यं योग्यम् । 'यथासंख्यमनुदेशः समानाम्' इति न्यायात् । इति तदन्यथाकरणे क्रमप्रक्रमभङ्गः । एवमन्यदप्यूह्यम् । अत्र सर्वत्रैकरूपप्रसृतायाः प्रतीतेः स्थगनमुपघातो वा दूषकताबीजम् । यदुक्तम्—

'प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ ।
ह्लादः स्फुरन्ननास्वादी यत्र ग्लानत्वमश्नुते ॥
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः ।' इति ।

अतएव नित्यदोषोऽयम् ।

अक्रममविद्यमानः क्रमो यत्र तत् । पदानन्तरं यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानं यत्रेत्यर्थः । यथा—

'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'

---

इति शेषः । अत्र सर्वत्रेति । तथा ह्युद्देश्यप्रतिनिर्देश्यस्थले तावदेकरूपताप्रतीतिर्विवक्षितैव । यशोऽधिगन्तुमित्यादावपि यशःप्रभृतेः फलत्वेनैकरूप्यमिष्टम् । सहीभृत इत्यत्राप्यपत्यत्वेनैक्यं दृष्टान्तवशादिष्टम् । काचित्कीर्णेत्यत्राप्यशुभसूचकत्वे-

---

१. 'अकलितेति । धनुर्भङ्गकुपिते भार्गवेऽभ्यागते श्रीरामचन्द्रस्योक्तिरियम् । मुनौ भार्गवे रोषादभिगच्छत्यभ्यागते सति पाणिर्यान्ममाभिनवाया नूतनाया धनुर्विद्याया दर्पस्य क्षमाय योग्याय युद्धरूपाय कर्मणे च रभसाद्वेगात्स्फुरति । नमस्यतया पादयोरुपसंग्रहणाय च स्फुरतीत्यन्वयः । चद्वयेन तुल्यकालत्वाभिव्यक्तिः । कथंभूते मुनौ । अकलितोऽपरिमितस्तपस्तेजसो वीर्यस्य प्रभावस्य प्रथिमा महिमा यस्यैवंभूते । यशोनिधौ प्रतिष्ठिते । दैवे तज्जयादुत्कर्षाधिक्यम् । अवितथेन यथार्थेन मदेन दर्पेणाध्माते । प्रदीप्त इत्यर्थः । अत्र तपसः प्रथमोद्दिष्टत्वेन तदुचितस्य पादोपसंग्रहणस्यापि प्राथम्यमुचितम् । 'क्रमश्च देशसामान्यात्' इति पाञ्चमिकन्यायादिति प्रक्रमभङ्गः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'द्वयमिति । पूर्वं व्याख्यातम् । अत्र त्वपदार्थस्यैव शोच्यतायाः समुच्चयविवक्षणात्त्वं चेति पाठक्रमो युक्तः । तदभावात्त्वक्रमत्वम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र लोकस्य चेति चकारस्त्वंशब्दानन्तरं युक्तः । त्वंशब्दार्थस्यैव शोच्यतायां समुच्चयस्य द्योतनीयत्वात् । लोकपदार्थे समुच्चयाभावात् । अथापदस्थपदादस्य को भेदः । तत्र प्रतीत्यन्तरमत्र सैव प्रतीतिः । किं तु विलम्बितेति केचित् । तन्न । 'कुटिला ताम्रच्छविः–' इत्युदाहृतेऽपदस्थपदे प्रतीत्यन्तराभावात् । वयं तु ब्रूमः—अव्यवधानेनैव यत्राभिमतप्रतीतिजननसामर्थ्यं तदेतस्य विषयः । अन्यः पुनरितरस्य । चादीनां चाव्यवहितपदार्थेष्वेव समुच्चयादिद्योतकता । तदुक्तं महिमभट्टेन—

'अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ।
संबन्धं ते हि स्वां शक्तिमुपदध्युरनन्तरे ॥' इति ।

न च नञोऽप्यव्यवहितस्यैव तथात्वम् । अतः 'स्रजं न काचिद्विजहौ' इत्यादिकमप्यक्रमभेदः स्यादिति वाच्यम् । 'न खलु न खलु बाणः संनिपात्योऽयमस्मिन्' इत्यादौ व्यवधानेऽपि प्रतीतिविशेषाभावात् । न चायं चादिपदेष्वेव दोषः । किं त्वित्थमादिष्वपि । यथा—

'शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते प्रसरति पुरतः किं मया वृद्धया ते
प्रोच्यैवेत्थं प्रकोपाच्छितकरसितया यस्य कीर्त्या प्रयातम् ॥'

---

नैकरूप्यम् । तथा गाहन्तामित्यत्रापि तत्तत्क्रियाकर्तृत्वमेकरूपेणैव मृगयानिवृत्तिप्रयुक्तत्वेन वाच्यम् । एवमकलितेति पद्येऽपि यथासख्यन्यायेन पूर्वोक्तक्रमैकरूप्यमित्यूह्यम् । तत्र गता यातेत्यादौ तुमुनादौ तादृशप्रतीते. स्थगनं विलम्बितत्वम् । पुत्रवतोऽपीत्यादौ तूपघातोऽत्यन्ताभाव इति यथानुभवं द्रष्टव्यम् । **स्वां शक्तिमिति** । स्वार्थाभिधानसामर्थ्यरूपाम् । अनन्तरेऽव्यवहितपदार्थे उपदध्युर्व्यवस्था-

---

१. 'शक्तिरिति । यस्य राज्ञ सितकरश्चन्द्रस्तद्वत्सितया श्वेतया कीर्त्या प्रकोपादित्थं प्रोच्येवोक्त्वेव प्रयात प्रकर्षेण यातम् । दूर गतमित्यर्थ. । अत्र कीर्तेः पत्नीत्वेनाध्यवसानं बोध्यम् । एव शक्त्यादीनामप्यसन्नायिकात्वेन । कीदृगुक्त्वेत्याकाङ्क्षायामाह—शक्तिरित्यादि । हे नाथ, इय प्रत्यक्षा, निस्त्रिंश खड्ग एव निस्त्रिंश क्रूरस्तज्जन्मा शक्ति· सामर्थ्यमेव नायिका तव भुजयुगले प्रतिवसतीत्यग्रेतनेनान्वयः । असत्त्व च क्रूरजायाः क्रूरस्वभावत्वात् । त्रिशत पूरणस्त्रिंश· स निर्गतो यस्मात्समुदायात्स निस्त्रिंशः पुरुषसमुदायस्तज्जन्या ऊनत्रिंशत्पुरुषसमुदायजा । वेश्यापुत्रीति यावदित्यर्थः ।' इति महेश । तथा तव वक्त्रे दोषाकरस्य चन्द्रस्य श्रीरेव दोषनिधानभूता श्रीर्नायिका प्रतिवसति । तथा तव पार्श्वे एषा प्रत्यक्षा महाकुट्टनी महाच्छेदिकाव्यभिचारस्य महादूती खड्गयष्टिरेव नायिका प्रतिवसति । तथा सर्वगा सर्वत्राप्रतिहतैव सर्वपुरुषगामिनी । वेश्येति यावत् । इय ते आज्ञारूपा नायिका पुरतो विलसति । वृद्धया समृद्ध्यैव जरत्या मया ते तव कि प्रयोजनमितीत्थमुक्त्वेति योज्यम् । अत्रापीत्थ प्रोच्येति क्रम उचित· ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्रेत्थं प्रोच्येचेति वाच्यम् । इत्थंशब्दस्याव्यवहितपरामर्शकत्वात् । पादत्रय च परामर्शनीयत्वात् । एवं 'लग्नं रागावृताङ्ग्या–' इत्यादावपि इति श्रीनिः गादिति वाच्यम् । इतेरपि तत्तुल्यत्वात् । दूषकताबीज चोद्देश्यप्रतीतिवि इति नित्योऽयम् ।

अमतपरार्थममतः परार्थो द्वितीयोऽर्थो यस्य तत् । अमतत्वं च,

'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥'

इत्याद्युक्तदिशा प्रकृतरसविरुद्धरसव्यञ्जकत्वम् । यथा—

'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥'

अत्र प्रकृतस्य बीभत्सस्य विरोधी शृङ्गारः । तस्य व्यञ्जको द्वितीयोऽर्थः तादृशार्थोपस्थित्या रसापकर्षकतास्य दोषत्वबीजम् । अतो नित्योऽयं दोषः नीरसे स्वात्मलाभस्यैवाभावात् ।

अर्थदोषलक्षणान्याह—

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ७ ॥**
**संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्तः ॥ ८ ॥**
**साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ९ ॥**

पददोषलक्षणसूत्रस्थं दुष्टमिति पदं लिङ्गविपरिणामेन संबध्यते ।

तत्रापुष्टः पुष्टाद्भिन्नः । पुष्टत्वं च विवक्षितार्थबाधप्रयोजकानुपादानत्वम् तद्विरहश्च द्विधा—अप्रयोजकत्वात्प्रयोजकत्वेऽप्यन्यलभ्यत्वाच्च । यथेनम्—

---

पर्येयु । तदन्वितस्वार्थबोधका इत्यर्थः । पुष्टत्वं चेति । यस्यार्थस्यानुपादाने शब्देनाप्रतिपादने विवक्षितार्थस्य बाधोऽसिद्धिस्तत्त्वं पुष्टत्वमित्यर्थः । अन्यल-

---

१. 'रामेति । रघुवंशे श्रीरामहतायास्ताडकाया वर्णनमिदम् । मन्मथ इव रामो राममन्मथः स एव रमयतीति रामो मन्मथस्तस्य दुःसहेन शरेण हृदये ताडिता सा निशाचरी राक्षसी ताडकैव निशाभिसारिका जीवितेशो यम एव जीवितेशः प्राणेश्वर उपचारेण नायकस्तस्य वसतिं जगामेत्यन्वयः । कीदृशी । गन्धवद्रुधिररूपं चन्दनमेव गन्धवद्रक्तचन्दनं तेनोक्षिता सिक्ता । गन्धवत्त्वं च पूतनाधूमस्येव रुधिरस्यापि पापक्षयादित्याहु । अत्र रूप्यमाणानामप्रकृतार्थानां प्रकृतबीभत्सरसविरोधिशृङ्गारव्यञ्जकत्वादमतपरार्थत्वं दोष इति । दूषकताबीजं तु शृङ्गाररसव्यञ्जकैर्यदि बीभत्सः प्रत्यायनीयः स्यात्तदा कथं तस्य परिपुष्टिरिति ध्येयम् ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

'व्यर्थमाहुर्गतार्थं यच्च स्यान्निष्प्रयोजनम्' इत्यनेन भोजराजो व्यर्थमाह । अत एव प्रकाशकारोऽपि 'अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतीयमानमर्थं न बाधन्ते' इत्येवाह । नत्वप्रयोजका एवेति । उदाहरणम्—

'अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥'

अत्रातिवितते निरवलम्बे व्योम्न्यविश्रामं गमनादितराप्रकाश्यकमलप्रकाशनाच्च रवेरुत्कर्षो विवक्षितः । अत्रातिविततत्वं गगनस्यार्थादेवावगम्यते अग्नेरिवौष्ण्यम् । सरणित्वं मरुदुल्लासितसौरभत्वं चाप्रयोजकमेवेऽत्यपुष्टा एतेऽर्थाः । नन्वेतेऽर्था अपुष्टा इति सिद्धं परं त्वतिविततेति पुनरुक्तः । गगनपदादेव तदुपस्थितेः । मरुदुल्लासितसौरभेति विरुद्धम् । विकासात्पूर्वं सौरभाभावेन तद्विशिष्टस्य सूर्येणाप्रकाश्यत्वादिति नायं पृथगिति चेत्, न । गगनपदं न विततत्वे शक्तम् । अथ लभ्यत्वे च न पुनरुक्तता । यदुक्तं भोजराजेन—'काव्येतिहासादावर्थवृत्त्या लब्धस्य साक्षाद्वणनमपौनरुक्त्याय' इति । नापि विरुद्धम् । सौरभस्योपलक्षणत्वात् । यद्वा चित्रहेतुपुरस्कारेण पूर्वभावाभिधानात् । अथाधिकपदादस्य को भेदः । अप्रयोजके प्रयोजनाभावकृतोऽपि भेदो न संभवति । अत्र कश्चित्—'तत्र पदार्थान्वयसमकालं दुष्टत्वप्रतिभास इह तु तदनन्तरमिति विशेषः' इति । तन्नातिसमीचीनम् । तथा नियमे प्रमाणाभावात् । एतावता च विशेषेण शब्ददोषत्वमेकस्यापरस्यार्थदोषत्वमिति विभागानुपपत्तेश्च । विरुद्धमतिकृदमतपरार्थादौ शब्ददोषेऽन्वयप्रत्ययोत्तरमेव दुष्टत्वप्रतिभासात् । वयं तु पश्यामः—यत्र विवक्षित एवार्थोऽन्यथाभिधानेऽपि दुष्यति सोऽर्थदोषः । अन्यस्तु रसदोषभिन्नः शब्ददोष इति विवेकः । तथाच यत्राविवक्षितोऽप्यर्थः कथंचिदन्विततयाभिधीयते तत्राधिकपदत्वम् । तत्पदेन विनापि तन्निर्वाहात् । यत्र तु सोऽर्थो विवक्षित एव परं त्वप्रयोजकत्वान्यलभ्यत्वाभ्यां शब्देन नोपात्तुमर्हस्तत्रापुष्टत्वम् । 'स्फटिकाकृति-' इत्यत्र नाकृतिपदार्थ उपमानत्वेन विवक्षितः । तस्य नैर्मल्याभावात् । 'यदपि च न कृतं नितम्बिनीनां' इत्यत्रापि च रतस्य स्तनपतनावधित्वव्यतिरेक

---

भ्यत्वादिति । शब्देनानुक्तावप्यर्थगम्यत्वादित्यर्थ. । अतएव उक्तापुष्टत्वनिर्वचनादेव । चित्रेति । चित्रं हेतुकार्ययोः पौर्वापर्यविपर्ययरूपातिशयोक्ति । तद्धेत्वभिप्रायेण कार्यस्य पूर्वाभावाभिधानादित्यर्थः । अप्रयोजके प्रयोजनशून्ये । प्रयोजनवत्यनन्यलभ्ये हि न प्रयोजनाभाव । अधिकपदे तु स इत्यस्तु भेदः । न त्वप्रयोजके ।

---

१. 'वृत्तिकृत्' क २. 'अतिविततेति । रविर्जयति । कीदृक् । अतिवितत विस्तृत यद्गगनं तद्रूपाया सरणौ मार्गे प्रसरणेन गमनागमनेन परिमुक्तस्त्यक्तो विश्रमानन्दो विश्रान्तिसुख येन तथाभूत । तथा मरुता उल्लासित प्रकाशित सौरभ यस्य तादृशस्य कमलानामाकरस्य हासकृत् । विकासकारीत्यर्थ । अत्रातिविततत्वसरणित्वमरुदुल्लासितसौरभत्वानामर्थानामनुपादानेऽपि प्रकृतार्थस्याक्षतेरपुष्टार्थत्वम् ॥' इत्युदाहरणचन्द्रिकासंक्षेप .

एवानुचितत्वेन विवक्षितो न तु तत्कृतिव्यतिरेकः । पूर्वार्धे तथैव क्रमात् । किं तु च्छन्दोनुरोधादिना द्वयमपि कथंचिदन्वितत्वेनोपात्तमित्यधिकपदत्वम् । 'अतिवि- तत-' इत्यादौ त्वतिविततत्वादिकं वक्तुर्विवक्षितमेव । परं त्वर्थलभ्यत्वादिना नोपादानार्हमित्यपुष्टम् । व्यक्तं च पूर्वस्य शब्ददोषत्वमुत्तरस्य चार्थदोषत्वमिति । दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैमुख्यम् । अतएव यमकादावदोषता । तत्रालंकारान्तरारम्भेणाशक्त्यनुन्नयनात् । कर्णावतंसादिपदे च विशेषकद्योतकतया तदुपादानं नाशक्त्युन्नायकमित्यदुष्टत्वम् । अतएव विशेषणदानार्थं विशेष्यप्रयो- गेऽपि दोषाभावः ।

कष्टः प्रतीतिक्लेशवान् । दुरूह इत्यर्थः । यथा—

'[१]सदा मध्ये यासामियममृतनिःस्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचयाः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥'

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यात्मकमार्गत्रयवती भारती चमत्कारं वहति ता गम्भीरकाव्ये घनपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु । तथा यासामादित्यप्रभाणां मध्ये त्रिपथगा नदी संबन्धं वहति ता मेघपरिचिताः कथं प्रसन्ना भवन्तीत्यर्थो विवक्षितः । स च शब्दान्तरैरपि क्लेशेनैव प्रतीयत इत्यर्थ एवायं दुष्टः । क्लिष्टत्वादिकं तु शब्ददोषः । घटनानन्त- रेणार्थस्य सुखेनैव प्रतीतेः । सम्यक्प्रतीतिविरहश्च दूषकताबीजम् । अतो नित्योऽयं दोषः ।

---

प्रयोजनाभावस्योभयत्र साम्यादिति भावः । व्यक्तं चेति । अविवक्षितार्थकत्वं

---

१. 'सदेति । स्वकाव्यस्य गभीरचमत्कृतार्थशालितयातिस्फुटार्थकत्वाभावेऽपि दोषाभावं समर्थयितु कस्यचित्कवेरियमुक्तिः । ता एता घनपरिचया अत्यन्ताभ्यस्ता अर्थाद्गम्भीरकाव्ये महता कवीना रुचयो विवक्षाः क्षुद्रकाव्य इव महाकाव्यव्योम्नि व्योमसदृशे महाकाव्ये केन प्रकारेण प्रसाद यान्तु गच्छन्तु । सुव्यक्ता भवन्त्वित्यर्थः । कथभूता रुचयः । स्फुरितो विषयीकृतो मधुरः शृङ्गारादिरसो याभिस्तथाभूताः । तेन नीरसत्वपरिहारः । ताः का इत्यपेक्षायामाह—सदेत्यादि । यासा कविरुचीना मध्ये यद्गोचरीभूता अमृतनिःस्पन्दवत्सरसा उद्दामा उत्कटगुणा बहुमार्गा वैदर्भ्यादिरीतित्रयवती इयं कवित्वरूपा सरस्वती परिमलं चमत्कार वहतीति प्रकृतोऽर्थः । अन्यस्तु यासा रुचीनामादित्यप्रभाणां मध्ये बहुमार्गा त्रिपथगेयं गङ्गारूपा सरस्वती नदी परिमलं सबन्धं वहति । ता एता मेघपरिचिता स्फुरितमधुररसाः । स्फुरितो दृष्टो मधुरो रम्यपदार्थो याभिस्तथाभूता वा महता द्वादशादित्याना रुचयः प्रभाः केन प्रकारेण प्रसाद स्वच्छकान्तित्वं यान्त्विवति । विशेषणद्वयमुक्तार्थम् । अमृतस्य जलस्य निःस्यन्देन प्रवाहेण सरसा इवेति वार्थः । नदीसामान्यवचनोऽपि सरस्वती- शब्दः । अयं चार्थो दुरूहत्वात्कष्टः ॥' इत्युदाहरणचन्द्रिकासक्षेपः.

व्याहतः,

'उत्कर्षो वापकर्षो वा प्राग्यस्यैव निगद्यते ।
तस्यैवाथ तदन्यश्चेद्व्याहतोऽर्थस्तदा भवेत् ॥'

इत्युपलक्षितविरुद्धत्ववान् । यथा—

'जयति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥'

अत्र पूर्वार्धे साधारणचन्द्रिकाचन्द्रकलाः स्वं प्रत्यसारतया प्रतिपादिताः । तेनैवोत्तरार्धे चन्द्रिकात्वमुत्कर्षायारोप्यत इति व्याघातः । दूषकताबीजं च वाक्यार्थाप्रतीतिः । अयं नित्यो दोषः ।

पुनरुक्तः शब्देन प्रतिपन्नत्वे सति पुनस्तेनैव प्रतिपादितः । अर्थेन प्रतिपन्नस्य प्रतिपादनेऽपुष्टत्वमुक्तम् । यत्तु प्रयोजनं विनेति विशेषणं तदयुक्तम् । एवं सत्यस्यानित्यदोषत्वं न स्यात् । प्रयोजनस्थले पुनरुक्तस्यैवाभावप्रसङ्गात् । स चायं द्विधा—पदार्थवाक्यार्थभेदात् । तयोराद्यो यथा—

अरेरे अर्जुनार्जुन, सात्यके सात्यके, न युक्त ईदृशो मत्तातस्य सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दिवमुपगच्छतः केशाकर्षणरूपः परिभवः । अपि च,

'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'

अत्रार्जुनार्जुनेति संबोध्य यैर्भवद्भिरित्यनेन परामृश्य तेषामित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः । न च प्राधान्यप्रतिपत्तये पुनरुपादानमित्यदोषता । संबोधनेनैव तल्लाभात् ।

---

१. 'जगतीति । मालतीमाधवे माधवस्येयमुक्तिः । येऽन्ये नवेन्दुकलादयो भावाः पदार्था जगति मनो मदयन्ति हर्षयन्ति । अर्थादन्येषाम् । ते ते सन्त्येव । एवकारेण स्वस्य महोत्सवहेतवो न भवन्तीत्यनादरः प्रकाश्यते । कीदृशाः । जयिनः उत्कर्षशालिनः । तथा प्रकृत्यैव मधुरा रमणीयाः । तव तर्हि किं महोत्सवहेतुस्तत्राह—मम त्विति । मम तु जन्मनि स एवैको महोत्सवो यदियं मालती विलोचनयोश्चन्द्रिकारूपा लोके नयनविषयं याता । नयनगोचरतां प्राप्तेत्यर्थः । अत्र । पूर्वमसारतयोक्तायाश्चन्द्रिकाया माल‍त्यामारोपो व्याहतः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'कृतमिति । व्याख्यातमेतत् । अत्रार्जुनार्जुनेति प्राक्संबोधनाद्यैर्भवद्भिरित्युक्त्वा तेषामिति परामर्शादर्जुनस्यापि प्राप्तेः किरीटिपदार्थः पुनरुक्तः । अत्र केचित्क्रुद्धोक्तित्वेन परिहारमाहुः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

वाक्यार्थस्य पुनरुक्तत्वं यथा—

'अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम्
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥'

अत्रालं संभ्रमेण, को भयस्यावकाश इत्यभिन्नार्थौ। न च वक्तू रौद्ररसाविष्टत्वं समाधानमाशङ्कनीयम्। वीरस्यायुक्तकारित्वावर्णनात्। दूषकताबीज च निष्प्रयोजनाभिधानेन श्रोतुर्वैमुख्यम्। अत एव प्रयोजनसत्त्वेनादोषत्वादनित्योऽयं दोषः। केचित्तु—"अर्थप्राप्तस्यापि वचने पुनरुक्तता। तदुदाहरणम्—'अस्त्रज्वाला—' इति। अप्रयोजकाभिधानमात्रस्थले 'त्वपुष्टार्थत्वम्' इत्याहुः।

दुष्क्रमो दुष्टक्रमः। दुष्टत्वं च क्रमस्य लोकशास्त्रविरुद्धत्वम्। तत्राद्यं यथा—

'भूपालरत्न निर्दैन्यप्रदानप्रथितोत्सव।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥'

अत्र तुरङ्गमभूयिष्ठं प्रति मातङ्गं देहि तुरङ्गं वेति लौकिकक्रमः। गुरुदानाशक्तौ लघुदानौचित्यात्। वक्तुश्च यथास्थित एव क्रमो विवक्षित इत्यर्थदोष एवायम्। द्वितीयं तु—

'काराविऊण खउरं गामउलो मज्जिऊण जेमिअ अ।
णक्खत्तं तिहिवारे जोइसिअं पुच्छिउं चलिदो ॥'

---

हि शब्ददोष इति व्यक्तमेव। विवक्षितार्थकत्वे तु न पदं दुष्टं किं त्वर्थ एवाप्रयोजकत्वान्यलभ्यत्वाभ्यां तथेत्यपि व्यक्तमिति भावः। **अत्रालमिति**। तात इत्यादेस्त्वर्थलभ्यस्य कथनान्न पौनरुक्त्यमित्याशयः। 'चतुर्थपादार्थः' इति वृत्तिग्रन्थो मतान्तराभिप्रायेणेति ध्वनयितुमाह—**केचित्त्विति**। अस्त्रज्वालेत्यादिनार्थप्राप्तस्य

---

१. 'अस्त्रेति। वेणीसंवरणेऽश्वत्थाम्न इयमुक्तिः। अस्त्रज्वालाभिरवलीढ व्याप्तं प्रतिबलं शत्रुसैन्यमेव जलधिस्तस्यान्तर्मध्ये और्वायमाणे वडवानलतुल्ये। सर्वधन्वीश्वराणां सकलधनुर्धरश्रेष्ठानां गुरावस्मिन्प्रसिद्धशौर्ये मम पितरि द्रोणे सेनानाथे सेनापतौ स्थिते सति हे कर्ण, संभ्रमेण भयेनालम्। हे कृप, समरं व्रज गच्छ। हे हार्दिक्य कृतवर्मन्, शङ्कां त्रासं मुञ्च। चापमेव द्वितीयं यस्य चापैकसहाये ताते द्रोणे रणधुरं वहति सति भयस्य कोऽवकाशः। अवसर इत्यर्थः। अत्र चतुर्थपादार्थः पुनरुक्तः।' इत्युदाहरणचन्द्रिकासंक्षेपः.
२. 'भूपालेति। कस्यचिदर्थिन उक्तिः। हे भूपालेषु रत्नभूत श्रेष्ठ, निर्गतं दैन्यं यस्मात्। अर्थादर्थिनाम्। तथाविधे प्रकृष्टदाने प्रथितः ख्यात उत्सवो यस्य तथाभूत राजन्, मे तुरङ्गमश्वं विश्राणय देहि। मदालसं मातङ्गं वा विश्राणयेत्यनुषङ्गः। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। अत्र तुरङ्गं मातङ्गं वेति क्रमो लोकविरुद्धः।' इत्युदाहरणचन्द्रिकासंक्षेपः.
३ 'काराविऊणेति। अयं क्रमो धर्मशास्त्रविरुद्धः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

नक्षत्रादिज्ञानपूर्वकं क्षौरस्य शास्त्रेण विधानात्तद्विरुद्धमिदम् । दूषकताबीजं च विरोधेनाप्रतीतिः सहृदयोद्वेगो वेति । नित्य एवायम् ।

ग्राम्यो ग्रामसंभवः । अविदग्धोक्तिप्रतिपादितो रिरंसादिश्च । तदुक्तम्—

'स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते ।
वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु ॥' इति ।

यथा—

'स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
तदपसंहर कूर्परमायतं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥'

अत्र निकटे तावदहं स्वपिमीत्यविदग्धस्य रिरंसोक्तिः । एवमन्यत् । दूषकता ाश्लीलवत् । किं चैतादृशोक्तिकवलितो विभावादिरूपोऽर्थो न रसाय पर्याप्यते ुष्टमिव बीजमङ्कुरायेति ।

संदिग्धः संदेहविषयः । तत्प्रयोजकरूपवानिति यावत् । यथा—

'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥'

अत्र भूधरनितम्बानां कामिनीनितम्बानां वा सेव्यत्वं व्यञ्जनया प्रतिपादयितं द्वितीयेन संदिह्यते । प्रकरणाद्यभावात् । यत्तु 'वक्तृविशेषसंदेहः' इति व्याख्यानं सर्वमान्यानां तदुत्तानताविलसितम् । वक्तुः पदवाक्यार्थत्वाभावेन तत्संदेहस्यार्थदोषत्वाभावात् । अतएव वृत्तिकृता वक्तृविशेषनिश्चयः संदेहाभावप्रयोजकत्वेनोक्तः । तन्निश्चये एकतरनितम्बस्य सेव्यत्वनिर्णयेनासंदेहात् । वन्द्यामीत्यादौ द्वितीयासप्तम्यन्तत्वाभ्यां पद एव संदेहोऽत्र तु पदानामसंदिग्धत्वे सत्येव स इति पदसंदिग्धत्वाद्भेदः । दूषकताबीजं चोद्देश्यनिश्चयविरहः । यत्र तु संदेह एवोद्देश्यस्तत्रादोषत्वमेवेति ।

निर्हेतुर्निष्क्रान्तो हेतुर्यस्मात् । यथा—

'गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।

---

तात इत्यादेर्वचनेऽपि पुनरुक्तमेव । यत्र त्वप्रयोजन एवार्थोऽभिधीयते तत्रैवापुष्टत्वम् । न तु सप्रयोजनस्यार्थप्राप्तस्याभिधान इत्यर्थ । अत्र च प्रकाशविरोध एवारुचिबीजम् । काराविऊणेत्ति । 'कारयित्वा क्षौरं ग्रामवृद्धो मङ्क्त्वा भुक्त्वा च ।

---

१. 'स्वपितीति । नवोढा प्रति रन्तुमिच्छो कस्यचिदुक्तिरियम् । अयं जनः सखीरूपो निकटे स्थितो यावत्स्वपिति तावदहं स्वपिमि । लक्षणया रमामीत्यर्थः । ते किमपैति हीयते । तस्मात्कूर्परं जानुमपि साम्प्रतमुचितं यथा स्यात्तथा अपसहर सकोचय । तथा कुञ्चितं सकुञ्चितमूरु त्वरितं शीघ्रमुदञ्चय प्रसारयेति । 'अयि' इति पाठे सबोधनम् । अयमर्थो ग्राम्यः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. व्याख्यातमिदं पञ्चमोल्लासे. ३. 'प्रतिपिपादयिषितं' ग. ४. 'गृहीतमिति । द्रोणे हते शोकाविष्टस्याश्वत्थाम्नः शस्त्रं सबोध्येयमुक्तिः । हे शस्त्र, येन मम पित्रा

परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥'

अत्र स्वशस्त्रत्यागे हेतुर्नोपात्तः। ननु तं विनाप्रतीतेः पर्यवसानं न वा। आद्ये दोषाभावोऽन्त्ये साकाङ्क्षसंकर इति। अत्र कश्चित्—'उपात्तस्य परेणान्वये साकाङ्क्षत्वमनुपादाने निर्हेतुत्वमिति विशेषः' इति। तन्न। साकाङ्क्षोदाहरणे उपेक्षितुमित्याकाङ्क्षतीत्यनेनानुपात्तसाकाङ्क्षताया एव वृत्तौ प्रदर्शनात्। तस्माद्धेतुतद्भिन्नसापेक्षतया द्वयोर्भेद इत्येव ज्यायः। यद्वात्राप्रतीतिमात्रं तत्र तु विरुद्धा प्रतीतिः। स्त्रीरत्न एवामर्षप्रतीतेरिति विशेषः। दुष्टिबीजं चोद्देश्यप्रतीतिविरहः। अत एव प्रसिद्धावनुपादानेऽपि न दोषः।

प्रसिद्धिविरुद्धो लोकस्य कवेर्वा यत्रार्थे न प्रसिद्धिः। यथा—

'इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम्।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥'

अत्र कामस्य चक्रं लोके कविमार्गे वा न प्रसिद्धमिति प्रसिद्धिविरुद्धः। यत्र तु लोकस्य कवेश्च प्रसिद्ध्योर्विशेषस्तत्र कविप्रसिद्धेर्बलवत्त्वम्। तथाच लोकविरुद्धेऽपि कवीनां यथा यत्र समयस्तत्र न दोषः। यथा—

---

नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥' [इति च्छाया]। रिरंसोक्ती रमणेच्छाकथनम्। स्वपिमीत्यस्योपगमनार्थत्वात्। **उपात्तस्येति**। अयमर्थः—'स्त्रीरत्नं चेत्यादौ स्त्रीरत्नेऽमर्षस्यायोगात्परस्येत्येतत्साकाङ्क्षता स्त्रीरत्नस्य। तच्चोपात्तमप्युत्कर्षं चेत्यनेनान्वितत्वान्न स्त्रीरत्नेनान्वययोग्यमिति तत्र साकाङ्क्षत्वदोष। अनुपात्तेन हेतुना साकाङ्क्षत्वे निर्हेतुत्वमिति। **प्रसिद्धाविति**। 'चन्द्रं गता पद्मगुणान्न भुङ्क्ते' इत्यादौ

---

नोचितमपि ब्राह्मणजात्यनुचितमपि त्वं द्रुपदरूपशत्रोः परिभवभयाद्गृहीतमासीः। यस्य प्रभावात्तव कश्चिन्न विषयो नाभूत्। अपि तु सर्वोऽपीन्द्रादिस्त्वत्पातविषयोऽभूत्। तेन मत्पित्रा—सुतस्य मम मिथ्यामरणश्रवणजाच्छोकात्त्वं परित्यक्तमसि। न तु भयात्त्यक्तम्। अहमपि त्वा विमोक्ष्ये यतः अतो भवते स्वस्तीत्यर्थः। यतो यत्र भवते स्वस्ति तत्र विमोक्ष्ये इति वा। अत्र स्वस्य शस्त्रत्यागे हेतुर्नोपात्त इति निर्हेतुत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'इदं त इति। कमलानामातङ्को भयं यस्मात्तादृशं वदनं यस्यास्तथाभूते हे सुन्दरि। अनेन वदनस्य चन्द्रत्वं सूचितम्। एतस्मिन्करस्थिते हेम्नः कटकं कङ्कणमिति यद्धियं धत्से धारयसि इदं ते केन भ्रान्तप्रतारकेणोक्तं कथयेति संबन्धः। तर्हि किमेतदित्याकाङ्क्षायामाह—इदमिति। इदं तत्प्रसिद्धं दुःसाधाना जितेन्द्रियाणामाक्रमणं वशीकारो यस्मात्तथाभूतं परमास्त्रं चक्रं स्मृतिभुवा कामेन प्रीत्या तव करकमलमूले हस्ते विनिहितम्। अत्र चक्रस्य कामायुधत्वमप्रसिद्धम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'[1]सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
पतिगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥'

अत्र कीर्तेर्मूर्तत्वं ज्योत्स्नावत्प्रकाशता च लोकविरुद्धे अपि कविसमयसिद्धे त्यदोषः । एवमकीर्त्यादेर्मालिन्यादौ द्रष्टव्यम् । यत्तु—

'[2]उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥'

इति कविसमयसिद्धोदाहरणं तदयुक्तम् । चरणन्यासेनाशोकाङ्कुरस्य कवीनामप्यसंमतेः । पुष्पोद्गम एव तेषां समयात् । दूपकताबीजं च विरोधादर्थाप्रतीतिरिति । उत्पातादिना तत्प्रतीतावदोषः ।

विद्याविरुद्धः शास्त्रेण विरोधवान् । स चायं शास्त्रभेदाद्भिद्यते । तत्र धर्मशास्त्रविरुद्धो यथा—

'[3]सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥'

---

१. 'सुसितेति । राजानं प्रति कवेरुक्तिः । हे राजन्, सुदृशि शोभननयनायां कस्याचन नायिकायां कदाचन कस्मिंश्चिदवसरे कौमुदीमहसि चन्द्रिकोद्द्योते स्वैरं शङ्काराहित्येन स्वच्छन्दं यान्त्याम् । ज्योत्स्नाभिसारं कुर्वत्यामित्यर्थः । अतएव सुसिता अतिश्वेता वसनालंकारा वस्त्रसहिता अलंकारा यस्यास्तथाभूतायां सत्यां विधुश्चन्द्रोऽस्तंगतोऽभूत् । तदनु तदनन्तरं केनापि भवतः कीर्तिरगीयत गीता । येन कीर्तिगानेन तज्ज्योत्स्नाप्रकाशात्साभिसारिका मुक्ता आशङ्का श्वेताभरणैकदृश्यत्वभयं यया तथाभूता सती पतिगृहमगात् । अतस्त्वं क्व कस्मिन्देशेऽवसरे वा शुभप्रदो नासि न भवसि । अपि तु सर्वत्रेत्यर्थः । अत्र कीर्तेर्ज्योत्स्नावत्प्रकाशनं कविसंप्रदायप्रसिद्धमित्यदोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'उपेति । अशोककलिकादर्शनमूर्च्छितस्य गृहमागच्छतः पथिकस्य तेनैव पथा जिगमिषून्न्यान्प्रतीयमुक्तिः । भो अध्वगाः, गोदावर्या उपपरिसरं पर्यन्तभूसमीपे सरणिं मार्गं परित्यजत । भवद्भिस्तावदपरो मार्गोऽवेक्ष्यतां दृश्यताम् । तावदिति यावदशोकोऽङ्कुरितः । कुत इत्यत्राह—हि यस्मादिह सरणौ कयापि हताशया वनितया रक्ताशोकश्चरणनलिनस्य चरणकमलस्य न्यासेनाघातेनोदञ्चन्त उद्गच्छन्तो नवाङ्कुरा एव कञ्चुकं सर्वाङ्गव्यापितया यस्य तथाभूतो विहितः कृतः । हताशयेत्याशाविघातकतया रोपोक्तिः । अत्र पादाघातेनाशोकस्य पुष्पोद्गम एव कविसमयो न त्वङ्कुरोद्गम इति नैतत्कविप्रसिद्धेरुदाहरणम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'सदेति । निगदव्याख्यातम् । अत्र निमित्तं विना रात्रौ स्नानं धर्मशास्त्रविरुद्धम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण प्रतिषिद्धमिति तद्विरुद्धोऽयमर्थः । अर्थशास्त्रविरुद्धो यथा—

'अनन्यसदृशं बाह्वोर्बलं यस्य विलोक्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं स्यान्निष्प्रयोजना ॥'

अत्र महाबलस्यापि संध्यादिषड्गुणानुसरणमर्थशास्त्रेण विहितमिति तद्विरोधः । कामशास्त्रविरुद्धो यथा—

'विधाय दूरे केयूरमनङ्गाङ्गदमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥'

अत्र केयूरपदे नखक्षतं कामशास्त्रे विरुद्धम् । बाहुमूलावयवविशेषे तस्य विधानात् । अर्थतः शेषेषु प्रतिषेधात् । योगशास्त्रविरुद्धो यथा—

'अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥'

अत्र मुक्तिसमीपस्थमसंप्रज्ञातयोगमनपेक्ष्यैव मोक्षो योगशास्त्रे विरुद्धः । विवेकख्यातिः प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपा । ततो वितर्कविचाराद्यनुसारिरूपः संप्रज्ञातयोगः । पश्चात्पुरुषमात्रावलम्बनरूपोऽसंप्रज्ञातयोगः । ततो मुक्तिः । न तु विवेकख्यातिमात्रत एवेति हि योगशास्त्रम् । एवं तुरगादिशास्त्रविरोधोऽप्यूहनीयः । अभिमतप्रतीतिविरहो दूषकताबीजम् ।

---

१. 'अनन्येति । यस्य बाह्वोर्भुजयोरनन्यसदृशमनुपमं बलं समीक्ष्यते तस्य सा प्रसिद्धा षाड्गुण्यानुसृतिः संधिविग्रहयानासनद्वैधसंश्रयाख्यषड्गुणानुसरणं निष्प्रयोजनेति सत्यमित्यन्वयः । षाड्गुण्यमिति स्वार्थे ष्यञ् । अयमर्थो नीतिशास्त्रविरुद्धः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'विधायेति । अङ्गना केयूरं प्रसिद्धमङ्गदं दूरे विधाय अनङ्गाङ्गदरूपां कान्तेन कृतां करजानां नखानामुल्लेखानां क्षतानां मालिकां पङ्क्तिं बभार धृतवतीत्यन्वयः । अनङ्गाङ्गदमित्यनङ्गायाङ्गदमेवानङ्गसंबन्धि बाहुभूषणमिति श्लेषेणार्थः । 'अनङ्गाङ्गणम्' इति वा पाठः । तत्रापि केयूरविशेषणत्वमिति केचित् । अत्र केयूरस्थाने नखक्षतं कामशास्त्रविरुद्धम् । 'नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः । पार्श्वौ जघनमूरू च स्तनगण्डललाटिकाः ॥' इति वात्स्यायनोक्तस्थानभिन्नत्वात् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. अष्टाङ्गेति । यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपाण्यष्टावङ्गानि यस्य तथाभूतस्य योगस्य परिशीलनेन यत्कीलनं स्थिरीकरणं तेन दुःसाधाया दुष्प्रापायाः सिद्धेर्मुक्तिरूपायाः सविधं निकटस्थं पुरुषमात्रविश्रान्तमनोवृत्तिरूपमसंप्रज्ञातयोगं दूरे विदधत् तमनपेक्ष्यैवाभिमतां कार्यसमर्थां विवेकख्यातिं प्रकृतिपुरुषयोर्भेदज्ञानरूपामासादयन्प्राप्नुवन्सन्समाधिधनानां योगिनां मौलिमणिः श्रेष्ठः कश्चिदधुना 'विमुक्तः' इत्यन्वयः । दुःसाधसिद्धयोऽणिमाद्याः । तत्सांनिध्यं वर्जयन्नित्यर्थ इति केचित् । अत्र विवेकख्यात्यनन्तरं संप्रज्ञातासंप्रज्ञातयोगावनपेक्ष्य मुक्तिकथनं योगशास्त्रविरुद्धम् । वितर्कविचाराद्यनुसारी संप्रज्ञातयोगः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अनवीकृतो भङ्ग्यन्तरेण यन्नवत्वं तन्न प्रापितः । एकभङ्गिनिर्दिष्टानेकार्थं इत्यर्थः । यथा—

'[1]प्राप्ताः श्रियः सकलकामदुघास्ततः किं
　दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संमानिताः प्रणयिनो विभवैस्ततः किं
　कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥'

अत्र सर्वेष्वर्थेषु 'ततः किम्' इत्येकैव भङ्गिः । अथैष कथितपद एवान्तर्भविष्यतीति चेन्न । पर्यायान्तरप्रयोगे भङ्गेरेकरूपतायामसांकर्यात् । अथ नवीकृतं कीदृक् ।

'[2]यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥'

इतीदृक् । अत्र हि सतामविषादिता स्वाभाविकीति नाश्चर्याय । यथानलादेर्दाहकत्वादीति विवक्षितम् । तत्र च ततः किमित्यादिना किमद्भुतमित्यादि नवीकृतम् । ॥रुण्येणाशक्तिप्रकाशनेन वा सहृदयोद्वेजकत्वं दूषकताबीजमिति नित्योऽयम् ।

सनियमादिभिश्चतुर्भिः परिवृत्तपदान्वयात्सनियमपरिवृत्तादिचतुष्टयं लभ्यते । परिवृत्तिश्च सनियमानियमयोर्विशेषाविशेषयोश्च । अविशेषः सामान्यम् । तत्र सनियमपरिवृत्तः । सनियमत्वेन वक्तुमुचितोऽनियमत्वेनोक्तः । न च न्यूनपदत्वेऽनभिहितवाच्यत्वे वानुप्रवेशः । तादृशेऽर्थे विवक्षिते तयोरवकाशात् । अवि-

---

निशि पद्मसंकोचादिहेतुप्रसिद्धाविलर्थः । **भङ्गेरेकरूपतायामिति** । यथा वक्ष्यमाणे 'यदि दहत्यनलोऽत्र किमद्भुतम्' इत्यत्र 'यदि च गौरवमद्रिषु किं चित्रम्' इति पर्यायभेदेऽपि भङ्गेरेकरूपत्वादित्यनवीकृतत्वमेवेति ज्ञेयम् । **अत एवेति** । अविवक्षितत्वादित्यर्थः । विवक्षितस्य हि शब्देनाप्रतिपादने शब्ददोषत्वमिति भावः ।

---

१. 'प्राप्ता इति । शान्तस्य भर्तृहरेरियमुक्तिः । सकलकामदुघाः सकलकामदायिन्यः श्रियः संपदः प्राप्तास्ततस्तेन किं कः पुरुषार्थः । मुक्तिं विना कृतकृत्यताया अभावादिति भावः । एवमग्रेऽपि । विद्विषतां शत्रूणां शिरसि पदं दत्तम् । तेषामाक्रमणं कृतमिति यावत् । प्रणयिनो मित्राद्याः । विभवैः समृद्धिभिः । तनुभृतां शरीरिणां तनुभिः शरीरैः कल्पं व्याप्य स्थितं जीवितं ततोऽपि किमित्यर्थः । अत्र ततः किं ततः किमिति पुनरुक्त्या अनवीकृतत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'यदीति । सतामविषादिता प्रकृतिरेव नाश्चर्यकरी । अत्रोपमानभूतं वाक्यार्थत्रयमुपन्यस्यति—यदीत्यादिना । एवं च यथानलो वह्निर्यदि दहति अत्रार्थे किमद्भुतमाश्चर्यम् । न किमपीत्यर्थः । यदि चाद्रिषु पर्वतेषु गौरवम् । अस्तीति शेषः । ततः किम् । तदपि नाद्भुतमित्यर्थः । महोदधेरम्बु सदैव लवणं क्षारमतस्तदपि नाद्भुतम् । तथा सतामविषादिता प्रकृतिरेवेत्यर्थपर्यवसानं बोध्यम् । अत्रैक एवाश्चर्याभावो भङ्गिभेदेनोक्त इति । नवीकृतत्वसत्त्वान्न दोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

वक्षिते त्वेतत्प्रसरति। अत एवायमर्थदोषः। विवक्षितमात्रस्य पदान्तरेणाप्युपस्थितौ तस्य तादवस्थ्यात्। एवमितरेष्वप्यूह्यम्। यत्तु—'अर्थत्वेन विशेषणं समाधानम्' इति, तन्न। न्यूनपदादिषु त्रिषु त्रयाणां संकरप्रसङ्गात्। चण्डीदासस्तु—'शब्दोच्चारणानन्तरमेव यस्य प्रतिभासः स शब्ददोषः, यस्य त्वर्थप्रत्ययानन्तरं सोऽर्थदोषः। अस्य त्वर्थप्रत्ययानन्तरमेवेत्यसावर्थदोषः, अत एवानभिहितवाच्याद्भिद्यते' इत्याह। तच्चायुक्तम्। बहुषु स्थानेषु व्यभिचारात्। शब्दार्थविभागस्यासंगतत्वात्। उदाहरणम्—

'यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम्॥'

---

**विवक्षितमात्रस्येति।** यावानर्थो विवक्षितस्तावन्मात्रस्यानियमरूपस्य पदान्तरेण नियमवाचिमात्रादिपदभिन्नेनाभासमणीकृताश्मस्वित्यादिनोपस्थितौ तस्य परिवृत्तत्वरूपार्थदोषस्य तादवस्थ्यादित्यर्थः। **न्यूनपदादिष्विति।** न्यूनपदाधिकपदानभिहितवाच्येषु त्रिष्वित्यर्थः। त्रयाणां सनियमपरिवृत्तानियमपरिवृत्तविशेषपरिवृत्तानाम्। तत्र हि प्रथमस्य न्यूनपदेन संकरः। द्वितीयस्याधिकपदेन। तृतीयस्यानभिहितवाच्येनेति। तथा हि सनियमपरिवृत्ते नियमवाचिपदानुपादानान्न्यूनपदत्वम्। अनियमपरिवृत्ते नियमवाचकस्याधिकस्योपादानादधिकपदत्वम्। विशेषपरिवृत्ते त्ववश्यवाच्यस्यानुक्तेरनभिहितवाच्यस्य सविशेषस्यानुक्तेरनभिहितवाच्यत्वमिति। न चाविशेषपरिवृत्तेऽप्येतदिति शङ्क्यम्। तत्रानपेक्षितस्य विशेषस्य कथनेऽप्यपेक्षितानुक्त्यभावात्। **अयं त्विति।** सनियमपरिवृत्त इत्यर्थः। अनभिहितवाच्यस्तु कमपराधलवमित्यादौ शब्दश्रवणानन्तरमेव प्रतिभासत इति ततो भेद इत्यर्थः। **बहुष्विति।** अपदस्थ-

---

१. 'यत्रेति। तस्य मणेश्चिन्तामणेराभासेनेषत्कान्तिमात्रेणामणय एव मणित्वेन कल्पिता येऽश्मानः पाषाणास्तेषु मध्येऽश्मत्वं पाषाणत्वमेवोचितं न तु मणित्वम्। चिन्तामणेराभासेन साधारणमणिगणनाया गणनमनुचितमित्यर्थः। यस्य कस्येत्यपेक्षायामाह—यत्र चिन्तामणौ सति एतत्सकलं विधेर्निर्माणं सृष्टिः न उल्लिखिता निर्दिष्टा आख्या नाम यस्य तथाभूतम्। भवतीति शेषः। प्रयोजनाभावेन नामाग्रहणात्। 'अनुल्लिखितार्थं' इति पाठे अनुल्लिखितोऽनिर्दिष्टोऽर्थः प्रयोजनं यस्य तत्। अप्रयोजकमित्यर्थः। अथवा यत्र यद्विषयकं विधेर्निर्माणमनिर्वचनीयप्रयोजनमित्यर्थः। तथा यत्र मणावुत्कर्षस्य प्रतियोगिनोऽवधेः कस्यचित्कल्पनमपि परा न्यक्कारस्यावज्ञायाः कोटिः। सर्वोत्कृष्टतया यत्किंचिन्निरूपितोत्कर्षकथनस्यापकर्षहेतुत्वात्। 'उत्कर्षप्रतियोगिनः प्रतिसंबन्धिनः। सदृशस्येत्यर्थः। कल्पनं कथनं परा न्यक्कारकोटिः। निरुपमत्वहानेः' इति केचित्। तथा यस्य मणेः संपदः प्राणभृतां प्राणिनां मनोरथगतीरुल्लङ्घ्यातिक्रम्य याताः। मनोरथस्याप्यगोचरा इत्यर्थः। अत्रान्योक्तावाभासमात्रेणेति वाच्यम्। अन्यथा निन्दनीयानां मणीनां मण्यन्तरव्यवच्छेदाप्रतीतेः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्रान्यापदेशे आभासमात्रेण मणीकृतेष्विति वाच्यम् । गुणान्तरव्यावर्तनेन निन्दातिशयप्रतीतेः । अनियमे तु न निन्दनीयानां गुणान्तरव्यवच्छेदप्रत्ययः । तस्मात् 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति पठनीयम् । अव्युत्पत्त्युन्नयनेव वैमुख्याधायकत्वमेव दुष्टिबीजम् । नित्यदोषोऽयम् ।

अनियमपरिवृत्तो यथा—

'वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥'

अत्र शोण एवेति नियमो न वाच्यः । वैयर्थ्यात् । प्रत्युतान्यजलाशयानात्मकप्रतीतौ पिपासानौचित्यातिशयाप्रतीतेः । अधिकपदभेदो दूषकताबीजं च पूर्ववत् । विशेषपरिवृत्तो यथा—

'श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।

---

पदसमासामतपरार्थादिवाक्यदोषस्यार्थप्रत्ययं विना प्रतिभासाभावेन शब्ददोषत्वस्योक्तनियमव्यभिचारादित्यर्थः । **पूर्ववदिति** । अनधिकार्थविवक्षायामधिकपदत्वं दोषः । तदविवक्षायामयमर्थदोष इत्यर्थः । एवकारस्य द्योतकत्वान्नाधिकपदत्वमि-

---

१. 'वक्त्राम्भोजमिति । मृगयाया पिपासुं राजानं प्रति कवेरियमुक्तिः । हे अवनिपते, ते तवान्तः स्वच्छे सत्त्वगुणप्रधान एव स्वच्छे निर्मले मानसेऽन्तःकरण एव मानसे सरसि सत्यभीक्ष्ण पुनःपुनरम्बुपानस्याभिलाषः कथम् । भवतीति शेषः । जलाधारतया तव पिपासानुचितेति भावः । अनौचित्यातिशय प्रतिपादयितुमाह—वक्त्रेत्यादि । ते इत्यग्रेतनमिहापि सबध्यते । तव वक्त्राम्भोजं सरस्वती भारत्येव नदीविशेषः सदाधिवसति । ते तवाधरः शोणो रक्त एव शोणो नद एव । ते दक्षिणो दक्षिणदिगवस्थ एव वामेतरो बाहुर्मुद्रया राजचिह्नभूतया सहित एव समुद्रो जलधिः । कीदृशः । काकुत्स्थस्य रामस्य वीर्यस्मृतेः करणे पटुः समर्थः । तद्बाहुसादृश्यात् । एव समुद्रोऽपि बन्धनात्तथाभूतः । एता वाहिन्यः सेना एव नद्यो भवतः पार्श्वं क्षणमपि नैव मुञ्चन्ति । अत्र शोण एवेत्यवधारणमनुचितम् । अन्यजलाशयव्यावृत्तेः पिपासानौचित्यातिशयप्रतिकूलत्वात् । इत्युदाहरणचन्द्रिकासक्षेपः. २. 'श्यामामिति । विद्धशालभञ्जिकाया मृगाङ्कावलीवियोगातुरस्य राज्ञो विद्याधरमल्लदेवस्येयमुक्तिः । भो इत्याकाशे सबोधनम् । भो जनाः, सान्द्रैर्घनैर्मषीणा कूर्चकैस्तूलिकाभिः । चूर्णैरिति महेशः । श्यामा रात्रिं चन्द्रिकाधवला श्यामलिमानं श्यामलतामानयत प्रापयतेत्यर्थः । अथेति विकल्पे । मन्त्रमथवा तन्त्र वैद्यकादिशास्त्रं प्रयुज्य । तदुक्तौषधप्रयोग कृत्वेत्यर्थः । तन्त्रमौषधमित्यन्ये । श्वेतानामुत्पलाना श्रियं शोभा हरत नाशयत । 'रुच' इति पाठे दीप्तिम् । चन्द्र च शिलापट्टके कृत्वा निधाय क्षणात्कणशश्चूर्णयत । येनैवविधकरणेनाह तस्या मृगाङ्कावल्या वक्त्रमुद्रया वदनरूपचिह्नेनाङ्किता दश

चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥'

अत्र ज्योत्स्नीमिति रात्रिविशेषो वाच्यः। अपरविशेषस्य स्वत एव श्यामत्वात्तत्राकाङ्क्षाविरहात्। इदमेवात्र दूषकताबीजम्। अन्यत्र विरोधादिकमपि दुष्टिबीजं द्रष्टव्यम्। विशेषनियामकप्रकरणादिसत्त्वे त्वदोषत्वम्। सामान्यपरिवृत्तो यथा—

'कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकरालय मावमंस्थाः।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥'

अत्र कौस्तुभेनेति विशेषतो रत्नवचनं नोचितम्। कौस्तुभमात्रस्योपकारकत्वेनान्यावमानने निषेधायोगात्। 'एकेन किं न भवतो विहितः स नाम' इति पाठे तु भेदानवगमाद्विवक्षितनिर्वाहः। तदनिर्वाहादिकं च दूषकताबीजमिति नित्य एवायम्।

साकाङ्क्षः सहाकाङ्क्षया वर्तते। इतरपदार्थान्वयाय विशेषणसाकाङ्क्ष इत्यर्थः निर्हेतुभेदस्तु तदवसर एवोक्तः। उदाहरणम्—

'अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभो प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।

---

त्यप्याहुः। अन्यत्रेति। 'संतानं कीर्तिमातनुते' इत्यादावसत्संताने कीर्तिजनकवि-

---

दिशो द्रष्टुं क्षमे समर्थो भवामि। भावनोपनीत तन्मुख दशसु दिक्षु पश्यतश्चन्द्रिकादिभिरुद्दीपकतया संतापकैः क्रियमाण प्रतिबन्धमुक्तरीत्या तदपनयनेनापहरतेत्यर्थः। अत्र ज्योत्स्नीरूपरात्रिविशेषस्य विवक्षितत्वाद्विशेषत एव ज्योत्स्नीमित्यभिधातुमुचितम्। अन्यथा विशेषस्य प्रतीतौ विलम्बापत्तेः।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'कल्लोलेति। हे मकराणामालय समुद्र, कल्लोलैस्तरङ्गैर्वेल्लिताना चालिताना दृषदा पाषणाना परुषैः कठोरैः प्रहारैरमूनि स्वाश्रितानि रत्नानि मावमस्थाः मावज्ञासीः। कुत इत्यपेक्षायामाह—किमिति। भवतः कौस्तुभाख्येन रत्नेन पुरुषोत्तम· श्रीकृष्णोऽपि याञ्चार्थं प्रसारितःकरो येन तथाभूत· कि नाम न विहितः। अपि तु विहित एवेत्यर्थ। तथा चैकेन रत्नेनैवविधोत्कर्षलाभादन्येषामपि रत्नानामवमाननं नोचितमित्यर्थो विवक्षित'। स च कौस्तुभेनेति विशेषतोऽभिधाने न निर्वहति। कौस्तुभस्योपकारकत्वेऽप्यन्यरत्नसामान्यावमाननिषेधायोगात्। कौस्तुभस्य रत्नसामान्यान्तर्गतत्वेनाप्रतीतेः। 'एकेन कि न' इति पाठे तु तथाप्रतीतेर्न दोषः।' इत्युदाहरणचन्द्रिकासक्षेप. २. 'अर्थित्व इति। सीताप्राप्तौ निराशस्य रावणदूतस्य शौष्कलस्येयमुक्तिः। अर्थित्वे मत्प्रेषणाद्याचकत्वे प्रकटीकृतेऽपि प्रभो रावणस्य फलप्राप्तिः सीतालाभो नास्ति। प्रत्युत विपरीत द्रुह्यन् सुकेतुताडकादिवधेन द्रोहकारी विरुद्ध चरितं यज्ञादिरक्षणरूप यस्य तथाभूतो दाशरथिस्तया प्रार्थ्यमानया कन्यया

उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥'

अत्र स्त्रीरत्नमित्यस्यार्थे उपेक्षितुमित्यस्यार्थमाकाङ्क्षति । अन्यथा कथं मृष्यत इत्यनेनामर्षार्थकेनान्वयाप्रसङ्गः । नहि स्त्रीरत्न एवामर्षः किं तु तदुपेक्षायाम् । न च परस्येत्येतदन्तर्भाव्य तदन्तयोऽस्त्विति वाच्यम् । तस्य जनितान्वयबोधत्वेन निराकाङ्क्षत्वात् । न चाभवन्मतयोगसंकरः । वक्तृविवक्षितयोगस्यात्र सत्त्वात् । परं तु विवक्षित एवार्थः साकाङ्क्षतया दुष्टः । अत एव न न्यूनपदत्वान्तर्भावः । दूषकताबीजं चाभिधानापर्यवसानम् । अतो नित्य एवायम् । कश्चित्तु—'स्त्रीरत्नस्य कथं मृष्यत इत्यनेनाकाङ्क्षा । तदन्वयश्च परस्येत्यन्तर्भाव्य संभवति । तच्च जनितान्वयबोधत्वेन निराकाङ्क्षमिति दूषणार्थः । अन्वयप्रयोजकरूपवत्त्वेनोपस्थितत्वे सत्यपर्यवसितार्थान्वयत्वं च लक्षणमतोऽभवन्मतयोगाद्भेदः । तत्रान्वयप्रयोजकरूपेणानुपस्थितेः । 'समाप्तपुनरात्ते विशेषणस्यापर्यवसानमिह तु विशेष्यस्येति ततो भेदः' इत्याह । तद्वृत्तिविरोधादिग्रस्तम् ।

अपदयुक्तः अपदेऽस्थाने युक्तः । यत्र तद्योगे प्रकृतविरुद्धप्रतीतिः । उदाहरणम्—

'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥'

---

रोध इत्यर्थः । **वृत्तिविरोधादीति** । उपेक्षितुमित्याकाङ्क्षतीति वृत्तिग्रन्थादुपेक्षितुमित्यनेनानुपात्तेनैव साकाङ्क्षतायाः प्रतीतेस्तद्विरोध इत्यर्थः । साकाङ्क्ष इत्यक्षरानाजं-

---

सीतया युक्त सयुक्त । दाशरथिरिति पितृसबन्धोत्कीर्तनेन स्वत-ख्यात्यभावादपकर्षसूचनम् । स्वप्रार्थित स्वय न लब्ध कि तु शत्रुणेति वैपरीत्यम् । परस्य शत्रोरुत्कर्षमात्मनश्च मानयशसोर्विस्रसन भ्रश स्त्रीरत्न च सीताख्य जगता पतिर्दशमुखो देवः कथं मृष्यते क्षमते । न कथञ्चिदपीत्यर्थः । अत्र स्त्रीरत्नेऽमर्षायोगेन स्त्रीरत्नमुपेक्षितुमित्यर्थसाकाङ्क्षम् ।' इत्युदाहरणचन्द्रिकासक्षेप .

१. 'आज्ञेति । वीरचरिते । सन्त्येव बहवो गुणास्तथापि बलवानेको दोषस्तानपवदतीत्युपक्रम्य रावणदूतं प्रति जनकपुरोहितस्य शतानन्दस्येयमुक्ति' । यस्य रावणस्याज्ञा शक्रस्येन्द्रस्य शिखामणेः प्रणयिनी प्रिया । शिरोधार्येति यावत् । प्रणयित्वेन रूपणाद्दर्पस्योरविच्छेदसूचनम् । शास्त्राण्येव नवं चक्षुः । शास्त्रदृष्ट्यैवाचरणात् । बहुवचनैकवचनाभ्या सर्वशास्त्रविषयकज्ञानसूचनम् । नवत्वेनाभ्रान्तत्वं सूच्यते । भूतपतौ सकलप्राणिनामीश्वरे पिनाकिनि हरे भक्तिः । लङ्केति प्रसिद्धा दिव्या पुरी पद निवासस्थानम् । द्रुहिणस्य ब्रह्मणोऽन्वये कुले चोत्पत्तिर्जन्म । तत्तस्मादहो आश्चर्यमीदृगुक्तगुणगणयुक्तो वरो न लभ्यते । दुर्लभ इत्यर्थः । एष रावणः रावयति पीडाजननेनाक्रन्दयति लोकानिति

अत्र जगदाक्रन्दनदायित्वादिना रावणस्य त्याज्यत्वं विवक्षितम् । तथा च स्याच्चेदेष न रावण इत्यत्र क्व नु पुनरित्यादि योजितं समाधाने पर्यवस्यतीति दुष्टम् । उत्पत्तिर्द्रुहिणान्वये चेत्यत्र यदि योज्यते तदा विवक्षितासिद्धिरेवेत्यपदस्थपदवदस्य दोषत्वम् । न च प्रकाशितविरुद्धान्तर्भावः । स्थानविशेषयोगमनपेक्ष्य तस्य प्रवृत्तेः । दुष्टिबीजं च विरुद्धप्रतीतिः । अतो नित्य एवायम् केचित्तु—अपदमुक्त इति पठित्वा व्याचक्षते—"अपदमुक्तः पदे स्थाने योऽमुक्तः 'आज्ञा शक्र-' इत्यादौ च स्याच्चेदेष न रावण इत्येतावता विच्छेदे कापि कान्तिरनुभवसिद्धा । 'जीवत्यहो रावणः' इतिवत् । सोऽयमर्थोऽत्र चेन्न त्यज्यते क्व नु पुनरित्यादिना विस्तार्यते तदा मध्यप्रवेशेनायमर्थोऽलक्षितप्रायश्चमत्कारं नावहतीत्यनुभवसिद्धम्" इति ।

सहचरभिन्नः समभिव्याहृतविजातीयः । वैजात्यं चोत्कृष्टत्वापकृष्टत्वाभ्याम् । उदाहरणम्—

'[1]श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥'

अत्र श्रुतबुद्ध्यादिभ्यः उत्कृष्टेभ्यः समभिव्याहृतेभ्यो व्यसनमूर्खतयोर्विजातीयत्वमुभयोरुपादेयत्वमनुपायदेत्वं वा प्रतीयत इति दूषकताबीजम् । नित्यश्चायम्।

प्रकाशितविरुद्धः । प्रकाशितो विवक्षितार्थस्य विरुद्धोऽर्थो येन वाक्यार्थेन सः । सहचरभिन्ने पदार्थस्यैव तथात्वमिति ततो भेदः । उदाहरणम्—

---

वमार्थः । **विवक्षितासिद्धिरेवेति** । तदाहि उत्पत्तिर्द्रुहिणान्वये चेत्यन्ताः सर्वे गुणा न सर्वत्र । यद्यसौ रावणस्तद्वान्भवेदस्ति चासौ तादृशोऽन्यस्तु नेदृश इत्यर्थपर्यवसाने विवक्षितस्य रावणत्याज्यस्यासिद्धिरेव न त्वापाततोऽपि सिद्धिरित्यर्थः ।

---

तथाभूतश्चेन्न स्यात्तत्तदा क्व नु पुनः सर्वत्र जने सर्वे पूर्वोक्ता गुणाः । न क्वापि । किं तु रावण एव सर्वगुणशालितयोत्कृष्टः स्यात् । जगदाक्रन्दनदायित्वेन तु बलवता दोषेणायमनुपादेय इति भावः । अत्र स्याच्चेदेष न रावण इत्यत्रैव काव्यार्थसमाप्तिरुचिता । क्व नु पुनरित्यादिविस्तारणे तु मध्यप्रवेशेन स्याच्चेदेष न रावण इत्यर्थोऽलक्षितप्रायतया न चमत्कारविश्रान्तिस्थानतां लभत इत्यनुभवैकसाक्षिकमिति ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'श्रुतेनेति । श्रुतेन शास्त्रश्रवणेन बुद्धिरलंक्रियत इत्याद्यन्वयः । व्यसनेन द्यूतादिना । निम्नगा नदी । धृतिर्धैर्यम् । समाधिना योगेन धर्मचिन्तया वा । नयेन नीत्या । शेषं स्पष्टार्थम् । श्रुतादिषूत्कृष्टतया सहचरेषु निकृष्टतया तद्भिन्नयोर्व्यसनमूर्खतयोरुपादानमनुचितम् । (?)न्यायेन तयोरप्युपादेयत्वप्रतीतिप्रसङ्गादिति ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥'

अत्र विदितं तेऽस्त्विति वाक्यस्यार्थो लक्ष्मीस्ततोऽपसरतीति विरुद्धं प्रकाशयति । इदमेव दूषकताबीजमिति नित्यदोषोऽयम् ।

विध्ययुक्तः । अयुक्तविधिरित्यर्थः । अयुक्तत्वं च विधेरविधेयस्यैव विधेयत्वेन वा अयुक्तक्रमतया वा । तत्राद्यो यथा—

'प्रयत्नपरिबोधितस्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना-
मपैति रिपुकाननातिगुरुरद्य भारो भुवः ॥'

अत्र पाण्डवभयेनाद्यावधि तव निद्रा नाभूदेव । अद्य तु मया शमितेषु तेषु निःशङ्कतया निद्राणस्त्वं प्रयत्नेन बोध्यस इति तात्पर्यम् । तथा च शयितस्त्वं प्रयत्नेन बोध्यस इति विधिर्युक्तो न तु शेष इति शयनस्य अविमृष्टविधेयांशे तु युक्तस्यैव विधिः । परं त्वविमर्शमात्रम् । अत्र त्वप्रयुक्तस्यैव विधिरिति भेदः । विवक्षितानिर्वाहोऽत्र दुष्टिबीजम् । द्वितीयो यथा—

---

**विरुद्धं प्रकाशयतीति** । राजस्तुतिविरोधिनमित्यर्थः । **तथा चेति** । शयितः प्रयत्नेन बोध्यत इति प्रयत्नबोधनं हि शयनातिशयव्यञ्जकतया प्राधान्येन बोधनीयमिति तस्यैव विधेयत्वं युक्तं शयनविशिष्टस्य तस्य वा न तु शयनमात्रस्य ।

---

१. लग्नमिति । व्याख्यातपूर्वः । अत्र विदितं तेऽस्त्वित्यनेन लक्ष्मीस्ततोऽपसरतीति विरुद्धार्थप्रकाशः । इत्युदाहरणचन्द्रिकासङ्क्षेप. २. 'प्रयत्नेति । वेणीसंवरणे द्रोणवधकुपितस्य शत्रून्प्रति प्रतिकर्तुमिच्छोरश्वत्थाम्नो दुर्योधन प्रत्याश्वासनोक्तिरियम् । हे राजन्, अद्य त्वं निशा व्याप्य शेषे निद्रास्यसीति सबन्धः । वर्तमानसामीप्ये वर्तमानत्वेन निर्देशः । कीदृशः । स्तुतिभि· प्रयत्नेन परिबोधितः । तथा निद्रास्यसि यथैवं प्रतिबोधनीय इत्यर्थः । अद्य भुवनमकेशवं श्रीकृष्णरहितमपाण्डवं पाण्डवैश्च रहितं निर्गता· सोमकाः पाञ्चाला यस्मात्तथाभूत च । यत· करोमीति शेष· । अद्य दोःशालिनां बाहुशालिना क्षत्रियाणामियं रणकथा सङ्ग्रामवार्ता परिसमाप्यते । दूरतस्तु सङ्ग्रामः । अद्य भुवः पृथिव्या भारोऽपैत्वपगच्छतु । कीदृशः । रिपुरूपेण काननेन वनेनातिगुरुर्गरीयानित्यर्थ· । कालान्तरकर्तव्यसंभावनाया· सर्वथैव निरासाय प्रतिपादमद्येत्युक्तिः । अत्र तथा निद्रास्यसि यथैव परिबोध्यसे इति प्रतिबोधन एव विधेयत्वविश्रान्तिर्युक्ता न शेषे इति शयने इत्ययुक्तविधित्वम् ।' इत्युदाहरणचन्द्रिकासङ्क्षेप·.

'वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते॥'

मृगचर्मवसनं मेघतोयकणिकापानं वायुभक्षणं चेत्युत्तरोत्तरं तीव्रमिति तत्क्रमेण विधिर्युक्तः। लोकप्रसिद्धक्रमलङ्घने श्रोतुरुद्वेगोऽत्र दुष्टिबीजमिति नित्योऽयम्।

अनुवादायुक्तः अयुक्तोऽनुवादः। अयुक्तत्वं चात्र विध्यननुगुणत्वम्। यथा—

'अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना॥'

अत्र विरहिप्राणदमनेत्यनुवादः। कथय क्वेन्दुवदनेति विधिविरुद्धः। तदेव च दूषकताबीजमिति नित्यदोषोऽयम्।

---

बोधितः शेष इति विरोधाच्चेति भावः। **लोकप्रसिद्धेति**। लोकप्रसिद्धस्योत्तरोत्तरतीव्रक्रमस्य त्यागमात्रम्। न त्वत्र लौकिकक्रमेण विरोधः 'तुरंगं मातङ्गं वा—' इतिवदस्तीति दुष्क्रमाद्भेदो ध्वनितः। तादृक्त्वादिजातिपुरस्कारेणेत्यर्थः। आदिना

---

१. 'वातेति। विषधरैः सर्पैर्वाताहारतया जगदाश्वास्य एतेऽतिधर्मिष्ठास्तपस्विन इति विश्वासयुक्तं कृत्वा निःशेषितं भक्षितम्। ते पुनर्विषधरा अभ्रसंबन्धितोयकणिकैव तीव्रं व्रतं येषां तथाभूतैः। मेघजलबिन्दुमात्राहारैरित्यर्थः। बर्हिभिर्मयूरैर्ग्रस्ताः। तेऽपि मयूराः क्रूरं कठिनस्पर्शं चमूरोश्चित्रमृगस्य चर्मैव वसनं येषां तथाविधैर्लुब्धकैर्व्याधैः क्षयं नीताः। इत्येवं दम्भस्य शाठ्येन धर्माचरणस्य स्फुरितं चेष्टितं विदन्नपि वाताशनादिव्रतं सर्पाद्यै-र्जगदादिभक्षणाय कृतमिति जानन्नपि जाल्मो मूर्खो जनो गुणानीहते। दाम्भिकेष्विति शेषः। ईहते संभावयतीत्यर्थः। 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः। अत्र दम्भचेष्टाया विधेयत्वेन विवक्षितत्वाज्जगन्निःशेषयितुं वाताहारः कृतस्तान्ग्रसितुमभ्रकणिकाव्रतं कृतं तान्क्षयं नेतुं चर्मवसनं कृतमित्येवं व्युत्क्रमेणाभिधातुं युक्तम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अरे इति। विरहिणः पुरूरवस इयमुक्तिः। अरे हे सखे नीलोत्पल, अहं सखेदः खेदसहितोऽस्मि अत इन्दुवदना उर्वशी क्वेति कथय मोहं श्लथय शिथिलं कुर्विति संबन्धः। कीदृश। रामाणां हस्तस्याभरणालंकारभूत। अनेन परिचयाद्वार्ताभिज्ञत्वं ध्वन्यते। भसलानां भ्रमराणां श्रेण्याः शरण गृहभूत। स्मरक्रीडायां या व्रीडा तच्छमन उद्दीपनतया तदपनायक। विरहिप्राणानां दमन संत्रासक। सरोहंसस्य सरःश्रेष्ठस्योत्तंस भूषण। प्रचलानि मन्दमारुतेन चञ्चलानि दलानि यस्य तथाभूतेत्यर्थः। 'निर्लोभे नृपतौ हंसः' इति विश्वः। अत्र विरहिणः स्वस्य मोहश्लथनविधौ विरहिप्राणदमनेत्यनुवादो विरुद्धत्वादयुक्तः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

त्यक्तपुनःस्वीकृतः पूर्वं त्यक्तोऽनन्तरं पुनः स्वीकृत उपात्तः । तस्मिन्नेव वाक्यार्थे विशेषणान्तरोपादाने समाप्तपुनरात्तम् । अत्र त्वन्य एव वाक्यार्थ इति ततो भेदः ।

उदाहरणम्—'लग्नं रागावृताङ्ग्या–' इति ।

अत्र विदितं तेऽस्त्वित्युपसंहृतो राजदोपलेनास्मि दत्ता भृत्येभ्य इत्येतावता पुनरुपात्तः । स चाप्रयोजकः । उत्प्रेक्षाया उपसंहृतेनैव निर्वाहात् । श्रीनियोगादिकं त्वदुष्टमेव । अन्यथा वाक्यैकवाक्यतोच्छेदापत्तेः । दूषकताबीजं त्वप्रयोजकत्वं सहृदयवैरस्याधानं वा । लोकेऽपि हि त्यक्तस्य भक्ष्यादेः पुनरुपादानं वैरस्यमावहति । नित्यश्चायम् ।

अश्लीलो व्रीडादिसमर्पकोऽर्थः । यथा—

'उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥'

शब्दान्तरेणाप्युपादीयमानोऽयमर्थः पुंव्यञ्जनादिसाधारण्येन प्रतीतेर्व्रीडादायी ।

ननूदाहरणेषूक्तेषु किमुदाहृता एव दोषाः । तथा सत्यन्यलक्षणानां तेषु दर्शनादतिव्याप्तिः । अथ तत्र दोषान्तराण्यपि तर्हि किमिति न प्रकाशितानीति चेत्, अप्रकृतत्वादिति ।

अथैषां यथायथमदोषत्वे प्रतिपादयितव्येऽर्थदोषाणां संनिधानात्प्रथममर्थदोषस्यैव तत्प्रतिपादयति—

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।**
**संनिधानादिबोधार्थं**

अवतंसादिपदैर्जात्यादिपुरस्कारेण कर्णाभरणादीन्येवोच्यन्त इत्यर्थप्राप्तौ कर्णपदादीनां यद्यप्यपुष्टार्थत्वं पुनरुक्तत्वं वा युज्यते तथापि क्वचित्कर्णेऽवतंस इत्यादि व्युत्पत्त्या क्वचिल्लक्षणादिना च कर्णस्थित्यादिरूपस्याधिकस्य विवक्षितार्थस्य प्रतिपत्तेरदोषत्वम् । यथा—

'अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥'

अत्रावतंसस्य कर्णस्थित्यवस्था कर्णपदोपादानेनावगम्यते । तदवगत्या किं

---

१. 'हन्तुमेव प्रवृत्तस्य' इत्युदाहरणचन्द्रिकाधृत. पाठः । 'हन्तुमिति । हननं हिंसा सुरतोचितप्रहारश्च । स्तब्धत्वमनम्रता दृढत्वं च । विवरं परदूषणं स्त्रीणां वराङ्गं च । पातोऽपकर्षो धातुपातजनितसंकोचश्च । उन्नतिरुत्कर्षो धातुप्रत्यागमाद्दृढता च । अत्र स्पष्टमश्लीलत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेप. २. 'अस्या इति । स्पष्टम् । अत्रावतंसादिपदेनैव कर्णाभरणोक्तावपि कर्णपदस्य कर्णस्थितिव्यञ्जकतया न पुनरुक्तत्वादिदोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

प्रयोजनमिति चेत्, वर्णनीयोत्कर्षः। कथमिति चेत्, न स्वरूपतोऽस्य विभूषणजेतृत्वम्, किं तु तत्कर्णावस्थित्येति पर्यवसानात्। एवं श्रवणकुण्डलपदेऽप्यूह्यम्। न केवलं कर्णश्रवणपदयोरेवायं महिमा, किं त्वन्येषामपि। यथा—

'अपूर्वमधुरामोदप्रसादितदिशस्ततः।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः॥'

अत्र शिरःपदादाने शेखरस्वाम्यमात्रं लभ्यते, न तु तदलंकृतत्वम्। तथा च तत्प्रतीतेरदोषत्वम्।

'विदीर्णाभिमुखारातिकराले संयुगान्तरे।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फूर्जितं तव॥'

अत्र धनुःशब्दो ज्याया आरूढत्वप्रतिपादनाय। तच्च किणस्य प्रहारकृतत्वप्रतिपत्तये। यत्र त्वारूढत्वं तत्प्रतीतिप्रयोजनं वा नास्ति तत्र न धनुःशब्दोपादानमपि। यथा—

'ज्याबन्धनिःस्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात्॥'

इत्यत्र।

'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः।
मुक्ताहारेण लसता हसतीव स्तनद्वयम्॥'

अत्र हारशब्दस्य मुक्तासंदर्भशक्तत्वेऽपि न मुक्ताशब्दवैयर्थ्यम्। अन्यरत्नामिश्रत्वप्रतिपादनेनोत्प्रेक्षायामुपयोगात्।

---

१. 'अपूर्वेति। अपूर्वो लोकोत्तरो मधुरो हृद्यो य आमोदो गन्धपुष्पादिपरिमलस्तेनामोदिता दिशो यैस्तथाभूताः भृङ्गैर्मुखराः शिरसि शेखरशालिनः किरीटशोभिनः पुरुषा आययुरित्यन्वयः। 'मदिरामोद-' इति पाठे परिपीताया मदिराया आमोदः। अत्रापि शिरःशेखरेति पूर्ववत्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'विदीर्णेति। हे राजन्, संयुगान्तरे रणमध्ये तव दोष्णा हस्तेन विस्फूर्जितमित्यन्वयः। कीदृशे। विदीर्णैर्विक्षतैरभिमुखैररातिभिः शत्रुभिः कराले व्याप्ते भीषणे वा। किंभूतेन दोष्णा। धनुर्ज्यायाः किणः प्ररूढव्रणचिह्नं तदेव चिह्नं यस्य तथाभूतेनेत्यर्थः। अत्र धनुरारूढता प्रतीयते धनुःपदेन। सा च किणस्य प्रहारकृतत्वप्रतिपत्तये।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'ज्याबन्धेति। यस्य कार्तवीर्यार्जुनस्य कारागृहे बन्धनागारे निर्जितेन्द्रेणापि लङ्केश्वरेण रावणेनाप्रसादात्प्रसादपर्यन्तं स्थितमिति संबन्धः। कीदृशेन। ज्यया मौर्व्या यो बन्धस्तेन निःस्पन्दौ निश्चेष्टौ भुजौ यस्य तथाभूतेन। तथा विशेषतो निःश्वसन्ती वक्त्रपरम्परा यस्य तथाभूतेनेत्यर्थः। अत्र पूर्वोक्तप्रयोजनाभावाद्धनुःपदानुपादानम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'प्राणेश्वरेति। स्तनद्वयं कर्तृ प्राणेश्वरस्य दयितस्य परिष्वङ्गेणालिङ्गनेन या विभ्रमस्य विलासस्य प्रतिपत्तयस्ताभिरुपलक्षितं लसता स्फुरता मुक्ताहारेण हसतीवेत्यन्वयः। मुक्ताहार एव हास इत्यर्थः। 'हारो मुक्तावलौ' इति विश्वः। अत्रापि रत्नान्तरामिश्रत्वबोधनाय मुक्तापदप्रयोगः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'सौन्दर्यसंपत्तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान्पुष्पमालेव कं नाकर्षति सा सखे ॥'

मालाशब्दो यद्यपि पुष्पस्यैव स्रजि शक्तस्तथापि न पुष्पपदमपुष्टार्थम् । लक्षणयोत्कृष्टत्वप्रतिपादकत्वात् । अयमेव करिबृंहितन्यायः । ननु मालाशब्दस्य पुष्पस्रङ्मात्रशक्तत्वमित्यसम्यक् । रत्नमालेत्यादिप्रयोगदर्शनादिति चेत्, न । निरुपपदस्य तस्य तथात्वात् ।

स्थितेष्वेतत्समर्थनम् ॥ १० ॥

महाकविप्रयुक्तेष्वेवं समाधानम् । न तु स्वेच्छया कर्णावतंसादिपदवज्जघनकाञ्च्यादि करिकलभवदुष्ट्रकरभादि वा प्रयोक्तव्यम् । वामनस्तु—"अपुष्टस्यापि तत्रोपादानमुचितं यत्र तद्विशिष्यते । अन्यथा कुतस्तद्विशेषणान्वयः स्यात् । यथा—'जगाद विशदां वाचं मधुराक्षरशालिनीम्' इत्यादौ । अत्र हि वाचमित्यनुपादाने मधुरत्वादितद्विशेषणयोगः क्व प्रत्येतव्यः" इत्याह । तन्न युक्तमुदाहृतम् । विशदं जगादेत्यादिक्रियाविशेषणत्वेनैव समीहितसिद्धेः । तस्माद्यत्र न क्रियाविशेषणत्वं योग्यं तदुदाहरणीयम् । यथा—

'चरणत्रपरित्राणरहिताभ्यामपि स्फुटम् ।
पादाभ्यां दूरमध्वानं व्रजन्नपि न खिद्यते ॥' इति ।

अत्र हि चरणत्रेत्यादि पदविशेषणं न क्रियाविशेषणार्हमिति प्रकाशकृत् । तदपि न युक्तमुदाहृतमिति वयम् । कर्तृविशेषणत्वेनैवोपपत्तेः । तस्मान्मदीयं पद्यमुदाहरणीयम् । यथा—

'निर्वातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती ।
न केवलं यूनि मनोभवेऽपि व्यनक्ति कंचित्तपसः प्रभावम् ॥'

अत्र निर्वातपद्मोदरसोदराक्षीत्येवं कर्तृविशेषणत्वेनोपपत्तिरिति चेत्सत्यम् ।

---

कर्णाभरणत्वोपाधिना वेत्यर्थः । तत्राद्यपक्षे कर्णाभरणत्वमर्थप्राप्तमन्त्ये तु पुनरुक्ततेत्यर्थः । **निर्वातेति** । वातसंबन्धरहितं यत्पद्मं तस्योदरं मध्यं तत्सदृशाभ्याम् । निमेषरहिताभ्यामिति यावत् । **मनोभवेऽपीति** । एवंविधकामिनीरूपनिजकार्य-

---

१. 'सौन्दर्येति । हे सखे, सा वनिता कान्पुरुषान्नाकर्षति न वशीकरोति । कान्केव । षट्पदान्पुष्पमालेव । सा का । यस्याः सौन्दर्यसंपत्तारुण्यं च । अस्तीति शेषः । ते तेऽनुभूता नानाविधा विभ्रमा विलासाः सन्तीत्यर्थः । अत्र निरुपपदान्मालाशब्दादेव पुष्पस्रक्प्रतीतेः पुष्पपदमुत्कृष्टपुष्पत्वे संक्रमितवाच्यम् । एवमेव करिबृंहितादिष्वपि बोध्यम् ।' इत्युदाहरणचन्द्रिकासक्षेपः. २ 'चरणत्रेति । चरणत्रमुपानत् । तत्कृतपरित्राणरहिताभ्यामित्यर्थः । अत्र चरणत्रेति विशेषणबोधनाय पादाभ्यामित्यस्योपादानान्नापुष्टार्थत्वम् ।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. अयं श्लोकस्तूदाहरणचन्द्रिकाया न व्याख्यात

परं त्वक्षिपदोपादानमपेक्ष्यैव। किं च सोदरत्वमात्रं नान्यविशेषणीभवितुमर्हति यथा मधुरत्वचरणत्रपरित्राणरहितत्वे।

**ख्यातेऽर्थे निर्हेतोरदुष्टता**

यथा—

'चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥'

रात्रौ चन्द्रगतायाः पद्मगुणानुपभोगे पद्मसंकोचो हेतुः। दिवा च पद्माश्रितायाश्चन्द्रगुणानुपभोगे चन्द्रस्य निष्प्रभत्वं कारणम्। ते चातिप्रसिद्धेरेवावगम्येते इति न तदुपादानापेक्षेत्यदोषः।

अथ पदादिदोषाणामप्यदोषत्वं क्वचिदित्याह—

**अनुकरणे तु सर्वेषाम्।**

प्रतिपादितदूषकताबीजाभावात् तत्र वैरस्याभावस्यानुभविकत्वेन तदतिरिक्तस्थल एव दोषत्वव्यवस्थितेर्वा। यथा—

'मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्।
पश्यैष च गवित्याह सुत्रामाणं यजेति च॥'

अत्राद्राक्षंगोसुत्रामपदानि श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तानि। अनुकरणे चैषामदोषत्वबीजं प्रतिपादितम्। तद्वदन्यत्राप्यूह्यम्।

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादिमहिम्ना दोषस्यापि क्वचिद्दोषत्वाभावमात्रं क्वचित्तु भाक्तो गुणव्यवहारोऽपीत्याह—

**वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥११॥**

नोभौ न गुणो न दोषश्च। तत्र स्ववैयाकरणत्वं प्रतिपिपादयिषौ वक्तरि

---

साधनसंपत्तेरिति भावः। **बीजं प्रतिपादितमिति**। प्रथमे स्वायत्तत्वाभावः, द्वितीयेऽर्थाविवक्षा, तृतीये कविसमयलङ्घनस्यानुकारिण्यप्रसक्तेरित्येतद्दोषप्रतिपादनावसरे प्रतिपादितम्। इहापि वैरस्याभावरूपमप्युक्तमित्यर्थः। प्रतिपाद्यपदेनार्थो

---

१. 'चन्द्रमिति। कुमारसंभवे पद्यमिदम्। लक्ष्मीश्चन्द्रगता सती पद्मगुणान्सौरभ्यादीन्न भुङ्क्ते। तत्संपृक्ता न भवतीत्यर्थः। रात्रौ पद्मस्य संकुचितत्वात्। पद्माश्रिता दिवा विकसत्कमलाश्रिता सती चान्द्रमसीमभिख्यां शोभां न भुङ्क्त इत्यनुषङ्गः। अत्र चन्द्रस्य निष्प्रभत्वं हेतुः। उमामुखं तु प्रतिपद्य प्राप्य अत एव लोला चपलाक्षी लक्ष्मीर्द्विसंश्रया चन्द्रपद्मोभयाश्रिता प्रीतिमवाप। तस्योभयगतगुणाश्रयत्वादिति भावः। अत्र हेतोः प्रसिद्धत्वान्न पूर्वार्धे निर्हेतुत्वदोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'मृगेति। मृगचक्षुषं मृगनेत्राम्। गवीत्यपशब्दानुकरणम्। सुत्रामाणमिन्द्रम्। अत्र परोक्तानुकरणाच्छ्रुतिकटुच्युतसंस्कृत्यप्रयुक्तत्वानामदोषता।' इत्युदाहरणचन्द्रिकासंक्षेपः.

कष्टत्वं गुणः । प्रतिपाद्यस्य ततोऽतिशयेन प्रतीतेः । दोषत्वाभावश्चोपपादित एव । यथा—

[1]दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहिते न ते ॥

वैयाकरणादौ प्रतिपाद्ये च तस्य गुणत्वम् । तद्भावनाभावितस्य तच्छ्रवणेन प्रीत्युपचयात् । यथा—

'[2]यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च संमदम् ॥'

ओजस्विनि रौद्रादिरसे व्यङ्ग्ये च तस्य गुणत्वम् । कठिनशब्दस्य तद्व्यञ्जकत्वात् । तत्र बीभत्से यथा—

'[3]अत्रप्रोतबृहत्कपालनलकक्रूरक्कणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥'

---

बोधनीयजनश्चोच्यते । प्रतिपाद्यस्य वैयाकरणत्वस्य । **उपपादित एवेति** । श्रोतुरनुद्वेगादिति तदवसरे उक्त इत्यर्थ. । **दीधीङिति** । एतद्धातुद्वयसमः कश्चित्तव शत्रुरिति राजानं प्रत्युक्तिः । साम्यमाह—**गुणेति** । 'दीधीवेवीटाम्' इति निषेधात् ।

---

१. 'दीधीङिति । कश्चिन्मन्दभाग्यो दीधीङ् वेवीङ् इति धातुद्वयसदृश· । गुणो धैर्यादि वृद्धि· सवृद्धिस्तयोर्गुणवृद्ध्योरभाजनमाश्रयः । धातुपक्षे गुणः 'अदेङ्गुणः' इति परिभाषितः । वृद्धि 'वृद्धिरादैच्' इति परिभाषिता । तयोरभाजनम् । 'दीधीवेवीटाम्' इति सूत्रेण निषेधात् । तथा कश्चित्क्विप्प्रत्ययेन निभस्तुल्य· । यत्र यस्मिन्दैवहतके पुरुषे क्विप्प्रत्यये च सनिहिते सति ते गुणवृद्धी न भवतः । 'क्ङिति च' इति निषेधात् । अत्र वक्तुर्वैयाकरणत्वात्कष्टत्वं गुण· ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'यदिति । पदविद्याया व्याकरणशास्त्रे विशारद निपुणं त्वामहं यदाद्राक्ष दृष्टवांस्तदा स्वस्योपाध्यायं गुरुमस्मार्षं सादृश्यात्स्मृतवान् । समद हर्ष च सम्यगस्प्राक्ष स्पृष्टवान् । प्राप्तवानित्यर्थ । अत्र वैयाकरणस्य सबोध्यत्वाद्गुणत्वम् ।' इत्युदाहरणचन्द्रिकासक्षेप·. ३ 'अत्रेति । अत्र प्रकृता ताडका दर्पेणोद्धत यथा स्यात्तथा धावतीत्यन्वय· । कीदृशी । अत्रे प्रोतानि ग्रथितानि बृहन्ति महान्ति यानि कपालानि शिरोस्थीनि नलकानि जङ्घास्थीनि च तान्येव क्रूर यथा स्यात्तथा क्वणन्ति कङ्कणानि तत्प्रायाणि तद्बहुलानि प्रेङ्खितानि चञ्चलानि यानि भूषणानि ग्रैवेयाङ्गदादीनि तेषा रवैः शब्दैरम्बरमाकाशमाघोषयन्ती प्रतिध्वनिव्याप्त कुर्वती । तथा पूर्व पीत पुनश्छर्दितं वान्त रक्तमेव कर्दम· पङ्कस्तेन घनो व्याप्तो यः प्राग्भार उत्तरकायस्तत्र घोर यथा स्यात्तथोल्लसन्तौ नृत्यन्तौ व्यालोलौ चपलौ यौ स्तनौ तयोर्भारेण भैरव भीषण वपुर्यस्यास्तथाभूता । 'प्राघार' इति पाठे प्राघारो निरन्तरक्षरणम् । सेक इति कश्चित् । तेन घोराविति स्तनविशेषणम् । अत्र बीभत्सरसस्य व्यञ्ज्यत्वात्कष्टत्व गुणः ।' इत्युदाहरणचन्द्रिकासक्षेप·.

ओजस्विनि सिंहादौ वाच्येऽपि तस्य गुणत्वम् । यतो मसृणशब्दप्रयोगेनोर्जितोऽप्यर्थो मृदुवद्भासते । ऊर्जितशब्दप्रयोगे त्वौर्जित्येन । उदाहरणम्—

'मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजथ किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥'

अत्र सिंहो वाच्यः । प्रकरणविशेषे च गुणत्वम् । वक्तुर्वैयाकरत्वाद्यभावेऽपि कोपादिप्रस्तावे च तदनुगुणत्वात् । तथा—

'रक्ताशोक कृशोदरी क नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥'

अत्र मिथ्याशिरोवधूननेन कोपप्रकरणे । न चास्य व्यङ्ग्य एव प्रवेशः । कोपस्य व्यङ्ग्यत्वादिति वाच्यम् । वक्त्राद्यतिरिक्तस्थानीयस्य व्यङ्ग्यस्य व्यङ्ग्यपदोपादानाद्गोबलीवर्दन्यायात् दोषत्वाभावश्चैतेषु गुणत्वप्राप्तेः स्फुट एव । क्वचित्पुनर्न दोषत्वं न वा गुणत्वं यत्र न रसो न वा प्रतिपाद्याद्यौचित्यम् । अथ

---

१. 'मातङ्गा इति । हे मातङ्गा गजाः, वल्गितैर्बृंहितैः किमु । प्रयोजनमिति शेषः । हे जम्बुकाः शृगालाः, अफलैराडम्बरैः किम् । हे सारङ्गा मृगास्तथा महिषाः, मदं गर्वं किं किमर्थं व्रजथ । शून्येषु बलवद्रहितेषु स्थानेषु के न शूराः । अपि तु सर्वेऽपीत्यर्थः । तथा च शूरत्वख्यापनार्थमपि नैतदुचितमिति भावः । किं तर्हि सार्थकं तत्राह—कोपेत्यादि । कोपस्याटोपेन परिपाट्या समुद्भटा उत्कटा उच्छ्रिता सटाकोटिः केसराग्रं यस्य तथाभूतस्येभारेः सिंहस्य पुरोऽग्रे सिंधोरिव ध्वानिनि ध्वानशालिनि हुंकृते स्फुरति सति यद्गर्जितं तद्गर्जितम् । सार्थकमित्यर्थः । द्वितीयगर्जितपदस्य सार्थकत्वविशिष्टलाक्षणिकत्वात् । सफलगर्जितत्वरूपार्थान्तरसंक्रमितवाच्यत्वं तु न युक्तम् । गर्जितान्तरस्याफलत्वेन पूर्वमनुक्तत्वादिति । अत्र सिंहरूपवाच्यौचित्यात्तदभिधाने कष्टत्व गुणः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. रक्तेति विरहिणः पुरूरवसः किलेयमुक्तिः । हे रक्तवर्णाशोक, श्लेषादनुरक्तानामशोको यस्मात्तथाभूत, अनुरक्तं जनं मद्रूप त्यक्त्वा कृशोदरी क नु गतेत्यन्वयः । वातचालितां तदग्रशाखा दृष्ट्वा पुनराह—नो दृष्टेतीति । इतीत्यनन्तर सूचयितुमिति शेष । वातेनाधूत कम्पित शिरो मुधैव वृथैव [illegible] मिथ्येति यावत् । किं कुतश्चालयसि । पवनावधूतस्यैव शिरसः क्रोधाद्धातव्याधिक[illegible]नोक्तिः । मिथ्यात्वं समर्थयति—उत्कण्ठेत्यादिना । तस्याः कृशोदर्याः पादाहतिं पादाघ[illegible]तरेण विना भवतोऽय दृश्यमानः पुष्पोद्गमः कुतः कस्माद्धेतोः । स्यादिति शेषः । कीदृ[illegible]ष्पोद्गमः । उत्कण्ठया घटमानाना मिलिताना षट्पदाना या घटा समूहस्तस्य संघट्टेन नि[illegible]न्धेन दष्टाः खण्डितारछदाः पत्राणि यस्य तथाभूत इत्यर्थः । अत्र मिथ्याशिरोधूननेन [illegible]प्रकरणे कष्टत्व गुणः ।' इत्युदाहरणचन्द्रिकासक्षेपः.

रसे यदि वियात्याभावादस्यादोषत्वं तदान्येषामपि स्यात्, तथा च नीरसदोषोहरणं विरुध्येतेति चेत्, न । तस्योपलक्षणत्वाद्दोषपरिचयमात्रार्थत्वाद्वा ।
था—

'[१]शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा-
न्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥'

नीरसत्वं चात्रानुप्रासमात्रमग्नतया रसे तात्पर्याभावात् । नचानुप्रासास्पदैकतव गुणत्वम् । 'सोऽध्यैष्ट वेदान्–' इत्यादावपि तदापत्तेरिति । न च परुषवर्णत्वमनुप्रासे प्रयोजकम् । येन तद्घटकतया अदोषत्वं स्यात् ।

अप्रयुक्तनिहतार्थौ श्लेषयमकादावदुष्टाविति प्रतिपादितं प्राक् । यदि च प्रयोतनानुसंधानव्यग्रता दुष्टिबीजं तथाप्यत्र न दोषता । तदलंकारत्वस्य प्रयोजनस्य प्रतीतेर्व्यग्रताभावात् । यथा—

'[२]येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।

---

यत्र क्विप्प्रत्यये संनिहिते ते गुणवृद्धी न स्त । 'क्ङिति च' इति निषेधादिति । शेषं स्पष्टम् । समस्प्राक्षं संस्पृष्टवान् । संमर्दं हर्षम् । **अथ नीरसेति** । वियात्यं रसाभावादित्यर्थः । अन्येषामप्यश्लीलादिदोषाणां रसापकर्षकत्वान्नीरसेऽदोषत्वं स्यात् । एवं च नीरस दोषोदाहरणमयुक्तम् । यथाश्लीले 'साधन सुमहद्यस्य–' इति, तथा 'सोऽध्यैष्ट–' इत्यादिश्रुतिकटूदाहरणमपि नीरसत्वादयुक्तमिति शङ्कार्थ. । **न तस्येति** । नीरसो-

---

१. 'शीर्णेति । मयूरकवेः सूर्यस्तुतिरियम् । तस्य घर्मांशोः सूर्यस्य घृणयो रश्मयो वो युष्माकमंहसा पापाना विघात नाश शीघ्रं विदधतु कुर्वन्त्वित्यन्वयः । स कः । यो विशीर्णनासाचरणहस्तान् व्रणयुतैरपघनैरङ्गैरुपलक्षितान् । अतएव घर्घरवच्चलज्जलध्वनिवदव्यक्तो घोष शब्दो येपा तथाभूतान् । यतोऽघौघै. पापसमूहैर्दीर्घकाल व्याप्याघ्रातानाक्रान्ताञ्जनानुल्लाघयन्नीरोगान्कुर्वन्घटयति अर्थाद् घ्राणादिभिरङ्गैः सवध्नाति । कीदृशस्य घर्मांशोः । अन्तर्हृदये द्विगुणा वहुला घना निविडा या घृणा कृपा तन्निघ्ना तदायत्ता निर्विघ्ना विघ्ननाशिका वृत्तिर्व्यवसायो यस्यैवभूतस्य । घृणयः कीदृशाः । सिद्धाना सवैः समूहैर्दत्तोऽर्घो येभ्यस्तथाभूताः । 'घृणिभिरपघनै.' इति पाठे जुगुप्साविपयैरित्यर्थ. । 'घर्घरस्तु चलद्वारिध्वाने' इति विश्वः । 'उल्लाघो निर्गतो गदात्' इत्यमरः । अत्रानुप्रासैकपरतया नीरसत्वात्कष्टत्वं न गुणो न वा दोप. ।' इत्युदाहरणचन्द्रिकासंक्षेप ।

२ 'येनेति । सर्वद. सर्वप्रदो माधव. श्रीकृष्णस्त्वा पायादित्यन्वयः । स कः । अभवेनासंसारिणा येनान शकट ध्वस्त पादेन पर्यस्तम् । बलिं दैत्य जयतीति बलिजित् स्वस्य कायः पुरामृतमथनावसरे स्त्रीकृतः कैटभीरूपता प्रापितः । यश्चोद्धृतस्य भुजंगस्य 'कालियस्य हन्ता । रवे शब्दब्रह्मणि लयो यस्य सः । अराणा वलय मण्डल यत्र तदरवलयं

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदोमाधवः ॥'

अत्र माधवपक्षे राहौ शशिमत्पदमप्रयुक्तम् । क्षयपदं गृहे निहतार्थम् । न च श्लेषरूपालंकारप्रयोजकतया गुणत्वमपि शङ्कनीयम् । तत्त्वस्य तत्राप्रयोजकत्वात् । एवमन्येषु प्रतीतिविलम्बवत्सु द्रष्टव्यम् ।

अश्लीलत्वं क्वचिद्गुणः । यथा सुरतारम्भगोष्ठ्यां 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितौ दोषत्वाभावे व्युत्पत्तिप्रकटनात् । यथा—

'करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥'

अत्र संबाधादिपदानि । शमकथास्वप्यश्लीलं गुणः । तत्पोषकत्वात् । यथा—

'उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥'

---

दाहरणस्येत्यर्थः । मात्रपदेन तत्काव्यस्य दुष्टत्वव्यवच्छेदः । इष्टापत्तिमाशङ्क्य निराकरोति—**न चेति** । तत्त्वस्याप्रयुक्तत्वादेः । तत्रालंकारे । संयुक्ते तर्जन्यनामिके

---

चक्रं उद्धृत्तभुजग हतवत्तदस्येति वा । 'अर शीघ्रे च चक्राङ्गे' इति विश्वः । अग गोवर्धनगिरिं गा पृथ्वीं च वराहरूपेण यो धृतवान् । यस्यामराः शशिनं मथ्नतीति शशिमद्राहुस्तच्छिरोहर इति स्तुत्यं स्तवनीय नामाहुः । अन्धकाना यादवाना क्षयस्य द्वारकाख्यनिवासस्य कर्तेत्यर्थः । शिवपक्षे तु—सर्वदा स स्वयमुमाया धवः शिवस्त्वा पायात् । स क । ध्वस्तो मनोभवः कामो येनैवंभूतेन येन वलिजितो विष्णोः कायः पुरा त्रिपुरदाहकालेऽस्त्रीकृतो बाणता प्रापितः । उद्धृत्तभुजगैर्हारवलयानि यस्य सः । यो गङ्गा शिरस्यधारयत् । यस्य शिरः शशिमच्चन्द्रयुक्तमाहुः । अमरा हर इति स्तुत्य नाम चाहुः । अन्धकासुरस्य क्षयकरो नाशक इति । 'यो बर्हिपत्रप्रियः' इति पाठे बर्हिपत्रं मयूरपिच्छं तत्प्रियः श्रीकृष्णः । शिवस्तु बर्हा पत्रं वाहनं यस्य स्कन्दस्य तत्प्रिय इत्यर्थः । एवं 'इष्टभुजंगहा' इति पाठे इष्टो भुजंगहा गरुडो यस्य स श्रीकृष्णः । शिवपक्षे तु सुगममेव । अत्र कृष्णपक्षे शशिमत्पदस्य राहावप्रयुक्तत्वं क्षयपदस्य च गृहे निहतार्थत्वं न दोषः । 'श्लेषनिर्वाहकत्वादिति ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'करिहस्तेनेति । साधनस्य सेनाया अन्तर्मध्ये प्रविश्योपसर्पन्नाच्छन्पुंसो [illegible] केतुर्विराजत इत्यन्वयः । अन्तः कीदृशे । संबाधे नराश्वादिभिः संकटे । करिणा हस्तेन शुण्डया विलोडिते विस्फारित इत्यर्थः । अत्र साधनस्य स्त्रीवराङ्गस्यान्तर्मध्ये प्रविश्योपसर्पन्गमनागतं कुर्वन्पुंसो ध्वजो लिङ्गं विराजते । कीदृशेऽन्तः । संबाधे संकुचिते । कथं तर्हि प्रवेशस्तत्राह—करिहस्तेन 'तर्जन्यनामिके श्लिष्टे मध्यमा पृष्ठतस्तयोः । करिहस्त इति प्रोक्तः कामतन्त्रविशारदैः ॥' इति परिभाषितेन विलोडिते विस्फारिते । इति गुणोऽत्रेत्यर्थः । 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रेण सुरतारम्भगोष्ठ्यां [illegible] ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'उत्तानेति । उत्तान उच्छूनो जातशोथश्च यो मण्डू-

सूचनीयविशेषे यथा—

'निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुव. क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

अत्र प्रशमादिति स्वस्था इति मरणार्थकत्वादश्लीले अपि भाव्यमङ्गल-सूचनाद्गुणः ।

संदिग्धमपि वाच्यमहिम्ना नियतार्थप्रतीतिकारित्वाद्व्याजस्तुतिपर्यवसायितया गुणः । यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

अत्र पृथुकार्तस्वरादिशब्दाः पृथुकानामार्तस्वरः पृथु बहुलं कार्तस्वरं चेति संदिग्धा· ।

अप्रतीतोऽपि यत्र प्रतिपाद्यप्रतिपादकयोर्द्वयोरपि तज्ज्ञता तत्र गुणः । अर्थाप्र-तीतिरूपबीजाभावेनादोषतायां व्युत्पत्तिप्रकटत्वात् । यथा—

[३]'आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।

---

हस्तस्य पाटित विदारित यदुदर तत्सनिभे तत्तुल्ये क्लेदिनि क्लिन्ने स्त्रीव्रणे योनिरूपे कस्य कृमि-भेन्नस्य सक्तिरासक्तिर्जायते । तदासक्त· कृमिरेवेत्यर्थ· । अत्र शान्तकथाया जुगुप्साश्लील गुण· ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'निर्वाणेति । वेणीसवरणे सूत्रधारोक्तिरियम् । अरीणा प्रशमात्कलहोपशमान्निर्वाण· शान्तो वैरमेव दहनोऽग्निर्येषा तादृशा पाण्डुतनयाः पाण्डवा माधवेन कृष्णेन सह नन्दन्तु । तथा कुरुराजस्य धृतराष्ट्रस्य सुता दुर्योधनादयः सभृत्याः स्वस्था निश्चिन्ता भवन्तु । कीदृशा· कुरुराजसुता· । रक्ता अनुरक्ता प्रकर्षेण साधिता भूर्यैस्तादृशा· । क्षतो निवर्तितो विग्रह· कलहो यैस्तथाभूता । अत्र प्रशमान्नाशात्, रुधिरशोभितभूमयः खण्डि-तशरीरा· स्वर्गस्था, इत्यमङ्गलाश्लील भाव्यर्थसूचकतया गुण· ।' इत्युदाहरणचन्द्रिकासक्षेप·. २. 'पृथ्विति । राजान प्रति कवेरुक्ति· । भो देव, सप्रत्यधुना आवयो· सदन गृह सममित्यन्वयः । त्वत्तो धनलाभानन्तर न सममिति सप्रति पदाभिप्रायः । साम्यमेव श्लेषे-णाह—पृथ्वित्यादिना । पृथूनि महान्ति कार्तस्वरस्य सुवर्णस्य पात्राणि यत्र तद्राजगृहम् । कविगृह तु पृथुकाना वालानामार्तस्वरस्य पात्रं स्थानम् । भूषिता अलकृता नि शेषाः परि-जना यत्रेति राज्ञ । कवेस्तु भुवि उषितो भूशायी नि शेषः परिजनो यत्र तादृशम् । तथा विलसन्तीभि· करेणुभिर्हस्तिनीभिर्व्याप्त राज्ञ । कवेस्तु बिले विवरे सीदन्ति ते बिलसदः । बिलसद एव बिलसत्का मूषकास्तेषा रेणुभिर्गहन व्याप्तम् । बवयोरभेदात् । यद्वा बिलसत् कं जलं रेणुश्च ताभ्या व्याप्तम् । अत्रोक्तविशेषणाना योग्यतया तत्तत्पक्षानुकूलार्थनिर्णया-द्व्याजस्तुतिनिर्वाहकतया सदिग्ध गुण· । इत्युदाहरणचन्द्रिकासक्षेप . ३. 'आत्मेति । वेणी-सवरणे श्रीकृष्णबन्धनोद्यत दुर्योधनं श्रुत्वा किं दुर्योधनो वासुदेवरूप न जानातीति पृच्छन्तं

यं ध्यायन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥'

इयं भीमसेनस्य सहदेवं प्रत्युक्तिः। अत्र निर्विकल्पादिशब्दा आत्ममात्रावलम्बनत्वादावर्थे योगशास्त्रमात्रप्रसिद्धाः। स्वयं परामर्शेऽप्येवमेव गुणत्वम्। यथा-

'षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥'

अधमप्रकृतीनां चेटविटविदूषकाणां हास्यरसप्रधानानां तथैवौचित्याद्दोषत्वाभावे हास्यपर्यवसायित्वाद्ग्राम्यो गुणः। यथा—

'फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे।

---

करिहस्तशब्दार्थे। अदोषतायां सत्यामित्यर्थः। **फुल्लुक्करमिति**। 'पुष्पोत्करं कलमौदननिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते। ये गालितस्य महिषीदध्नः सदृशास्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः॥' विचकिलं मल्लिका। 'तदा जायन्ते

---

सहदेवं प्रति भीमोक्तिः। मोहेनाज्ञानेनान्धो वस्तुतत्त्वप्रतिपत्तिरहितोऽयं दुर्योधनस्तममुं श्रीकृष्णं पुराणमनादिं देवं परमात्मानं कथं वेत्ति जानातीत्यन्वयः। तं कम्। यं श्रीकृष्णमात्मन्यारमन्ते प्रत्याहृतेन्द्रियाः सन्तस्तदेकताना भवन्ति, आत्मैव वा आरामः क्रीडास्थानं येषां तथाभूता योगिनः निर्विकल्पे भेदावभासशून्ये समाधौ विहिता रतिरासक्तिर्यैस्तादृशा ज्ञानोत्सेकादात्मसाक्षात्कारदार्ढ्याद्विघटितो नाशितस्तमसोऽज्ञानस्य ग्रन्थिर्यैस्तथाभूताः सत्त्वगुणैकविश्रान्ताः सन्तो यं वीक्षन्ते पश्यन्ति। एवंविधानामेव वेद्यत्वेन हेतुगर्भं यत्पदार्थस्य विशेषणम्—तमसां ज्योतिषां वा परस्ताद्वर्तमानमिति। रजस्तमोभिभूतैरलभ्यमित्यर्थः। अत्र वक्तृश्रोत्रोर्विज्ञतया अप्रतीतत्वं गुणः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'षडधिकेति। मालतीमाधवे कपालकुण्डलायाः स्वयं परामर्शोऽयम्। स शक्तिभिर्ज्ञानेच्छाकृतिभिर्ब्राह्म्यादिभिर्वा परिणद्धो नित्ययुक्तोऽत एव तासां नाथ ईश्वरो जयतीत्यन्वयः। स कः। यः षडधिकानां दशनाडीनामिडादिषोडशनाडीनां यच्चक्रं मणिपूराख्यं तन्मध्ये स्थित आत्मा स्वरूपं ज्योतीरूपं यस्य स तादृशः हृदि विनिहितरूपो हृदये चिन्त्यमानरूपस्तद्विदां तथा ध्यायतां सिद्धीरणिमाद्या ददातीति तथाभूतः। पुनः कीदृक्। अविचलितमनोभिः स्थिरान्तःकरणैः साधकैर्मृग्यमाणोऽन्विष्यमाण इत्यर्थः। अत्र वस्तुतस्तज्ज्ञाद्गुणत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'फुल्लेति। विद्धशालभञ्जिकायां विदूषकोक्तिरियम्। कूरशब्दो भक्ते देशी। कलमाः शालयस्तदोदनतुल्यं पुष्पोत्करं ये वहन्ति ते सिन्दुवारवृक्षस्य विटपाः शाखा मम वल्लभाः प्रियाः। शाल्योदनसदृशत्वं प्रियत्वबीजम्। तथा ये गालितस्य वस्त्रनिर्जलीकृतस्य महिषीदध्नः सदृशाः। किं चेति समुच्चये। तेऽपि विचकिलप्रसूनस्य मल्लिकापुष्पस्य पुञ्जा मम वल्लभा इत्यनुषङ्गः। अत्र विदूषकोक्तौ ग्राम्यो गुणः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥'

अत्र कलममहिषीदधिशब्दाः।

न्यूनपदमपि क्वचिद्गुणो यत्र न्यूनतयैवाभिमतविशेषसिद्धिः। यथा—

'गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥'

अत्र मामेत्यत्रायासय, मातीत्यत्र पीडयेति न्यूनम्। न च दोषः। प्रतीतेः स्फुटत्वात्। प्रत्युत गुणः। रसातिरेकव्यञ्जकत्वात्। क्वचित्तु न दोषो नापि गुणः। यथा—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनः स्नेहार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥'

अत्र पिहितेत्यनन्तरं नैतद्युज्यत इत्येतैर्न्यूनम्। एवं द्वितीयपादेऽपि। न सा

---

१. 'गाढेति। अमरुककवेरिद पद्यम्। सखाय प्रति कस्यचिदुक्तिः। गाढालिङ्गनेन खर्वीकृतकुचा चासौ प्रोद्भूतरोमोद्गमा। तथा सान्द्रो घनो यः स्नेहरसोऽनुरागस्य रसस्त-स्यातिरेकेणाधिक्येन विगलच्छ्रीमतो नितम्बस्याम्बर वसनं यस्यास्तथाभूता। हे मानदा-यक मामा। पीडयेति शेष.। मा इति माम्। आयासयेति शेषः अल पूर्यतामित्यक्षरो-ल्लापिनी। क्षामा कृशाङ्गी। क्षामेत्यक्षरविशेषण वा। एवभूता प्रिया निश्चलतातिशयात्सुप्ता किंनु। श्वासादिकृतचेष्टाया अपि विरहमभिप्रेत्याह—मृता नु किमिति। भिन्नत्वेनानवभा-समभिप्रेत्याह—मे मम मनसि लीना जतुकाष्ठन्यायेन सबद्धा कि न्वित्यनुषङ्गः। तथाभू-ताया अपि पृथक्कर्तुं शक्यत्वादाह—विलीना नीरक्षीरादिवदैक्यमापन्ना नु किमिति। अत्र पीडयेत्यादिक्रियापदन्यूनता रसातिरेकव्यञ्जकतया गुण.।' इत्युदाहरणचन्द्रिकासक्षेप. २. ति-ष्ठेदिति। विक्रमोर्वशीये पुरूरवस इयमुक्ति। सा उर्वशी कोपवशात्प्रभावेणान्तर्धानविद्यया पिहितान्तर्हिता अत्रैव तिष्ठेदिति वितर्क। एतदुत्तर नैतद्युक्त यत इति पूरणीयम्। यस्मात्सा उर्वशी दीर्घं चिरकाल न कुप्यति। स्वर्गाय स्वर्गं गन्तुम्। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। उत्पतिता उड्डीना भवेत्। अस्या मन. पुनर्मयि स्नेहेनार्द्रं सरसम्। तेनैतदपि नेति शेष'। भवेदित्यनन्तर नैतद्यत इति शेषपूरणे पुन शब्दार्थान्वयप्रसङ्गात्। मे मम पुरोवर्तिनी च ता प्रिया हर्तुं विबुधद्विषोऽसुरा अपि न शक्ताः किमुतान्ये। सा चात्यन्त नयनयोरगो-चर भावप्राधान्यादगोचरत्व याता प्राप्तेति कोऽय विधि· प्रकारो दैव वा। वर्तत इति शेष.। अत्र दीर्घमित्याद्युत्तरवाक्यार्थावगमेनैव पूर्वस्य बाध्यत्वावगमान्न्यूनत्व न दोषः।' इत्युदाहरणचन्द्रिकासक्षेपः.

चात्रगुणत्वम् । विशेषबुद्धेरनुपादनात् । नापि दोषत्वम् । तद्व्यतिरेकेणापि दीर्घं न सा कुप्यतीत्यादिप्रतीत्या तिष्ठेत्कोपवशादित्यादिप्रतीतीनां बाध्यत्वावगमात् ।

अधिकपदं क्वचिद्गुणः । यत्र विशेषप्रतिपत्तिः । यथा—

'यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥'

अत्र द्वितीयं विदन्तीति पदमन्ययोगव्यवच्छेदं प्रतिपादयन्नाधिकपदत्वेऽपि दुष्टम् । यदुक्तम्—

'विस्मये च विषादे च दैन्येऽवधारणे तथा ।
प्रसादने तथा हर्षे वाक्यमेके द्विरुच्यते ॥' इति ॥

एवं हर्षशोकादियुक्ते वक्तरि गुणत्वम् । त्वरादिव्यक्त्या हर्षाद्यभिव्यञ्जकत्वात् । यथा—

'वद वद जितः स शत्रुर्न हतो जल्पंस्तु तव तवास्मीति ।
चित्रं चित्रमरोदीद्धाहेति परं मृते पुत्रे ॥'

अत्र पादचतुष्टये क्रमेण हर्षभीतिविस्मयविषादयुक्ता वक्तारः । एवं पुनरुक्तेऽपि द्रष्टव्यम् ।

कथित[पद]स्यापि लाटानुप्रासे तन्निर्वाहकतयार्थान्तरसंक्रमितवाच्ये विशेषव्यञ्जनाद्विहितस्य यत्रानुवाद्यत्वं तत्र च तादृशाभिमतनिर्वाहकतया गुणत्वम् । क्रमेणोदाहरणानि—

'सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥'

---

१. 'यद्वञ्चनेति । वञ्चनाया प्रतारणायामाहिता स्थापिता मतिर्येन स० । कार्ये उन्मुखस्तत्परः खलजनो बहुचाटुगर्भं प्रियवचनमिश्रं यत्कृतकं मिथ्याभूतं ब्रवीति तत्साधवो न विदन्ति न जानन्तीति न किंतु विदन्ति । कथं तर्हि ज्ञात्वाप्युपकुर्वन्तीत्यत आह—अस्य खलस्य प्रणयं चाटुभाषणादिरूपं वृथा कर्तुं न पारयन्ति न शक्नुवन्तीत्यर्थः । अत्र द्वितीयस्य विदन्तीत्यस्य नञ्द्वययोगेनोक्तार्थकत्वेऽपि साधव एव जानन्तीत्यन्ययोगव्यवच्छेदपरत्वाद्गुणत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'दैन्ये चैवावधारणे' क. ३. 'वदेति । रणादागत चारं प्रति स्वामिनः प्रश्नः । न हत इत्याद्युत्तरम् । तवास्मीति जल्पन्नित्यन्वयः । पुत्रे मृते सति चित्रं चित्रं हाहेत्यरोदीदिति संबन्धः । अत्र क्रमेण हर्षभीतिविस्मयविषादव्यञ्जकत्वादधिकपदत्वं गुणः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. सितेति । हे विभाकराकार सूर्यतुल्य, हे धरणिधर पृथ्वीपालक राजन्, सितकरस्य श्वेतकिरणस्य चन्द्रस्य कराः किरणास्तद्वद्रुचिरा विभा कान्तिर्यस्याः सा कीर्तिः तथा पौरुषकमला पराक्रमलक्ष्मीर्लक्ष्मीश्च तवैवास्ति नान्यस्य । अस्तीति शेषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र लाटानुप्रासः ।

'ताला जाअन्ति गुणा जाला ते सहिअएहिँ घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥'

अत्र द्वितीयं कमलपदं सौरभादिमदर्थकतयार्थान्तरसंक्रमितवाच्यम् । तथात्वे च कथितपदत्वमेव प्रयोजकम् ।

'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥'

अत्र कारणमालायां पूर्वोपात्तपदेनैव विनयादिकमुपादेयं पदान्तरेणानूद्यमानं तद्भिन्नतयेव प्रतिभाति । तथा च तादृशालंकारसंपादकतया गुणत्वं दोषत्वाभावश्च ततो बीजाभावाच्च ।

पतत्प्रकर्षमपि क्वचिद्गुणः । यथा—'प्रागप्राप्त-' इत्यादौ । अत्र चतुर्थे पादे क्रोधाभावान्मसृणमेव पदं युक्तमिति दोषत्वाभावः । गुणत्वं तु विनयप्रकाशकतया ।

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः । यथा—'प्रागप्राप्त-' इत्यादौ । अत्र 'येनानेन-' इत्यादौ न विशेषणदानमात्रार्थं किंतु वाक्यान्तरमेवावधेयम् । अतो बीजाभावान्न दोषो न च गुणः । विशेषबुद्धेरकरणात् ।

अपदस्थसमासमपि क्वचिद्गुणः । यथा—'रक्ताशोक-' इत्यादि । अत्रापदस्थसमासमेव कथमिति चिन्त्यम् । द्वितीयार्धस्यापि तत्स्थानत्वात् तस्यापि रुष्टवक्तृकत्वात् अन्यथा गुणत्वासंभवात् । भास्करस्तु—'शृङ्गारे समासस्यानौचित्यादस्थानस्थत्वम्' इत्याह ।

गर्भितमपि क्वचिद्गुणः दृढप्रत्ययादिहेतुत्वात् । न च दोषः प्रतीतेरव्यवधानात् ।

'भम्मि[3] (मि) अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणे वि तुमम्मि पुणो पत्तिहि भत्ति ण पुम्हसिमि ॥'

---

गुणा यदा ते सहृदयैर्गृह्यन्ते । रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ [इति च्छाया ।] दोषत्वाभावश्च तत इति गुणत्वादित्यर्थ. । बीजं वैरस्य । तदभावाच्चेत्यर्थ । भास्करमतेऽस्वरसस्तु क्रुद्धोक्तेरपि समासस्थानत्वादस्थानस्थसमासत्वानुपपत्तितादवस्थ्यमिति । नो दृष्टेति कोपोपक्रमस्थानत्यागेनान्यत्र करणात्तथात्वम् । उन्मत्तस्य स्थानौचित्याविवेकात् । उन्मादस्य क्रोधपरिपोषकतया च गुणत्वमित्यु-

१. 'व्याख्यात पूर्वमेतत् । अत्र द्वितीयकमलपदस्यार्थान्तरसंक्रमितवाच्यत्वेन व्यञ्जनोपयुक्तत्वाद्गुणत्वम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'जितेन्द्रियत्वमिति । गुणैरधिके उत्कृष्टे । अत्रापि कारणमालानिर्वाहकतया गुणत्वम् । पदान्तरेणानुवादे भेदप्रतिभासात् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'भम्मीति' । 'हुम्मि' इति पाठे भवामीति । 'तन्ति पुच्छसिमि'

अत्र प्रतीहीति दृढप्रत्ययोत्पादकम्। एवमन्यदपि लक्ष्यं दृष्ट्वोहनीयम्। अत्र साक्षाद्रसविरोधिनो दोषानाह—

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः॥ १२॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः॥ १३॥
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः॥ १४॥

शब्दवाच्यता सामान्यतो विशेषतो वा स्वशब्देनोपादानम्। सा व्यभिचारिणां यथा—

'[१]सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः॥'

अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः। न च स्वशब्देनोपात्तेषु व्यभिचार्यादिष्वास्वादसंभवोऽनुभूयते, किं त्वनुभावादिमुखेनैव व्यक्तेषु। तस्मादास्वादानुत्पत्तिर्दोषत्वबीजमिति संप्रदायः। तत्रेदमालोचनीयम्— एतावता शब्दवाच्यताया दोषत्वमेव तावद्दुर्लभम्। दूरे पार्थक्येन। दूरतरे

---

कम्। 'भ्रमाम्यहं हस्तिरेखो (भ्रमाम्यपहस्तितरेखो) निरङ्कुशोऽथ विवेकरहितोऽपि। स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्ति न प्रसरामि (प्रसरिष्यामि)॥' [ इति च्छाया। ]

---

इति पाठे चिन्ता प्रमोक्ष्यामीति। कामं प्रति यौवनस्थेयमुक्तिरिति केचित्। मलयानिलादिसहचरसंपत्तौ कामं प्रतीय तरुणोक्तिरित्यन्ये। गुरुं प्रति शिष्योक्तिरित्यपरे। अपहस्तिता त्यक्ता रेखा मर्यादा येन सः। निरङ्कुशोऽनुरोधशून्यः। त्वयि पुनर्भक्तिं चिन्तां वा स्वप्नेऽपि न प्रसरिष्यामि विसरिष्यामि। त्वं प्रतीहि विश्वसिहि। अत्र त्व प्रतीहीति वाक्यगर्भितत्वं दृढप्रत्ययार्थतया गुणः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

१. 'सव्रीडेति। नवे आद्ये संगमे प्रणयशालिनी पार्वत्या दृष्टिर्वो युष्माकं शिवाय कल्याणायास्तु। कीदृशी। दयितानने सव्रीडा प्रथमदर्शनाल्लज्जावती। मातङ्गचर्मरूपेऽम्बरे वस्त्रे सकरुणा। मातङ्गवधस्मृत्या शोकोदयात्। भुजगे सर्पे त्राससहिता। अमृतस्यन्दिनि चन्द्रे विस्मयरससहिता। अन्तरिक्षगामितया दुर्लभस्य ललाटे दर्शनात्। जह्नुसुता गङ्गा तत्कर्मके तत्कर्तृके वावलोकनविधौ सतीति सतिसप्तमी। तेन तस्या ईर्ष्यालम्बनत्वलाभः। कपालस्योदरे गर्भे दीना। मणिस्थाने तद्दर्शनात्। अत्र व्रीडादिव्यभिचारिणां वाच्यत्वं दोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

साक्षात् । तथाह्यनुभावादीनामुपस्थितावियं रसप्रतिबन्धिकाभिमता तदनुपस्थितौ वा । अन्ते कारणाभावादेवास्वादाभावो न तु वाच्यत्वकृतः । सत्येव कारणचक्रे कार्यानुत्पादस्य प्रतिबन्धकृताव्यवस्थापकत्वात् । तथा च न्यूनपदत्वमनभिहितवाच्यता वा दोषः । न त्वियम् । आद्येऽनुभावादित एव रसव्यक्तिरिति किं तच्छब्देनेति वैयर्थ्यमात्रं दोषः । वयं त्वालोचयामः—अनुभावादीनामुपस्थितावेव भावादीनां शब्दवाच्यतया स्वादोपघातः प्रतीयत इति अस्याः पृथग्दोषत्वम् । अत एवौत्सुक्यादीनां शब्दवाच्यता न दोषः । तत्रास्वादविघाताप्रतीतेः । न च वाच्यमेवानुभावोपादानेऽपि किमिति नोदाहृतमिति तदुपादानस्थले भावादिशब्दानां वैयर्थ्यमपीत्यसंकराभिप्रायेण तथोदाहरणात् । उदाहृतेऽत्वनुभावाक्षेपकतया वैयर्थ्याभावात् । न चैवमुक्तोदाहरणविरोधस्तत्रानुभावाद्यनुपादानादिति वाच्यम् । 'दैवादहमत्र तया—' इत्यादाविवाक्षेपेण तेषां प्रतीतेः । न हि व्रीडादिशब्दैः प्रतिपादिता व्रीडादय आस्वाद्यतामिव स्वानुभावाद्याक्षेपकतामप्यास्वादयितुमक्षमा बीजाभावात् । एवमग्रिमोदाहरणेष्वप्यूह्यमिति । एवं च स्थिते

'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे'

इति पादत्रये पाठो युक्तः । एवं भावादिशब्देनाप्युपादाने द्रष्टव्यम् । रसस्य सामान्यतो रसशब्देन यथा—

'तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥'

विशेषतः शृङ्गारपदेन यथा—

'आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराममूर्तिम् ।

---

विस्मरामीत्यर्थः । **तथाहीत्यादि** । अनुभावा हि स्थायिव्यभिचारिसाधारण्येन सर्वे गृह्यन्ते । आदिना स्थायिनां विभावद्वयस्य चोपादानम् । एवंच सोत्पत्तिप्रतिबन्धकत्वं शब्दवाच्यताया अनुपपन्नमिति सदोषं, किंतु शब्दवैयर्थ्यमात्रमित्यर्थः । **वयं त्विति** । तथा च न रसानुत्पत्तिप्रयोजकत्वम् किं तु तच्चमत्कारित्वविघातकत्वं शब्दवाच्यताया इति नोक्तदोष इत्यर्थः । एवं उक्तप्रकारेण दोषत्वे । **अनुभावाद्यनुपादानादिति** । तथा च सामग्र्यभावादेव रसानुत्पत्तौ तदपकर्षकतया दोषोद्भावनं विरुद्धमित्यर्थः । **स्वानुभावादीति** । स्वस्येति षष्ठ्या साक्षात्परम्परासाधा-

---

१. तामिति । तां नायिकां नेत्रयोर्गोचरे कृतवतोऽस्य कोऽप्यनिर्वाच्यो निरन्तरो घनो रसोऽजायतेति संबन्धः । कीदृशीम् । अनङ्गस्य जये मङ्गलसंपत्तिरूपाम् । किंचिदुच्चैर्भुजमूले कुचसंधौ लोकितां दृष्टामित्यर्थः । अत्र रसस्य वाच्यतादोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'आलोक्येति । एष युवा कोमले कपोलतलेऽभिषिक्त. अत एव पुलकादिचिह्नै-

पश्यैष बाल्यमतिवृत्त्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥'

स्थायिनो विशेषत उत्साहपदेन यथा—

'संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
झणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥'

अत्रैव 'स्थायिभावोऽस्य कोऽप्यभूत्' इति चतुर्थपादपाठे सामान्यतः शब्दवाच्यतोदाहरणं द्रष्टव्यम्।

कष्टकल्पनया पृथक्श्लोकाद्यनुसंधेयप्रकरणादिपर्यालोचनया विलम्बेन व्यक्तिः, न तु 'दैवादहमत्र तया-' इत्यादाविव झटित्याक्षेपमहिम्ना सा। अनुभावस्य यथा—

'कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः।
लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥'

अत्र चन्द्रादय उद्दीपनालम्बनविभावाः शृङ्गारयोग्या अनुभावाप्रतीत्या आस्वादापर्यवसायिनः स्थिताः। यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथापि तस्य स्तनव्यक्तिप्रयोजकत्वेनोपात्तेर्नानुभावत्वपर्यवसानमिति प्राञ्चः। वस्तुतस्तु पुंनिष्ठ एव शृङ्गारोऽत्र प्रतिपिपादयिषितः। 'अभून्नयनावनौ सा' इत्यनेन तस्यैवालम्बनत्वप्रतिपादनात्। न च पुंसि कश्चिदनुभाव उपात्तः न च विभावैरप्याक्षेपार्ह इति कष्टेन कल्पनीयः। विभावस्य यथा—

'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥'

---

व्यक्तो योऽनुरागस्तेन सुभगा शोभनाम्। अभिरामा मूर्तिर्यस्यास्तादृशी नायिकामालोक्य शृङ्गारस्य सीमनि तरङ्गितमनवच्छिन्नखेलनमातनोति त्वं पश्येत्यन्वयः। तथा खेलने हेतुगर्भं विशेषणमाह—बाल्यमतिवृत्यातिक्रम्य विवर्तमानः। पुलककटाक्षादिभिश्चेष्टमान इत्यर्थः। अत्र विशेषतः शृङ्गारपदवाच्यत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'संप्रहार इति। सप्रहारे युद्धे प्रहरणैरायुधैः परस्पर ये प्रहारास्तेषां छणत्कारैस्ताड्गशब्दैः कर्णागतैस्तस्य प्रकृतवीरस्य कोऽप्यनिर्वचनीय उत्साहोऽभूदित्यन्वयः। अत्रोत्साहस्य स्थायिभावस्य वाच्यता।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'कर्पूरेति। तस्य यूनः सा नायिका नयनावनौ नेत्रप्रसारणभूमौ। नेत्रगोचर इति यावत्। अभूदित्यन्वयः। कीदृशी। लीलया शिरःसबन्धिनोंऽशुकस्य यो निवेशविशेषस्तस्य क्लृप्त्या करणेन व्यक्ता स्तनयोरुन्नतिर्यस्याः सा। कस्मिन्सति। कर्पूरधूलिवद्धवलेन द्युतिपूरेण धौत प्रक्षालितं दिशां मण्डलं येन तथाभूते शिशिररोचिषि चन्द्रे सति। तेनोद्दीपनप्रकर्षः। अत्र पुंनिष्ठशृङ्गारानुभावः कष्टगम्यः।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'परिहरतीति। बत खेदे। विषमा दशा विरहावस्था अस्य देहं प्रसभं हठात् इत्येवप्रकारेण परिभवति। अत्र किं कुर्मः इत्यन्वयः।

अत्र कामिनीरूपः शृङ्गारविभावोऽभिमतो न पुनरपात्तः । न च रतिपरिहारादिभिरनुभावैराक्षेप्तुमपि शक्यते । तेषां करुणादावपि संभवादिति कष्टेन कल्पनीयः ।

प्रतिकूलविभावादिग्रहः । प्रकृतरसादेः प्रतिकूलो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रहः । तत्र तादृशविभावव्यभिचारिणोर्ग्रहो यथा—

'प्रसादे[1] वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
विधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥'

अत्र प्रकृते शृङ्गारे प्रतिकूलस्य शान्तस्य प्रकाश्यमानानित्यतारूपो विभावः तत्प्रकाशितो निर्वेदरूपो व्यभिचारी च स्फुटमेव गृह्यते । तादृशानुभावग्रहो यथा—

'णीहुअरमणम्मि लोअणवहम्मि पडिए गुरूण मज्झम्मि ।
सअलपरिहारहिअआ वणगमणं चेअ महइ वहू ॥'

अत्र व्याजादिकं विना वनगमनं सकलपरिहारश्च शान्तानुभाव. । न च व्याजः प्रतिपादित इति शृङ्गारस्य प्रकृतस्य विच्छित्तिः । इन्धनाद्यानयनव्याजेन संभोगार्थं वनगमनं यद्युच्यते तदा न शान्तानुभावग्रहः ।

पुनःपुनर्दीप्तिरङ्गरसादिविषया दोषः । अङ्गिनस्तु सा महाभारतादौ शान्तादेरिव न वैरस्यमावहति । उदाहरणं कुमारसंभवे—'अथ मोहपरा-

---

रण्येन स्वानुभावा रत्याद्यनुभावाश्च गृह्यन्ते । 'निभृतरमणे लोचनपथे पतिते गुरूणा

---

परिभवप्रकारमाह—परिहरतीत्यादि । रतिर्विषयाभिलाष. । मतिरर्थनिर्धारणम् । लुनीते छिनत्ति । परिवर्तन पार्श्वपरिवृत्तिः । अत्र विभाव. कष्टगम्यः । शोकेऽप्येवभावात् ।' इत्युदाहरणचन्द्रिकासंक्षेप'.

१.'प्रसाद इति । मानवती मालती प्रति माधवस्येयमुक्ति. । हे प्रिये, प्रसादे वर्तस्व । प्रसन्ना भवेत्यर्थ । मुद हर्षं प्रकटय । रुप कोप त्यज । अमृतमिव ते वचः शुष्यन्ति शुष्यमाणान्यर्थान्ममाङ्गानि सिञ्चतु । सौख्याना निधानमाकर मुख क्षणमभिमुख स्थापय । मुग्धे विवेकरहिते, गत. कालरूपो हरिण प्रत्येतु परावर्तितु न प्रभवति । न शक्नोतीत्यर्थः । हरिणत्वारोपेण चपलत्व ध्वन्यते । तच्च शृङ्गारप्रतिकूलस्य शान्तस्य विभाव इति दोपः ।' इत्युदाहरणचन्द्रिकासंक्षेपः २ 'निभृतरमणे गुप्तकामुके गुरूणा मध्ये लोचनमार्गं पतिते सति सकलस्य गृहकार्यस्य परिहारे त्यागे हृदय यस्यास्तथाभूता वधूस्तेन सह वनगमनमेवेच्छतीत्यर्थः । अत्र निर्व्याजवनगमनसकलपरिहारयोः शान्तानुभावत्वेन प्रतिभासः । इन्धनानयनादिव्याजोपनिबन्धे तु न दोष.' । इत्युदाहरणचन्द्रिकासंक्षेपः.

---

१. चन्द्रकलाख्या समुद्धृतोऽयं श्लोकः सुभाषितावल्यादिषु. मालतीमाधवे तु नास्त्येव.

यणा–'इत्यादिना दीप्तिमानीतोऽपि करुणः 'अथ सा पुनरेव–' इत्यादिना पुनःपुनर्दीप्तिं नीतः। उपभुक्तो हि पुनरुपभुज्यमानः परिम्लानस्तबकवद्वैरस्याय कल्पते।

अकाण्डेऽनवसरे प्रथनम्। यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्।

छेदो यथा वीरचरिते राघवभार्गवयोरविच्छिन्नप्रसरतया प्रवृत्ते वीररसे 'कङ्कणमोक्षणाय यामि' इति राघवस्योक्तौ। अकाण्डे हि तथा वचनं व्याजेन निर्गमं प्रतिपादयद्वीरत्वाभावे पर्यवस्यति।

अङ्गस्यातिविस्तृतिरप्रधानस्यातिविस्तरेण वर्णनम्। यथा हयग्रीववधे हयग्रीवस्य। यद्यपि प्रतिनायकवर्णनं नायकस्यैवोत्कर्षे पर्यवस्यति तथाप्यतिशयितं प्रधानतिरोधायकतया दोषपदवीमवतरति।

अङ्गिनः प्रधानस्याननुसंधानम्। यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः।

प्रकृतीनां विपर्ययो यत्प्रकृतौ यद्वर्णनमनुचितं तत्र तद्वर्णनम्। प्रकृतयस्तावद्दिव्या अदिव्या दिव्यादिव्याश्च। अत्र दिव्यत्वममर्त्यैकरूपत्वमतो न पातालीयाद्यसंग्रहः। उदाहरणं श्रीमन्महेश्वरादिः। अदिव्यत्वं मर्त्यैकरूपता। यथा माधवादेः। दिव्यादिव्यत्वरूपता। यथा श्रीकृष्णादेः। त्रिविधा अप्येते चतुर्धा भवन्ति—धीरोदात्तधीरोद्धतधीरललितधीरशान्तभेदात्। क्रमेण वीररौद्रशृङ्गारशान्तप्रधानत्वमेषां लक्षणानि। श्रीरामभार्गवश्रीकृष्णजीमूतवाहना उदाहरणानि। एते च प्रत्येकमुत्तमाधममध्यमभेदाः[1]। अनुकूलादिभेदास्त्वस्थिराः। अनुकूलादिर्हि कदाचिद्दक्षिणादिः संपद्यते इति प्रकृतिभेदेन गणनीयाः। इति भिन्नासु प्रकृतिषु रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्येष्वपि वर्णनीयानि। किं तु रतिः संभोगशृङ्गाररूपा उत्तमदिव्यविषया न वर्णनीया। तद्वर्णनं पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम्।

'क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥'

इत्याद्युक्तवक्रकुट्यादिवर्जितः सद्यः फलदः क्रोधो नाकपातालगमनसमुद्रोल्लङ्घनादावुत्साहश्च दिव्येष्वेव वर्णनीयः। अदिव्येषु तु यावदेव महत्कर्म लोकप्रसिद्धमुचितं वा तावदेवोपनिबन्धनीयम्। अधिकं हि निबध्यमानमसत्यप्रतिभासनया रामादिवत्प्रवर्तितव्यमित्याद्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषु

---

मध्ये। सकलपरिहारहृदया वनगमनमेवेच्छति वधूः॥' [इति च्छाया।] बाभ्रव्य इति कञ्चुकिनाम। **संभोगशृङ्गाररूपेति**। संभोगश्चुम्बनालिङ्गनादिः। न त्वन्यो-

---

१. 'उत्तममध्यमाधम' ग.

पुनरुभयोरप्युचितं वर्णनीयम् । एवमुक्तस्यौचित्यस्य दिव्यादीनामिवोत्तमादीनामप्यन्यथावर्णनं प्रकृतिविपर्ययः । आमन्त्रणौचित्यलङ्घनेऽप्येवम् । तद्यथा— तत्रभवन्भगवन्नित्युत्तमेनैव प्रयोक्तव्यं नाधमेन । उत्तमेनापि मुनिप्रभृतावेव न तु राजादौ । भट्टारकेति न राजादावुत्तमेन किं तु देवादावेव । अन्यथा प्रकृतिविपर्ययापत्तेः । एवं यत्र देशे काले वयसि जातौ वा यद्वेषव्यवहारादिसमुचितं तदेव तत्रोपनिबद्धव्यम् । अन्यथानिबन्धने तु प्रकृतिविपर्ययः । यथा स्वर्गाङ्गनासु मानुषीवेषादिः । रसातलादौ मेघादिरिति ।

अनङ्गस्याभिधानं रसानुपकारकस्य वर्णनम् । यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च यद्वसन्तवर्णनं तदनादृत्य वन्दिवर्णनस्य राज्ञा प्रशंसनम् ।

ईदृशा इत्यनेनैतदुक्तं यदेवंविधा अन्येऽप्यनौचित्यहेतवो भवन्ति । यथा नायिकापादप्रहारादिना नायककोपादिवर्णनमित्यादि । अनौचित्यं तु रसविच्छेदहेतुः । यदुक्तं ध्वनिकृता—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥' इति ।

इदानीमेषां केषांचित्क्वचिददोषत्वमपीत्याह—

**न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।**

संचारिणो न तु रसस्थायिनोरपि । क्वचिदिति यत्रेतरविलक्षणो नानुभावः । यथा—

'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसताश्लिष्टा शिवायास्तु वः ॥'

अत्रौत्सुक्यशब्दवत्सहसा प्रसरणादिरूपोऽनुभावो नौत्सुक्यमसंदिग्धं प्रतिपादयितुमीष्टे । भयादिसाधारणत्वात् । अत एव

---

न्यावलोकनादिकमपि । अनौचित्यानुसारात् भावाख्या तु वर्णनीयेति भावः । **भट्टारकेति** । परमेश्वरेत्यस्यापीतिशब्देन ग्रहणम् । एतद्राजादावुत्तमेन न वाच्यं कि

---

१. 'औत्सुक्येनेति । नवे सगमे हसता हरेणाश्लिष्टा अत एव संरोहत्पुलका उद्गतरोमाञ्चा गौरी व शिवायास्तु । कीदृशी । दयितसमीपगमने औत्सुक्येन कृतत्वरा । सहभुवा सहोत्पन्नया । स्वाभाविकयेति यावत् । ह्रिया लज्जया व्यावर्तमाना परावर्तमाना । पुनस्तैस्तैस्तत्कालोचितैर्बन्धुवधूजनस्य वचनैराभिमुख्य संमुखत्व नीता आपिता । तथाग्रे वर दृष्ट्वा आत्तो गृहीत' साध्वसरसो भयरसो यया तथाभूतेत्यर्थः । अत्रौत्सुक्यस्य सञ्चारिणो वाच्यता न दोषः । असाधारणानुभावाभावेन तद्व्यङ्ग्यत्वासभवात् । अत एव 'दूरादुत्सुक–' इत्यत्राप्यौत्सुक्यमेव शब्देनोपात्तमिति दिक् ।' इत्युदाहरणचन्द्रिकासक्षेप..

'दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥'

इत्यत्र व्रीडादीनि विवलितत्वादिभिरनुभावैरुपनिबध्नन्नेव रसिकशिरोमणिरमरुककविरौत्सुक्यं स्वशब्देनैवोपात्तवान् । दोषत्वाभावबीजमुक्तं प्राक् । इदं त्ववधेयम्—त्वरादीनां भयादिसाधारण्येऽप्यौत्सुक्यादिना स्वकारणेन विशिष्यमाणास्ता एवासाधारण्यमासाद्यौत्सुक्यादिव्यञ्जयन्तीत्यास्वादोदयः । न तु शब्दादेव तत्प्रतिपत्त्या । व्यभिचार्यादीनां वाच्यत्वासहत्वव्युत्पादनात् । अत एवात्र न वैयर्थ्यमपि । विशेषणत्वेनोपयोगात् । 'दूरादुत्सुकं' इत्यादौ तु शब्दमहिम्ना विशिष्टस्यैवानुभावस्य कल्पनमिति ततोऽभिव्यक्तिरिति । एवं च व्यवस्थिते शब्देन तदुपस्थितिं विना न तदनुभावस्यासाधारण्यम्, न च तेन विनाभिव्यक्तिः, न चाभिव्यक्तिं विनास्वादसंभवः, न च तेन विना भावमध्यप्रवेशः, न च तमन्तरेण तथा कीर्तनं युक्तमिति भावस्योत्कीर्तनमप्येतादृशस्य व्यभिचारिणि शब्दावाच्यताया दोषत्वाभावं साधयतीति युक्तमुत्पश्यामः ।

## संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ १५ ॥

प्रकृतविरुद्धं व्यभिचार्यादि बाध्यत्वेनोच्यते तदा दूरे दोषत्वम् । प्रत्युत प्रकृतरसपरिपोषकतया गुणत्वम् । तत्र व्यभिचारिणो यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं-' इत्यादौ । अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां वितर्कमतिशङ्काधृतीनामुत्तरभागप्रतिपाद्याभिरभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरःसरं चिन्तायामेव पर्यवसानमिति भावशबलतापरिपोषकत्वाद्गुणत्वम् ।

'पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥'

---

त्वधमेन । उत्तमेन तु देवादौ वाच्यं न तु मुनिप्रभृताविति ज्ञेयम् । अन्यथा वृत्तिविरोधात् । असाधारणस्यौत्सुक्यगमकस्यानुभावस्याभावे शब्देन तदुपादानमस्वादजनकमिति भ्रमं निवारयितुमाह—**इदं त्विति** । एवं सति व्यभिचारिण्यौत्सुक्यादे संकीर्तनमेवार्थाच्छब्दवाच्यताया दोषत्वाभावं गमयतीत्याह—**एवं चेति** । व्यवस्थिते इत्यनन्तरं आस्वादजनकत्वे इति शेषः । तथा कीर्तनं व्यभिचारिमध्य-

१. पूर्वं व्याख्यातम्. २. 'पाण्डुक्षाममिति । हे सखि, तव पाण्डुक्षामं वदनं सरसमन्तरससहितं स्निग्धं च हृदयं अलसमालस्ययुक्तं वपुश्च हृदन्तः हृदयमध्ये नितान्तमत्यर्थं क्षेत्रियरोगमावेदयतीत्यन्वयः। क्षेत्रियो देहान्तरचिकित्स्योऽसाध्यो रोगः । 'क्षेत्रियच् परक्षेत्रे चिकित्स्य' इति निपातनात् । सर्वशरीरव्यापिपीडाजनक इत्यन्ये । 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च । अन्यदेहचिकित्साहीसाध्यरोगे च जायते ॥' इति विश्वः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

इत्यत्र पाण्डुत्वादीनां रोगानुभावतया विरुद्धत्वेऽपि विप्रलम्भशृङ्गारे समारोपादङ्गभावप्राप्त्या दोषत्वाभाव इति ध्वनिकारः। तदयुक्तम्। तेषामुभयसाधारण्याद्विरोधस्यैवासिद्धेः। विभावस्य यथा—

'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥'

अत्र पूर्वार्धे शृङ्गारस्य परार्धे शान्तस्य विभावः। अनयोर्विरोधेऽपि पूर्वार्धस्य बाध्यत्वेनैवोक्तत्वान्न दोषत्वम्। प्रत्युत शान्तपरिपोषाद्गुणत्वम्। एवं ह्यत्र प्रतीयते—सर्वा रामादयः सत्येव जीविते तत्सौकर्यार्थमुपादेयाः जीवितं चातिभङ्गुरमिति किं कृतं तेषामुपादेयत्वम्। अतो रम्यत्वेऽपि निष्फला एता इति। नन्वेवं पूर्वार्धप्रतिपाद्यस्य बाध्यत्वेऽपि मत्ताङ्गनापाङ्गभङ्गेत्यनेन विरोधो न परिहृतः। न च तत्र न शृङ्गारप्रतीतिरिति वक्तुं शक्यम्। तदुपादानवैयर्थ्यप्रसङ्गादिति चेत्, न। तत्र रसाप्रतीतेः। तद्व्यञ्जकानुभावाद्यप्रत्ययात्। कथं तर्हि तदुपादानमिति चेत्, शान्तपरिपोषकार्थमेवेति ब्रूमः। स एव कथमिति चेत्, जीवितस्यातिभङ्गुरत्वप्रतीतेः। सापि कुत इति चेत्, जीविताद्प्यधिकमपाङ्गस्यास्थैर्यं सकलजनप्रसिद्धम्। अतस्तथाविधभङ्गुरस्यापाङ्गस्योपमानत्वेनोपादानात्। तदेतदुक्तं जीविताद्प्यधिकमपाङ्गस्यास्थिरत्वमिति प्रसिद्धं भङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णातीति।

केचित्तु प्रसिद्धभङ्गुरस्य साधर्म्येण जीवितोपमानतयोपात्तमिति तद्व्याचक्षते। ध्वनिकारस्तु—भवत्येवात्र शृङ्गारप्रतीतिः परंतु तया गुडजिह्विकान्यायेनोन्मुखीकृत्यविनेयाः शान्तरसे निवेश्यन्त इत्यदोषता। यद्वा काव्यशोभानिमित्तमेव तदुपादानाद्दोषाभावः। नहि विना शृङ्गारेण काव्यशोभेति समादधे। तन्नातिमनोरमम्। शृङ्गारप्रतीत्युपगमेऽपि शृङ्गारशान्तयोर्नैरन्तर्याभावेन प्रथमसमाधेरसंभवात्। द्वितीयसमाधिरपि तदा स्याद्यदि रसान्तरयोगेन चारुत्वं नानुभूयेत। भवत्वेवम्। किं च रसमात्रेण चारुत्वमित्यपि न शक्यते वक्तुं प्रागेव शृङ्गारमात्रेणेति। यतश्चित्रकाव्येऽलंकारादेव चारुत्वप्रत्ययः। तस्मादत्र शान्तरसादनुप्रासमात्रेणैवाचारुत्वसंभवान्नोत्तरोऽपि समाधिरिति।

---

गतत्वेन कीर्तनम्। **प्रसिद्धं भङ्गुरेति।** प्रसिद्धमतो भङ्गुरोपमानतया भङ्गुरं च तदुपमानं च तत्तयोपात्तं बोधितमपाङ्गरूपमुपमानमित्यर्थ। **केचित्त्विति।** इति प्रसिद्धं अत प्रसिद्धभङ्गुरत्वसाधर्म्येणापाङ्गस्वरूपं भङ्गुरस्य जीवितस्योपमानतयोपात्तमिति योजना। 'प्रसिद्धभङ्गुर' इति पाठे प्रसिद्धा भङ्गुरोपमानता तत्तयेत्यर्थः। आहूतापीति बहुश परिभाषितापीत्यन्वयः। आश्लेष आलिङ्गनमतिसांनिध्यं

---

१. 'सत्यमिति। मत्ताङ्गनाया अपाङ्गभङ्गः कटाक्षस्तद्वल्लोलमस्थिरम्। तथा च रामादीना रमणीयत्वेऽपि जीवितस्य भङ्गुरतया तस्यापेक्षाणामनुपादेयत्वमेवेति शृङ्गारबाधेन शान्ते पर्यवसानमिति न विरोधः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

अविरोधोपायान्तरमाह—

आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः ॥ १६ ॥

यो रस इत्यत्र विरुद्ध इत्यनुषज्यते । रसानां विरोधो द्वेधा—समानाधिकरणतया नैरन्तर्येण चेति । तत्र वीरभयानकयोरैकाधिकरण्येन विरोध इति प्रतिपक्षगतत्वेन भयानको वर्णनीयः । तथा सति दूरे तस्य दोषत्वं प्रत्युत वीरपरिपोषः । यथा मम—

'आहूतापि पदं ददाति न पुरो न प्रार्थितापीक्षते
साकूतं परिभाषितापि बहुशः किंचिन्न चाभाषते ।
आश्लिष्टापि न संमुखानि रचयत्यङ्गानि मूढाशया
कोपोद्रेकवशंवदेव तरुणी श्रेणी यदीयद्विषाम् ॥'

न चात्र शृङ्गारभयानकयोरपि विरोधः । वक्ष्यमाणक्रमेण द्वयोरप्यन्याङ्गत्वाद्व्यधिकरणत्वाच्च । यद्यप्याश्रयभेदेनैव एकाश्रयावपि वीरभयानकौ क्वचिदनुभूयेते तथापि न तथा वर्ण्येते इति भिन्नाश्रयतयैव निवेशनीयौ । एवमन्येषामप्यूह्यम् । यस्य तु येन रसेन नैरन्तर्येण विरोधः सोऽविरोधिना रसान्तरेणान्तरितो निबद्धव्यः । यथा नागानन्दे जीमूतवाहनस्य 'अहो गीतमहो वादित्रम्' इत्यनेनाद्भुतमन्तर्निवेश्य मलयवती प्रति शृङ्गारो निबद्धः । न केवलं प्रबन्ध एव रसान्तरव्यवधिना विरोधनिवृत्तिः किं त्वेकस्मिन्नपि वाक्ये । यथा—

'भूरेणुदिग्धान्नवपारिजातमालारजोरञ्जितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः ॥'

---

च । अङ्गानि मुखादीनि हस्त्यादीनि सेनाङ्गानि च । मूढ. किंकर्तव्यताविमूढ आशयोऽन्तःकरणं यस्याः सा । एकत्र भयादन्यत्र कोपात् । **वक्ष्यमाणेति** । 'अङ्गिन्यङ्गत्वमाप्तौ यौ' इत्यादिनेत्यर्थः । **व्यधिकरणत्वाच्चेति** । शृङ्गारस्य राजगतत्वाद्भयस्य सेनागतत्वादिति भावः । **एकाश्रयावपीति** । ब्राह्मणेन सह युद्धप्रस-

१. 'भूरेणुदिग्धानिति । युद्धे पतिता वीरा देवत्वलाभेन विमानपर्यङ्कतले निषण्णाः सन्तस्तदानीं ललनानामप्सरसामङ्गुलीभिर्निर्दिश्यमानान्प्रदर्श्यमानान्स्वदेहान् रणपतितान्कुतूहलाविष्टतयाश्चर्याविष्टतया अपश्यन्नित्यन्वयस्तृतीयश्लोकेन । कौतुकहेतुगर्भाणि क्रमेण कर्मकर्तृविशेषणान्याह—भूरेण्वित्यादि । भूसवन्धिरेणुना व्याप्तान् । नवाना पारिजातमालाना रजोभि परागैर्वासितानि सुरभीकृतानि बाह्वोर्मध्यान्यन्तरालानि येषां ते । शिवाभिः क्रोष्ट्रीभिर्गाढमालिङ्ग्यमानान्स्वदेहान् । सुराङ्गनाभिरप्सरोभिराश्लिष्टं भुजयोरन्तरालं वक्षो येषा ते । सशोणितैः सरुधिरैः क्रव्यभुजा मांसादाना खगाना स्फुरद्भिः पक्षैरुपवीज्यमानान्स्वदेहान् । चन्दनवारिसेकैः सुगन्धिभिः कल्पलताप्रसूतैर्दुकूलैः पट्टवस्त्रैः सवीजिता वीराः । अत्र पतितस्वदेहसुराङ्गनालम्बनयोर्बीभत्सशृङ्गारयोर्मध्ये वीरस्य निवेशान्न विरोधः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानांल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन् ॥'

अत्र विशिष्टस्य वीरस्य कर्तुः सर्ववाक्यान्वयित्वेन विमानाधिरोहणादिना मध्य उत्साहप्रतीतेर्बीभत्सश्रृङ्गारयोरविरोधः । यद्यप्यत्र वीर एव प्रधानम् अन्यौ च तद्व्यभिचारिणाविति न विरोधस्तथाप्येवमप्यविरोधः संभवतीत्युदाहृतम् ।

अविरोधे हेत्वन्तरमाह—

**स्मर्यमाणो विरुद्धोऽपि साम्येनाप्यविवक्षितः ।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥ १७ ॥**

तत्र स्मर्यमाणत्वेनाविरोधो यथा—

'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

समरभुवि निपतितं भूरिश्रवसो हस्तमालोक्य तद्वधूनामिदं वचनम् । तथा च श्रृङ्गाराङ्गमपि पूर्वावस्थास्मर्यमाणतयोद्दीपनविभावत्वेन करुणपरिपोषिकेत्यदोषः । साम्यविवक्षया यथा—

'दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥'

पाटनं खण्डनम् । प्रसवजनितातिबुभुक्षावशेन निजापत्यमेव भोक्तुमारभमाणायै सिंहवध्वे परमदयालुं जिनं तद्रक्षार्थं स्वशरीरदायकं प्रतीयमुक्तिः ।

---

ज्ञादावित्यर्थ । अत्र **विशिष्टस्येति** । वीरशब्दमात्राद्वीररसाप्रतीतावपि विमानेति कुतूहलेति च विशेषणयोगात्तत्प्रतीतिरिति भावः । तदाह—**विमानेति ।** अन्यौ बीभत्सश्रृङ्गारौ । तथा चाङ्गिन्यङ्गत्वान्न विरोध इत्यर्थ । चाटुके राजस्तुतौ ।

---

१. 'व्याख्यात प्राक् । अत्र स्मर्यमाणश्रृङ्गारस्य करुणोद्दीपकतया तदङ्गत्वान्न विरोधः । इत्युदाहरणचन्द्रिकासक्षेप.. २. 'दन्तेति । अपत्य प्रसूय तदेव भोक्तुमुद्यतायै सिंह्यै तद्रपत्यदयया स्वाङ्गमर्पितवन्तं जिन प्रति कस्यचिदुक्तिरियम् । हे जिन, भवनः शरीरे रक्ते रुधिरे मनो यस्यास्तथाभूतयैवानुरक्तमनसा मृगराजस्य सिंहस्य वध्वैव मृगजातीयराजवध्वा दन्तक्षतानि करजैर्नखैर्विपाटितानि विदारितानि च दत्तान्यर्पितानि जातस्पृहैर्वयमप्येवविधा भूयासेति जाताभिलापैर्मुनिभिरप्यवलोकितानीत्यन्वयः । कीदृशे शरीरे । परित्राणहर्षात्प्रोद्भिन्ना उद्गताः सान्द्रा· पुलका रोमाञ्चा यत्र एवभूते । पक्षे अनुरागात्तथाभूते । अत्र दयावीरस्यानुभावविशेषे श्रृङ्गार उपमानभावेनाङ्गम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र दयावीरस्यानुभावविशेषे शृङ्गार उपमानभावेनाङ्गम्। न चात्र दयापि विस्मयोपकारकत्वेनाङ्गम्। बौद्धानां स्वाभाविकदयाशीलत्वेन विस्मयाजनकत्वात्।

एकत्राङ्गिनि विरुद्धयोरङ्गत्वं द्विधा—तुल्यकक्षतयाङ्गाङ्गिभावेन वा साक्षात्परस्याङ्गभावमासाद्य वा। तत्राद्येनाविरोधो यथा—

'क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः।
भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥'

अत्र चाटुके या राजविषया रतिस्तत्र करुणशृङ्गारावुभावपि साक्षादङ्गमिति तन्निर्वाहणैकव्याकुलयोस्तयोरेव राजकार्योद्यतयोरिव भटयोः सहजतो विरोधोऽपि न दोषाय। यथा—

'एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥'

इत्यत्र प्रधाने क्रीडायामङ्गभावेन भावाभावयोरपि न विरोधः। एहीति क्रीडन्ति गच्छेति क्रीडन्तीति प्रकारेणोभयोरपि प्रकारत्वेन तत्राङ्गत्वात् तस्माद्विधेययोरेव विरोधो दोषाय न त्वनूद्यमानयोरपीति परमार्थः। प्रकृतोदाहरणे च 'पुनरप्युद्यद्विवाहा इव' इत्युत्प्रेक्षा। तेन गच्छेतिवत्प्रतापे द्वयोरपि साक्षादेवाङ्गत्वम्। तादृशोऽयं प्रभावो येनासां पुनर्विवाह उत्प्रेक्ष्यत इति प्रतीतिपर्यवसानात्।

---

तयोः करुणशृङ्गारयोः। शाब्दन्यायेनाप्यविरोधमुदाहरति—**एहीति**। विधेययोरेवेति प्राधान्येन प्रतिपाद्यमानयोः अनूद्यमानयोरङ्गतया प्रतिपाद्ययोः। अत्रेदमवधे-

---

१. 'क्रामन्त्य इति। राजानं प्रति कवेरुक्तिः। हे राजन्, अधुना त्वद्वैरिनार्यो भीत्या भयेन भर्तृकरेष्ववलम्बिताः करा याभिस्तादृश्यो भूत्वा दावाग्निं परितः समन्ततो भ्रमन्ति। पलायनेऽप्यग्न्युत्पत्तेः। उत्प्रेक्षते—पुनरप्युद्यन् जायमानो विवाहो यासां ता इवेति। तत्रापि भर्तृकरं गृहीत्वाग्नेः परितो भ्रमणात्। कीदृश्यः। दर्भाङ्कुरैः क्षताभ्यः कोमलाङ्गुलिभ्यो गलद्रक्तं येषां तैः पादैः सदर्भाः स्थलीररण्यप्रदेशान् क्रामन्त्यो लङ्घयन्त्यः। पातितो यावको लाक्षारसो येषु तथाभूतैरिवेत्युत्प्रेक्षा विवाहोत्प्रेक्षासमर्थनाय। एवं सदर्भा इत्यपि। तथा गलता बाष्पाम्बुनाश्रुजलेन धौतं क्षालितमाननं यासां ताः। विवाहेऽपि धूमादश्रुनिर्गमः। अत्र प्रधानभूते राजविषयरतिभावे द्वावपि शृङ्गारकरुणावङ्गमिति न विरोधः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'एहीति एहीत्यादि प्रकारेणाशारूपग्रहग्रस्तैरर्थिभिर्याचकैर्धनिनः क्रीडन्तीत्यर्थः। अत्र एहीति क्रीडन्तीति रीत्या सर्वेषां प्रधानभूतक्रीडान्वयादागमनगमनाद्यैर्न विरोधः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अङ्गाङ्गिभावेन पराङ्गतया अविरोधो यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं तस्य तु शृङ्गारः । नन्वेवं करुणस्य प्राधान्ये तत्रैव विश्रान्तेरुभयोरङ्गत्वासंभवे कथमुदाहरणत्वमिति न वाच्यम् । शृङ्गारापेक्षया हि तस्य प्राधान्येऽपि न तत्रैव विश्रान्तिरिति तस्यापि प्रभावं प्रत्यङ्गतैव । यतो यथा पूर्वं कामुकः करालम्बादिकमकार्षीत्तथा संप्रति शराग्निरित्युपमानतया शृङ्गारपरिपोषितेन करुणेन प्रभावातिशय एव प्रकर्षमानीयते । न चाङ्गाङ्गस्य कथमङ्गत्वमिति वाच्यम् । तदुपकृतस्याङ्गस्योपकारविशेषाधायकतया तस्याप्युपकारत्वात् । यदुक्तम्—

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥' इति ।

ननु प्राक्प्रतिपादितरूपवेद्यान्तरसंपर्कशून्यरसस्य न रसान्तरेण विरोधोऽप्यङ्गाङ्गिभाव इत्यसंबद्धमेवैतत्सर्वमिति चेत्, न । रसशब्देनात्र प्रकरणे स्थायिभावस्याभिधानात् रस्यत इति व्युत्पत्तेः ॥

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे दोपदर्शनो नाम सप्तम उल्लासः ॥

---

यम्—रसानां विरोध आश्रयैक्येन तथालम्बनैक्येन क्वचिन्नैरन्तर्येणेति त्रेधा । तत्रालम्बनैक्येन वीरशृङ्गारयोर्हास्यरौद्रवीभत्सैः संभोगस्यालम्बनाश्रयैक्याभ्याम् । एवं वीरकरुणरौद्रैर्विप्रलम्भस्य ताभ्याम् । वीरभयानकयोर्नैरन्तर्यविभावैक्याभ्या तथा शृङ्गारशान्तयोस्ताभ्या विरोध इति । एवं वीरस्याद्भुतरौद्राभ्या सर्वथैवाविरोध । शृङ्गारस्याद्भुतेन भयानकस्य च वीभत्सेन तथैव । शृङ्गारवीरयोस्त्वालम्बनैक्ये विरोधात्तद्भेदादविरोध इति । इति श्रीमत्तत्सदुपाख्यरामचद्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृताया प्रदीपप्रभायां सप्तम उल्लास. ॥

---

१ 'क्षिप्त इति । अमरुककवेरिद पद्यम् । स त्रिपुरदाहकालीन. शुभुसबन्धी शराग्निर्वाणाग्निर्वो युष्माकं दुरित पाप दहत्वित्यन्वय. । स क । य आर्द्रापराधोऽव्यवहितापराधः कामीव हस्तयोरवलग्न सन् साश्रे अश्रुसहिते नेत्रोत्पले यासा ताभिस्त्रिपुरयुवतिभि' क्षिप्तः प्रक्षिप्त । तथा प्रसभ बलादशुकान्त वस्त्रप्रान्तमाददानो गृह्णन्नभिहतस्ताडित । तथा केशेपु गृह्णन्नपास्तः । कामिनापि चुम्बनाय केशग्रहात् । चरणयोर्निपतित. सभ्रमेण भयेनादरेण च नेक्षितः । तथा आलिङ्गन्नवधूत । क्षिप्त इत्यर्थ । अत्र यथा पूर्वं कामुकः करालम्बनादिकमकार्षीत्तथा सप्रति शराग्निरित्युपमानतया शृङ्गारपरिपोषितेन करुणेन भगवतः शभो प्रभावातिशय एव प्रकर्षमानीयत इत्यनवद्यम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अष्टम उल्लासः ।

एवं दोषे निरूपिते गुणालंकारौ प्राप्तावसरौ तयोर्गुणस्यान्तरङ्गतया प्राथम्यम्। विप्रतिपद्यन्ते तु केचिद्गुणालंकारयोर्भेदे । किं च सामान्यतो लक्षिते विशेषलक्षणमुचितमिति कारिकाद्वयेन तयोः स्वरूपदर्शनमुखेन लक्षणं दर्शयन्नेव भेदकमाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ १ ॥**

अङ्गिनः शरीरेष्वात्मवत्काव्ये प्राधान्येन स्थितस्य रसस्य धर्माः साक्षात्तदाश्रिता इत्यर्थः । अचलस्थितय इत्यपृथक्स्थितयः । अव्यभिचारिस्थितय इति यावत् । अव्यभिचारश्च रसेन तदुपकारेण वा । तेन रसं विना ये नावतिष्ठन्ते अवतिष्ठमानाश्चावश्यं रसमुपकुर्वन्तीत्यर्थः । अत एवानयोर्व्यतिरेकमलंकारे वक्ष्यति। एवं च रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वं, तथात्वे सति रसाव्यभिचारिस्थितित्वं, अयोगव्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रयं गुणानां द्रष्टव्यम् । अलंकारमात्रभेदकत्वं तु सत्यन्तभागविमुक्तमिदमेव ग्राह्यम् । अन्यथा विशेषणवैयर्थ्यात् । चण्डीदासस्तु—'रसधर्ममात्रं लक्षणं, उत्कर्षहेतुत्वं गुणशब्दप्रवृत्तिबीजम्' इत्याह । तदयुक्तम् । शृङ्गारत्वादौ धर्मेऽतिव्याप्तेः । ननु रसधर्मत्वमेषामसिद्धम् । कथमन्यथा नीरसेऽपि सुकुमारादिवर्णशालिनि मधुरादिव्यवहारः, रसवत्यपि ईदृग्वर्णाभाववत्यमधुरादिव्यवहार इति । उच्यते—शौर्यादयस्तावदात्मन एव धर्मा इत्यविवादम् । दृश्यते तु क्वचिदशूरेऽप्याकारमहत्त्वादियोगिनि शूरव्यवहारः, शूरेऽप्याकारलाघवादियोगिन्यशूरत्वव्यवहारश्च । तत्कस्य हेतोः । अथ क्वचिच्छूरव्यवहारविषये विततकृतिदर्शनादाकार एवास्य शूर इत्यौपचारिकव्यवहाराच्चाभियुक्तानामाकार एवैतादृशः शूरपदवाच्य इति विपर्यासाददूरदर्शिनस्तथा व्यवहरन्ति । तत्त्वज्ञास्तु क्वचिदुपचारत इति वक्तव्यम् । हन्तैवं मधुरादिरसयोगिनि सुकुमारादिवर्णयुक्ते मधुरादिव्यवहाराद्वर्ण एवायं मधुरादिरित्यौपचारिकव्यपदेशाच्चाभियुक्तानां वर्ण एवैतादृशो माधुर्यभागिति विपर्ययाद्रसपर्यन्तावगाहिबुद्धिविधुरा व्यवहरन्ति । तत्त्वालोचिनस्तु क्वचिदुपचारादिति

---

**अन्तरङ्गतयेति** । रसधर्मतयेत्यर्थ. । **विप्रतिपद्यन्त इति** । रसोत्कर्षकत्वाविशेषादित्यर्थः । तर्हि भेदप्रतिपादनाय रसधर्मत्वमेव वाच्यं न तु रसोत्कर्षकत्वमपि । तस्यालंकारसाधारण्यात्, अत आह—**किं चेति** । स्वरूपदर्शनमुखेन भेदकमाहेत्यन्वयः । लक्षणस्योक्तन्यायेनावश्यकत्वात्तदर्थं रसोत्कर्षकत्वमवश्यं वाच्यम् । अन्यथा शृङ्गारत्वादावतिव्याप्तेः । अतो लक्षणेन रसधर्मस्वरूपत्वावगतौ भेदस्यापि सिद्धिरिति भावः । अचलेत्यस्योक्तार्थद्वयपरत्वे गमकमाह—**अत एवेति** । अनयोरिति रसतदुपकाराविनाभावयोः । नन्वेवं सति रसोत्कर्षकत्वे सति । धर्मत्वमित्येतावतैव लक्षणसिद्धावचलेत्यादि व्यर्थमित्याशङ्क्याह—**एवं चेति** ।

तुल्यमेतत् । ननु शौर्यादेरात्मवृत्तित्ववन्मधुरत्वादीनां रसवृत्तित्वव्यवस्थितावेवं स्यात् । सैव त्वसिद्धा विनिगमकाभावादिति चेत्, मैवम् । भवत्येव विनिगमकाभावो यदि त्वया वर्णमात्राश्रया गुणाः स्वीकर्तुं शक्यन्ते । न त्वेवम् । अविशेषेण रचनायामपि तदभ्युपगमात् । तथा च रसमात्रवृत्तित्वे लाघवम् । वर्णरचनोभयवृत्तित्वे तु गौरवम् । यतश्चैवमत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णादिभिर्व्यज्यन्त इत्येव सम्यक् । व्यञ्जकत्वं चैषां यथा तथोदाहरिष्यत इति प्रसङ्गशङ्का ।

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।**
**हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ २ ॥**

अङ्गिनो रसस्याङ्गभूतौ शब्दार्थौ तद्द्वारेण तदतिशयाधानमुखेन ये धर्मा रसमुपकुर्वन्ति तेऽलंकाराः । तत्र शब्दद्वारेणानुप्रासादयः अर्थद्वारेणोपमादयः । यथा कण्ठाद्यङ्गोत्कर्षद्वारेण शरीरिणोऽप्युपकारका हारादयः । सन्तमिति यत्र रसस्य संभवस्तत्र तमुपकुर्वन्ति । यत्र तस्यासंभवस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिता इति भावः । जातुचिन्नतु नियमेन । तथा च सन्तमपि रसं क्वचिन्नोपकुर्वन्तीत्यर्थः । एतावता रसावृत्तित्वं चलस्थितित्वं च दर्शितम् । तथा च रसोपकारकत्वे सति तदवृत्तित्वं, तथात्वे सति रसव्यभिचारित्वं, अनियमेन रसोपकारकत्वं चेति सामान्यलक्षणत्रयमलंकाराणाम् । गुणमात्रभेदकं तु सत्यन्तभागरहितं तद्बोद्धव्यम् । अन्यथा व्यर्थविशेषणत्वात् । तत्र शब्दद्वारेण रसोपकारकत्वं यथा—

'[१]अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥'

अत्र रेफानुप्रासः शब्दमलंकुर्वञ्शृङ्गारमुपकरोति । रेफस्य शृङ्गारव्यञ्जकत्वात् ।

---

तथा च लक्षणभेदान्न वैयर्थ्यमिति भाव. । **विनिगमकेति** । चित्तद्रुतिरूपकार्यस्य वर्णगतमाधुर्येणाप्युपपत्तेर्मधुरो वर्ण इति व्यवहाराच्चेति भाव. । **गौरवमिति** । इदमुपलक्षणम् । वर्णगतमाधुर्यस्य द्रुतिहेतुत्वे नीरसेऽपि तदनुभवापत्ति । अतो रसस्यापि तद्धेतुत्वं कल्पनीयमिति गौरवम् । मन्मते तु रसगतमेव माधुर्यवर्णनव्यभिव्यक्त (?) द्रुतिहेतुरिति लाघवम् । किं च द्रुतितारतम्यस्य करुणादिषु दर्शनान्माधुर्यस्यापि तद्धेतोस्तद्वाच्यम् । न च वर्णगते तस्मिंस्तद्वक्तुं शक्यमिति रसधर्मैतैवेषामुचितेत्यपि ज्ञेयम् । यतश्चैवमित्यनन्तरमत इति शेषः । **एतावतेति** । सन्तमित्यनेन रसाभावेऽपि सभवकथनादायं जातुचिदित्यनेनान्त्यं दर्शितमित्यर्थ । इहापि पूर्वोक्तरीत्या लक्षणत्रयपरतामाह—**तथा चेति** । अङ्गद्वारेणेत्यनेन रसावृत्तित्वलाभ. ।

---

१. 'अपसारयेति । हे आलि, घनसार कर्पूरमपसारय दूरीकुरु । हार दूर एव कुरु । अलमलमिति वीप्सया उद्वेगातिशयः सूच्यते ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अर्थद्वारेण यथा—

'मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती॥'

अत्र विषमिवेत्यादिरुपमा। सा चार्थमलंकुर्वाणा रसमुत्कर्षयति। विषमिवेत्युपमावशेन विसर्पणादेरतिशयप्राह्या विप्रलम्भोत्कर्षात्।

रसं विनाप्यलंकारसंभवो यथा—'स्वच्छन्दोच्छलदच्छकच्छ—' इत्यादि चित्रभेदे।

सत्यपि रसे तदनुपकारकत्वं शब्दालंकारस्य यथा—

'चित्ते चिहुट्टदि ण टुट्टदि सा गुणेसु
सज्जासु लोट्टदि विसट्टदि दिम्मुहेसु।
वोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणे न टुट्टदि खणं तरुणी तरट्टी॥'

---

रसोपकारकत्वं शब्दार्थान्यतरोपस्कारद्वारेण विवक्षितम्। अङ्गद्वारेणेत्युक्तेः। तेन चन्द्रोदयादावुद्दीपकेनातिप्रसङ्ग इति ज्ञेयम्। **मनोराग इति**। इत इतो मनोरागविसर्पणादेः सकाशात् भवतीति लवङ्गिकाख्या सखी निर्दिष्टा। **चित्त इति**। 'चित्ते विघट्टते न त्रुट्यति सा गुणेषु शय्यायां लुठति विसर्पति दिङ्मुखेषु। वचने वर्तते प्रवर्तते काव्यबन्धे ध्याने न उप्पति क्षणं तरुणी तरट्टी॥' कान्ताविरहातुरस्येयमुक्तिः। विघट्टते दृढसंबद्धा भवति। गुणविषये न उप्पति (त्रुट्यति) न हीयते। 'खुट्टदि' इति पाठस्तु कथितपदत्वाप्रसङ्गात्सम्यगेव। अर्थस्त्वयमेव

---

१. मनोराग इति। लवङ्गिका प्रति मालत्या इयमुक्तिः। माधवविषयो मनसो रागोऽविरतं निरन्तरं विषमिव तीव्रं यथा स्यादेवं विसर्पति विविधप्रकारेण सर्वाङ्गीणः संचरति। अत एव प्रमाथी क्षोभकारी निर्धूमो विधुतः सधुक्षितः पावक इव ज्वलति। ततश्च गरीयानुत्कर्षकाष्ठां गतो ज्वर इव प्रत्यङ्गं हिनस्ति पीडयतीति विभिन्नधर्मा मालोपमा। अतो हेतोरितो मनोरागान्मां त्रातुं तातादिकं न प्रभवति न शक्नोतीत्यर्थः। 'निर्धूम' इति पाठे विधुत इति क्रियाया विशेषणम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'चित्ते चमत्करोति—ध्यानेन त्रुट्यति क्षणं तरुणी प्रगल्भा॥' इति संस्कृतम्। 'नखोत्कृत्त चर्म चिहुट्टेति प्रसिद्धम्। तद्वदाचरतीत्यर्थ इत्यन्ये। गाढं लग्नेत्यपरे। गुणेषु न त्रुट्यति पर्यवसानं न प्राप्नोतीत्यर्थः। न हीयत इति केचित्। शय्यासु लुठनं दिक्षु विसर्पणं च भावनया स्वस्योद्भ्रमात्। 'विसट्टदि' इति पाठे विकसति प्रकाशत इत्यर्थः। वचने वर्तते सैव वचनविषयीभवति। काव्यबन्धेऽपि सैव विषयीभवति। तथा ध्याने न त्रुट्यति। सदा तद्विषयीभवतीत्यर्थः। वचने वर्तते उपदेशं गृह्णाति। उपदिष्टे च काव्यबन्धे प्रवर्तते' इति महेशः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्रानुप्रासेन शब्दमात्रमलंक्रियते न तु सन्नपि शृङ्गारः । टवर्गस्य तत्प्रतिकूलत्वात् । अत्र च प्रतिकूलवर्णत्वं न दोषः । प्राकृतस्यौजोगुणप्रधानत्वादस्य च तदभिव्यञ्जकत्वादिति कश्चित् । वस्तुतस्तु सत्यपि प्रतिकूलवर्णत्वे रसस्य नानुत्पत्तिरेव अनुभवविरोधात् किं त्वपकर्षमात्रम् । न चापकृष्टेऽपि विद्यमाने तस्मिंष्टवर्गानुप्रासस्योपकारकतेति सारम् ।

सत्यपि रसे तदनुपकारकत्वमर्थालंकारस्य यथा—

'मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥'

अत्रोपमार्थालंकारः । न चासौ प्रकृतस्य शृङ्गारस्योपकारिका । विप्रलम्भे हि जीवनिर्गमोऽपि वर्ण्यते तदुत्कर्षाधायकत्वादिति तन्निरोधहेतूपादानमनुचितम् प्रत्युत स्नेहाभावे पर्यवस्यति । तदेतदुक्तम् 'अत्र बिसलता जीवं निरोद्धुमशक्तेति प्रकृताननुगुणा उपमा' इति । अशक्तत्वं चानुचितत्वमिति प्राञ्चः । वस्तुतस्तु तदन्यथा व्याख्येयम् । बिसलता जीवं रोद्धुमशक्तेत्युपमा प्रकृताननुगुणा प्रकृते विषयेऽनुगुणरहिता उपमाया अनुगुणं यत्सादृश्यं तच्छून्या । तस्मादत्रोपमा नालंकारः किं तूत्प्रेक्षा । न च तस्यामपि तद्दोषतादवस्थ्यम् । संभावितेनापि सादृश्येन तत्प्रवृत्तेः । न तूपमावद्वस्तुसतैव जीवरोधकत्वरूप-

---

तत्रापि । वचने वर्तते । तामेव वच्मीत्यर्थः । तथा काव्यमपि तद्विषयमेव करोमीत्यर्थः । ध्याने न विद्यते चेति (?) । **अत्र चेति** । प्रतिकूलवर्णत्वस्य दोषत्वे हि रसाभावस्तेन सन्तमपि रसं नोपकुर्वन्तीत्यस्योदाहरणत्वमसंगतमित्याशयः । अत्रास्वरसमाह—**वस्तुतस्त्वति** । प्रतिकूलवर्णत्वे तस्य दोषत्वे । **अनुगुणं यत्सादृश्यमिति** । जीवनिरोधकरूपमित्यर्थः । तेन ऋजुत्वगलद्वारपिधानादिसादृश्यसंभवेऽपि नासंगति । **वस्तुसतैवेति** । यद्यपि नायं नियम । कीर्तौ चन्द्रिकोपमायां श्वेतत्वस्यावास्तवत्वात् । तथापि कविसंप्रदायसिद्धत्वमेव वस्तुसत्त्वमिहाभिप्रेतं बोध्यम् । जीवनिरोधकत्वं तु बिसलताया न तथेति नानुपपत्ति । ननूत्प्रेक्षामिवशब्देन संभावनयोच्यते न तु सादृश्यमपि । एवं च शब्दानुपात्तस्य सादृश्यस्य

---

१. मित्र इति । सन्ध्याकालीनचक्रवाकचेष्टावर्णनमिदम् । मित्रे सूर्ये सुहृदि च क्वापि अगम्यवार्तके देशे गते सति । सरोरुहवने बद्धानने मुद्रिते अवचने च ताम्यति ग्लायति शोकात्ताप्यमाने च । भ्रमरेषु क्रन्दत्सु तारस्वरं शब्दायमानेषु रुदत्सु च । दयिताया आसन्नं युक्तं सारसपक्षिणं पुरोऽग्रे वीक्ष्य वियोगिना चक्रवाकेण नास्वादिता नोज्झिता त्यक्ता । केवलं निर्गच्छतो जीवस्यार्गलेव वक्त्रे निहितेत्यन्वयः । अत्र वियुक्तदर्शनवत्संयुक्तदर्शनस्यापि विरहोद्दीपकत्वादुभयप्रदर्शनम् । अत्र विप्रलम्भे जीवनिरोधोत्प्रेक्षा अनुपकारिका ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

सादृश्यमपि विषये ह्युत्प्रेक्षणीयकोटावेवान्तर्भूतं यथोच्यते रोधकमिव निहितमिति । तर्हि कथमिदं प्रकृतोदाहरणमिति चेत् उत्प्रेक्षातो रसातिशयाप्रतीतेः प्रत्युत तादृशोत्प्रेक्षाया उपमोक्तन्यायेनापकर्षपर्यवसानादिति । एष एव गुणालंकारविभागो विचारसहो मान्यः । तदेवं गुणालंकारयोर्भेदे व्यवस्थिते यत्कैश्चिदुक्तम्—'लौकिकयोर्गुणालंकारयोः शौर्यादिहाराद्योः समवेतत्वसंयोगित्वाभ्यां भेदः संभवति । अलौकिकयोर्माधुर्याद्यनुप्रासोपमाद्योरुभयोरपि समवेतत्वादनुपपन्नो भेद' । तस्मात्तयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यायेन । तथाहि—गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति तथा केनाप्यालंकारिकेण गुणालंकारौ केनचिदभिप्रायेण भिन्नतयोक्तौ इतरे तु हेतुविचारं विनैव तदनुसारेण तद्भेदं वदन्तीति तदसम्यग्वेदितव्यम् । यदप्युक्तं वामनेन—'काव्यशोभा काव्यव्यवहारनिमित्तं कश्चिदतिशयः । तद्धेतवो गुणास्तदतिशयहेतवस्त्वलंकारा इति तयोर्भेदः' इति । तदप्ययुक्तम् । यतः शोभाहेतवो गुणा इत्युक्तं तत्र किं समग्रैर्गुणैः काव्यशोभोत्पत्तिरुत येनकेनापि । आद्ये पाञ्चालीगौडीया च रीतिः कथं काव्यस्यात्मा । माधुर्याद्यभावेन समस्तगुणाभावाच्छोभानुत्पत्तेः । अन्त्ये 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ।' इत्यादावोजःप्रसादगुणसत्त्वात्काव्यव्यवहारप्रसङ्गः । नहि मन्मत इव त्वन्मतेऽपि तद्व्यवहारेऽलंकारापेक्षा । तेन गुणमात्रेणैव काव्यव्यवहारस्वीकारात् । यदपि शोभातिशयहेतवोऽलंकार इति तदप्ययुक्तम् ।

'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥'

इत्यत्र पूर्वार्धे विशेषोक्तिः । 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिः' इति वामनलक्षणात् । उत्तरार्धे व्यतिरेकः । 'उपमेयस्य गुणातिरेकत्वं व्यतिरेकः' इति लक्षणात् । एतौ च गुणमनपेक्ष्यैव काव्यव्यवहारहेतुशोभाजनकौ । एवमन्यत्राप्यूह्यम् । नन्वत्रापि प्रसादादेर्वर्तमानत्वात्कथं गुणानपे-

---

कथं संभावना । अर्गलाया एव तु तद्वाचकपदानन्तरोच्चरितेनेवशब्देन संभावनोचितेत्याशङ्कायामाह—**उत्प्रेक्षणीयकोटावेवेति** । अयमाशयः—अर्गलापदमत्र निरोधके लाक्षणिकम् । अन्यथा जीवस्यार्गलेत्यन्वयायोगात् । तथा च जीवस्य निरोधिकेवेत्यर्थप्रतीते. । सादृश्यस्य विशेषणतया संभावनान्वयोपपत्तिरिति तदाह—**यथोच्यत इत्यादीति** । एष एव रसधर्मत्वरसाव्यभिचारित्वतदभावरूप एव । **मान्य इति** । संबन्धभेदरूपो नेत्यर्थ । **समवेतत्वादिति** । माधुर्यादिरिवो-

---

१. 'स्वर्गेति । वरवर्णिनी उत्तमाङ्गनैव अनेनैव मानुषेणैव देहेन स्वर्गप्राप्तिर्न तु दिव्यदेहेन स्थानविशेषप्राप्तिः । अस्यास्ततोऽप्युत्कृष्टत्वात् । तदाह—अस्या रदच्छदस्याधरस्य रसः सुधां न्यक्करोतितरामतिशयेन तिरस्करोतीति ।' इत्युदाहरणचन्द्रिकाप्रक्षेपः.

क्षत्वमलंकारयोः । किं च निर्गुणत्वे कथं त्वन्मयेऽपि काव्यव्यवहारः । सगुणत्व-विशेषणाभावादिति चेत्, अस्त्येवात्र गुणः तथा ज्ञातं च । परंतु किंचिद्गुणव-त्त्वस्य शोभाहेतुत्वेऽतिप्रसङ्गात् समस्तगुणवत्त्वं तथा वक्तव्यम् । न चात्र तत्सा-मग्र्यम् । तथा च गुणजन्यां शोभामनपेक्ष्यैवालंकाराभ्यां शोभासंपत्तिरिति तात्पर्यम् ।

इदानीं गुणानामलंकारभेदे सिद्धे दशविधत्वव्युदासाय तद्भेदमाह—

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

विभागक्रमेणैषां लक्षणमाह—

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ३ ॥**

आह्लादकत्वं यद्यानन्दहेतुत्वं तर्हि न शृङ्गारस्यापि तस्यैव सुखात्मत्वेनात्त ज्ञनकत्वात् । आनन्दस्वरूपत्वं चेत्तर्हि सर्वेषामेव रसानामित्यत आह— द्रुतिकारणमिति । द्रुतिश्चेतसो गलितत्वमेव द्वेषादिजन्यकाठिन्याभावः । तथा च यद्वशेन श्रोतुर्निर्मनस्कतेव संपद्यते तदाह्लादकत्वस्वरूपं माधुर्यमित्यर्थः । यदुक्तम्—

'गलितत्वमिवाह्ला(स्वा)दपदव्या हृदये ददत् ।
माधुर्यं नाम शृङ्गारे प्ररोहं गाहते गुणः ॥' इति ।

क्वासावित्यत आह—शृङ्गार इति । शृङ्गारपदं संभोगपरम् । विप्रलम्भेऽति-शयस्य वक्तव्यत्वात् । भास्करस्तु श्राव्यत्वं माधुर्यस्य लक्षणमाह स्म । तदयु-क्तम् । ओजःप्रसादयोरपि तत्सत्त्वेनातिव्याप्तेः शब्दनिष्ठत्वाच्च ।

तत्किं संभोग एव माधुर्यं नेत्याह—

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

संभोगात्करुणे तस्माद्विप्रलम्भे ततोऽपि शान्तेऽतिशयितं माधुर्यम् । हास्या-देरप्यपगमेनातिद्रुतिहेतुत्वात् । इयांस्तु विशेषः—संभोगविप्रलम्भयोस्तन्निः-सपत्नम् । शान्ते तु जुगुप्साद्यन्वयादोजोलेशानुविद्धमिति ।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ४ ॥**

दीप्तिस्वरूपा या मनसो विस्तृतिर्ज्वलितत्वमिव । तथा च यद्वशाज्ज्वलितमिव मनो जायते तदोज इत्यर्थः । क्वेदमित्यत आह—वीररसस्थिति ।

अस्याधिकरणान्तरमाह—

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु ।**

---

पमाद्यलंकारस्य सादृश्यादिरूपस्य समवेतत्वादित्यर्थः । **यदुक्तमिति** । आस्वाद-पदव्या आस्वादद्वारा । **निःसपत्नमिति** । स्वकार्यद्रुतिविरोधिदीप्तिजनकतया प्रतिपक्षभूतं यदोजस्तद्रहितमित्यर्थः । **जुगुप्सेति** । तस्या बीभत्सस्थायित्वाद्बीभत्से चौजसो वक्ष्यमाणत्वात्तल्लेशसंकीर्णमित्यर्थः । एवं बीभत्से माधुर्यलेशसंकीर्णत्वमोजसः

वीराद्वीभत्से ततोऽपि रौद्रे चित्तदीप्तेः कार्यायाः सातिशयतयाः कारणमोजः क्रमेणोत्कर्षवत्। तदेतद्वीररौद्रयोर्निष्प्रतिपक्षं वीभत्से तु माधुर्यलवानुविद्धमिति विशेषः। प्राधान्येन माधुर्यौजसोरेकैकविधानमत्र प्रकान्तमतो हास्याद्भुतभयानकेषु न किंचिद्विहितम्। तेषूभयगुणप्राधान्यात्।

**शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः॥ ५॥**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः।**

ओजसि शुष्केन्धनाग्निवन्माधुर्ये स्वच्छशर्करावस्त्रादिजलवद्यो गुणोऽन्यद्व्याप्यं चित्तं झटित्येव रसेन व्याप्नोति स प्रसादः। करणस्यापि स्वातन्त्र्यविवक्षया य इति निर्देशः। सर्वेषु रसेष्वाधेयतया सर्वासु रचनासु व्यङ्ग्यतया स्थित इति तन्त्रेणाह—सर्वत्र विहितस्थितिरिति।

कथं तर्हि तत्त्ववेदिनामपि शब्दार्थयोर्मधुरादिव्यवहार इत्यत आह—

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता॥ ६॥**

गुणवृत्तिरुपचारः। आकारे शौर्यस्येव व्यञ्जके सुकुमारवर्णादौ तदुपचार इत्यर्थः। तेषां गुणानाम्।

ननूक्तलक्षणाः श्लेषादयोऽपि दश दुरपह्नवास्तत्कुतस्त्रय एव न पुनर्मदुक्ता अपि दशेत्यत आह—

**केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः।**
**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश॥ ७॥**

एषु मदुक्तलक्षणेषु माधुर्यादिषु। इदं चोपलक्षणम्। अलंकारध्वन्योरप्यन्तर्भावस्य दर्शयिष्यमाणत्वात्। उक्तान्तर्भावादिहेतुत्रयोपादानमप्युपलक्षणम्। वैचित्र्यमात्रपर्यवसानस्यापि दर्शयिष्यमाणत्वात्। दोषत्यागादिति। दोषाभावस्वरूपत्वात्तद्व्यापकतया वा। दोषत्वं कुत्रचिदिति। दोषस्वभावस्य गुणस्वभावत्वानौचित्यात् स्वभावभङ्गप्रसङ्गात्। तथाहि—श्लेषस्तन्मते बहूना-

---

सहृदयानुभवसिद्धं ज्ञेयम्। एवं सति कथमेकैककथनमत आह—**प्राधान्येनेति।** अत्र प्रमाणमाह—**अत इति।** **करणस्यापीति।** येन गुणेन रसश्चित्तं व्याप्नोतीति वाच्ये करणभूतस्यापि गुणस्य य इति कर्तृत्वेन निर्देशः। स्वातन्त्र्यविवक्षयेत्यर्थः। एवं च माधुर्यादीनां त्रयाणां क्रमेण द्रुतिदीप्तिविकासाख्यास्तिस्रश्चित्तवृत्तयः कार्या इति कथितम्। गुणानां रसमात्रधर्मत्वात्सर्वासु रचनासु चेति वृत्तिग्रन्थासंगतिमाशङ्क्याह—**अयं चेति।** व्यङ्ग्यतयेति व्यञ्जकत्वसंबन्धपरम्। शब्दार्थयोरिति रचनाया अप्युपलक्षणम्। **ननूक्तेति।** उक्तं वामनादिभिर्लक्षणं येषां ते तथोक्ताः। तानि च वक्ष्यन्ते। तेषां च संग्रहश्लोकः—'श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥' **तद्व्यापकतयेति।** स दोषाभावो व्यापको यस्य तत्त्वादित्यर्थः। तथा च दोषाभा-

मपि पदानामेकवद्भासनम् । समाधिस्त्वारोहावरोहयोः क्रमः । स चोत्कर्षापकर्षयोर्वैरस्यानाधायको विन्यासः । उदारत्वं विकटाक्षरत्वम् । तच्च नृत्यद्भिरिव पदैर्या घटना तत्त्वम् । प्रसाद ओजोमिश्रितं शैथिल्यम् । सर्वशैथिल्यस्य दोषत्वात् । तदेतच्चतुष्टयमोजस्यन्तर्भूतम् । यद्यपि दीप्तिजनकत्वरूपे रसनिष्ठ ओजसि नैषामन्तर्भावसंभवस्तथापि तत्स्वीकारेण स्वीक्रियते । तद्व्यञ्जके गाढबन्धलक्षणे तदन्तर्भाव इत्यर्थः । एवमग्रेऽपि । पृथक्पदरूपं तु माधुर्यं भङ्ग्या साक्षादेवोपात्तम् । यथोक्तमाधुर्यव्यञ्जकत्वेनासमासस्य विधानात् ।

---

वस्यावश्यकत्वमुक्तम् । 'तज्ज्ञापकतया' इति पाठेऽप्ययमेवार्थः पर्यवस्यति । **एकवद्भासनमिति** । तत्प्रयोजक. संहितयैकजातीयवर्णरचनाविशेषो गाढत्वापरपर्याय इत्यर्थः । यथा—'उभौ यदि व्योम्नि पृथक्–' इति माघे तृतीयसर्गे । आरोहावरोहयोर्गाढबन्धत्वशैथिल्ययो । अनयोरेवोत्कर्षापकर्षपदार्थत्वम् । क्रमपदार्थमाह—**वैरस्येति** । अर्थोद्भटतायामवरोहे वैरस्यात्तत्परिहारेण विन्यास इत्यर्थ । आरोहानन्तरमवरोहे समाधि. । व्युत्क्रमे प्रसाद इत्यन्ये । समाधिर्यथा—'चञ्चद्भुजभ्रमित' इति वेण्याम् । अत्र हि संचूर्णितेत्यन्तमारोहः । सुयोधनान्तं चावरोहः । पुनस्तवेत्यन्तं पूर्वः ततोऽन्त्य इति । **नृत्यद्भिरिवेति** । 'खचरणविनिविष्टैर्नूपुरैर्नर्तकीनां' इत्यादौ । **ओजोमिश्रितमिति** । शैथिल्यं प्रधानमोजोगुणभूतं तेन तस्याल्पत्वम् । समाधौ तु तदाधिक्यं शैथिल्यस्य न्यूनत्वमित्यनयोर्भेद । 'चञ्चद्भुज' इत्यादौ तथादर्शनात् । मतान्तरं प्रागुक्तम् । प्रसादो यथा—'यो यः शस्त्रं बिभर्ति–' इत्यादौ वेण्याम् । अत्र हि शैथिल्यस्य प्राधान्यमाधिक्यात् । गाढत्वं च शैथिल्यदोषपरिहारार्थमल्पं गुणभूतम् । तदाह—**सर्वशैथिल्यस्येति** । **तदेतदिति** । गाढबन्धतया दीप्तिहेतुत्वात् । 'गुम्फ उद्धत ओजसि' इति वक्ष्यमाणत्वादिति भावः । **दीप्तिजनकत्वरूप इति** । दीप्तिजनकत्वेन रूप्यते निरूप्यत इति तथाभूत इत्यर्थः । **पृथगिति** । पदार्थसमासाभावरूपमित्यर्थः । यथा—'स्थिता क्षणं पक्ष्मसु ताडिताधरा' इति कुमारसंभवे भङ्ग्या माधुर्यव्यञ्जकासमासकथनरूपया । अर्थव्यक्तिर्यथा—'वागर्थाविव' इति । मार्गो रीतिः । सौकुमार्यं यथा—'अपसारय घनसारं' इति । कान्तिर्यथा—'निरानन्दः कौन्दे मधुनि विधुरो वालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते । प्रियंगौ नासङ्गं रचयति न चूते विचरति स्मरं लक्ष्मीलीलाकमलमधुपानं मधुकर· ॥' इति । उक्तानां श्लेषादिगुणानां लक्षणश्लोका वामनवृत्तौ—'पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः । श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते ॥ यत्रैकपदवद्भावः पदानां भूयसामपि । अनालक्षितसंधीनां स श्लेषः परमो गुणः ॥ प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः । दुर्बन्धो दुर्विभावश्च समतेति मतो गुण· ॥ आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् । समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥ बन्धे पृथक्पदत्वं च माधुर्यं कथितं बुधैः । बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् ॥ विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् । पश्चादवगतिर्वाच· पुरस्तादिव वस्तुन ॥ यथार्थव्यक्तिहेतुत्वात्सोऽर्थव्यक्ति स्मृतो

अर्थव्यक्तिस्तु झटित्यर्थसमर्पकतया। सा च प्रसादपदेनैवोपात्ता। यथोक्तप्रसादस्य तद्व्यञ्जकत्वात्। समता स्वारब्धवैदर्भ्यादिमार्गापरित्यागः। सा च क्वचिद्दोष एव। यथा—'मातङ्गाः किमु वल्गितैः—' इत्यादौ आरब्धस्य मसृणवर्णत्वस्य सिंहाभिधानेऽप्यत्यागो दोषाय। तत्परित्यागस्तु प्रत्युत गुण इत्युक्तम्। न च दोषस्वभावस्य गुणत्वम्। अस्वभावप्रसङ्गात्। सुकुमारत्वं त्वनिष्ठुराक्षरप्रायत्वम्। तच्च कष्टत्वरूपदोषाभावपर्यवसन्नम्। कान्तिस्तूज्ज्वलता। उज्ज्वलत्वं तु ग्राम्यपदाघटितत्वमिति। सापि ग्राम्यत्वरूपदोषाभावपर्यवसन्नैव। एवं दश शब्दगुणा न पृथग्वक्तव्याः। अर्थगुणा अप्येवम्। तथाहि—अर्थस्यौजः प्रौढिः। सा च

'पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥'

इति प्रतिपादितपञ्चप्रभेदा। तेष्वाद्यभेदचतुष्टयमुक्तिवैचित्र्यमात्रं न गुणः। तैर्विनापि काव्यव्यवहारान्माधुर्यादिनिरपेक्षेण च तेन तद्व्यवहाराप्रवर्तनात्। अन्त्यस्तद्भेदोऽपुष्टार्थत्वरूपदोषाभावपर्यवसन्नः। एवं प्रसादोऽर्थनैर्मल्यम्। प्रयोजकमात्रार्थपरिग्रह इति यावत्। सोऽप्यधिकपदरूपदोषपरित्यागादेवान्यथासिद्धसंनिधिः। माधुर्यं तूक्तिवैचित्र्यं नवीकृतत्वरूपम्। तच्चानवीकृतत्वरूपदोषाभावरूपम्। सौकुमार्यं पुनरपारुष्यम्। परुषेऽप्यर्थेऽपरुषशब्दाभिधानमिति

---

गुणः। औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः॥' इति। **अर्थेति**। अर्थगुणा अपि दशोक्तेष्वन्तर्भावादिना न पृथगित्यर्थः। तेषां च श्लेष इत्यादीन्येव नामानि। लक्षणानि तु भिन्नानि। तान्येव दर्शयन्पार्थक्यं निरस्यति—**तथाहीति**। अर्थगतमोजः प्रौढि प्रौढत्वम्। सा चेत्यस्य पञ्चविधेत्यनेनान्वयः। प्रौढिरिति सर्वत्र संबध्यते। तत्र पदार्थे वाक्यरचनं यथा—'अथ नयनसमुत्थं ज्योतिरत्रेरिव—' इति चन्द्रपदार्थे। वाक्यार्थे पदाभिधानं यथा—'यन्न दुःखेन संभिन्नं—इत्यादि वाक्यार्थे स्वर्गपदम्। 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इत्यभिसारिकापदं च। व्यासो विस्तारः। यथा—'अयं नानाकारो भवति सुखदुःखव्यतिकरः सुखं वा दुःखं वा न भवति भवत्येव च ततः। पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्पुनस्तस्मादूर्ध्वं भवति न च दुःखं न च सुखम्॥' अत्रादृष्टवैचित्र्यात्सुखदुःखयोर्वैचित्र्यमिति वाक्यार्थस्य विस्तारणम्। समासः संक्षेपः। यथा—'ते हिमालयमामन्त्र्य—' इति कुमारसंभवे। अस्य अर्थस्य। साभिप्रायत्वं प्रकृतार्थोपयुक्तत्वम्। यथा—'महौजसो मानधनाः—' इत्यादौ 'प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्' इत्यर्थस्योपपादकानि महौजस्त्वादीनीति। **तैर्विनापीति**। पदार्थे वाक्यरचनादिभिश्चतुर्भिर्विनापीत्यर्थः। तथा च काव्यव्यवहारहेतवो गुणा इति त्वन्मतेनैव तेषां गुणत्वं न भवतीत्यर्थः। अन्वयव्यभिचारमप्याह—**माधुर्यादीति**। तेन आद्यभेदचतुष्टयेन। दृष्ट्वैकेत्यमरुकश्लोकः। अत्र द्वयोरपि प्रियतमत्वेनान्यतरक्रीडायामनौचित्यं ध्वनितम्। अन्यामतिक्रम्य मा चुम्बतीति प्रेमोल्लासः। अन्यां प्रति गोपना-

श्रावत् । तच्चामाङ्गल्यरूपाश्लीलपरित्यागेनैव सिध्यति । उदारता त्वर्थस्याग्राम्यत्वम् । तच्च ग्राम्यत्वरूपदोषाभाव एवेति । अर्थव्यक्तिस्तु वस्तुस्वभावस्य स्फुटता । सा च स्वभावोक्त्यन्तर्भूता । कान्तिस्तु दीप्तरसत्वम् । सा च रसध्वनौ रसवदलंकारे गुणीभूतव्यङ्ग्ये वान्तर्भूता । श्लेषस्तु क्रमकौटिल्यानुल्बणत्वोपपत्तिरूपघटना । अस्यार्थः—क्रमकौटिल्यमतिक्रमस्तस्यानुल्बणत्वमतिस्फुटता तत्रोपपत्तिर्युक्तिस्तया योग इति । यथा—'दृष्ट्वैकासन-' इत्यादि । अत्र पिहितनयनासतिक्रम्यान्याचुम्बनादतिक्रमः । तस्यास्फुटत्वमनया तदज्ञानात् । तत्रोपपत्तिरेवमनया तु न ज्ञातव्यमिति । केचित्तु क्रमकौटिल्यं क्रमस्यातिक्रम. स चात्र व्यक्त एव एकदैवोभयानुरञ्जनात् । स एष श्लेष उक्तिवैचित्र्यमात्रं न गुणः । अनन्यसाधारणरसोपकारित्वातिशयविरहात् । समता तु वैषम्याभावोऽर्थस्य । स च क्रमाभेदरूप इति क्रमभेदरूपदोषाभाव एव । दोषत्वं तु तद्व्यतिरेकस्य कथमिति चेत्, यतो न खल्वनुन्मत्तोऽन्यप्रस्तावेऽन्यदभिधत्त इति । समाधिः पुनरर्थदर्शनम् । न चासौ गुणः । काव्यशरीरत्वात् । स्वयं दृष्टस्यान्यच्छायासिद्धस्यार्थस्य यदि न दर्शनं कथं तर्हि काव्यशरीरनिष्पत्ति. । असाधारणशोभाधायकं हि गुणं ब्रुवन्ति, न च काव्यशरीरनिर्वर्तकमिति ।

उक्तयुक्तीर्बुद्धिस्थीकृत्याह—

**तेन नार्थगुणा वाच्याः**

परैरङ्गीकृता अर्थगुणास्ते चोक्तयुक्त्या न पृथग्वक्तुमर्हाः ।

**प्रोक्ताः शब्दगुणास्तु ये ।**
**वर्णाः समासो रचनास्तेषां व्यञ्जकतामिताः ॥ ८ ॥**

ये तु त्रय उपचारेणान्यैः शब्दगुणा. प्रोक्ता वस्तुतो रसगुणा एव वर्णादयस्तेषां व्यञ्जकत्वं गताः ।

के कस्य व्यञ्जका इत्याकाङ्क्षायामाह—

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ९ ॥**

माधुर्ये व्यङ्ग्ये टवर्गवर्जिताः कादिमान्ता रेफणकारौ चेति वर्णाः । तत्र कादयो मूर्ध्नि स्वस्ववर्गान्त्यवर्णगताः । यथा कुञ्ज इत्यादि । रेफणकारौ तु ह्रस्वस्वरान्तरितौ । वृत्तिः समासस्तस्य चाभाव एव मध्यमता वा इति समासः । घटना तथेति । सौकुमार्यवती पदान्तरयोगेन रचना चेति वर्णसौकुमार्यवती

---

यान्तरिति । **अत्रेति** । पिहितनयनायाश्चुम्बनौचित्यादित्यर्थ. । क्रमस्यातिक्रमो युगपदुभयानुरञ्जनम् । अत्रोभयानुरञ्जनं मा विज्ञातं भवत्विति न तात्पर्यम् । किन्त्वनौचित्य मा विज्ञायीत्येवेति पूर्वव्याख्यानादस्वरसः । **क्रमाभेदेति** । प्रक्रमाभेदरूप इत्यर्थ. । **क्रमभेदेति** । प्रक्रमभेदरूपेत्यर्थ. । यथा—'हरि पिता हरिर्माता-'

रचना वर्णसौकुमार्यादेव लब्धेति पदान्तरयोगे सौकुमार्यलाभाय घटना तथेत्युक्तमिति। उदाहरणम्—

'अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तितानि॥'

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि॥ १०॥**

ओजसि व्यङ्ग्ये वर्गप्रथमतृतीयाभ्यां सह तदन्तयोर्द्वितीयचतुर्थयोर्योगः यथा—कच्छपुच्छेत्यादि। तथा रेफेणाध उपर्युभयत्र वा यस्य कस्यापि योगः यथा—वक्रार्कनिर्ह्रादादयः। तथा तुल्ययोः कयोश्चिद्योगः। यथा चित्तवित्तादौ तथा टादिचतुष्टयं शषौ चेति वर्णाः। समासस्तु दीर्घः। गुम्फो रचना। सा चोद्धता विकटेति। उदाहरणम्—'मूर्ध्नामुद्वृत्तकृत्त—' इत्यादि।

**श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्।**
**साधारणः समग्राणां स प्रसादो गुणो मतः॥ ११॥**

येन शब्देन समासेन वा यया रचनया वा श्रुतिमात्रेण शब्दादर्थप्रत्ययः स प्रसादव्यञ्जक इत्यर्थः। उदाहरणम्—

'परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम्॥'

अन्येषां तु वर्णानामुदासीनत्वमिति तदुपादाने तु पुराणच्छायेत्युच्यते। न चैवं माधुर्यादावुद्धतादयो रचनायाः सर्वत्र विरुद्धाः स्युरिति वाच्यम्। यतो यद्यपि गुणपरतन्त्रा रचनादयस्तथापि

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित्।**
**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते॥ १२॥**

---

१. अनङ्गेति। अनङ्गस्य रङ्गो नृत्यस्थानं तत्सदृशमानताङ्ग्यास्तदनुभवैकगोचरमङ्गं भङ्गीभिर्विलासवलनैस्तथाङ्गीकृतं स्वयमादरेण गृहीतं यथाङ्गीकारप्रकारेणैता भङ्ग्यो यूनां स्वान्तानि चित्तानि शान्तान्यपरचिन्तितानि येषां तथाभूतानि सहसा कुर्वन्तीत्यन्वयः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'परिम्लानमिति। इदं बिसिन्याः कमलिन्याः पत्राणां शयनं तल्पः कृशाङ्ग्याः संतापं वियोगतापं वदति कथयतीत्यन्वयः। कीदृशम्। पीनयोः स्तनजघनयोः सङ्गादुभयतस्तदुभयस्थानयोः परिम्लानम्। न्युब्जकायशयनात्। तया तनोः कृशस्य मध्यस्य परिमिलनं सघर्षमप्राप्यान्तर्मध्यभागे हरितं हरिद्वर्णम्। तथा निर्बलतया श्लथा शिथिला या भुजलता तस्याः क्षेपैर्वलनैश्च व्यस्तोऽन्यथाभूतो न्यासो रचना यस्य तथाभूतम्। इच्छापूर्वकत्वतदभावाभ्यां क्षेपवलनयोर्भेदः। श्लथेनाक्षेपणाभिघातेन यानि वलनान्युद्वर्तनानीति केचित्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'प्रशिथिलभुजाक्षेप' क.

अन्यथात्वं गुणपारतन्त्र्याभावः । वक्तृवाच्यप्रबन्धौचित्यविरह एव गुणपारतन्त्र्यस्वीकारात् । तत्रापि वक्तृक्रोधाङ्गव्यक्तावुपयोगात् । तत्र क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥'

अत्र न वाच्यं क्रोधादिदीप्तरसव्यञ्जकं प्रश्नरूपत्वात् । प्रबन्धश्च नाटकात्माभिनेय इति दीर्घसमासत्वं प्रतिकूलं यद्यपि तथापि वक्ता भीमसेन इति तदौचित्यादुद्धता रचनात्र । अतस्तदुद्धतत्वादिव्यक्तावेवोपयुज्यते । क्वचित्तु वक्तृप्रबन्धौचित्यानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा—

'प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कंधरारन्ध्रभाजां
भांकारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥'

अत्र वक्ता वैतालिकः प्रबन्धश्चाभिनेयात्मेति दीर्घसमासानौचित्येऽपि वाच्यस्य कुम्भकर्णस्यौद्धत्यादुद्धता रचनादय. । क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव रचनादयः । तथा हि—आख्यायिकायां हि शृङ्गारेऽपि व्यङ्ग्येऽनुद्धतेऽपि वक्तरि नातिमसृणा वर्णादयः । प्रत्युत विकटबन्धत्वेनैव च्छायावत्त्वात् ।

---

१ 'मन्थेति । रणस्थाने दुन्दुभिध्वनिं श्रुत्वा भीमसेनस्यायं प्रश्न । अयं शब्दायमानो दुन्दुभि केन ताडित इत्यन्वय । कीदृशः । मन्थो मन्थन तेनायस्तमान्दोलितं यदर्णवस्याम्भस्तेन प्लुत व्याप्त कुहर गुहा यस्य तादृशस्य चलतो मन्दरस्य गिरेर्ध्वानवद्धीर. । 'प्लुति' इति पाठे अम्भसः प्लुत्या कुहरेषु चलन्यो मन्दरध्वान इत्यर्थ. । कोणो वादनदण्डस्तदभिघातेषु सत्सु । यद्वा—'भेरीशतसहस्राणि ढक्काशतशतानि च । एकदा यत्र हन्यन्ते कोणाघात स उच्यते ॥' इति परिभाषितकोणाघातेषु सत्सु तदन्तर्गतोऽयं गर्जन्त्या. प्रलयकालीनाया घनघटाया अन्योन्यसघट्टनच्चण्ड' । दारुण इत्यर्थः । कृष्णाया द्रौपद्या क्रोधस्याग्रे वर्तमानो दूतः । तत्प्रयुक्तत्वात् । कुरुकुलस्य निधनं क्षयस्तदर्थमुत्पातरूपो निर्घातसहितो वात. । मेघाना वाताना चान्योन्यसघट्टजश्चण्डध्वनिर्निर्घात । तथा अस्मत्सिंहनादप्रतिरसितस्य प्रतिध्वने सखा । सदृश इत्यर्थ. ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'प्रौढेति । वीरचरिते वैतालिकस्येयमुक्ति' । एतद्भीम कुम्भकर्णस्योत्तमाङ्ग शिरो वियत आकाशान्निपततीत्यन्वयः । कीदृशम् । कधरारन्ध्रभाजा तत्प्रविष्टाना मरुता झाकारैस्तादृशशब्दै. काकुत्स्थवीर्यस्य श्रीरामचन्द्रपराक्रमस्य स्तुतिमिव कुर्वत्कुर्वाणम् । तथा प्रौढस्य महावेगप्रयुक्तस्य च्छेदस्यानुरूपेणोच्छलन तस्य रयेण वेगेन भवन्य. सैंहिकेयस्य राहोरुपघातत्रासस्तेनाकृष्टैरश्वैस्तिर्यग्वलितो वक्रतया सस्थापितो रविरथो येन तथाभूतेनारुणेनेक्ष्यमाणम् । दृश्यमानमित्यर्थ ।' इत्युदाहरणचन्द्रिकासक्षेप..

विप्रलम्भकरुणयोस्तु तस्यामपि दीर्घसमासपरीहारः । तयोरतिसौकुमार्यात् । कथायां तु रौद्रेऽपि नात्यन्तमुद्भटा वर्णादयः । वर्णनीयमहापुरुषसुखप्रतिपत्तिसमर्पणस्योद्देश्यत्वात् । नाटकादावभिनेये तु रौद्रेऽपि न दीर्घसमासादयः । विच्छेदेनाभिनयसौकुमार्यात् । एवं मुक्तकाद्यौचित्यमनुसरणीयम् । तथाहि—एकैकच्छन्दसि वाच्यसमाप्तिर्मुक्तकम् । द्वयोः संदानितकम् । त्रिषु विशेषकम् । चतुर्षु कालापकम् । पञ्चादिचतुर्दशान्तेषु कुलकम् । तत्र मुक्तकेषु कवे रसवत्त्वाभिनिवेशित्वे रसाश्रयमौचित्यम् । यथा—'शून्यं वासगृहं–' इत्यादौ । रसनिवेशाभावे तु कामचारः । संदानितकादिषु काव्यपरिसमाप्तेर्वैकल्यं दीर्घमध्यसमासता च । प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादि ज्ञेयम् ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे गुणविवेचनो नामाष्टम उल्लासः ।

---

नवम उल्लासः ।

एवं गुणे विवेचितेऽलंकारा विवेचनीयाः । तत्र सामान्यलक्षणं गुणविवेचन एवोक्तम् । शब्दालंकारार्थालंकारोभयालंकाररूपविशेषलक्षणत्रयं चार्थलभ्यमिति तेषां विशेषलक्षणेषु वक्तव्येषु काव्यलक्षणे शब्दस्य प्राथम्यात्तदलंकारविशेषलक्षणे वक्तव्ये प्रथमं वक्रोक्तिं लक्षयति—

**यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते ।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥ १ ॥**

वक्रान्याभिप्रायेणोक्तमन्येनान्यार्थकतया योज्यते संगमय्यते सा वक्रोक्तिरित्यर्थः । श्लेषेण काक्वा वेति योजना । हेतुमुखेन विशेषलक्षणद्वयम् । तथा द्विधेति विभागः । श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विधेत्यर्थः । श्लेषश्च द्विधा—सभङ्गपदोऽभङ्गपदश्च । तत्र सभङ्गश्लेषेण यथा—

---

इत्यादौ विष्णुः ( पिता विष्णु ) र्माता इत्युक्तौ । काव्यशरीरत्वादिति । काव्यान्तरङ्गहेतुत्वादित्यर्थः । **काव्यपरिसमाप्तेर्वैकल्यमिति** । ( विकटे ) तत्समाप्तौ हि विलम्बापादकं वैकल्यदीर्घसमासत्वादि हेयम् । तदभावात्तु न दोष इति भावः । इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृतायां प्रदीपप्रभायामष्टम उल्लासः ॥

**तदलंकारेति** । शब्दालंकारेत्यर्थः । **विशेषलक्षण इति** । जात्यभिप्रायमेकवचनम् । **प्रथममिति** । 'वक्रोक्तिः काव्यजीवितम्' इति कैश्चिदभिधानाच्चमत्कृतिविशेषजनकतया तस्याः प्राथम्यमिति भाव. । अन्यथा योज्यते सा वक्रोक्तिरिति सामान्यलक्षणम् । **श्लेषेण काक्वा वेति** । तद्धेतुकथनमुखेन विशेषलक्षणद्वयमिति बोध्यम् । **सा द्विधेति** । लक्ष्यविशेषकथनं विभाग. ।

'नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां हितमातनोति हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरंदरमतच्छेदं विधातुं कुतः ॥'

अत्र नारीणामिति पदं स्त्रीणामित्यभिप्रायेणोक्तम् । श्रोता तद्भङ्क्त्वा न शत्रूणामित्यर्थतया योजयित्वाह—कश्चेतन इत्यादि । अत्र वामानामिति शत्रूणामित्यर्थो वक्तुरभिप्रेतः । स्त्रीणामित्यर्थतया योजयित्वान्य आह—हितकृदित्यादि । अथान्योऽबलानामिति दुर्बलार्थतया हितकृदिति हितकृन्तनार्थतया योजयित्वाह—युक्तं किमित्यादि । अथान्यो बलाभावप्रसिद्धात्मार्थपदमिन्द्रार्थतया योजयित्वाह—सामर्थ्यमित्यादि । अत्र नारीणामबलानामिति पदे सभङ्गे ।

अभङ्गमात्रपदेन श्लेषेण यथा—

'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥'

अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतं काष्ठेनेत्यर्थेनान्यो योजितवान् ।

काकुवक्रोक्तिर्यथा—

'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते सखि नैष्यति सुरभिसमयेऽसौ ॥'

अत्र नैष्यतीति नायिकया निषेधाभिप्रायेणोक्तं सख्या तु नैष्यति अपि त्वेष्यत्येवेत्यर्थकतया काका योज्यते

---

अभङ्गमात्रपदेनेति । पूर्वं वामानामित्यभङ्गपदस्यापि सत्त्वे न तन्मात्रम् । इह तु

---

१. 'नारीणामिति । नारीणां स्त्रीणामनुकूलमाचरसि चेज्जानासि ज्ञातासि भवसीत्यर्थकमरीणामनुकूलं नाचरसि चेज्जानासीति योजयित्वा कश्चिदाह—कश्चेतनो भूत्वा वामानां प्रतिकूलानां हितमातनोतीति । वामानामित्यस्य कामिनीनामित्यर्थं कल्पयित्वा प्रथमः पुनराह—भवानबलानां स्त्रीणां हितकृन्नैव भवतीति । अपरस्तु हितं कृन्तति च्छिनत्तीत्यर्थं परिकल्प्याह—बलाभावेन प्रसिद्ध आत्मा स्वरूपं यस्य तादृशजनस्य हितकर्तनं किं युक्तमपि तु सति । प्रथमस्तु बलस्य दैत्यस्याभावेन नाशेन प्रसिद्धरूपस्येन्द्रस्येत्यर्थं परिकल्प्य पुनराह—भवतः पुरंदरस्य मतमिष्टं तच्छेदं नाशं विधातुं कुतः सामर्थ्यमिति । सामर्थ्ये सति युक्तायुक्तविचारः । तदेव भवतो नास्तीति भावः । अत्र वक्रोक्तिरलंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अहो इति । अत्र दारुणेत्यस्य काष्ठेनेत्यर्थं परिकल्प्यान्य आह—त्रिगुणेति । सत्त्वादिगुणत्रयवतीत्यर्थः । अत्राभङ्गश्लेषः इति पूर्वसाद्भेदः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'गुर्विति हे सखि, गुरुपराधीनतया बत खेदे दूरतरं देशं गन्तुमुद्यतोऽसौ कान्तः अलिकुलैः कोकिलैश्च ललिते मनोहरे वसन्तसमये नागमिष्यतीति नायिकोक्तं वाक्यं सख्या काका न एष्यति अपि तु एष्यत्येवेत्यन्यथा योज्यते । इति काकुवक्रोक्तिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

इयं च न वाकोवाक्यमात्रे किं तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे। न्यायसाम्यात्। यथा मम—

'कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः
पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः।
रक्तः सज्जनसंगमेषु करणश्रेणीमणे श्रीधर
स्थाने वर्णचतुष्टयस्य भुवने भर्ता भवान्गीयते॥'

अत्र वर्णचतुष्टयस्य भर्ता श्रीधर इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिनास्माभिः समर्थितम्। एवमन्यदप्यूह्यम्।

अथावृत्तिनिबन्धनेष्वलंकारेषु लक्षणीयेषु रसानुगुणतयानुप्रासः प्रथमं लक्षणीयः। स द्विधा—वर्णानुप्रासः पदानुप्रासश्च। तत्राद्यो वाचकवर्णमात्रावृत्तौ द्वितीयस्तु वाचकपदावृत्ताविति वस्तुगतिः। तत्राद्यं लक्षयति—

**वर्णसाम्यमनुप्रासः**

अव्यवधानेन वर्णमात्रविन्यासो वर्णानुप्रास इत्यर्थः। शब्दसाम्यत्वमनुप्राससामान्यलक्षणमित्यर्थाल्लभ्यते। वर्णपदं व्यञ्जनपरम्। अतो व्यञ्जनवैसादृश्ये विरिञ्चिपदादौ नातिव्याप्तिः। न चेष्टैव सा। तत्रानुप्रासशब्दार्थस्याभावात्। रसादिभिरनुगतः प्रकृष्ट आसो न्यासो ह्यनुप्रासशब्दार्थः। न च स्वरमात्रसादृश्ये रसानुगमः, न वा सहृदयहृदयावर्जकत्वलक्षणः प्रकर्षः।

तं विभजते—

**छेकवृत्तिगतो द्विधा।**

छेकगतो विदग्धाश्रितः। तैश्च प्रचुरमेतत्प्रयोगात्। वृत्तिगतो वृत्त्याश्रितः। तदुपोद्बलकत्वात्। वृत्तिश्च मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्यः।

तयोर्लक्षणमाह—

**सोऽनेकस्य सकृत्पूर्वः**

तन्मात्रकृतः श्लेष इत्यर्थः। **कृष्ण इति**। कृष्णः श्रीकृष्णः। अर्जुनः पार्थो धवलश्च। पीतः सादरं दृष्टः पीतवर्णश्च। रक्तोऽनुरक्तो रक्तवर्णश्च। करणाः कायस्थाः। श्रीधराख्यः प्रभुः। भवान्वर्णचतुष्टयस्य भर्तेति यद्भुवने गीयते तत्स्थाने। युक्तमित्यर्थः। भर्ता धारकः पोषकश्च। **वर्णमात्रेति**। समानवर्णेत्यर्थः। पदानुप्रासेऽतिव्याप्तिवारणाय मात्रेति। **शब्देति**। विभक्त्यन्तप्रातिपदिकोभयसाधारण्यायैवमुक्तम्। अन्यथा पदेत्युक्तौ विभक्त्यन्तस्यैव ग्रहणं स्यादिति भावः।

१. उक्तिप्रत्युक्तिरूपवाक्यमात्र इत्यर्थः. २. क-ख. पुस्तकयोः 'चञ्चलैः' इति पदं त्रुटितमस्ति.

अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वश्छेकानुप्रासः । उदाहरणम्—

'[१]ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥'

अत्र स्पन्दगण्डयोः ।

द्वितीयं लक्षयति—

**एकस्याप्यसकृत्परः ॥ २ ॥**

अपिशब्दादनेकस्यापि । असकृद्द्विर्बहुकृत्वो वा । वस्तुतस्तु छेकानुप्रासभिन्नं लक्ष्यम् । अन्यथैकस्य सकृदावृत्तेरसंग्रहापत्तेः । एवं चैकस्य वर्णस्य सकृदसकृद्वा अनेकस्य त्वसकृत्साद्दश्यं वृत्त्यनुप्रास इति पर्यवसन्नम् ।

तत्र

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।**

यथा—'अनङ्गरङ्गप्रतिमं–' इत्यादि ।

**ओजःप्रकाशकैस्तैश्च परुषा**

यथा—'मूर्ध्नामुद्वृत्त–' इति ।

**कोमलाऽपरैः ॥ ३ ॥**

अपरैरोजोमाधुर्यव्यञ्जकातिरिक्तैः प्रसादवद्भिरक्षरैः । एनामेव केचिदतिशयैतकान्तिराहित्येन ग्राम्यस्त्रीसाम्याद्ग्राम्येति वदन्ति । उदाहरणम्—'अपसार्य–' इत्यादि ।

**केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ।**

वामनादीनां मते एता एव यथाक्रमं वैदर्भीगौडीपाञ्चाल्यो रीतय उच्यन्ते ।

शब्दानुप्रासमाह—

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ४ ॥**

शब्दसारूप्यव्यापारवान् शब्दः प्रातिपदिकादिस्तद्गतः शाब्दः । भेद इति तात्पर्यमन्वयभेदस्तन्मात्राद्भेदे । न तु स्वरादर्थाद्वा । तथा च भिन्नतात्पर्यतुल्यार्थशब्दसाद्दश्यं शब्दानुप्रासः । स तु लाटानुप्रास उच्यत इत्यर्थः । तुशब्दो वर्णानुप्रासस्य लाटीयत्वव्यवच्छेदक. । यत्तु—"पुनरुक्तव्यवच्छेदाय 'भेदे तात्पर्यमात्रत.' इत्युक्तम्" इति व्याख्यानं तदसत् । मात्रशब्दस्याप्रयोजकतापत्तेः ।

---

**न त्विति** । तथा सति यमकेऽतिव्याप्त्यापत्तेरिति भाव· । **अप्रयोजकतेति** । वैयर्थ्येत्यर्थ. । पौनरुक्त्यनिरासस्य तेन विनापि सिद्धे । तात्पर्यमात्रत इत्यस्यासाम-

---

१. 'तत इति । अरुणस्य परिस्पन्देन सचारेण । उदयेनेति यावत् । मन्दीकृत निष्प्रभीकृतम् । कामेन परिक्षामाया· कृशाया· कामिन्या गण्डवत्पाण्डुता दध्रे धारयामासेत्यर्थ· । अत्र स्पन्दमन्दीति, गण्डपाण्डु इति च नकारदकारात्मकस्य णकारडकारात्मकस्य चानेकव्यञ्जनस्य सकृदावृत्तेश्छेकानुप्रास ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

एष एव कैश्चित्पदानुप्रास उच्यते। सोऽयं पदस्य नाम्नो वेति द्विविधः। तत्र सविभक्तिकस्य यत्रावृत्तिः स आद्यः। अन्यादृशस्तु द्वितीयः। तयोराद्योऽनेकस्य पदस्यैकस्यैव वा पदस्येति द्विविधः। अन्त्यस्तु त्रिविधः। आवृत्तेरभिन्नसमासस्थतया, भिन्नसमासस्थतया, एकस्याः समासस्थत्वे सत्यपरस्या असमासस्थतया च समासं विनाख्यासंभवादिति पञ्चप्रभेदा इति कारिकया प्रतिपादितम्।

तत्राद्यमाह—

**पदानां सः**

पदानामिति बहुवचनमनेकोपलक्षणम्। अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेः। उदाहरणम्—

'[1]यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥'

अत्र यद्यपि पूर्वार्धे दवदहनशब्दस्य परार्धे तुहिनदीधितिशब्दस्यार्थान्तरसंक्रमितवाच्यत्वान्नार्थाभेदस्तथापि शब्दार्थमात्रेणोदाहरणम्। यद्वा अवशिष्टपदावृत्तेरेवोदाहरण द्रष्टव्यम्।

द्वितीयभेदमाह—

**पदस्यापि**

अपिशब्देन स इति समुच्चीयते। यथा—

'[2]वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्करहितो भवेत्॥'

नाम्नः प्रकारत्रयमाह—

**वृत्तावन्यत्र तत्र वा।**
**नाम्नः सवृत्त्यवृत्त्योश्च**

वृत्तिनिरूपितप्रकारत्रये नाम्न एव लाटानुप्रास इत्यर्थः। उदाहरणम्—

'[3]सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य॥'

---

उस्मादाह—यद्वेति। अविशिष्टाना यस्य सविध इत्यादिपदानामावृत्तेरेवेदमुदाहरणम्। न तु दवदहनतुहिनदीधितिपदयोरित्यर्थः। 'अविशिष्ट' इति पाठे

---

१. 'यस्येति। यस्य पुनः सविधे समीपे दयिता नास्ति तस्य तुहिनदीधितिश्चन्द्रो दवदहन. विरहोद्दीपकत्वाद्दावाग्नितुल्यः। उत्तरार्धे तु दावाग्निश्चन्द्रतुल्य इत्युद्देश्यविधेयभाव इत्यन्वयमात्रभेदाल्लाटानुप्रासः।' इत्युदाहरणचन्द्रिकासक्षेप. २. 'वदनमिति। सत्यमित्यर्धाङ्गीकारे। वरवर्णिन्या उत्तमवनितायास्तस्या वदन सुधाकरश्चन्द्र इति सत्यम्। परतु स कलङ्केन विकलो रहितः पुन. क्व नु भवेत्सभवेदतो नैवमित्यध्यारोपापवादः। पूर्वं सुधाकरपदं विधेयपरम्। उत्तर त्वनुवाद्यपरमिति तात्पर्यमेद।' इत्युदाहरणचन्द्रिकासक्षेप'. ३. 'सितेति। सप्तमे व्याख्यातम्।' इत्युदाहरणचन्द्रिकासक्षेप'.

पौरुषकमला पौरुषलक्ष्मीर्लक्ष्मीश्च तवैवेत्यर्थः । यत्तु—पौरुषं कमलमाश्रयो यस्याः सा पौरुषकमला' इति व्याख्यानं तदयुक्तम् । अर्थभेदेनानुदाहरणापत्तेः । अत्र करकरेत्येकसमासः, विभा विभेति भिन्नौ समासौ, कमला कमलेति पूर्वस्य समास उत्तरस्यासमासः, इति त्रयाणामुदाहरणम् ।

**तदेवं पञ्चधा मतः ॥ ५ ॥**

व्याख्यातम् ।

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।**

**यमकं**

अर्थभिन्नानां भिन्नार्थानामित्यर्थः । एतच्च लाटानुप्रासेऽतिव्याप्तिवारणाय । तन्मात्रे च कृते समरसमरसोऽयमित्यादौ द्वितीयाद्यावृत्तेरर्थाभावादव्याप्तिः स्यादत उक्तम् 'अर्थे सति' इति । यद्यर्थस्तदा भिन्न इत्यर्थः । वर्णानामिति बहुवचनमविवक्षितम् । द्वयोरपि यमकव्यवहारात् । सेति पूर्वेणैव क्रमेण स्थितेत्यर्थः । अतः सरो रस इत्यादौ नातिप्रसङ्गः । एवं च समानार्थत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्ति यमकमिति लक्षणं द्रष्टव्यम् ।

तदेतद्विभजते—

**पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ६ ॥**

\ प्रथमपादो यदि द्वितीये पादे यम्यते तदामुखं नाम यमकम् । तृतीये चेत्तदा संदंशः । चतुर्थे चेत्तदा आवृत्तिः । एव द्वितीयपादश्चेत्तृतीये तदा गर्भः । चतुर्थे चेत्संदष्टकम् । तृतीयश्चेच्चतुर्थे तदा पुच्छम् । प्रथमस्त्रिषु चेत्तदा पङ्क्तिः । महायमकमिति केचित् । पादत्रययमकं तु न चमत्कारकारि अतो न प्रयुक्तम् । इत्येकैकपादावृत्तौ सप्त भेदाः । प्रथमो द्वितीये तृतीयश्चतुर्थे चेत्तदा युग्मकम् । प्रथमश्चतुर्थे द्वितीयस्तृतीये चेत्तदा परिवृत्तिः । इत्यर्धाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव भेदाः । अर्धावृत्तिस्तु समुद्गः । श्लोकावृत्तिर्महायमकम् । तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः । पादभागवृत्ति बहुभेदम् । तथा हि—द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववद्द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखाद्यो दश भेदा । श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय एकादशो भेदो भागावृत्तौ नास्ति । एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव यमने पूर्ववद्दश भेदाः । एवं द्विखण्डीकृतेषु पादेषु विंशतिः, त्रिखण्डीकृतेषु त्रिंशत्, चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्तिनो भवन्ति । अथ स्थानपरिवर्तनभेदाः—प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यन्त इत्याद्यन्वर्थतानुसारेणान्ताद्यादि-

---

तुल्यार्थेत्यर्थः । वस्तुतस्त्वेकानुपूर्वीकयोर्व्यञ्जनयाथैकत्वाध्यवसायादर्थाभेद इति बोध्यम् । अत एवाग्रे सुधाकरपदावृत्त्युदाहरणमुपपन्नमिति । **प्रथमपाद इति ।**

यमकादयः प्रभेदा भवन्ति । तथाहि—द्विखण्डे यथा प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यार्धे चेद्यम्यते तदान्तादियमकम् । प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम् । एवं प्रथमपादस्याद्यान्तभागौ द्वितीयस्यान्तादिभागयोर्यदि यम्येते तदाद्यन्तान्तादियमकयोः समुच्चयः । अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम् । पूर्वस्यादिभागश्चेत्तदुत्तरपादस्य मध्यभागे तदादिमध्ययमकम् । पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः । एव प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदान्त्यमध्यम् । पूर्वस्य मध्यभागश्चेद्द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम् । पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्त्यभागयोस्तदान्त्यमध्यमध्यान्तयोः समुच्चयः । यद्यपि पूर्वस्यादिभाग उत्तरस्यान्त्यभागे चेत्तदाद्यन्त्यकमन्त्यभागस्त्वाद्यभागे चेत्तदान्तादिकमित्यादि प्रकारद्वयं संभवति तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ्ग गण्यते । सर्वेषां चैषामपरः समुच्चयः । इति भिन्नपादे यमके प्रभेदाः । एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः । सर्वे चैते नियतस्थानविवक्षया स्थानयमकभेदाः । अनियतेषु स्थानेष्वावृत्तेरिति अस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूतत्मभेदं यमकम् । तदेतत्काव्ये गडुभूतमिति नास्य लक्षणं कृतम् । दिङ्मात्रं तूदाह्रियते । तत्रैकपादाभ्यासे संदंशो यथा—

'सन्नारीभरणोमायमाराध्य विधुशेखरम् ।[२]
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥'

द्विपदाभ्यासे यमकं यथा—

'विना[३] यमेनोनयतासुखादिना विनायमेनो नयता सुखादिना ।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥'

---

द्वितीयपादे तत्स्थाने । यम्यते बध्यते । रच्यत इति यावत् । एवमग्रेऽपि । स्थानापरिवर्तिनस्तुल्यस्थानाः । **अस्थानेति** । अनियतस्थानेत्यर्थः । यथा गद्यादौ पादव्यवस्थाहीने । गडुर्ग्रन्थिः । इक्षुदण्ड इवेत्यर्थः । **लक्षणमिति** । तत्तद्विशेष-

---

१. 'ग्रह' कख. २. 'सन्नारीति । हे राजन्, सतीर्नारीर्बिभर्तीति सन्नारीभरण। तामुमा यातीति यस्तमुमासहित विधुशेखर हरमाराध्य ततस्तदाराधनादेव हेतोस्त्वममायो दम्भशून्य सन्पृथिवीं जयेत्यन्वयः । कीदृशस्त्वम् । सन्ना अवसाद गता अरीणामिभा यत्र तादृशो रणो यस्य स इत्यर्थः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'विनेति । अय महाजनो विना पक्षिरूपेण यमेन मानसाच्चित्तादर शीघ्र यतमानाना सादमवसाद राति ददाति यथा तथा अदीयताखण्ड्यतेत्यन्वयः । कीदृशेन । एनोऽपराध विना नयता स्वस्थानं प्रापयता असुखादिना प्राणभक्षकेण । सुखादिना ऊनयता न्यून कुर्वता । कीदृशो महाजनः । महान्तमज नुदति यागार्थं हिनस्तीति तथा । महमुत्सवमजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदी तदपसारक इति वा । अन्ये तु—'विना गरुडाख्यपक्षितुल्येन । ऊनयता हानिं प्रापयता । सुखादिना सुखभक्षकेण ।' इति व्याचक्रु ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

श्लोकाभ्यासे महायमकं यथा—

'सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः ॥
सत्वारं भरतोऽवश्यमबलं विततारवम् ।
सर्वदा रणमानैषीद्दवानलसमस्थितः ॥'

द्विखण्डेषु भिन्नपादे पादभागाभ्यासेषु द्वितीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमने संदष्टं यथा—

'अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥'

अस्मिन्नेवाद्यन्तकं पादे यथा—

'यदानतोऽयदानतो नयात्ययं नयात्ययम् ।
शिवे हितां शिवेहितां स्मरामि तां स्मरामिताम् ॥'

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्त्याद्यभागेषु यमने पूर्वार्धे आद्यन्तकमुत्तरार्धे आद्यन्तान्ताद्ययोः समुच्चयो यथा—

'सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति ।
सरस्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥'

---

१ 'सत्त्वारम्भेति । स तु प्रकृतो राजा आरमरिसमूह सर्वदा सर्वकाल अवश्य निश्चित भरतोऽतिशयेन रण युद्धमानैषीत्प्रापितवान् । आरं कीदृशम् । अबलं सैन्यशून्यम् । विततो विस्तृत आरव शब्दो यस्य तत् । दीपिकाकृतस्तु—'द्वयमप्यनैषीदिति क्रियाविशेषणम् । तेन सैन्यमनपेक्ष्यैव सिंहनादं विस्तार्य समरसंचार चकारेति पर्यवस्यति ।' इत्याहु' । कीदृश । अलस मन्द अवान् अगच्छन् । शीघ्रं गच्छन्नित्यर्थः । अस्थि तस्यति उपक्षिपतीत्यस्थितः । सान्तत्वेऽपि 'अधातो·' इति निषेधाद्दीर्घत्वाभावः । यद्वा ए विष्णौ स्थितः । तत्पर इत्यर्थः । पुनः कीदृश इत्यपेक्षायामाद्यः श्लोकः । सत्त्वगुणेन य आरम्भस्तत्र रत· । पुनः कीदृशमारम् । अवश्यमस्वाधीनम् । अवलम्बितानि वस्त्रतया स्वीकृतानि तारवाणि तरुसंबन्धिवल्कलानि येन तत् । 'तारव तरुसमूहः' इति केचित् । 'तरुधर्म' इत्यन्ये । सर्वेषा दारणो यो मानस्तदैषी तदिच्छाशीलो राजा । तथा दवानलेन समस्तुल्यः स्थितः तेन सम स्थित स्थितिरस्येति वा शत्रुसतापकतया दीप्ततमत्वेन च दावाग्निसाम्यम् ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'अनन्तेति । अनन्तेन महिम्ना व्याप्तं विश्व यया तादृशी यां दुर्गा वेधा ब्रह्मापि न वेद तत्त्वतो न जानाति । या च प्रणते मानवे मनुष्ये दयां भजत इत्यन्वयः । इत्युदाहरणचन्द्रिकासंक्षेप'. ३. 'आद्यन्तमेकपादे' ग. ४. 'यदानत इति । यस्या दुर्गाया· मानतोऽय जनो नयस्यात्यय नीतिनाशं न याति न प्राप्नोति । कुत· । अयदानतः अयस्य शुभावहविधेस्तयैव दानात् । यद्वा अयस्य दानतः खण्डनाद्यो नयात्यय इति योज्यम् । ता शिवे कल्याणनिमित्तं स्मरामि । कीदृशीम् । शिवेन शंभुना ईहितामर्थिताम् । हितामनुकूलाम् । शिवे कल्याणे हितामिति वा । तया स्मरेण कदर्पेणामिताम् । अपरिच्छिन्नामित्यर्थ· ।' इत्युदाहरणचन्द्रिकासक्षेप'. ५. सरस्वतीति । हे सरस्वति वाग्देवते, स्वस्ति

द्वयोराद्यन्तान्तादिकयोः समुच्चयो यथा—

'ससार साकं दर्पेण कंदर्पेण ससारसा ।
शरन्नवाना बिभ्राणा नाविभ्राणा शरं नवा ॥'

चतुःखण्डे पादे द्वितीयभागस्य तृतीयभागे यमनं यथा—

'मधुपराजिपराजितमानिनीजनमनःसुमनः सुरभिश्रियम् ।
अभृत वारितवारिजविप्लवं स्फुटितताम्रततताम्रवणं जगत् ॥'

एवं वैचित्र्यसहस्रैः स्थितमन्यदप्यूह्यम् ।

**वाच्यभेदभिन्ना यद्युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ७ ॥**

'अर्थभेदेन शब्दभेदः' इति नयेन भिन्नाः शब्दाः 'काव्यमार्गे स्वरो न गण्यते' इति नयेन युगपदुच्चारणविषयतया यच्छ्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स श्लेष इत्यर्थः । अक्षरादिभिरिति वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनभेदादष्टधा श्लेष इत्यर्थः ।

---

लक्षणमित्यर्थः । **अर्थभेदेनेति** । सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति प्राचीनमतेनेत्यर्थः । उदात्तादिस्वरभेदे युगपदुच्चारणायोगादाह—**काव्येति** । तथा च भेदानवभासे एकोच्चारणं दोष इति भावः । ननु कथमेकोच्चारणादनेकशब्दोत्पत्तिः । तदङ्गीकारे चैकस्मात्कपालादेरप्यनेकघटोत्पत्तिः स्यादिति चेदत्राहुः । समवायिभेदापेक्षणान्नैकस्मात्कपालादेरनेकघटोत्पत्ति । अत्र तदभावादनेकशब्दोत्पत्तौ न बाधकमिति । अन्ये तु अनुसंधानमात्रं शब्दस्त्वेक एव । मौनिश्लोकादौ तद्भेदासंभवादित्याहुः । श्लेषो द्विधा—सभङ्गपदोऽभङ्गपदश्च । तत्राद्यं विभजते—**वर्ण-**

---

सुष्ठु अतिशयेन प्रसादं सर गच्छ । प्रसन्ना भवेत्यर्थः । मे मम चित्तरूपे सरस्वति समुद्रे स्थितिं कुरु । सरस्वतीशब्दस्य नदीसामान्येऽपि शक्ततया श्लेषेण तस्याः समुद्रे स्थित्यभिधानम् । कथंभूते । क्षेत्रं शरीरमेव कुरुक्षेत्रं तत्र सरस्वति । सरस्वत्याख्यनदीरूप इत्यर्थः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'ससारेति । शरदृतुः कंदर्पेण स्मरेण सार्कं दर्पेण गर्वेण ससार आजगाम । कीदृशी । सारसं पद्मं सारसः पक्षिविशेषो वा तत्सहिता । नवानि अनांसि शकटानि यस्या सा नवानाः । शरं काण्डं बिभ्राणा पोषयन्ती । परिपाकं प्रापयन्तीत्यर्थः । शरं काशमित्यन्ये । न विद्यते वीनां पक्षिणां भ्राणः शब्दो यस्या सा अविभ्राणा एवंभूता न । पक्षिशब्दसहितेत्यर्थः । नवा नूतना ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

२. 'मधुपेति । जगत्कर्तृ श्रियं शोभामभृताधारयत् । कीदृशम् । मधुपानां राज्या पङ्क्त्या पराजितानि धैर्याच्च्यावितानि मानिनीजनमनांसि याभिस्तादृशीभिः सुमनोभिः पुष्पैः सुरभि । वारितो निवारितो वारिजानां कमलानां विप्लवो नाशो यत्र तत् । स्फुटितानि विकसितानि ताम्राण्यारक्तानि ततानि विस्तीर्णान्याम्राणां वनानि यत्र तत् । अन्ये तु—'एवंभूताः सुमनसो यत्र तादृशस्य सुरभेर्वसन्तस्य श्रियम्' इत्येकपदतया

अत्र वर्णश्लेषो यथा—

'अलंकारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥'

अत्र विधावित्यत्र विधिविधुशब्दयोरिकारोकारयोर्भेदाद्वर्णश्लेषः ।

पदश्लेषो यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

अत्र पृथुकानां बालानामार्तस्वरस्य पात्रम् । पक्षे पृथु बहुलं कार्तस्वरस्य पात्रं यत्रेत्यादिक्रमेण पदभेदात्पदश्लेषोऽयम् ।

लिङ्गवचनयोः श्लेषो यथा—

'[3]भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥'

---

व्याचक्षते । 'तादृशसुमनसा सुरभि श्रिय सौरभसपदमिति तु न युक्तम् । सुरभिपदस्य सौरभविशिष्टे द्रव्य एव काव्ये प्रयोगदर्शनात् न तु सौरभगुणे' इति दीपिकायाम्' इत्युदाहरणचन्द्रिकासक्षेप..

१ अलंकार इति । विधौ चन्द्र एव विधो दैवे वक्रे कुटिल एव वक्रे प्रतिकूले मूर्ध्नि मस्तके स्थितवति सति सर्वामरगुरो सर्वदेवश्रेष्ठस्य स्थाणोर्महादेवस्यापीयमवस्था भवति । अमी मानुषा वय पुन॰ के । कस्या गणनायामित्यर्थ॰ । अवस्थामाह—अलकार इति । शङ्काकर भयजनकं नरकपालमेवालकार॰ । विशीर्णाङ्गो भृङ्गी परिजनः । एकः सोऽपि बहु वयो यस्य तथाभूतो जीर्णो वृषो वसु धनमिति । अत्र विधावित्युवर्णवर्णयोः श्लेषः ।' इत्युदाहरणचन्द्रिकासक्षेप॰. २. 'पृथ्वितिपदश्लेषोदाहरण सप्तमे व्याख्यातम् ।' इत्युदाहरण-चन्द्रिकासक्षेपः. ३. 'भक्तीति । हरेर्नेत्रे तनुर्वा युष्माकं भवस्य ससारस्यार्ते॰ पीडायाः शमन कुरुतामित्यन्वय । किंभूते नेत्रे । भक्तिप्रह्वा भक्तिनम्रास्तत्कर्मके विलोकने प्रणयो ययोस्ते । नीलोत्पलस्पर्धायुते । समाधिनिरतैर्हितप्राप्तये ध्यानेनालोकनं ( लम्बन ) ययोस्तत्ता नीते प्रापिते । लावण्यस्य महानिधिरूपे । लक्ष्मीदृशोः रसिकतां तन्वती कुर्वाणे, तनुपक्षे तु—भक्तिप्रह्वैर्यद्विलोकनं तत्प्रणयिनी । नीलोत्पलस्पर्धाशीला । ताच्छील्ययोर्णिनिः । तनोर्नीलत्वात्स्पर्धा । ईहितस्येष्टस्य प्राप्तये ध्यानालोकनतां (लम्बनता ) नीता । महानिधिरिति च्छेद॰ 'ढ्रलोपे—' इति दीर्घः । कुरुतामित्यात्मनेपदे लोडेकवचनम् । नेत्रपक्षे परस्मैपदे तद्द्विवचनमिति । सोऽय नपुसकस्त्रीलिङ्गयोर्द्विवचनैकवच-नयोश्च श्लेष. ॥' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र प्रणयिनी इति स्त्रियां प्रथमैकवचनं नपुंसके तद्द्विवचनं चेति लिङ्गवचनयोः श्लेषः । एवमग्रेऽप्यूह्यम् ।

भाषाश्लेषो यथा—

'[1]महदे सुरसंधं मे तमव समासङ्गमागमाहरणे ।
हर बहुसरणं तं चित्तमोहमवसर उमे सहसा ॥'

अत्र प्राकृते ॥

'मम देहि रसं धर्मे तमोवशामाशां गमागमात् हर नः ।
हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥'

इत्यर्थकानि पदानि । संस्कृतपक्षे तु—महदे उत्सवदे सुरेण संधा संधानं यस्मात्तं आगमाहरणे समासङ्गमव । बहुसरणं संसाररूपं यस्मात्तं चित्तमोहमवसरे उमे हर सहसा इत्यर्थकानि पदानि ।

प्रकृतिश्लेषो यथा—

'[2]अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥'

अत्र वक्ष्यतीति वहिवच्योर्लृटि कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपमिति प्रकृतिश्लेषौ ।

विभक्तेर्वैचित्र्यविशेषहेतुतया पृथगुपादानात्प्रत्ययपदं तदतिरिक्तपरम् । तच्छ्लेषो यथा—

'[3]रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसंपत्सहस्रम् ।

---

१. 'महदे इति । संस्कृतपक्षे—हे उमे गौरि, मम आगमाहरणे विद्योपार्जने तं समासङ्गमव रक्ष । अवसरे त चित्तमोहं सहसा हर । आगमहरणे कीदृशे । महदे उत्सवदायके । सबोधनविशेषण वैतत् । कीदृशं समासङ्गम् । सुरैर्देवैः संधा संधानं मिलनं यस्मात्तादृशम् । कीदृश चित्तमोहम् । बहु अनेकधा सरणं प्रसरणं यस्य तम् । बहु सरणं संसारो यस्मादिति वार्थः । प्राकृतपक्षे तु—'मह्यं देहि रस धर्मे तमोवशामाशां गमागमाद्धर नः । हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥' इति संस्कृतम् । रस प्रीतिम् । तमोवशा तमोगुणायत्ताम् । गमागमात्संसारात् । शरण त्वं भवसीति शेषः । अय संस्कृतप्राकृतरूपभाषाश्लेषः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'अयमिति । सामर्थ्यं कृन्तति करोतीति च सामर्थ्यकृत् । वक्ष्यतीति हृदि धारयिष्यति ज्ञेपु बुधेपु कथयिष्यतीति च वहिवच्योर्लृटि प्रकृतिश्लेषः । तथा कृदिति कृन्ततिकरोत्योः क्विपि सः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'रजनीति । रजनिरमणश्चन्द्रो मौलौ यस्य तस्य हरस्य पादपद्मावलोकनमेव क्षण उत्सवस्तत्समये परासं प्राप्तमपूर्वं सपत्सहस्र यत्र तद्यथा स्यात्तथा अहं जातुचित्कदाचित्प्रमथनिवहमध्ये प्रमथाख्यगणमध्ये उचिता रुचिः प्रीतिर्दीप्तिर्वा यस्य तादृशो नन्दिता नन्दकः स्यामित्याशसा । तथा सा नन्दिता नन्दिनो गणविशेषस्य भावो

प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥'

अत्र नन्दितेति तृचि तलि च रूपम्। तेनाहं नन्दिता नन्दकः स्याम्। तथा सा नन्दिता नन्दिनो भावो मे स्यादित्यर्थः।

विभक्तिश्लेषो यथा—

'सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसांमुख्यमायासि तनुवर्तनम् ॥'

अत्र हरभवेत्यनयोः संबोधनत्वक्रियापदत्वाभ्यां सुप्तिङ्विभक्त्यन्तत्वम्। एवमायासीत्यादिक्रियापदत्वे च विभक्तिश्लेषः। एवमन्यत्राप्यूह्यम्।

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत्।**

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्—

'योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥'

अत्रैकार्थमात्रनियतप्रकरणाद्यभावाद्द्वावप्यर्थौ वाच्यावेवेति 'भद्रात्मनो दुरधिरोहतनोः—' इत्यादिवन्न ध्वनित्वम्। ननु श्लेषस्तावद्द्विधा सभङ्गपदोऽभङ्ग-

---

**स्यादि।** प्रत्ययपदं गोबलीवर्दन्यायेन विभक्तिभिन्नपरम्। द्वितीयमाह—**भेदाभावादिति।** अलंकारसर्वस्वकाराद्युक्तां श्लेषस्य शब्दार्थालंकारत्वव्यवस्थां (दूष)-

---

मे मम स्यादित्यर्थः। अत्र स्या स्यादित्युत्तमप्रथमपुरुषयोर्नन्दितेति तृच्तलोः प्रत्यययोः श्लेषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'सर्वस्वमिति। हे हर शंभो, त्वं सर्वस्य सर्वस्वम्। यतो भवस्य संसारस्य च्छेदे तत्परः। नीत्युपकारयोः सांमुख्यमानुकूल्यमायास्यागच्छसि। कीदृशं सांमुख्यम्। तनोः शरीरस्य वर्तनं स्थितिर्येन तादृशम्। यद्वा नयोपकारयोः सांमुख्यं यत्र तादृशं तनुवर्तनं शरीरवृत्तिमायासि। सांमुख्यं तनुवर्तनं चायासीति वार्थः। पक्षे चौरं प्रतीयमुक्तिः। त्वं सर्वस्य सर्वस्वं हर अपहर छेदनतत्परो भव। उपकारसांमुख्यं नयापसारय। आयासि कष्टशालि वर्तनं जीवनं तनु विस्तारयेति। अन्ये तु—'सर्वस्वादिकं हृत्वा तथा तपश्चर्यादिकष्टं कारय येन मुक्तिः स्यादिति 'यस्यानुग्रह—' इति रीत्या परमेश्वरं प्रत्येवेयमुक्तिः" इत्याहुः। अत्र हरेत्यादि 'सुप्तिङ्विभक्त्योः श्लेषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.
२. 'य इति। स विबुधेन्द्रः पण्डितश्रेष्ठो राजा राजते। योऽसकृदनेकवारं परगोत्राणां शत्रुवंशानां पक्षस्य सहायवर्गस्य च्छेदे क्षणेनैव क्षमः समर्थः। छेदरूपे क्षणे उत्सवे इति वा। शतकोटीर्ददातीति तथा तत्तां बिभ्रद्धारयन्नित्यर्थः। इन्द्रपक्षे तु—विबुधेन्द्रो देवराजः। परगोत्राणां श्रेष्ठगिरीणाम्। पक्षच्छेदः पतत्रच्छेदः। शतकोटिना वज्रेण द्यति खण्डयतीति तथा तत्तामित्यर्थः। अयं चाभङ्गश्लेषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

पदश्च। तत्राद्यः शब्दश्लेषः स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धे जतुकाष्ठन्यायाच्छब्दयोरेव शिष्टत्वात्। द्वितीयस्त्वर्थश्लेषः स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावादेकवृन्तगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वात्। यद्यपि 'अर्थभेदेन शब्दभेदः' इति नयेन द्वितीयेऽपि शब्दस्य भेदस्तथाप्युपपत्त्या शब्दभेदप्रतीतावप्येकताध्यवसायान्नास्ति शब्दभेदः। स एव निरवकाशतया सर्वालंकारबाधक इत्यलंकारान्तराणां प्रतिभामात्रमुत्पादयति न तु तत्पर्याप्तिम्। यथा—

'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी।
प्रभातसंध्येवास्वापफललुब्धे हितप्रदा॥'

अत्र पूर्वार्धेऽभङ्गपदः द्वितीयार्धे सभङ्गपदः श्लेषः। द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः। साधर्म्याभावेन तस्याः प्ररोहाभावात्। यदुक्तम्—

'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते॥
अलकारान्तरगतां प्रतिभां जनयत्पदैः।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्॥' इति।

---

इतरालंकारबाधकतां च दूषयितुं तन्मतमुपन्यस्यति—**नन्वित्यादिना**। **निरवकाशतयेति**। अयमर्थः—श्लेषस्त्रिप्रकारः—प्रकृतानेकार्थविषयः, अप्रकृतानेकार्थविषयः, प्रकृताप्रकृतानेकार्थविषयश्चेति। तत्राद्ये प्रकारद्वये तुल्ययोगितालंकारः। 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता' इति तल्लक्षणात्। नियतानामित्यस्य प्राकरणिकानामेव अप्राकरणिकानामेव वेत्यर्थः। तृतीये दीपकम्। 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्' इति तल्लक्षणात्। एवं चालंकारद्वयेन श्लेषविषयस्य सर्वस्य व्यापनादलंकारान्तरेण च तत्र तत्र व्यापनान्निरवकाशः श्लेषः स्वविषये सर्वालंकारबाधक इति तेषां प्रतिभामात्रम्। तत्त्वतस्तु श्लेष एव तत्रालंकार इति। तत्रोपमाप्रतिभानमात्रहेतुं श्लेषमुदाहरति—**यथेति**। कुतः प्रतिभानमात्रं तत्राह—**साधर्म्येति**। उक्तार्थे ग्रन्थसंमतिमाह—**यदुक्तमिति**। आद्यपादेनाभङ्गशब्दोक्तिः, द्वितीयेन सभङ्गोक्तिः। भिन्नैः स्वरितादिगुणैस्तच्छायामेकप्रयत्नोच्चार्यसादृश्यं बिभ्रतामित्यन्वयः। एतादृशानां शब्दाना बन्धः श्लिष्ट उच्यते। तद्बन्धे श्लेषालंकार इत्यर्थः। एवं सभङ्गाभङ्गरूपद्विविधैः पदैरलंकारान्तरविषयां प्रतिभां जनयदर्थात्काव्यमर्थशब्दोक्तिभ्यां विशिष्टमर्थश्लेषशब्दश्लेष-

---

१. 'स्वयं चेति। न केवलं स्वामिसापेक्षतयैव फलप्रदा गौरी किंतु स्वयं च स्वयमपि अस्वापे दुष्प्रापे फले लुब्धानामिष्टप्रदेत्यर्थः। केव। प्रभातसंध्येव। कीदृशी। पल्लवाताम्रौ पल्लवारुणौ भास्वन्तौ कान्तियुतौ करौ हस्तौ ताभ्यां विराजिता शोभिता। संध्या तु तादृशैर्भास्वतः सूर्यस्य करैः किरणैर्विराजिता। तथा अस्वापस्तदानीं निद्राभावस्तत्फलं लक्ष्मीलाभस्तत्र लुब्धे जने हितप्रदेत्यर्थः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

द्विविधोऽप्यलंकारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालंकारमध्ये पठितस्तत्कथं शब्दालंकारमध्ये पठ्यते इति । उच्यते—दोषगुणालंकाराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । यत्र हि पर्यायान्तरपरिवृत्तिसहत्वं नास्ति तस्य शब्दगतत्वम्, यत्र तु तत्सहत्वं तत्रार्थगतत्वम् । यथा कष्टत्वादयो दोषाः, गाढत्वादयो गुणाः, अनुप्रासादयोऽलंकाराः शब्दगताः । पर्यायान्तरेण तदर्थोपस्थापने तेषामसंभवात् । उदाहृते च 'स्वयं च पल्लव—' इत्यादौ द्वयोरप्यर्धयोः शब्दपरिवृत्त्यसहतया द्वयोरपि शब्दालंकारत्वमेवोचितम् । न त्वाद्यस्याप्यर्थालंकारत्वम् । नन्वेवमर्थश्लेषः किं नास्त्येव । क एवमाह । कस्तर्हि तस्य विषयः । यत्र पदपरिवर्तनेऽपि न श्लेषभङ्गः । यथा—

'[1]स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥'

अत्र स्तोकेनेत्यादिपदस्थानेऽल्पादिपदप्रक्षेपेऽपि न श्लेषभङ्गः । यच्चोक्तम्—'स्वय चेत्यादावुदाहृते उपमाप्रतिभोत्पत्तिहेतुः श्लेषः' इति तदप्ययुक्तम् । प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः । तद्बाधकत्वात् । तथाहि साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावन्नोपमा वाध्या । यतः '[2]कमलमिव मुखं मनोज्ञमेतत्कचतितराम्' इत्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वा उभयोर्वा साम्ये यथोपमा निर्वहति तथा '[3]सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव । साधर्म्यमात्रस्योपमाप्रयोजकत्वात् । तस्य चार्थरूपस्येव शब्दरूपस्याप्यविशेषेण संभवात् । तथा ह्युक्तं रुद्रटेन—

---

शब्दाभिधेयं प्रतीयतामिति योजना । कथं तर्ह्यर्थालंकारमध्ये सभङ्गस्य कैश्चिल्लेखस्तत्राह—**अर्थाश्रितत्वेनेति** । अर्थद्वयप्रतीत्यर्थत्वेनेत्यर्थः । सिद्धान्तमाह—**उच्यत इत्यादिना** । तत्रादौ शब्दालंकारमध्ये स्वयमुक्तस्यार्थालंकारत्वं विरुद्धमित्यतस्तद्दूषयति—**दोषेति** । गाढत्वमोजोव्यञ्जकगाढबन्धत्वम् । व्यर्थत्वमपुष्टता । प्रौढत्वमर्थस्यौज प्रौढि पञ्चधोक्ता । **प्ररोहाभावादिति** । प्रसक्तस्य हि बाधः । न च साधर्म्याभावे उपमाप्रसक्तिस्तद्रूपत्वात् । **तावदिति** । वक्ष्यमाणदूषणकथनात्पूर्वम् । अय हेतुर्वृत्तावनुक्त स्वयमुक्त । वृत्त्युक्तं हेतुमाह—यतो युक्तैवोपमा तत श्लेषबाधकत्वात्तत्प्रतिभामात्रहेतुर्न तु श्लेष इति योजनीयमिहापि । इहापि

---

१ 'स्तोकेनेति । उन्नतिरुच्चत्वमभिमानश्च । अधोगतिरधोगमनं पादपतनादि च । तुला सुवर्णादिगुरुत्वपरिच्छेदकपदार्थः । तस्याः कोटिः शिरः । शलाकेति चण्डीदासः । दण्ड इत्यन्ये । अय च शब्दपरावृत्तिसहत्वादर्थश्लेष ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'कमलमिवेति । कचति दीप्यते । 'कच दीप्तौ ।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'सकलेति । कलकलः कोलाहलस्तत्सहित पुरम् । बिम्ब तु सकला कला यत्रेति तादृशम् ।' इत्युदाहरणचन्द्रिकासक्षेपः.

'स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किं तु।
आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः॥' इति।

अथात्र साधर्म्यसंभवेऽपि नोपमा। साधारणधर्मप्रयोगशून्यो हि 'कमलमिव मुखम्' इत्येतावन्मात्रादिरुपमाविषयः। अत्र तु शब्दरूपसाधारणधर्मप्रयोग एवेति वैयात्याद्वक्तव्यं तदपि न युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः। साधारणधर्मप्रयोगे उपमात्वाभावात् तदप्रयोगे त्वपूर्णत्वात्। तदेतदुक्तम्—न च कमलमिव मुखमित्यादि। साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेरिति। केचित्पुनस्तदन्यथा व्याचक्षते—तथा हि यत्र साधारणधर्मोद्धारेऽप्युपमा संभवति प्रसिद्धत्वात्स उपमाविषयो न चात्र तथेत्याक्षेपार्थः। अयं पूर्णोपमाविषयो न स्यादिति। यद्वा श्लेषस्योपमाबाधकत्वायैतदङ्गीक्रियते तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात्। 'कमलमिव मुखं मनोज्ञमेतत्' इत्यत्र मनोज्ञत्वस्य संबन्धिभेदान्नानात्वेनार्थश्लेषस्वीकारादिति समाधानार्थः। नन्वेवं श्लेषस्य निर्विषयत्वम् असंकीर्णस्थलाभावादिति चेत्, न।

'त्वमेव देव पातालमाशानां त्वं निबन्धनम्।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः॥'

इत्यादावलंकारान्तरासंकरात्। तथाहि—न तावदत्रोपमा। इवाद्यप्रयो-

---

सकलकलमित्यादावपि। तथा हि यदि शब्दसाम्येनोपमा नेत्युच्यते तदा 'यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा। तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥' इत्यादौ चमत्कारितया प्रतीयमान उपमालंकारोऽनुपपन्न एव स्यादतो नायं नियमो युक्त इति। **वैयात्यादिति**। अनुभूयमानाया उपमाया निषेधो निर्बीज इति धार्ष्ट्यमात्रमेतदित्यर्थः। **पूर्णेति**। उपमानोपमेयसाधारणधर्मवाचकेवादिप्रयोगे हि पूर्णोपमेति कथ्यते। तत्र धर्मप्रयोगे उपमानङ्गीकारे तद्विशेषरूपा पूर्णोपमा निर्विषयैव स्यादित्यर्थः। **संभवतीति**। प्रतीयत इत्यर्थः। **स इति**। चन्द्र इव मुखमित्यादिरित्यर्थः। अत्र सकलकलमित्यादौ। दूषणग्रन्थार्थमाह—**अयमिति**। चन्द्र इव मुखमित्यादिरित्यर्थः। अङ्गीकृतापादनस्यायुक्तत्वात्पक्षान्तरमाह—**यद्वेति**। सर्वत्रोपमायामाह्लादकत्वमनोज्ञत्वादिसाधारणधर्मस्य संबन्धिभेदेन भिन्नत्वादनेकार्थश्लेषस्यैव प्रसक्तेस्तस्य चालंकारान्तरबाधकत्वाङ्गीकारान्निर्विषया पूर्णोपमा स्यादित्यर्थः। उच्यते चोदक्षरल(?)मेवास्वरस। यदुक्तं श्लेषस्यालंकारान्तरविविक्तविषयाभावान्तरविषयात्वेनालंकारान्तरबाधकत्वमिति तदुपन्यस्य दूषयितुमाह—**नन्वेवमिति**।

---

१. 'स्वय चेति' क-ख. २. 'त्वमेवेति। हे देव विष्णो, त्वमेव पातालम्। आशाना अस्वापे दुष्प्रापे फलयमनस्थानम्। अमराणा मरुद्रूपा भूमिः स्थितिहेतुः। देवाना वायोरुपर्येव तामौ पल्लवारुणौ भास्वे भुवनत्रयात्मक इत्यर्थः। राजपक्षे—अल पाता रक्षिता। आशाना तादृशैर्भास्वतः सूर्यस्य करैः गम्। चामरसबन्धिपवनभाजनम्। पालकवदान्यभोक्तृलक्षणजनत्रलाभस्तत्र लुब्धे जने हितप्रदेत्यन्द्रिकासक्षेपः.

गात्। नापि तुल्ययोगितादीपके। नापि पातालादिना रूपकं वाच्यम्। व्यङ्ग्यस्य तस्य संभवेऽपि वाच्यापेक्षयैवासंकरगवेषणमिति। किं च 'येन ध्वस्तमनोभवेन' इत्यादौ नास्त्येव किंचिदलंकारान्तरमित्युपमाश्लेषयोर्विभक्तोदाहरणसंभवाद्बाध्यबाधकभावानुपगमे द्वयोर्योगे संकर एवेति वरमभ्युपगन्तव्यम्। उपपत्तिपर्यालोचने तु उपमाया एवायं विषयो न श्लेषस्येत्युक्तमेव। उपपत्तिश्चेयम्—व्यपदेशाः प्राधान्ये न संभवन्तीति वस्तुस्थितिः। प्रधानं चात्रोपमा। ष्षस्य तन्निर्वाहकस्य तदङ्गत्वात्। नहि श्लेषं विना समानशब्दवाच्यत्वलक्षणं ाधर्म्यमुपमानिर्वाहकं निर्वहति। उपमा तु न श्लेषाङ्गम्। श्लेषप्रतीतिं विना प्रतीत्यभावेन तदनुपकारकत्वादिति। यदि चोपमाव्यवहारवारणाय साधाणधर्मप्रयोगशून्य उपमाविषय इति स्वीकर्तव्यं तदा पूर्णोपमाया निर्विषयत्वव स्यादिति। तदेतदुक्तम्—'अन्यथा पूर्णोपमाया निर्विषयत्वापत्तेः' इति। केवलमुपमाया एव श्लेषबाधकत्वं किं त्वलंकारान्तरस्यापि। 'अविन्दुसुन्दरी नेयं गलल्लावण्यबिन्दुका' इत्यत्र विरोधालंकारस्य। नह्यत्रार्थद्वयप्रतिपादकाब्दस्य श्लेषः। बिन्दुसाहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्रविषयस्य प्ररोहाभावात्। नन्वप्ररूढोऽपि श्लेषालंकार आस्तां विरोधाभासवदिति चेत्, भवेदेवम् यदि विरोधाभासस्य विरोधित्वमिव श्लेषाभासस्य श्लेषत्वमनुमतं कस्यापि भवेत्। न त्वेवम्। तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलंकारान्तरं प्राधा-

---

**व्यङ्ग्यस्य तस्येति**। लोकत्रयात्मकत्वरूपकस्य वाच्यस्य सिद्ध्यङ्गम्। पातालादिरूपकं व्यङ्ग्यमेव। पातालादेरप्रकृतत्वादिति भाव। इत एवास्वरसादाह—**किं चेति**। **नास्त्येवेति**। न चात्र माधवोमाधवयोः प्रकृतयोर्येन ध्वस्तमित्यादिसकृद्धर्मोक्तेस्तुल्ययोगितालंकार इति शङ्कनीयम्। पृथगुपात्ततया भेदेन प्रतीयमानयोरेकस्मिन्वाक्ये सकृद्धर्मोक्तौ हि तुल्ययोगिता। यथा—'पाण्डुक्षामं वदनं सरसं हृदयं तवालसं च वपु। आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः॥' इत्यादौ वदनादीनां रोगावेदकत्वरूपधर्मस्य सकृदुक्तिरिति। अत्र तु माधवोमाधवयो सकृदुपात्तयोर्न भेदप्रतीतिरिति न धर्मस्य साधारण्यप्रतीतिः। आवृत्त्या तु धर्मिप्रतीतौ धर्मवाचकस्याप्यावृत्तेर्न सकृत्त्वम्। प्रतिवस्तूपमा तु वाक्यद्वये भेदेन धर्मद्वयोक्तौ भवतीति न तस्या अप्ययं विषय इति विविक्त एवायं श्लेषविषय इति ज्ञेयम्। **संकर एवेति**। द्वयोरपि विविक्तविषयत्वेन बाध्यबाधकत्वायोगादेकत्र समप्राधान्येन मिलनमित्येव युक्तमित्यर्थ। अङ्गाङ्गित्वसंकरस्य वक्ष्यमाणत्वे यथाश्रुतासंगते। वस्तुतस्तु श्लेषस्योपमाङ्गित्वान्न समप्राधान्यं किंतूपमैव प्राधान्येनेत्याह—**उपपत्तीति**। श्लेषव्यतिरेके श्लेषमूलके व्यतिरेकालं-

---

१. 'अविन्द्विति। अप्सु प्रतिबिम्बित इन्दुरबिन्दुस्तद्वत्सुन्दरी। गलन्तो लावण्यस्य बिन्दुका यस्या इत्युत्प्रेक्षागर्भम्, अविन्दुर्बिन्दुशून्या गलद्बिन्दुका चेति विरोधः।' इत्युदाहरणचन्द्रिकासक्षेपः।

न्यात्। तथा च 'सद्वंशमुक्तामणिः' इत्यत्र परम्परितश्लिष्टरूपके रूपकं प्रधानम्। वंशशब्दे श्लेषस्तु वेणुकुलयो रूपकोपयोगितया तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतु रूपकमेव व्यपदेश्यम्। 'नाल्पः कविरिव स्वल्पश्लोको देव महान्भवान्' इत्यत्र श्लेषव्यतिरेके व्यतिरेके एव प्रधानं श्लेषस्तु तन्निर्वाहक इति तत्प्रतिभोत्पत्तिहेतुर्व्यतिरेकः।

'अनुरागवती संध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः॥'

इत्यत्र समासोक्तिरलंकारः। अभिधाया नियमने श्लेषस्यासंभवात्।

'आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै॥'

इत्यत्र विरोध एवालंकारः श्लेषस्तु तदङ्गमात्रम्। अप्ररोहात्।

'कवीनां संतापो भ्रमणमभितो दुर्गतिरिति
त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम्।
चतुर्णां वेदानां व्यरचि नवता वीर भवता
द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः॥'

अत्र मदीये पद्ये काव्यलिङ्गस्य श्लेषोऽङ्गमिति श्लेषप्रतिभोत्पत्तिहेतुः काव्यलिङ्गम्। तस्मादलंकारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः। किं च 'प्रभातसंध्येव' इत्यादौ शब्दश्लेषस्यार्थालंकारत्वमिति वचनं भवतां विरुद्धम्। शब्दानाश्रितत्वे तेन व्यपदेशस्य न्याय्यत्वात्। अपि च यस्य वैचित्र्यं कवि-

---

कारे। **कवीनामिति**। अभितो भ्रमणं याचनाय। पञ्चत्वं नाशं पञ्चसंख्यां च। नवता उच्छिन्नसंप्रदायस्य पुनरुज्जीवनान्नूतनता नवसंख्यता च। लक्षं संख्याविशेषं लक्ष्यं च। त्रयाणां पञ्चत्वकरणं न चित्रमित्यर्थः। चतुर्णां नवत्वकरणस्य अयुतलक्षीकरणस्य च हेतुत्वेन विवक्षणात्काव्यलिङ्गमलंकारस्तत्र श्लेषोऽङ्गम्। **शब्दानाश्रितत्व** इति। सति सप्तमीयम्। एवं च प्रकृते शब्दाश्रितत्वाद्भवह्निश्चाश्रयाश्रयिभावस्यैव लोक इव शब्दार्थालंकारव्यपदेशबीजत्वेनाभ्युपगमात्तद्धि

---

१. 'नाल्प इति। अल्पः क्षुद्रः। 'पद्ये यशसि च श्लोकः' इति कोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'अनुरागेति। अनुराग स्नेहो लौहित्य च। पुरःसरोऽग्रगामी सम्मुखश्च। समागमो मिलन स्त्रीपुंससंगमश्च।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'आदायेति। यो विषम दृष्टिस्त्रिलोचनोऽचल हिमाचलस्वरूप धनुरादाय अहीन सर्पराज गुणं मौर्वी कृत्वा अच्युतो नारायणः शरो यस्य तादृशो लक्ष्यं त्रिपुररूपमभाङ्क्षीद्भञ्जितवान् तस्मै नम इति मुख्योऽर्थ। अचल चलनशून्य धनुः। हीनो जीर्णः अथवा अहीनो धनुर्दण्डादन्यूनपरिमाणो गुणः। विषमा लक्ष्यादन्यत्र निहिता दृष्टिः। अच्युता अनिर्गताः शरा. लक्ष्यभङ्गश्चेति विरोधाभासः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. अयं श्लोक उदाहरणचन्द्रिकायां न व्याख्यात..

प्रतिभासंरम्भगोचरः स एवालंकारस्थानम्। 'स्वयं च पल्लवाताम्र–' इत्यादौ शब्दवैचित्र्यमेव तादृक्। तस्यैव कविप्रतिभयोट्टङ्कनादिति शब्दालंकारत्वमेवोचितम्। ननु श्लेषोऽर्थमुखप्रेक्षकः। नह्यर्थप्रतीतिं विना श्लेषस्य चमत्कारित्वं संभवो वेत्यर्थालंकारत्वं श्लेषस्येति चेत्, न। एवं ह्यनुप्रासस्याप्यर्थालंकारत्वं स्यात्। रसादिव्यञ्जकस्वरूपवाच्यसव्यपेक्षत्वेन ह्यनुप्रासस्यालंकारता। अन्यथा वृत्तिविरोधादिदोषस्य वक्ष्यमाणत्वात्। किंचैवं शाब्दयोर्गुणदोषयोरप्यार्थत्वं स्यात्। तयोरप्यर्थापेक्षयैव तथाभावात्। शृङ्गारादौ हि माधुर्यादिर्गुणः कष्टत्वादिर्दोषो वा। यच्चोक्तम् 'एकप्रयत्नोच्चार्यशब्दवत्त्वेऽर्थश्लेषत्वम्' इति, तदप्ययुक्तम्। 'विधौ वक्रे–' इत्यादौ वर्णादिशब्दभेदेऽप्यर्थश्लेषत्वापत्तेरित्यादि स्वयमपि विचार्यम्।

चित्रं लक्षयति—

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८ ॥**

यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वमसंभवि तथापि विन्यस्तवर्णानुमापिका लिपयः संनिवेशविशेषवत्त्वेन यत्र खड्गाद्याकारमुल्लासयन्ति तच्चित्रमिति विवक्षितम्। तर्हि लिपिनिष्ठत्वाच्छब्दालंकारत्वं न स्यादिति चेत्, न। तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात्। शब्दान्वयव्यतिरेकयोरभग्नत्वात्। लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालंकारत्वमिति कश्चित्। तथापि शृङ्गारादिरसानुपकारकस्य कथमलंकारकत्वमिति चेत्, कविनैपुण्यवशेन विस्मयोपकारकत्वादिति गृहाण। श्लेषनिर्वाह्यं चैतत्। न च तादृशं रसोपकारकमिति दिङ्मात्रमुदाह्रियते।

तत्र खड्गबन्धो यथा—

'मारारिशक्ररामेभमुखैरासाररंहसा।
साराब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥

---

रुद्धमिदमभिधातुमित्यर्थः। **रसादिव्यञ्जकेति**। आदिना भावादिसंग्रहः। रसादिव्यञ्जकस्वरूपं यद्वाच्यं तत्सापेक्षत्वेनेत्यर्थः। शृङ्गारव्यञ्जकार्थ...विअघे (?) तदनुगुणवैदर्भ्याख्यावृत्त्यनुगुणो ह्यनुप्रास उच्यते। एवं वीरादौ गौडी वृत्तिरिति तदनुगुण इत्यर्थः। वृत्तिर्वैदर्भ्यादिरीतिः। **स्वयमपीति**। न तु परोक्तत्वेनैव द्वेष कार्य इति भावः। **शब्दान्वयेति**। ताभ्यामेव शब्दालंकारत्वस्य व्यवस्थापितत्वादिति भावः। आश्रयाश्रयिभावस्याव्यवस्थापकत्वं पूर्वोक्तमेव कश्चिदित्यरुचिबीजम्। **कविनैपुण्येति**। तथा च रसजन्यविस्मयाख्यचमत्कारातिशयप्रयोजकत्वादद्भुतरसोपकारकत्वाद्वालंकारत्वोपपत्तिरित्यर्थः। **न च तादृशमिति**। क्लिष्टतयार्थासुन्दर-

---

१. 'मारेति। उमा मे श कल्याण दिश्यादद्यादित्यन्वय'। कीदृशी। मारारिः शम्भु (शक्र इन्द्रः) रामो बलभद्र· इभमुखो गणेश· एतैरासाररहसा धारासपाततुल्यवेगेन सार उत्कृष्ट आरब्धः स्तव· स्तोत्र यस्याः सा। अत एव नित्य तेषामार्तिहरणे क्षमा।

माता नतानां संघट्टः श्रियां बाधितसंभ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमाद्रिजा ॥'

न्यासो यथा—ताडिकायां प्रथमं माशब्दं विन्यस्य तदूर्ध्वमारोहक्रमेणैकस्यां धारायां चतुर्दशवर्णान्, अग्रे श्लिष्टं सेति वर्णम्, ततोऽपरधारायामवरोहक्रमेण चतुर्दश, मेति प्रथमेन माशब्देन श्लिष्टम्, तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण सप्त, वामपार्श्वे प्रवेशक्रमेण सप्त, ततो माशब्दौ श्लिष्टौ, एष अद्रिका । माशब्दादधः क्रमेण वर्णत्रयम् । एषा गण्डिका । तदधो मेति तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण चतुष्टयम्, वामपार्श्वे प्रवेशक्रमेण चतुष्टयम्, ततो माशब्दः श्लिष्टः । एतद्गञ्जनकम् । ततो माकारादधः शेषवर्णद्वयं न्यसेत् । एतन्मस्तकमिति ।

मुरजबन्धो यथा—

'सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरला बहुलामला ॥'

---

तया च रसिकवैमुख्याधायकत्वादिति भावः । **ताडिकायामिति** । खड्गमूर्ध्वमुखं लिखित्वा मध्ये रेखयावच्छेदं कृत्वा मूले जघनस्थाने एककोष्ठं विधाय ताडिकापेटिकादिशब्दवाच्ये तस्मिन्माशब्दं विरच्य-( चय्य ) तदूर्ध्वमारोहक्रमेणैकस्यां धारायां चतुर्दशवर्णान्विन्यसेत् । मुखे त्रिकोणाकारे सेति वर्णं श्लिष्टं न्यसेत् । ततोऽपरधारायां रारब्धेत्यारभ्य क्षेत्यन्तं चतुर्दश वर्णान्विन्यसेत् । सेति ताडिकास्थं श्लिष्टम् । अग्रेऽपि तदेवाश्लिष्टम् । ततस्ताडिकाया दक्षिणतो निर्गमनक्रमेण प्रादक्षिण्येन माता नतानामित्यादि घट्ट इत्यन्तं सप्ताक्षराणि न्यस्य वामतः प्रवेशक्रमेण प्रादक्षिण्येनैव श्रेत्यन्तं सप्त विलिखेत् । इयं मुद्रिकेत्युच्यते । मेति ताडिकास्थमेव श्लिष्टम् । एवमग्रेऽपि तदेव । ततस्ताडिकाया अधस्तने दीर्घकोष्ठे गण्डिकाख्येऽवरोहक्रमेण सीत्यन्तं वर्णत्रयं विन्यस्य तदधस्तनकोष्ठे माशब्दं न्यसेत् । तद्दक्षिणतो निर्गमक्रमेण वर्णचतुष्टयं वामतश्च प्रवेशक्रमेण चतुष्टयम् । माशब्दः श्लिष्टः । एतद्गञ्जनकमित्युच्यते । तस्मादधः शेषं वर्णद्वयं द्रिजेति । 'दिमा' इति पाठे तु दीत्येतन्मात्रं विन्यसेत् ।

---

आनतानां जनानां माता । संघट्टेन लोकविमर्देन श्रीः संपत्तिर्येषां तादृशानां महिषासुरप्रभृतीनां बाधितः सभ्रमः सरम्भो यया सा । यद्वा श्रिया सघट्टः समेलनस्थानम् । बाधितः संभ्रम उद्वेगो यस्या इत्यर्थः । मान्या । रामाणां सीमा अवधिः । आदिमा पुरातनी । अद्रिजेति वा पाठः । युग्मम् । अयं खड्गबन्धः ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'सरलेति । प्रक्रान्तवर्णना शरदत्र विशेष्यते । सरला मेघादिकौटिल्यरहिता । बहुलैरारम्भैस्तरलानामलिबलानां भ्रमरसैन्यानामारवः कोलाहलो यस्यां सा । वारला हंसो बहुला यस्यां ताभिर्वा बहुला । अमन्दा उद्युक्ताः कर लान्ति गृह्णन्तीति करला राजानो यस्यां सा । अबहुले शुक्लपक्षेऽमला तद्वदमला वा । मुरजबन्धः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अथ न्यासः—प्रथमपादस्य वर्णाष्टकं पङ्क्तिक्रमेणाभिलिख्य तेषामधोऽधोऽपरपादत्रयवर्णान्पङ्क्तिक्रमेण विलिखेत् । तत्र चैतच्छ्लोकोत्थापनमार्गेण रेखायां दत्तायां मुरजाकारता भवति ।

पद्मबन्धो यथा—

'[१]भासते प्रतिभासार रसाभाताहताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥'

अस्य न्यासः—कर्णिकायां भा इति, पूर्वपत्रे निर्गमक्रमेण सते इति, आग्नेयपत्रे प्रवेशनक्रमेण प्रति इति, ततो भेति कर्णिकास्थलस्थं श्लिष्टम् । ततो दक्षिणपत्रे निष्क्रमणक्रमेण सारेति वर्णद्वयं ततस्ताभ्यां कर्णिकास्थेन वर्णेन प्रवेशक्रमेण श्लिष्टं रसाभेति वर्णत्रयम् । एवमग्रेऽपि दिक्पत्रस्य कर्णिकायाश्च वर्णाः सर्वत्र श्लिष्टा इति ।

सर्वतोभद्रं यथा—

'[२]रसासार रसा सारसायताक्षक्षतायसा ।
सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥'

अस्य पादचतुष्टये पूर्ववत्पङ्क्तिचतुष्टयेन लिखिते प्रतिलोमादिपाठेन स एव श्लोकः । संभविनोऽप्यन्ये भेदा न दर्शिताः । एते हि शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधति अतिनीरसत्वादिति ।

---

माशब्दस्तूपरितन एव श्लिष्ट इति । **पङ्क्तिक्रमेणेति** । तिर्यक्पङ्क्तिरूपेणेत्यर्थः । **तत्र चैतदिति** । ऐशानीत पश्चिमपर्यन्तं पञ्च वर्णान् बहु इत्यन्तान्वाचयेत् । तत आग्नेयकोणान्तं त्रीनित्येक पाद । ततो द्वितीयपङ्क्तिमुदीचीमारभ्य तृतीयपङ्क्त्यादिपर्यन्तं प्रादक्षिण्येन द्वितीयः । ततो दक्षिणतो द्वितीयपङ्क्त्यन्तवर्णमारभ्य वामावर्तेन तृतीयपङ्क्त्यन्तं तृतीयः । ततो वायुकोणान्तं चतुर्थपङ्क्त्यादिगतं कवर्णादिपञ्चकं प्राचीपर्यन्तमारोहक्रमेण ततोऽवरोहक्रमेण नैर्ऋत्यन्तं वर्णत्रयं चतुर्थपङ्क्त्यन्तमिति क्रमो

---

१. 'भासत इति । प्रतिभया सारप्रज्ञया श्रेष्ठ राजन्, ते तव सभा भासते । कीदृशी । रसेनाभाता शोभिता । रसिकेत्यर्थः । अहता अप्रतिहता (आ समन्तात्) विभा दीप्तिर्यस्याः सा । भावितश्चिन्तित आत्मा परमात्मा यया सा । वादे शुभा निपुणा अत एव देवाभा देवतुल्या । बत हर्षे विस्मये वा । अयं पद्मबन्धः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'रसेति । हे रसासार पृथिव्या श्रेष्ठ राजन्, रक्षतस्तव रसा तु पृथिवी पुनः क्षतायान् खण्डितशुभावहविधीन् दुर्जनान् स्यति नाशयतीति क्षतायासा । 'षोऽन्तकर्मणि' इति धात्वनुसारात् । तथा अतासा न विद्यते तास उपक्षयो यस्याः सा अस्तु । 'तसु उपक्षये' धातु । तथा सारस पद्म तद्वदायताक्षेति सबोध्यविशेषणम् । तथा सात नाशितमवातमज्ञानं येन तादृश । वातेर्गत्यर्थतया ज्ञानार्थत्वात् । एवं तक्ष तनूकरण राति ददातीति तक्षरः । अतादृश । 'तक्ष तनूकरणे' । अयं सर्वतोभद्रबन्धः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा।
एकार्थतेव

एकार्थतेति एकार्थत्वावभासयोग्यशब्दतेत्यर्थः। एतच्च यमकलाटानुप्रासयोरतिव्यापकमतो विशिनष्टि—विभिन्नाकारशब्दगेति।

स चायं द्विविधः—शब्दमात्रस्य शब्दार्थयोश्च। तयोराद्यमाह—

शब्दस्य

शब्दमात्रस्येत्यर्थः। अयमपि द्विधा—सभङ्गशब्दनिष्ठोऽभङ्गशब्दनिष्ठश्च। तयोराद्यो यथा—

'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥'

अत्र देहशरीरशब्दयोः पुनरुक्तत्वधीः। सभङ्गौ च तौ। अरिवधदा ईहा यत्र तादृशान् शरिण ईरयतीत्यर्थकत्वात्, एवं सारथिसूतशब्दयोः। सहसा हठेन रथिना सुष्ठु उतं तुरगपादातं यस्येत्यर्थकत्वात्, दानत्यागयोश्च सदा नत्या भाति स्थिरतायामगः पर्वत इवेत्यर्थकत्वात्, सभङ्गः पुनरुक्तवदाभासः। शब्दमात्रालंकारत्वं चोभयोरपि शब्दयोः पर्यायपरिवृत्त्यसहत्वात्।

अभङ्गशब्दनिष्ठो यथा—

'चकासत्यङ्गनारामाः कौतुकानन्दहेतवः।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः॥'

अत्राङ्गनारामाशब्दयोः स्त्र्यर्थकतया पुनरुक्तधीः। वस्तुतस्तु अङ्गने आरमन्ति अङ्गनानामारामा इति वार्थ इति न पुनरुक्तिः। न चात्र सभङ्गः।

---

बोध्यः। पद्मबन्धः सर्वतोभद्रं च सुगमम्। **चकासतीति**। अङ्गनासु रमन्ते तादृशाः। कौतुकेन काव्यादिचर्चया आनन्दहेतवः सुष्ठु मनो येषां त इत्यर्थः।

---

१. 'अरीति। अवनितिलको राजा सदानत्या सतामानत्या सदा अनत्या क्षुद्रेष्वनम्रतया वा भातीत्यन्वयः। कीदृशः। अरिवधदा ईहा चेष्टा येषां तान् शरिणः शरयुक्तान् योधान् ईरयति प्रेरयतीति तथा। अरिवधदेहं शरीरमस्येति व्याख्यानमयुक्तम्। तथा सति शरीरपदस्य परिवृत्तिसहत्वेन देहपदस्य तदसहत्वेन चोभयालंकारापत्त्या शब्दमात्रालंकारोदाहरणत्वानुपपत्तिप्रसङ्गात्। सहसा शीघ्रं रथिभी रथारूढैः सुष्ठु उतं प्रोतम्। संबद्धमिति यावत्। तुरगपादातं यस्य सः। स्थिरतायामगः पर्वतः। अत्र देहशरीर इत्यादिषु पुनरुक्तवदाभासोऽलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

२. 'चकासतीति। शोभनमनसस्तस्य राज्ञः पार्श्ववर्तिनो विबुधाः पण्डिताश्चकासति शोभन्ते। कीदृशाः। अङ्गनासु रमन्ते इत्यङ्गनारामाः विरहशून्या इत्यर्थः। अङ्गने अजिरे आरामाः क्रीडावनानि येषामिति वा। कौतुकमुत्सवविशेषस्तद्रूपानन्ददाः। कौतुकेन विवाहसूत्रेण य आनन्दस्तद्धेतव इति वा।' इत्युदाहरणचन्द्रिकासंक्षेपः.

शब्दमात्रालंकारत्वं चैकस्यापि परिवृत्त्यसहत्वात् । एवं कौतुकानन्दशब्दयोः सुमनसोविबुधाःशब्दयोश्च द्रष्टव्यम् ।

उभयालंकारं द्वितीयमाह—

तथा शब्दार्थयोरयम् ॥ ९ ॥

यथा—

'तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥'[1]

अत्र तनुवपुःशब्दयोः पुनरुक्तधीः । तद्विरहस्तु तनुशब्दस्याल्पार्थकत्वात् । अयं चोभयालंकारः । तनुशब्दस्य पर्यायपरिवृत्त्यसहत्वात् । एवं करिकुञ्जरयोः, तेजोधाममहःशब्दानां इन्द्रहरिजिष्णुशब्दानां तदाभासत्वमुभयालंकारत्वं च द्रष्टव्यम् । यद्यप्युभयालंकारोऽत्र न प्रकृतस्तथापि शब्दमात्रालंकारस्यैव तद्भेदस्यात्रप्रकरणेऽवश्यवक्तव्यतया तत्प्रसङ्गादुभयालंकारत्वानपायाच्चोभयालंकारभूतोऽप्ययमत्रोक्तः । उभयालंकारान्तराणां तु न कोऽपि भेदः शब्दमात्रालंकार इति न तान्यत्र पठितानीति सर्वं रमणीयम् ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे शब्दालंकारनिर्णयो नाम नवम उल्लासः ।

---

## दशम उल्लासः ।

अथार्थालंकारा लक्षणीयाः । ते च

'उपमानन्वयस्तद्वदुपमेयोपमा ततः ।
उत्प्रेक्षा चापि संदेहो रूपकापह्नुती तथा ॥
श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना ।
अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्तिते ॥
प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा ।
तुल्ययोगितया चैव व्यतिरेकः प्रकीर्तितः ॥
आक्षेपो विभावना च विशेषोक्तिस्तथैव च ।
यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत् ॥

---

**उभयालंकारत्वानपायाच्चेति** । यदि शब्दमात्रालंकारमध्ये पाठेनोभयालंकारत्वमपेयात्तदा तेषु पाठोऽयुक्त एव स्यान्न तु तत्प्रसङ्ग इति भावः । इति श्रीमत्तत्सदुपाख्यरामचन्द्रभट्टसूरिवरसूनुवैद्यनाथभट्टकृतायां काव्यप्रदीपप्रभायां नवम उल्लासः ॥

---

१. 'तनुवपुरिति । असौ हरिः सिंहोऽजघन्यः । सर्वसिंहेषु श्रेष्ठभूत इत्यर्थः । कीदृशः । तनु कृशं वपुर्यस्य सः । करिकुञ्जराणां गजश्रेष्ठानां रुधिरेण रक्ताः लोहिताः खरास्तीक्ष्णा नखरा नखा यस्य तादृशः । तेजसो धाम स्थानम् । महसा बलेन पृथुमनसा विपुलान्तःकरणानामिन्द्रः श्रेष्ठः । जिष्णुर्जयशीलः । अत्र तनुवपुरित्यादौ पुनरुक्तवदाभासः स्पष्टः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत् ।
विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत् ॥
पर्यायोक्तमुदात्तं च समुच्चय उदीरितः ।
पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ॥
व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया ।
अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसंगतिः ॥
समाधिश्च समेन स्याद्विषमस्त्वधिकेन च ।
प्रत्यनीकं मीलितं च स्यातामेकावली स्मृता ॥
भ्रान्तिमांस्तु प्रतीपेन सामान्यं च विशेषवत् ।
तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः ॥
संसृष्टिसंकरौ चैवमेकषष्टिरुदीरिताः ॥'

तेष्वनेकालंकारमूलभूतत्वेन सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयति—

**साधर्म्यमुपमा भेदे**

ननु साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेत्, न । आक्षेपादुपमानोपमेयरूपयोस्तयोर्लाभात् । न च प्रतियोग्यनुयोगिमात्राक्षेपेऽतिप्रसङ्गः । उपमानोपमेये विनान्यस्य कार्यकारणादिमात्रस्य साधर्म्याभावात् । एवं चोपमानोपमेययोः समानेन धर्मेण संबन्ध उपमेति लक्षणम् । अत्र चोपमानोपमेययोराक्षेपः साधर्म्यप्रतिपत्तिमात्रफलको न तु व्यावर्तकः । नन्वेवं भेद इत्यनुपादेयम् । तस्याप्याक्षेपादेव लाभसंभवात् । नह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेत्, न । साधर्म्यपदस्यारोपितानारो-

---

**तेष्विति** । अर्थालंकारेषु मध्ये प्रधानम् । श्रेष्ठभूतामित्यर्थः । तत्र हेतु—**अनेकेति** । उपमेयोपमोत्प्रेक्षाप्रतीपस्मृतिभ्रान्तिसंदेहरूपकादिमूलकत्वेनेत्यर्थः । सौकुमार्यं सुबोधत्वे सति हृद्यत्वम् । **तयोरिति** । प्रतियोग्यनुयोगिनोरित्यर्थः । **न चेति** । कार्यकारणादिकयोरपि कथंचित्साधर्म्यसंभवात्तत्रातिव्याप्तिरिति शङ्काशयः । चमत्कारिसाधर्म्यस्योपमात्वात्तस्य च कार्यकारणादिमात्रयोरभावान्नातिप्रसङ्गः । यत्र तु तादृशं साधर्म्यमस्ति यथा 'पितेव पुत्र' सगुणः स आसीत्' इत्यादौ तत्र तयोरुपमानोपमेयत्वमुपमालंकारश्चेष्ट एवेति समाधानार्थः । **अत्र चेति** । लक्षणवाक्य इत्यर्थः । **प्रतिपत्तीति** । निराकाङ्क्षप्रतिपत्तीत्यर्थः । तस्यापि भेदस्यापि । साधर्म्यपदं हि योगेनैकधर्मवत्त्वमात्रबोधकमित्यभेदेऽपि संभवति साधर्म्यं तथाप्यभेदे प्रयोगाभावात् प्रयोधि...भेद (?) आक्षिप्यत इत्यर्थः । साधर्म्यम् । उच्यत इति शेषः । **साधर्म्यपदस्येति** । अन्यथा कीर्त्यादौ श्वैत्यादिसाधर्म्येणोपमा न स्यादिति भावः । नन्वेवमप्युपमेयोपमायामतिप्रसङ्ग इति चेत्, सत्यम् । तत्रोपमाप्रतीतिपर्यवसानेनोपमात्वस्येष्टत्वात् । तृतीयसदृशव्यवच्छेदप्रयुक्तोत्कर्षस्याधिकांशस्य प्रतीत्या परमलंका-

पितसाधारणसमानधर्मसंबन्धमात्रपरत्वेनारोपितसाधर्म्यनिबन्धनस्यानन्वयालंकारस्य व्यवच्छेद्यत्वात् 'अलंकारत्वे सति' इत्यपि पूरणीयम्। साधर्म्यमात्रस्योपमात्वाभावात्।

एनां विभजते—

**पूर्णा लुप्ता च**

यत्रोपमानोपमेयसाधारणधर्माणामुपमाप्रतिपादकशब्दस्य चोपादानं सा पूर्णा। एतच्चतुष्कमध्ये एकस्य द्वयोस्त्रयाणां वानुपादानं यत्र सा लुप्ता।

तयोः पूर्णां विभजते—

**साग्रिमा।**

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ १ ॥**

अग्रिमा प्रथमोद्दिष्टा। पूर्णेत्यर्थः। वाक्यं विग्रहः। तेनोपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्नविभक्तिकानि सा वाक्यगा। यत्र तु तेषु कयोरपि समासः सा समासगा। तद्धितेनोपमाप्रतिपादकेन तु सममुपमानवाचिन्याः प्रकृतेर्न समासो नापि विग्रह इति तृतीय उपमाभेदः। त्रिविधाप्येषा श्रौत्यार्थीभेदात्प्रत्येकं द्विधेति षड्विधा पूर्णेत्यर्थः। श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसंबन्धरूपायास्तस्याः शाब्दबोधविषयत्वम्। अर्थापत्तिगम्यत्वं चार्थत्वम्। तत्र यथेववादिशब्दानां, 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेश्चोपादाने श्रौती। तुल्यादीनां शब्दानां 'तेन तुल्यं–' इत्यादिना तुल्यार्थे विहितस्य वतेश्च प्रयोगे आर्थी। नन्वयं विभागोऽनुपपन्नः। उभयत्र सादृश्यप्रत्ययाविशेषात्। न च वाच्यम् यथादिशब्दैः साधारणधर्मसंबन्ध उभयत्र शक्त्यैव बोध्यते न पुनस्तुल्यादिशब्दैः। अयमेव विशेष इति। यतो यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते। अत उपमाने तत्संबन्धं बोधयन्तु न पुनरुपमेये। अन्यविशेषणस्यान्यत्र संबन्धबोधकत्वादर्शनादिति चेत्, न। शब्दशक्तिस्वाभाव्यादन्यविशेषणत्वेऽप्यन्यत्र संबन्धबोधकत्वात्। न चादृष्टचरत्वम्। षष्ठ्यां तथा दर्शनात्। षष्ठी हि यदनन्त-

---

ान्तरत्वेन कथनम्। अनन्वये तूपमाप्रतीतिपर्यवसानमेव नेति तद्व्यावर्तनमिति शेषः। 'गोसदृशो गवय.' इत्यादौ प्रसङ्गवारणायाह—**अलंकारत्वे सतीति**। उपमेयपरिष्कारद्वारा चमत्कृतिजनकत्वे सतीत्यर्थ.। तेन मुखमिव चन्द्र इति प्रतीपे नातिव्याप्तिः। **असमस्तानीति**। समासाभावस्य चन्द्रवन्मुखमिति तद्धितेऽपि सत्त्वादाह—**भिन्नविभक्तिकानीति**। भिन्नविभक्तिकत्वस्य चन्द्र इव मुखमिति समासेऽपि सत्त्वादसमस्तानीत्युक्तम्। तेषु उपमानादिपदेषु मध्ये। **उभयत्रेति**। इवादिस्थले तुल्यादियोगे चेत्यर्थः। प्रत्यय शाब्दबोध। **उभयत्रेति**। उपमानोपमेययोरित्यर्थ। **न पुनरिति**। तुल्यादिपदानामुपमानादिनैकेनैव स्वार्थानवबोधकत्वादित्यर्थ। **उपमानतेति**। उपमानत्वं हि प्रसिद्धसाधर्म्यस्य भवतीति तद्गतमेव

रमुपात्ता तस्यैवोपसर्जनत्वप्रतीतिरित्युपसर्जनविशेषणत्वेऽपि प्रधानेऽपि संबन्धं बोधयति । तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च संबन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम् । तथा हि—'पद्ममिव मुखम्' इत्यादावुपात्तस्याक्षिप्तस्य वा रमणीयत्वादेः संबन्धस्यविषयीकृत्यापर्यवसानम् । यथादिशब्दानां धर्मविशेषसंबन्ध एव शक्तत्वात् । तुल्यादिशब्दास्तु नैवम् । 'पद्मेन तुल्यं मुखम्' इत्यादावुपमेये, 'पद्मतुल्यं मुखमस्य' इत्यादावुपमाने, 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसंबन्धप्रतीतेरिति ।

केचित्तु—'उपमानोपमेयभावरूपसंबन्धस्य श्रौतार्थत्वाभ्यां विशेषः' इति व्याचक्रुस्तदयुक्तम् । साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी इति प्रकाशविरोधात् । यस्यैव ह्यार्थतया उपमाया आर्थत्वं तस्यैव श्रौततया श्रौतत्वौचित्यात् । किं च साधर्म्यमेवोपमेति तस्यैव श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्तः ।

---

तदिवादिभिर्बोधनीयमित्युपमानविशेषणीभूतस्यार्थबोधकास्ते इवादय इत्यर्थः । **उपसर्जनत्वेति** । संबन्धित्वप्रतीतिरित्यर्थः । उपसर्जनविषणत्वेऽपीति । उपसर्जनविशेषणत्वेन संबन्धबोधकत्वेऽपीत्यर्थः । प्रधानेऽपि चैत्रस्य धनमित्यादौ प्रधानभूतधनादावपि । अत्रायमर्थः—यथा षष्ठ्यर्थस्वामित्ववादिनां प्राचां मते चैत्रस्य धनमित्यादौ प्रकारीभूतविभक्त्यर्थसंबन्धेन चैत्रादेर्धनादावन्वयात्स्वामिचैत्रीयं धनमिति धीस्तथा चन्द्र इवेत्यादावपि प्रकारीभूतसादृश्यसंबन्धेन चन्द्रादेर्मुखादावन्वयात्सदृशचन्द्रीयं मुखमिति बुद्धिः । इवादेरुपमानपदोत्तरत्वनियमेन तदर्थविशेषणावगमादिति । एवं मुखं पद्मं च तुल्यमित्यनेनोभयत्र सादृश्यप्रत्ययाविशेषे यथेवादिश्रुतिः साधारणधर्मविशेषरूपाह्लादकत्वसंबन्धमप्रत्याय्य न पर्यवस्यति तुल्यादिपदश्रुतिस्तु धर्मविशेषसंबन्धावगमं विनापि सामान्यतः साधर्म्यबोधमात्रेण पर्यवसिता प्रतीतसामान्यस्य विशेषं विनानुपपत्त्या पश्चाद्विशेषमाक्षिपतीति । यथेवादिपदप्रयोगे श्रौती तुल्यादिपदप्रयोगे त्वार्थीति विभागोऽभिमत इत्याह—**तस्मादिति** । केचित्तु यथा चन्द्रस्तथा मुखमित्यादौ यादृशधर्मवांश्चन्द्रस्तादृशधर्मवन्मुखमित्युभयविशेष्यकबोधवच्चन्द्र इव मुखमित्यादावपि तथैव बोधः । अत एव हंसीधवलश्चन्द्र इत्यादौ भिन्नलिङ्गत्वादेर्दोषत्वम् । पुंस्त्वान्वितधवलत्वस्य हंस्यामन्वयायोगात् । अन्यथा तु हंसीसदृशश्चन्द्रो धवल इत्यन्वयसंभवाद्दोषत्वं न स्यात् । एवं चोपमानोपमेययोर्द्वयोरपि साधर्म्यस्य शब्दादेवान्वयबोधाच्छ्रौतीत्वम् । चन्द्रेण तुल्यं मुखं मनोज्ञमित्यादौ, मुखस्य तुल्यश्चन्द्र इत्यादौ च भिन्नविभक्तिकत्वेनोपमानोपमेययोर्द्वयोः साधर्म्यस्य शब्दादप्रतीतेस्तुल्यादिपदप्रयोगे आर्थी । पद्मं मुखं च तुल्यमित्यादावुभयत्र साधर्म्यप्रतीतावप्युपमानोपमेयभावसंबन्धस्य प्रमाणान्तरेणैवावगमेनार्थत्वादार्थीत्वमिति व्याचख्युः । तत्रोपमानोपमेयत्वस्य श्रौतत्वार्थत्वाभ्यां व्यवस्था तदुक्तां मूलग्रन्थविरोधेन तावद्दूषयति—**साधर्म्यस्येति** । युक्तिविरोधमप्याह—**किं चेति** । हंसीव धवल इत्यादौ चोपात्तधर्मस्यैवेवादिना बोधननियमेन पुंस्त्ववि-

अत्रेवेन समासः । समासे आर्थी यथा—

'अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥'

अत्र सुरतरुसदृश इत्युपमानद्योतकयोः समासः । तद्धिते श्रौत्यार्थी च यथा—

'गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजंगवत् ।
दुरालोकश्च समरे निदाघाम्बररत्नवत् ॥'

अत्र गङ्गाभुजंगवदिति श्रौती । 'तत्र तस्येव' इत्यनेन इवार्थे वतेर्विधानात् । निदाघाम्बररत्नवदित्यार्थी । 'तेन तुल्यम्' इत्यर्थे वतेः प्रयोगात् ।

ननु चित्रभेदा अलंकारनिर्णये निर्णेष्यन्ते इति पूर्वमवादीः 'इदानीं स्वप्नेऽपि' इत्युदाहरसि न तच्चित्रं भवितुमर्हति । अत्र हि स्वाधीनभर्तृका, कान्तं भजमाना यथा चमत्कारभूस्तथा जयश्रीस्त्वदासेवनेनेत्यादि वस्तुरूपं व्यङ्ग्यं विना नोक्तेर्वैचित्र्यम् । वैचित्र्यं चालंकारत्वनिष्पत्तय इति व्यङ्ग्यमवश्यापेक्षणीयम् । अतस्तस्य प्राधान्ये गुणीभूतव्यङ्ग्यत्वम् । तस्मात्पूर्वापरविरुद्धाभिधानमिति चेत्, मैवं वादीः । न खलु व्यङ्ग्यपरामर्शादेवात्र चारुत्वाप्रतीतिः, अपि तु वाच्योपमामात्रपरामर्शादेव । चारुत्वहेतुश्चालंकारः । अवर्जनीयसंनिधेश्च व्यङ्ग्यस्यास्फुटतरतया न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्तकतेति न कश्चिद्दोषः । नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रतानुपपत्तिः । किं चानुप्रासाद्यलंकारान्तरसद्भावात्संकरालंकारोदाहरणान्येतानि युक्तानि, न तु शुद्धाया उपमाया इति चेत्, न । रसादिरूपव्यङ्ग्योऽलंकारान्तरं चैतेष्वव्यभिचारीति तत्रौदासीन्यमालम्ब्योपमालंकारोऽयमीदृश इत्यभिप्रायेणालंकारमात्रमुदाहृतं न तु चित्रकाव्यम् । अत्र 'चन्द्रधवलः पटः' इत्यादिको रसालंकाराभ्यामसंभिन्न एव विषयः

---

पठितवामनपदेनाप्यनभिधानादसमासाद्वाक्यगैवेयं बोध्या । **वस्तुरूपमिति** । जयश्रियस्त्वदासेवनेन चमत्कारित्वमित्यर्थरूपमित्यर्थः । यथा तथेत्यंशस्तु वाच्यकोटिगत एवानूदित इति भावः । वैचित्र्यं चमत्कारित्वम् । तस्य उक्तव्यङ्ग्यस्य । **एवमपीति** । उक्तव्यञ्जकस्य ध्वनित्वाद्यप्रयोजकत्वेऽपीत्यर्थः । ननु तात्पर्यविषयव्यङ्ग्यराहित्यं मुखतश्चमत्कारिव्यङ्ग्यशून्यत्वं वा चित्रत्वमिहास्त्येवेत्यत आह—**किं चेति** । **औदासीन्येति** । तद्विषयविवेकमकृत्वेत्यर्थः । तथा च क्वचिच्चित्राभावेऽपि न क्षतिरित्याह—**न त्विति** । वस्तुतस्तूपमाप्राधान्यादस्त्येव चित्रत्वमिति

---

१. 'अवितथेति । सफलमनोरथमार्गसंपादनेषु प्रकृष्टगुणगरिम्णा गीता श्रीर्यस्य स कस्य नाभिलषणीयः स्पृहणीय इति सवन्धः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'गाम्भीर्येति । गङ्गाभुजंगः समुद्रस्तस्येवेत्यर्थः । 'तत्र तस्येव' इतीवार्थे वतिः । निदाघे ग्रीष्मकाले यदम्बररत्नं सूर्यस्तेन तुल्यं तद्वत् । 'तेन तुल्यं क्रिया चेद्वतिः' इति तुल्यार्थे वतिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

किमिति नोदाह्रियत इति चेत्, तद्रहितत्वेनोदाहरणे वैरस्यप्रसङ्गात् तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वात्।

अथ लुप्ता विभजनीया। सा च सप्तधा। तत्रैकस्य लोपे त्रिधा उपमानस्य साधारणधर्मस्य द्योतकस्य च लोपादुपमेयमात्रस्य लोपादर्शनात्। द्विलोपेऽपि त्रिधा। धर्मवाद्योर्धर्मोपमानयोर्वाद्युपमेययोश्च लोपादन्यस्य द्विकस्य लोपासंभवात्। त्रिलोपे त्वियमेका। उपमेयं विनान्येपामेकैकमात्रसत्त्वे उपमाया असंभवादिति दर्शयन्नेव यथासंभवं तासां सप्तविधानामपि विभागमाह—

**तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः।**

धर्मस्य साधारणस्य। तद्वत्समासे वाक्ये तद्धिते च श्रौती आर्थी चेत्यर्थः। तत्र विशेषमाह—न श्रौती तद्धित इति। इवार्थ एवं हि तद्धिते सा श्रौती भवेत्। इवार्थश्च वतिरेव। स च 'तत्र तस्येव' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव। आर्थी तु यद्यपि वतिरूपे तद्धिते न संभवति 'तेन तुल्यं' इत्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसंभवात्। तथापि कल्पप्-देश्य-देशीयर्-बहुच्-रूपे संभवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः। तत्र वाक्ये श्रौती यथा—

'धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा॥'

अत्रामृतवचसोः परिणामसुरसत्वादिसाधर्म्यं तच्च नोपात्तम्। आक्षेपात्तु ...धस्य संबन्धो यथाशब्देन तद्बोधं विना पर्यासेन श्रुत्यैव बोध्यत इति धर्म-...ोपे श्रौतीयम्। एवमग्रेऽप्यूह्यम्। वाक्ये आर्थी यथा—

'आकृष्टकरवालोऽसौ संपराये परिभ्रमन्।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥'

आकृष्टकरवालत्वं च न साधारणो धर्मः। यमस्य दण्डायुधत्वेन प्रसिद्धेः।

---

ज्ञेयम्। **अकाव्यत्वेनेति**। काव्येऽलंकारा उपमादय इति तत्परिचयार्थमुदाहरणं ...व्यरूपमेवोचितं न त्वन्यदित्यर्थः। उपमानस्येत्यादि सावधारणम्। **उपमानस्येवेत्यादि**। अत एवाह—**उपमेयमात्रस्येति**। धर्मवाद्योः धर्मः साधारणो वादिर्वाशब्दप्रभृतिरिवादिस्तयोः। **विभागमाहेति**। व्यवस्थामाहेत्यर्थः। **धर्मसाकाङ्क्ष इति**। न च कुशाग्रीया बुद्धिरित्यादौ 'इवे प्रतिकृतौ' इत्यधिकारविहितच्छप्रत्ययतद्धितस्य धर्मसाकाङ्क्षत्वाभावादिवार्थकत्वाच्च तद्धिते श्रौती संभवत्येवेति वाच्यम्।

---

१. 'धन्यस्येति। अनन्यसामान्योऽसाधारण इत्युत्कर्षविशेषणम्। हे चेत, तस्य सत्यं वचः करणीयमित्यन्वयः। अमृतं यथेत्यमृतवत्परिणामसुरसमित्यर्थः॥' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'आकृष्टेति। करवालः खड्गः। संपराये सङ्ग्रामे। अत्र क्रूरत्वादिकं यमसाधर्म्यं न त्वाकृष्टेत्यादि। तस्य दण्डायुधत्वेनैव प्रसिद्धेरिति।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अन्यत्रयं यथा—

'करवाल इवाचारस्तस्य वागमृतोपमा।
विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे॥'

अत्र करवाल इवेति समासे श्रौती। अमृतोपमेति समासे आर्थी। विषकल्पमिति तद्धितगा आर्थी।

## उपमानानुपादाने वाक्यगाथ समासगा॥ २॥

अत्र तद्धितगा न संभवति। उपमाप्रतिपादकस्य तद्धितस्य वतिकल्पबादेरुपमानादेव विधानेन उपमानानुपादानेऽसंभवात्। न वा श्रौती। इवादीनामुपमानमात्रान्विततया तदनुपादाने तेषामप्यनुपादानात्। अतो वाक्यसमासयोरेव। तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमा नोपमा। तत्र वाक्यगा यथा—

'सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स।
दीसइ अहव णिसम्मइ सरिसं अंसंसमेत्तेण॥'

अत्र विशेषत उपमानं नोपात्तम्। चिन्त्यमेतत्। इदमेव 'कव्वस्स' इत्यत्र 'कव्वसमम्', 'सरिसं' इत्यत्र 'णूणं' इति पाठे समासगोदाहरणम्।

द्योतकलोपे वाक्यगा तावन्न संभवति। 'मुखं चन्द्रो रमणीयम्' एतावन्मात्रेणोपमाप्रत्ययाभावात्। नापि तद्धितगा। वतेः कल्पबादीनां च द्योतकत्वया तत्प्रयोगे द्योतकलोपस्यैवासंभवात्। न वा श्रौतीत्यन्यथा विभजते—

---

इवादेरिव धर्मविशेषसंबन्धं विना पर्यवसानाभावस्य तत्राभावेन श्रौतीत्वाभावात्। अत एव सादृश्यपदप्रयोगेऽपि न श्रौतीत्वम्। यथा 'परस्पराक्षिसादृश्यात्' इति रघौ प्रथमे सर्गे इत्यादिषु बोध्यम्। **सअलेति।** 'सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य। दृश्यतेऽथवा निशाम्यते सदृशमंशांशमात्रेण॥' इति संस्कृतम्। **विशेषत इति।** उपमानतावच्छेदकामृतत्वादिरूपेणेत्यर्थः। **चिन्त्यमिति।** विचार्यमित्यर्थः। अयमाशय—अत्र हि न दृश्यते न वा श्रूयत इत्युपमानाभावकथनात्तत्सादृश्यरूपाया उपमाया असंभवादसमालंकार उपमातिरिक्त एवालंकाररत्नाकरादिभिरुक्त इत्युपमाभेदोदाहरणत्वमयुक्तमिति प्रतिभाति। विचार्यमाणे तूपमैवेयम्। अस्मद्दर्शनाद्यगोचरत्वेऽप्यत्युत्कृष्टं किंचिदुपमानं भविष्यतीत्युपमायामेव पर्यवसाना-

---

१. 'करवाल इति। आचार आचरणम्। विषकल्पं विषादीषन्न्यूनम्। तत्सदृशमित्यर्थः। ईषदसमाप्तौ कल्पप्प्रत्ययः। यदि जीवसि तत्तदा वेत्सि। तत्समीपावस्थाने तव जीवनमेव दुर्लभमिति भावः।' इत्युदाहरणचन्द्रिकासंक्षेपः २ 'सअलेति। सरसकाव्यस्यांशांशमात्रेणापि सदृशं न दृश्यते अथवा निशम्यते श्रूयत इत्यन्वयः। कीदृशम्। सकलकरणानामिन्द्रियाणां परमविश्रान्तिलक्ष्मीदायकम्। तथा च सरसकाव्यमेवैवंविधं नान्यदिति भावः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।**
**कर्मकर्त्रोर्णमुलि**

वाशब्द उपमाद्योतक इति वादेरुपमाद्योतकस्येत्यर्थः । तस्य लोपे समासे क्यचि क्यङि णमुलि चोपमा । तत्र क्यचि द्विधा । कर्मणोऽधिकरणाच्च विधानेन तस्य द्वैविध्यात् । क्यङि त्वेकैव । कर्तुरेव तद्विधानात् । णमुल्यपि द्विधा । कर्मकर्त्रोस्तद्विधानात् । तत्र समासे द्विधा द्वयोस्त्रयाणामपि वा उपमानादिपदानां समासात् । तयोराद्या यथा—

'[1]ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥'

अत्र गण्डपाण्डुनेति द्वयोः समासः । द्वितीया यथा—

'[2]असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥'

अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दानां त्रयाणामपि समासः ।

क्यच्क्यङोर्भेदत्रयं यथा—

'पौरं[3] सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥'

अत्र पौरं सुतीयतीत्यत्र 'उपमानादाचारे' इति कर्मणः क्यच् । समरान्तरेऽन्तःपुरीयतीत्यत्र तु 'अधिकरणाच्च' इत्यनेनाधिकरणात् । नारीयते इति 'कर्तुः क्यङ् सलोपश्च' इत्यनेन कर्तुः क्यङ् ।

णमुलि भेदद्वयं यथा—

'[4]मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥'

---

दतो नालंकारान्तरमिति । **पौरमिति** । अत्र क्यच्क्यङोराचारमात्रमर्थ । प्रकृति-

---

१ 'तत इति । गण्ड इव पाण्डुर्गण्डपाण्डु । 'उपमानानि सामान्यवचनैः' इति समासः । माहेन्द्री दिक् प्राची ।' इत्युदाहरणचन्द्रिकासक्षेप . २. 'असितेति । प्रतिभटानां शत्रूणां विक्रमस्य दर्शने सत्यय नृप ईदृश आसीदित्यन्वय । असि खड्ग एव पत्रमसिपत्रम् । रुहरुहिकया रभसोत्कण्ठया आहित कृतश्चित्ते तूर्णं शीघ्र चारः सचारो यस्य स । उत्कटा अरुणा कपोलकान्तिर्यस्य स तादृश ।' इत्युदाहरणचन्द्रिकासक्षेप'. ३. 'पौरमिति । असौ नृपः पौर जन सुतमिवाचरति । 'उपमानादाचारे' इति कर्मभूतादुपमानात्क्यच् । समरस्यान्तरे मध्ये अन्त पुरीयति अन्त-पुर इवाचरति । अत्र 'अधिकरणाच्च' इत्यनेन क्यच् । विचित्रेत्यादि । विचित्रेण चरित्रेण वित्त इत्यर्थ । 'तेन वित्तश्चुञ्चुप्चणपौ' इत्यनुशासनात् । नारीयत इति नारीवाचरतीत्यर्थ । 'कर्तु क्यङ् सलोपश्च' इत्यनेन क्यङ्' इत्युदाहरणचन्द्रिकासंक्षेप.. ४. 'मृध इति । मृधे सङ्ग्रामे । निदाघेत्यादि । निदाघघर्मांशुमिव पश्यन्तीत्यर्थ । 'उप-

अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्। निदाघघर्मांशुमिव पश्यन्तीत्यर्थात्। पार्थसंचारमित्यत्र कर्तरि। 'उपमाने कर्मणि च' इति सूत्रे चकारात्।

अथ द्विलोपे विभजनीया। तत्र धर्मवाद्योर्लोपे वाक्यगा न संभवति। शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादाने उपमानवगमात्। नापि तद्धितगा। तद्धितस्यापि कल्पबादित्वेन तत्सत्त्वे द्विलोपाभावात्। नापि श्रौती। इवाद्यभावादित्यन्यथा विभजते—

**एतद्विलोपे क्विप्समासगा ॥ ३ ॥**

एतद्विलोपे एतयोर्द्वयोर्धर्मवाद्योर्लोपे। क्विब्गा यथा—

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥'

यद्यप्याचारे क्विब्विधानात्तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति तथापि क्विप एव लोपाद्धर्मलोपव्यवहारः। अत एव समानार्थत्वेऽपि क्यङत्र नोपात्तः। तस्यालुप्तत्वेन धर्मलोपाभावात्। समासगा यथा—

'परिपन्थिमनोराज्यशतैरपि दुराक्रमः।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥'

अत्र राजायं कुञ्जर इवेत्युपमा।

**धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते।**

तद्धिते तु नेयम्। उपमानलोपे तद्धितस्यैवाभावात् नापि श्रौती। उपमानाप्रयोगे इवादेरप्रयोगात्। तत्र सामसगा यथा—

'ढुण्ढुल्लन्त मरीहसि कण्टअकलिआइँ केअइवणाइं।
मालइकुसुमसरिच्छं भमर भमन्तो ण पावहिसि ॥'

---

भूतसुतादिपदानां तत्सादृश्ये लक्षणेति सादृश्यवाचकाभावाद्वाचकलोपः। एवं णमुलोऽपि भावेभावे धातुसंबन्धे च विधानान्नोपमावाचकत्वमित्यूह्यम्। **कुञ्जर इवेत्युपमेति**। परसेनाविद्रावकत्वादेः सामान्यस्याप्रयोगादुपमितसमासबोध्येत्यर्थः। परिपन्थीत्यादि न सामान्यपरमिति भावः। **ढुण्ढुल्लन्त इति**। 'अन्वेषयन्मरिष्यसि

---

माने कर्मणि च' इति कर्मण्युपपदे णमुल्। चकारात्पार्थसंचारमित्यत्र कर्तरि। पार्थ इव संचरतीत्यर्थात्। उभयत्रानुशासनिको यथाविध्यनुप्रयोगः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'सवितेति। मनसि सुखदुःखाभ्यां वशीकृते सति यथाक्रमं सवित्रादिकं विध्वादिवदाचरतीत्यर्थः। 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इत्याचारे क्विप्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'परिपन्थीति। परिपन्थिनां शत्रूणां मनोराज्यं मनोरथः। राजकुञ्जर इति कुञ्जर इव राजेत्यर्थः। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः। इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'ढुण्ढुल्लन्त इति। 'ढुं ढु इति शब्दं कुर्वाण इत्यर्थः' इति केचित्। तन्मते वनानि भ्रमन्नित्यन्वयः। 'ढुण्ढुल्लन्त भ्रमण (?) इत्यर्थः' इत्यन्ये।' इत्युदाहरणचन्द्रिकासंक्षेपः.

कुसुमसरिच्छमित्यत्र 'कुसुमेण समं' इति पाठे इयमेव वाक्यगा ।

क्यचि वाद्युपमेयासे

आसे निरासे । उदाहरणम्—

'अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः सहस्रारायुधीयति ॥'

अत्र यद्यपि विशेषद्वारोपात्तः कर्तैवोपमेयस्तथापि न तथात्वेन किं तु कर्मत्वेन । अन्यथा क्यचोऽसंगतत्वापत्तेः । तथा चात्मानं सहस्रारायुधीयतीत्यर्थः । इत्युपमेय आत्मा लुप्त इति यथोक्तोदाहरणमेतत् । हंसायत इत्यादौ कर्तैवोपमेयः । तस्य चानुपादाने वाक्यमेव न पर्याप्यत इति विशेषात् क्यटि नेयं संभवति । यद्यपि द्विलोपेऽन्यदपि भेदत्रयं संभवति । यथा उपमानोपमेययोः, उपमानवाद्योः, उपमानधर्मयोरिति तथापि तेषूपमायाः प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम् ।

त्रिलोपे तूपमेयातिरिक्तत्रितयलोप एव संभवतीत्युक्तम् । सापि समासमात्रे । अन्यत्र बोधकाभावात् । तत्राप्याध्येव । इवादेर्लोपादित्येकविधैवेत्याह—

त्रिलोपे च समासगा ॥ ४ ॥

यथा—

'तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविसराचितान्तरा मृगनयना नयते मुनेर्मनः ॥'

अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणम् । यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते तदा 'सप्तम्युपमानपूर्व-

---

कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥' इति संस्कृतम् । अत्रापि दुर्लभतयोत्कृष्टं कुसुमान्तरमप्रकृत प्रकृतमालत्युपमानतया विवक्षितमिति ज्ञेयम् । **अत्र यदीति** । शक्त्या लक्षणया वा उपमाना-

१ अरातीति । वैरिविक्रमालोकनेन विकासशालिनेत्रः कृपाणेन उदग्र उद्भटो दोर्दण्डो यस्य तादृशो नृपः स सहस्रमायुधानि यस्य तमिवात्मानमाचरति । यथा तं दुर्जयं मन्यते तथात्मानमपीत्यर्थः । आयुधसहस्रकृत्यस्यैकेन कृपाणेन निर्वहणादुत्कर्षः । अत्र कर्मत्वेनोपमेयस्यात्मनस्तत्त्वेनैवानुपादानमिति बोध्यम् । केचित्तु उपमेयोपादानप्रसङ्गभयात्ससहस्र इत्येकपदतया व्याचक्षते । सहस्रेणायुधैः सह वर्तत इति ससहस्रायुध इति । अन्ये तु 'सहस्रारायुधीयति' इत्यपठन् । सहस्रार चक्रमायुध यस्येति तदर्थः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'तरुणिमनीति । तरुणिमनि सति मनो हरतीति सबन्धः । तरुणिमनि विषये कृतमवलोकनं ययेति वा । तेन वय सधिलाभः ललितविलासेभ्यो विलब्धो(तीर्णो)दत्तो विग्रहः शरीरं यया सा । विसर समूहः । तेनाचित व्याप्तमान्तर मनो यस्याः सा । 'विग्रहता' इति पाठे शरैर्विशीर्णता अन्तरे यस्याः सेत्यर्थः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

पदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन मृगलोचनेत्युपमानपूर्वपदस्य नयनशब्देन बहुव्रीहावुपमानवानवाचिनि मृगलोचने इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानादिदमुदाहरणम्।

केचित्तु "उपमानमात्रोपादानेऽपि त्रिलोपा संभवति। यथा 'अयमायःशूलिकः' इति। अत्रायःशूलपदेन क्रूर आचार उपमेयः, तीक्ष्णत्वादिकं च साधारणो धर्मः। न च तयोरेकमप्युपात्तम् नापीवादिः" इति मन्यन्ते। तन्न युक्तम्। अतः क्रूरस्याचारस्यायःशूलतयाध्यवसानादतिशयोक्तिरियं न तूपमा। अन्यथाध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तेः।

तदेवं धर्मलोपे पञ्च। उपमानलोपे द्वौ। द्योतकलोपे षट्। धर्मवाद्योर्लोपे द्वौ। धर्मोपमानयोर्लोपे द्वौ। द्योतकोपमेयलोपे चैकः। त्रिलोपे त्वेकः। इत्यूनविंशतिर्लुप्ताभेदाः पूर्णा भेदाश्च षट्। इत्येवं पञ्चविंशतिः।

---

नुक्तौ ह्युपमानलुप्तेति नोदाहरणमिदमित्यर्थः। लुप्ताभेदानुपसंहरति—**तदेवमिति**। चित्रमीमांसायां त्वन्येऽपि लुप्ताभेदा दर्शिताः। तथाहि—"वाचकलुप्ता षड्विधा इहोक्ता। 'कर्तर्युपमाने' इति णिनौ सप्तम्यपि दृश्यते कोकिल इवालपति कोकिलालापिनीति। तथा 'इवे प्रतिकृतौ' इति कन्प्रत्यये 'लुम्मनुष्ये' इति लुपि चेवेत्यर्थे 'चञ्चापुरुषः सोऽयं यः स्वहितं नैव जानाति' इत्यष्टमी। एवम् 'यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति' इत्यत्र धर्मस्य सुखमयत्वस्य पदान्तरेणोपादाने क्विपि नवमी। तथा उपमानलुप्ता वाचकसमासयोर्द्विविधोक्ता तृतीयापि दृश्यते—'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः। उपनतमेतदकस्मादासीद्वत काकतालीयम्॥' 'अत्र काकतालपदयोर्लक्षणया काकागमनतालपतनपरयोरिवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात्काक इव ताल इव काकतालमिति समासे काकतालसमागमसदृशश्चौराणामस्य च समागम इत्यर्थः। ततः काकतालमिवेति पुनरिवार्थे तेनैव सूत्रेण च्छप्रत्यये तालपतनजन्यकाकवधसदृशश्चोरकर्तृकदेवदत्तवध इति बोधः। अत्र च्छप्रत्ययार्थद्वितीयोपमायामुपमानभूतस्य तालपतनजन्यकाकवधस्यानुपादानादुपमानलुप्तेयम्। तथा प्राथमिकोपमावाचकोपमानोभयलुप्ता। इयमेव उपनतमकस्मादित्यनुक्तौ धर्मोपमानलुप्ता। एवं वाचकधर्मयो......रिव चञ्चापुरुष इति कनो लोपे धर्मानुपादाने च भवतीति द्वात्रिंशल्लुप्ताभेदः।" इति। अत्रेदं बोध्यम्—पूर्णायां साधारणो धर्मः क्वचिदनुगतः। यथा स्वप्नेऽपीत्यत्र न मुञ्चतीति। क्वचिद्वस्तुप्रतिवस्तुभावापन्नः। यथा—'यान्त्या मुहुर्वलितकंधरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या। दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः॥' इत्यत्र भिन्नाभ्यां वलितावृत्तशब्दाभ्यामेकस्य धर्मस्य बिम्बप्रतिबिम्बभावापन्नकंधरावृन्तविशेषणतयोपादानात्तथात्वम्। कंधरावृन्तयोस्तु सादृश्यादभेदेनाध्यवसानाद्बिम्बभावः। बिम्बप्रतिबिम्बभावापन्नधर्मं प्रति विशेष्यतया वस्तुप्रतिवस्तुरूपो धर्मः क्वचित्। यथा—'सा तेन जगृहे साध्वी हठात्साध्वसकम्पिता। वानरेणातिलोलेन वाताधूतेव वल्लरी॥'

नन्वन्येऽप्युपमाभेदाः संभवन्ति। तथाहि—एकस्यैवोपमेयस्य बहूपमानसंबन्धो मालोपमा। सा च द्विधा—साधर्म्यस्याभेदात्तद्भेदाच्च। तत्राद्या यथा—

'अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता।
मम्लौ सा च विषादेन नलिनीव हिमाम्भसा॥'

अत्र ग्लानिरेव सर्वोपमानसाधर्म्यम्। अन्त्या यथा—

'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी॥'

अत्र ज्योत्स्नादीनां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्नाः।

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा। सापि द्विधा—साधर्म्याभेदात्तद्भेदाच्च। तत्राद्या यथा—

'अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला॥'

---

इत्यत्र साध्वसवातयोर्बिम्बप्रतिबिम्बभावापन्नयोः कम्पिताधूतशब्दाभ्यामेको धर्मो विशेष्यतयोक्तः। एवमन्यत्रापि बिम्बप्रतिबिम्बभावसंकीर्ण एव वस्तुप्रतिवस्तुभावो न केवल। केवलबिम्बप्रतिबिम्बभावेन साधारण्यं यथा—'पाण्ड्योऽयं–' इति रघौ। अत्र हि हरिचन्दनबालातपौ हारनिर्झरौ......(संप्रति सुधांशुबिम्बमिवेत्यादौ)। क्वचित् श्लेषेण साधारण्यं यथा—'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादौ। क्वचिदुपचारेण यथा—'पङ्कजैरिव कुमारमीक्षणैर्विस्मयेन विकचैः पपुर्जना' इत्यत्र विकासस्य पुष्पधर्मस्य नेत्रेषु। समासभेदाश्रयणेन यथा—'तया विवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षु कुमुद कुमार्या। प्रसन्नचेत.सलिलः शिवोऽभूत्संसृज्यमान' शरदेव लोक॥' इत्यादावाननरूपश्चन्द्र इत्युपमेये चार्थाङ्गीकरणात्। पूर्वोक्तः श्लेष. सभङ्गोऽयं त्वभङ्ग इति भेद इति दिक्। अथोपमायां शाब्दबोधप्रकारः कथ्यते—तत्र सादृश्यं पदार्थान्तरमिति प्राचा मतम्। साधारणधर्मरूपमेव तदिति नव्यानाम्। तत्राद्यमते तावदुच्यते—तत्र चन्द्र इवाह्लादकं मुखमित्यादाविवार्थे सादृश्ये चन्द्रादेर्निरूपितत्वसंसर्गेणान्वयः। सादृश्यस्य च प्रयोजकतासंसर्गेण आह्लादकत्वादौ साधारणधर्मे पदार्थैकदेशेऽप्यनुभवबलादन्वयः तद्विशिष्टस्य चाभेदेन मुखादावुपमेये।

---

१. 'अनयेति। सा प्रकृता नायिका विषादेन मम्लौ म्लानिं प्राप्तवती। अनयादिना राज्यलक्ष्म्यादिरिवेति मालोपमा। अनयो नीतिविरहः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'ज्योत्स्नेवेति। समाकृष्टा वशीकृताः। अत्र ज्योत्स्नादिनिरूपितं नयनानन्दत्वादि साधर्म्यं भिन्नं भिन्नमिति भेद.।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'अनवरतेति। हे राजन्, अनवरत कनकस्य वितरणेन ये जललवास्तैर्भृते पूर्णे करे तरङ्गिता तरङ्गवत् श्रेणीभूय पूर्वपश्चाद्भावेन सततमिलिता अर्थिनां ततिः पङ्क्तिर्यस्य तादृशस्य तव मत्यादिर्भणित्यादिवदतिविमलेति पूर्वपूर्वस्योत्तरोत्तरमुपमानत्वाद्रशनोपमा। भणितिरुक्तिः। सर्वत्र विमलत्वमेकं साधर्म्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र विमलत्वमेव सर्वासूपमासु साधारणो धर्मः । अन्त्या यथा—

'मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥'

---

तेन चन्द्रनिरूपितसादृश्याप्रयोजकाह्लादकत्वविशिष्टाभिन्नं मुखमिति बोधः । इवाद्युक्तसादृश्यस्योपमानविशेषणत्वमते तु बोधः प्रागुक्तः । समानधर्माप्रयोगे तु सादृश्यस्योपमेय एवान्वयः । निपातार्थतया भेदेनानार्थान्वये बाधकाभावात् । चन्द्रसुन्दरमिति समासे तु चन्द्रनिरूपितसादृश्यप्रयोजके चन्द्रपदस्य लक्षणा । तस्या भेदेनार्थे पदार्थैकदेशेऽपि सौन्दर्येऽन्वयः । तदनङ्गीकारे तु चन्द्रपदस्यैव तादृशसौन्दर्यवति लक्षणेति पूर्ववदेवान्वयबोधः । चन्द्र इव भाति मुखमित्यादौ चन्द्रनिरूपितसादृश्यस्य प्रकारतासंसर्गेण धात्वर्थे भानेऽन्वयाच्चन्द्रनिरूपितसादृश्यप्रकारकभानविषयो मुखमिति बोधः । अत्रैव सौन्दर्येणेत्युक्तौ तृतीयार्थः प्रयोज्यत्वं भाने सादृश्य एवान्वेति । तेन सौन्दर्यप्रयोज्यचन्द्रनिरूपितसादृश्यप्रकारकभानविषयो मुखमिति धीः । गज इव गच्छति, पिक इव रौतीत्यादाविवार्थसादृश्यस्य धात्वर्थे गमनादावन्वयासंभवात्तस्य गमनादिकर्तर्येवान्वयः । गजसदृशो गमनानुकूलकृतिमानिति बोधः । कुतः सादृश्यस्य धात्वर्थेनान्वय इति चेत्, घटो न पश्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मतासंसर्गेणान्वयवारणाय धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधे विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वादिति तार्किकाः । अन्ये तु गजसदृशो यः स गच्छतीत्यत्रेव गज इव गच्छतीत्यत्रापि सादृश्यस्य विधेयत्वेनाप्रतीतेस्तदनुभावोपपत्त्यर्थं गजनिरूपितसादृश्यप्रयोजकगमनाश्रय इत्येव गज इव गच्छतीत्यादौ बोधः । घटो न पश्यतीत्यादावुक्तबोधापत्तिस्तु धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबुद्धिं प्रति तज्जन्योपस्थितेः प्रतिबन्धकत्वकल्पनयैव निरसनीया । वनं गज इव समरं शूरो गच्छतीत्यादौ तु गजादिपदानां गजकर्तृकगमनादौ लक्षणा । तत्सादृश्यस्य धात्वर्थगमनादावन्वयः । तेन वनकर्मकं यद्गजकर्तृकं गमनं तत्सदृशसमरकर्मकगमनाश्रयः शूर इति धीरित्याहुः । ननु सिंहतुल्यो भातीत्यत्र सिंहभानसदृशभानस्य बोधो दुर्घटः । तुल्यत्वस्य निपातभिन्ननामार्थत्वेन धात्वर्थभेदेन साक्षादन्वयायोगात् । सिंहतुल्यो यो देवदत्तः स भातीत्युद्देश्यतावच्छेदकत्वेन तुल्यत्वबोधे तु तस्य विधेयत्वं विवक्षितं न सिध्येत् । न च तुल्यपदेन तुल्यत्वप्रकारकं लक्ष्यते तच्चाभेदेन भानेऽन्वेतीति वाच्यम् । तथासति क्रियाविशेषणत्वेन नपुंसकत्वापत्तेरिति चेत्, अत्राहुः—'क्रियाव्ययविशेषणाना(?)क्लीबतेष्यते' इत्यनुशासनं सिद्धार्थानुवादकत्वात्स्तोकं पचतीत्यादिमात्रपरं न सार्वत्रिकमिति न दोष इति । धातोरेव लक्षणया सर्वार्थबोधकत्वमन्यस्य तात्पर्यग्राहकत्वमित्यपि केचित् । चन्द्रवत्सुन्दरमिति 'तेन

---

१. 'मतिरिति । तस्य नृपस्य मूर्त्यादिर्मत्यादिवन्माधुर्यादिमतीत्यन्वयः । प्रभावेण चिता व्याप्ता परेषां जेतुं न शक्येत्यन्वयः । अत्र मधुरत्वादिसाधर्म्यं भिन्नम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र मूर्खादीनां मधुरत्वादयो धर्मा भेदवन्तः । त एते भेदाः किमिति नोक्ता इति चेत्, उक्ता एव । उक्तभेदान्तर्भावात् । तथापि तेन तेन रूपेण किं नोक्ता इति चेत्, एवंविधवैचित्र्यसहस्रसंभवात्सर्वेषामाख्यातुमशक्यत्वात् ।

## उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।

### अनन्वयः

उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणैव निबध्येते सोऽनन्वयः । तदेतदुक्तं उपमानान्तरसंबन्धाभावोऽनन्वय इति बहुव्रीहि-

---

तुल्यं-' इत्यादिविहितवतेः सादृश्यवदर्थकत्वेऽपि सादृश्ये लक्षणा । तस्य सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयादिवादिप्रयोगस्थल इव बोध । लक्षणया सादृश्यबोधनात्परमार्थित्वम् । एवं चन्द्रवन्मुखमित्यादौ चन्द्रनिरूपितत्वस्यैकदेशे सादृश्येऽन्वयाच्चन्द्रनिरूपितसादृश्यवदभिन्नमिति बोध. । चन्द्रवत्सौन्दर्यमस्येतीवार्थे 'तत्र तस्येव' इति विहितवते· प्रयोगे तु चन्द्रपदस्य तत्सौन्दर्ये लक्षणया चन्द्रसौन्दर्यनिरूपितसादृश्यवन्मुखसबन्धि सौन्दर्यमिति सौन्दर्ययो. सादृश्यबोधोत्तरं तयोरभेदाध्यवसायादेकधर्ममूला पश्चान्मुखचन्द्रयोरपि सादृश्यधीरित्याहुः । अरविन्देन तुल्यं मुखमित्यत्र निरूपितत्वं तृतीयार्थ. पदार्थैकदेशसादृश्यान्वयी । अत्रैव सौन्दर्येणेत्युक्तौ प्रयोज्यत्वं तृतीयार्थस्तत्रैवान्वेति । मुखमरविन्दं च सममित्यत्र प्रथमं शब्दादुभय सदृशमिति बोधे पश्चान्मानसी वैयञ्जनिकी वा परस्परनिरूपितसादृश्यप्रतीति· । प्रसिद्धनिरूपितसादृश्यस्य वा 'पाण्ड्योऽयमंस—' इत्यादि बिम्बप्रतिबिम्बभावस्थले तु हारहरिचन्दनविशिष्टो राजा बालातपनिर्झरविशिष्टपर्वतसदृश इति बोधोत्तरं सादृश्यप्रयोजकधर्माकाङ्क्षायां बालातपाद्युपमानोपमेयधर्माणां सादृश्यमूलाभेदाध्यवसानेन साधारणधर्मत्वसिद्धि । हारहरिचन्दनाभ्यामुक्तरूपाद्रिरिव राजेत्युक्तौ प्रयोजकत्वतृतीयार्थः सादृश्यान्वयी । उक्तरीत्या सादृश्यस्य तत्प्रयोज्यत्वादिति दिक् । सादृश्यस्य समानधर्मरूपत्वे तु चन्द्र इव सुन्दरं मुखमित्यादौ चन्द्रवृत्तिसमानधर्माभिन्नसौन्दर्यवदभिन्नं मुखमिति धी· । चन्द्रसुन्दरमिति समासे तु चन्द्रपदस्य तद्वृत्तिसमानधर्मवन्मुखमिति धी । एवं तुल्यादिपदोपादानेऽप्यूह्यम् । एवं क्यजादावप्युपमानपदानां तत्सादृश्ये लक्षणा । तस्य च प्रयोजकतया अभेदेन वा क्यजाद्यर्थाचारविशेषत्वं स चोपमेये आश्रयतयान्वेतीत्यलम् । इत्युपमालंकार· ॥ १ ॥ ननु 'पितुर्नियोगाद्वनवासमेवं निस्तीर्य राम प्रतिपन्नराज्य । धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिम् ॥' इत्यत्रैकस्यैव रामस्योपमानत्वमुपमेयत्वमेकवाक्यगतमस्तीत्यतिव्याप्ति । वृत्तिसाम्यमात्रस्यैव प्रतिपाद्यतया सदृशान्तरव्यवच्छेदाप्रतीतेरिष्टापत्त्यसभवात् । अत आह— **उपमानान्तरेति** । एवं च तत्रैतत्फलाभावान्नातिव्याप्तिरिति भाव. । उक्तार्थस्य प्रकाशारूढत्वं दर्शयति—**तदेतदिति** । कथमनेनोक्तार्थलाभस्तत्राह—**बहुव्रीहीति** । उपमानान्तरसबन्धस्याभावो यत्रार्थाद्गम्यते इत्यर्थात्तल्लाभ इति भाव. । एवं तु सति एकवाक्यगत इत्यस्य वैयर्थ्यम् । उपमेयोपमादेरुक्तविशेषणेनैव व्यावृत्तेरत

समासात्। यद्वा संज्ञायोगनिर्वचनं तत्। अनन्वयः संबन्धाभावः। स चार्थादुपमानान्तरेण उपमेयभिन्नेनेति। एवकारो वैचित्र्यविशेषस्फोरणार्थः। एकवाक्यगे इति विपर्यासोपमाव्यावर्तनाय। तत्र हि वाक्यद्वये तथाभावः। उदाहरणम्—

'न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।
यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः॥'

अत्र दशाविशेषादिभेदाद्भेदोपचारः।

**विपर्यास उपमेयोपमा तयोः॥ ५॥**

तयोरुपमानोपमेययोर्विपर्यास उपमेयोपमानभावः। अर्थाद्वाक्यद्वये। एकवाक्ये तथासंभवात्। मुखमिव चन्द्र इत्यस्य निन्दाभिव्यक्तौ प्रतीपरूपत्वात्।

---

आह—**यद्वेति**। एवं च नैतल्लक्षणान्तर्गतं किं तु संज्ञाप्रवृत्तिनिमित्तकथनमिति नोक्तदोष इति भावः। कथं तर्हि 'पितुर्नियोगात्—' इत्यादावतिव्याप्तिवारणमिति चेत्, तत्र वृत्त्योरेव साम्यविवक्षणान्न तु रामेणैव रामस्येत्याशयात्। यत्र तु—'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम्। दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये॥' इत्यादौ शेखरादेरेकस्यैवोपमानोपमेयत्वं बिम्बप्रतिबिम्बभावापन्नधर्मेण 'पाण्ड्योऽयं—' इत्यादिवदानुभविकम्। तत्रावस्थाभेदमवेक्ष्य तात्पर्यविषयसाम्योक्तेर्नातिव्याप्तिः। एकस्यैवेत्येवकारेण देशकालादिभेदेन तात्पर्यम्। विषयत्वव्यवच्छेदस्य प्रत्ययात्तस्य च लक्षणे प्रवेशात्। तदाह—**एवकार इति**। वैचित्र्यमितरालंकाराद्विशेषो निरपेक्षतारूप इत्यर्थः। **विपर्यासेति**। उपमेयोपमेत्यर्थः। तत्र विपर्यासोपमायाम्। तथाभाव। उपमानोपमेयभाव. एकस्यैव कथमुपमानोपमेयभाव इत्यत आह—**अत्रेति**। एवं सति 'लोहितपीतैः—' इत्यादितः कोऽत्र विशेष इति चेत्, अयं विशेषः—यत्तत्रावस्थाभेदोपादानेन साम्यबोधने तात्पर्यं न त्वत्र। किं तु स्तुतिपरार्थवादवाक्यार्थवदतात्पर्यविषयीभूतं साम्यमनौपम्यपरमिति। **तयोरिति**। अनेन च 'भणितिरिव मतिः—' इत्यादि रशनोपमाव्यावृत्तिः। तत्रोपमेयाया मतेरेवोपमानतारूपविपर्यासेऽपि भणितेरुपमानभूताया उपमेयत्वरूपतदभावात्। **असंभवादिति**। न च मुखमरविन्दं च परस्परेण सममित्यादावेकवाक्येऽप्युपमेयोपमास्त्येवेति कथमसंभव इति शङ्क्यम्। तत्राप्यरविन्देन मुखं समं मुखेन चारविन्दमित्यर्थतो वाक्यभेदसत्त्वादित्याशयात्। नन्वेवं सति मुखमिव चन्द्र इत्यत्रोपमेयोपमाया अभावात्कथमलंकारः स्यादत आह—**मुखमिवेति**। ननु 'रजोभिः स्यन्दनोद्धूतैः' इति

---

१. 'न केवलमिति। एवकारो भिन्नक्रमः। सा नितम्बिन्येव केवलं नितम्बिनीव नितान्तकान्तिर्भातीति न। यावत्। अपिस्त्वर्थे। तेऽनुभवैकगोचरास्तस्या विलासास्तद्विलासा इव भान्तीति वचनविपरिणामेनान्वयः। कीदृशा विलासाः। विलासायुधस्य

उपमेयोपमेति यौगिकी संज्ञा । विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थः । उदाहरणम्—

'कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥'

## संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।

समेनेत्यत्र सह एकरूपतयेति शेषः । तेन प्रकृतस्य संभविनोऽर्थस्य समेनासंभविना सहैकरूपतया यत्संभावनं तदुत्प्रेक्षालंकार इत्यर्थः । सा चेयं हेत्वादिसंभावनाभेदाद्बहुप्रकारा । तत्र हेतूत्प्रेक्षा यथा—

'उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।

---

रघुचतुर्थसर्गे, 'सविता विधवति विधुरपि सवितरति–' इत्यादावतिव्याप्तिः । तृतीयसदृशव्यवच्छेदाप्रतीत्या तत्रोपमेयोपमात्वानङ्गीकारात् । अत आह— **विपर्यासश्चायमिति** । व्यवच्छेदार्थ इत्यनन्तरं लक्षणे विवक्षित इति शेषः । तथा चोपमानान्तरव्यवच्छेदफलक उपमानोपमेययोर्विपर्यास इति लक्षणं सुस्थमिति भावः । इत्यनन्वयः ॥ २ ॥ उपमेयोपमा च ॥ ३ ॥ उत्प्रेक्षालक्षणार्थं दर्शयति—**तेनेति** । यथोक्तशेषपूरणेनेत्यर्थ. । 'हृतसारमिव–' इत्यत्र नैषधीयद्वितीयसर्गे संभावनाविषयस्य चन्द्रस्याप्रकृतत्वादाह—**संभविन इति** । स्वत·सिद्धस्य विषयस्येत्यर्थः । समेनेत्यस्योपमानेनेत्यर्थे उक्तव्याप्तितादवस्थ्यमतस्तदर्थमाह— **असंभविनेति** । असंभावितेनार्थेनेत्यर्थः । आरोप्येणेति वक्तव्ये संभावनाया आहार्यत्वसिद्ध्यर्थमसंभविनेत्युक्तम् । तदर्थश्चासंभवित्वेन ज्ञातत्वम् । तेन 'विरक्तसंध्या–' इति रघुचतुर्दशसर्गपद्ये (इत्यत्र) नातिव्याप्ति । एकरूपतया अभेदेन । संभावनमुत्कटोपमानकोटिकसंदेहविषयीकरणम् । तेन संदेहेनातिव्याप्तिः । एतच्च सादृश्यहेतुकत्वेन विशेषणीयम् । तेन 'वदनकमलेन बाले स्मितसुषमालेशमावहसि । जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥' इत्यादौ नातिप्रसङ्ग इति संक्षेपः । **हेत्वादीति** । आदिना फलस्वरूपयोः परिग्रहः । हेतुफलभिन्नं स्वरूपशब्दार्थं ।

---

क्रामस्य लासो नृत्य तस्य वासा निवासभूताः । नितम्बिनी सैव नितम्बिनीव । तन्मात्रनितम्बिनीसदृशीति वार्थः । तेन स्फुटतया व्यक्त्यैक्यलाभः । एव च तत्रैव तदुपमानेनान्वेतीत्यनन्वयोऽलंकारः । तत्फलं च निरुपमत्वबोधः ।' इत्युदाहरणचन्द्रिकासंक्षेप..

१. 'कमलेवेति । कमला लक्ष्मी । विभा कान्तिः । धृतिर्धैर्यम् । बत हर्षे । यस्य राज्ञो मतिकलादिकमन्योन्यसदृशं विभातीति निर्गलितान्वय· । सेय तृतीयसदृशव्यवच्छेदफला उपमेयोपमा ।' इत्युदाहरणचन्द्रिकासंक्षेप'. २. 'उन्मेषमिति । हे ललिततनु' पद्मलक्ष्मीः मन्ये इति हर्षात्तव पादयोर्लग्नेति सबन्धः । तेन हर्षरूपहेतूत्प्रेक्षेयम् । इति किम् । यो मम पद्मलक्ष्म्या जातिवैरी सहजशत्रुर्निशायामुन्मेषमुदय न सहते तस्येन्दोः

नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥'

अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वता-दात्म्येन संभावितम्। स्वरूपसंभावनं यथा—

'लिम्पतीव तमोऽङ्गानि किरतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥'

अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया संभावितमिति स्वरूपोत्प्रेक्षेयम्। अत एव 'तमसो लेपनकर्तृत्वमत्रोत्प्रेक्ष्यम्' इत्यलंकारसर्वस्वकारमतमपास्तम्। विवक्षितविवेकेन लेपनमात्रस्यैवोत्प्रेक्षणात्। एवं फलाद्युत्प्रेक्षाप्यूहनीया।

## ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ६ ॥

---

ननु 'उन्मेषं–' इत्यादौ हर्षस्य हेतुत्वेन लगने संभावनं न त्वभेदेनेति कथमुक्तलक्षणसमन्वयस्तत्राह—**अत्रेति**। अत्र लग्नत्वस्य तादात्म्येन संभावनोक्तिः फलतः पर्यवसानाभिप्राया। तस्य पदार्थैकदेशत्वात्। किं तु स्वभावलग्नायां हर्षहेतुकलग्नाया अभेदेन संभावनं बोध्यम्। हेतूत्प्रेक्षाव्यपदेशोऽपि पर्यवसानत एव। दध्ना जुहोतीत्यस्य दधिविधित्वव्यपदेशवदित्यूह्यम्। एवम् 'चोलस्य यद्भीतिपलायितस्य भालत्वच कण्टकिनो वनान्ताः। अद्यापि किं वानुभविष्यतीति व्यापाटयन्द्रष्टुमिवाक्षराणि ॥' इति फलोत्प्रेक्षायामपि स्वाभाविके कण्टककर्तृकव्यापाटने ललाटाक्षरदर्शनफलकपाटनतादात्म्यसंभावनमिति लक्षणसमन्वयो द्रष्टव्य इति दिक्। ननु 'लिम्पतीव–' इत्यत्र तमोव्यापनस्यानुपादानात्कथं तत्र तादात्म्येन लेपनसंभावनेत्यत आह—**अत्रेति**। गम्यमानं व्यञ्जनया प्रतीयमानम्। उत्प्रेक्षायाश्चाध्यवसानगर्भत्वाद्विषयस्यानुपादानेऽपि न दोष इत्यप्याहु'–**अत एवेति**। प्रकाशग्रन्थादेवेत्यर्थः। युक्तिमप्याह—**विवक्षितेति**। तथा च विवक्षितस्यैव साक्षादुत्प्रेक्षासंभवेन तत्कर्तृकत्वानुधावनं न युक्तमिति भावः। नव्यास्तु "अस्यां मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली। नानारदाह्लादिमुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥' इति नैषधीयपद्ये मोहनरूपधर्मस्याधारतासंबन्धेन मुनिषूत्प्रेक्षादर्शनादभेदेनैवोत्प्रेक्षेति नियमो न युक्तः। न च मुनिगतधर्मविशेषे मोहस्याभेदेनोत्प्रेक्षितकल्पना युक्ता। अनुभवविरोधात् लक्षणानुगमानुरोधेनानुभवबाधायोगात्। एवं च लिम्पतीवेत्यत्रापि तमसि लेपनकर्तृत्वोत्प्रेक्षैव युक्ता। आख्यातार्थकर्तृत्वस्य प्रथमान्तपदोपस्थाप्येऽन्व-

---

सौन्दर्यगर्वोऽनया इन्दीवरदलदृशा कर्तृभूतया वक्त्रकान्त्या करणभूतया प्रसभ बलाच्छान्तिं नीत इति।' इत्युदाहरणचन्द्रिकासंक्षेपः।

१. 'लिम्पतीति। गाढान्धकारवर्णनमिदम्। तमः कर्तृ अङ्गानि लिम्पतीवेति व्यापनस्य लेपनत्वेनोत्प्रेक्षा। एवं नभःकर्तृकाञ्जनवृष्टित्वेनापीति।' इत्युदाहरणचन्द्रिकासंक्षेपः।

भेदो वैधर्म्यम् । संशयस्तु कविप्रतिभानिर्मित एवालंकारो न तु स्वारसिकः स्थाणुपुरुषादिविषयो वा । वैचित्र्याभावात् । अत्र संशयः ससंदेह इति लक्षणम् । भेदोक्तौ तदनुक्तौ चेति विभागः । तत्र भेदोक्तौ यथा—

> 'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
> कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
> कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
> समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥'

अत्र मार्तण्डत्वादीनां संदेहे सप्ततुरगत्वादीनि वैधर्म्याणि तद्बाधयोग्यानि । न चायं व्यतिरेकालंकारः । तस्य संदेहानुयायितया तेनैव व्यपदेशौचित्यात् ।

---

यस्य व्युत्पत्तिसिद्धत्वात् । किं च निर्णीते व्यापने ऽप्युत्प्रेक्षाङ्गीकारे तस्या विधेयत्वेन प्रत्ययो न स्यात् । उद्देश्यस्य पृथक्पदानुपात्तत्वात् । इवशब्दान्वितस्योत्प्रेक्षाया उत्सर्गसिद्धत्वाच्च । तस्मात्स्वरूपोत्प्रेक्षा द्विविधा धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चेत्याहु । अथोत्प्रेक्षायामन्वयबोधप्रकारोऽभिधीयते—तत्रोत्प्रेक्षायां पञ्चम्यर्थो हेतु । तत्र प्रकृत्यर्थहर्षादेरभेदेनान्वय । हेतोश्च प्रयोज्यतासंसर्गेण लगने तस्य चाभेदेन स्वाभाविके लगने संभावनं प्राचां मते । तेन हर्षहेतुकलगनताद्रूप्यसंभावनाविषय पादयोः पद्मशोभालगनमिति बोध' । नव्यनये तु हेतोरेव प्रयोज्यतासंसर्गेणोत्प्रेक्षणाद्धर्षहेतुप्रयोज्यमिव लक्ष्मीलगनमिति बोध' । एवं द्रष्टुमिवाक्षराणीति फलोत्प्रेक्षायामभेदेन प्रकृत्यर्थान्वितस्य तुमुनर्थफलस्य साधनत्वसंसर्गेण पाटनेऽन्वयात्तस्य च स्वाभाविके तादात्म्येन संभावनात्कूटाक्षरदर्शनाभिन्नफलकपाटनाभिन्नमिवैतत्पाटनमिति बोध । नव्यनये तु फलस्यैव साधनत्वं संसर्गेणोत्प्रेक्षणमिति दर्शनफलकमिव पाटनमिति बोधः। एवमन्यत्राप्यूह्यम् । इत्युत्प्रेक्षालंकार ॥४॥

अत्रेति । ससंदेह इति लक्ष्यनिर्देशः । संशय इति लक्षणम् । अत्र च प्रकृतस्य समेनेत्यनुवर्तते । तथा च प्रकृतविषयसमकोटिक संशय. ससंदेहाख्योऽलंकार इत्यर्थ. । समेनेत्यनेन सादृश्यप्रयोज्यत्वलाभात् 'अमुष्य धीरस्य जयाय साहसी तदा खलु ज्या विशिखैः सनाथयन् । निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥' इत्यादौ नातिव्याप्ति' । स्थाणुर्वा पुरुषो वेत्यादिसंशयस्य तु सादृश्यप्रयोज्यत्वेऽपि कविप्रतिभेत्यादिना चमत्कारित्वोक्तेस्तदभावादेव नातिव्याप्तिरिति ज्ञेयम् । अत्र समेनेत्यनेन सादृश्यस्येव समानकोटिकत्वस्यापि लाभादुत्प्रेक्षाव्यावृत्ति । **न चायमिति** । असंख्यतुरगयुक्तत्वादिना राज्ञो मार्तण्डाद्यु-

---

१. 'अयमिति । हे राजन्, त्वामाजौ रणे चिरं निपुणं समालोक्य प्रतिभटा शत्रव इति विकल्पान्संशयान्विदधति कुर्वन्तीत्यन्वय. । चिरं विदधतीति वा । 'तिरः' इति पाठे तिर्यगित्यर्थ. । तेन त्रासध्वननम् । इति कीदृक् । तत्राह—अयमित्यादि । इत' युक्त । एष कृशानुर्नियतं निश्चितं सर्वा दिशो न प्रसरतीत्येव वैधर्म्योक्तिघटितो मार्तण्डत्वादिसंशयः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

ननु भट्टोद्भटेन भेदोक्तौ निश्चयगर्भ एवायं स्वीकृतो न तु निश्चयान्तोऽपि तत्किमस्यापि स एव पन्थाः । नेत्युच्यते । कुत एतत् । भेदोक्ताविति विभजनात् । निश्चयान्तस्यापि तत्संभवात् वैचित्र्यानुभवाच्च । यथा—

'इन्दुः किं क कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥'

तत्किं भट्टोद्भटेनायमुपेक्षितः । प्रतीयमानवद्वाच्ये तादृग्वैचित्र्याभावादिति गृहाण । भेदानुक्तौ यथा—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

अत्र शङ्क्यमानस्य प्रजापत्यादेः कस्यापि न वैधर्म्यमुक्तम् ।

**तद्रूपकमभेदो य उपमानोपमेययोः ।**

अभेदोऽभेदारोपः । बीजं तु तत्रातिसाम्यम् । अभेदश्चात्रानपह्नुतभेदयोर्वि-

---

पमानेभ्य आधिक्योक्तेरिति भावः । परिहरति—**तस्येति** । प्रथमतः संदेहप्रतीतेरनन्तरं च वैधर्म्योपन्यासेन व्यतिरेकप्रतीतावप्युपजीव्यत्वात्संशयचमत्कृतावेव पर्यवसानमित्यर्थ । **अस्यापीति** । प्रकृतसूत्रकर्तुरपीत्यर्थः । **प्रतीयमानवदिति** । निश्चयगर्भे हि वैधर्म्योक्त्या निश्चयो व्यङ्ग्य· निश्चयान्ते तु स वाच्य इति चमत्कारापकर्षादुपेक्षित इत्यर्थः । **अत्रेति** । प्रजापत्यादेरित्यादिपदेन चन्द्रादिपरिग्रहः । अत्र हि चन्द्रादौ प्रजापतिसदेह इति दीक्षिता । एतत्प्रजापतौ चन्द्रादिसंदेह इत्यन्ये । उभयथापि वैधर्म्यानुक्तिरित्यर्थ· । इति सदेहालंकार· ॥ ५ ॥ **अभेदारोप इति** । अभेदेन सामानाधिकराण्येनारोप इत्यर्थ· । सारोपलक्षणयोः सामानाधिकरण्येन प्रतिपादनमिति यावत् । तदुक्तम्—'यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात् । उपमेये भवेद्वृत्तिस्त(दा त) द्रूपकं भवेत् ॥' इति । अलंकारभाष्यकारोऽपि लक्षणापरमार्थं यावता रूपकमित्याह । अतिसाम्यं धर्मबाहुल्यम् । तुशब्देन च वृत्तौ तस्य निमित्तत्वमात्रेणोक्तिर्न तु लक्षणाघटकतयेति ध्वनितम् । उपमानोपमेययो-

---

१. 'इन्दुरिति । अत्र इति प्राक्सदिग्धमिति पूर्वार्धशेषो बोध्य । ललितानि च तानि सविलासानि चेति विग्रह· । परत पश्चात् ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'अस्या इति । विक्रमोर्वशीये उर्वशीं प्रकृत्य पुरूरवस इयमुक्ति· । अस्या· सर्गविधो यः प्रजापतिरभूत्स कान्तिप्रदश्चन्द्रो नु इत्येव चन्द्रत्वादिकोटिकः सशय· । पुष्पाकरो मासो मधुमासः । सदेहे कारणमाह—वेदेत्यादि । विषयेभ्यो व्यावृत्त कौतूहल यस्य स पुराणो मुनिर्ब्रह्मा ( नारायणः ) इद रूप कथ नु निर्मातु प्रभवेदित्यन्वय' । तथा च साधारणरूपसंभवात्सदेह इति भावः ।' इत्युदाहरणचन्द्रिकासंक्षेपः

वक्षित इति नापह्नुतावतिव्याप्तिः । तदेतद्द्विविधम्—सावयवं निरवयवं च । तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति च । द्वितीयं तु शुद्धमात्रमित्यार्थे विभागे लक्षणमाह—

**समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ७ ॥**

आरोपिता आरोप्यमाणाः । ते सर्वेऽपि यद्यारोपविषयवच्छाब्दा एव भवन्ति तदा समस्तवस्तुविषयं नाम रूपकम् । समस्तं वस्तु आरोप्यमाणं विषयः शब्दप्रतिपाद्योऽत्रेति व्युत्पत्तेः । आरोपिता इति बहुवचनमविवक्षितमित्यारोप्यद्वयस्थले नाव्याप्तिः । उदाहरणम्—

'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥'

अत्र पादत्रये ज्योत्स्नादिषु भस्मत्वादिकमारोप्यमाणं सर्वं शाब्दम् । नन्विदं रूपकोदाहरणं न युज्यते । साधकबाधकाभावेन रूपकोपमयोः संदेहात्संदेहलक्षणसंकरौचित्यादिति चेत्, भवेदेवम् यद्यन्तर्धानव्यसनरसिकत्वं विशेषणं न स्यात् । तद्धि रूपकपरिग्रहे साधकम् । कापालिक्यां तत्संभवाद्रात्रावसंभवाच्च । उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यात् ।

---

रित्यनेनैव हेतुहेतुमतोरभेदोक्तौ कोकिलानन्दो वसन्त इत्यादावतिप्रसङ्गप्रसङ्गात् । सारोपेत्यादिना चातिशयोक्तिव्यावृत्ति । **अपह्नुतभेदयोरिति** । भेदो वैधर्म्य मुखत्वादि । एतच्चोपमापदस्योपमेयतावच्छेदकविशिष्टपरत्वादेव लभ्यत इति ज्ञेयम् । अथवा गौणसारोपलक्षणामूलव्यङ्ग्यरूपोऽभेदारोप एव रूपकमस्तु । उपमातो वैचित्र्यस्य तत्प्रयुक्तत्वात् । यत्कृत वैचित्र्यं तस्यैवालंकारत्वौचित्यात् । व्यङ्ग्यस्यापि वाच्योत्कर्षकत्वेनालकारान्तर्भावस्याप्रस्तुतप्रशंसानन्वयोपमेयोपमादावङ्गीकारात् । परम्परितरूपके 'नियतारोपणोपाय स्यादारोप. परस्य यत्' इत्यारोपपदस्य प्रयोगाच्च 'उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम्' इति वामनसूत्राच्च 'भ्रमिमरतिमलसहृदयता' इत्यादौ हालाहलरूपं व्यङ्ग्य वाच्यस्य भुजगरूपणस्य सिद्धिकृदिति ग्रन्थे रूपकस्य वाच्यत्वोक्तिस्तु वाच्यायमानत्वाभिप्राया साधारणगुणाना तत्प्रतियोजकाना रूपकपदेनोपादानाद्वोपपादनीयेति दिक् । **तदेतदिति** । परम्परि-

---

१. 'ज्योत्स्नेति । इय रात्रिरेव कापालिकी योगिनीति प्रधानरूपकम् । एतन्निर्वाहकाव्यपराणि विशेषणानि । चन्द्ररूपे मुद्राकपाले न्यस्त लाञ्छनस्य च्छलेन सिद्धाञ्जनस्य परिमल चूर्ण दधती धारयन्ती । दीक्षाकालगृहीतोपकरणेषु मुद्रोपनाम्ना पाखण्डाना व्यवहारः इति चण्डीदासः । मुद्रापरिमलशब्दौ प्रशसार्थावित्यन्ये । मुद्रा चिह्न तद्रूपे कपाल इति वा । ज्योत्स्नारूपेण भसना छुरणमङ्गलेपस्तेन धवला । तारकारूपाण्यस्थीनि बीभ्रती । अन्तर्धानस्य व्यसने कौतुके रसिकेति ।' इत्युदाहरणचन्द्रिकासक्षेपः.

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्।**

ते इत्यारोपिताः। तथा च यत्र केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेयास्तदेकदेशविवर्ति। एकदेशे विशेषेण वर्तत इति व्युत्पत्तेः। उदाहरणम्—

'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम्।
रससंमुहा वि सहसा परम्मुही होइ रिउसेणा॥'

अत्र रणेऽन्तःपुरत्वमारोप्यं शाब्दम्। मण्डलाग्रलताया नायिकात्वं रिपुसेनायाः प्रतिनायिकात्वं चारोप्यं न शाब्दम्। किं त्वन्तःपुरत्वारोपसामर्थ्यादेवावसीयते। अन्यथा तस्यापर्यवसानात्। अत एकदेशे विशेषेण वर्तनादेकदेशविवर्ति।

**साङ्गमेतत्**

साङ्गं सावयवम्। एतदुक्तप्रकारद्वयवदित्यर्थः। साङ्गत्वमनेकरूपकसमुदायः। एकस्मिन्रूपके द्वितीयस्याङ्गत्वेनावस्थानात्। अङ्गशब्दस्य हेत्वर्थत्वात्।

**निरङ्गं तु शुद्धं**

निरङ्गमद्वितीयम्। तच्छुद्धमेवेत्यर्थः। यथा—

'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु य-
त्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।

---

तरूपकभेदस्य श्लेषमूलस्य शब्दार्थोभयालंकारत्वात्तद्विभागानुक्तिः। 'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्। रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥' मण्डलाग्रः खड्गः स एव लताकारत्वाल्लता। रसो वीरः शृङ्गारश्च। **अन्यथेति**। नायिकात्वारोपं विना तस्याः पुरत्वारोपतस्यापर्यवसानादनुपपन्नत्वादित्यर्थः। **समुदाय इति**। परस्परापेक्ष इति शेषः। यथाश्रुते मालारूपकेऽपि तत्त्वापत्तेः। तत्रानेकेषामपि रूपकाणां परस्परानपेक्षत्वात्तद्व्यावृत्तिः। अयमर्थोऽङ्गशब्दादेव लभ्यत इत्याह—**एकस्मिन्निति**। नन्वेकदेशित्वरूपमङ्गत्वं मालायामपि प्रत्येकमस्तीत्याशङ्कानिरासायाह—**अङ्गशब्दस्येति**। असाङ्गस्यैव शुद्धस्य। पूर्वेशा-

---

१ 'मण्डलाग्रलता खड्गलताम्। करे कुर्वतो धारयतः। युद्धार्थं रतार्थं च। अन्तःपुरत्वारोपसामर्थ्याल्लताया नायिकात्वावगमात्। रसेन वीररसेन शृङ्गारेण च। समुखी युयुत्सुरिरंसुश्च। पराङ्मुखीभवति भयाद्युद्धान्निवर्तते कोपात्प्रियसंगमाच्च। इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'यद्यस्माद्गीतध्वनिषु सत्सु अङ्गानि स्तिमितयति निश्चेष्टानि करोति। तथा श्रुतमपि कान्तस्योदन्तं वृत्तान्तं सखीं प्रति पुनः प्रश्नविषयं करोति। यस्माच्चानिद्रं नेत्रमुद्रणादिशून्यं यथा स्यात्तथा अन्तः स्वपिति। कान्तैकतानान्तःकरणतया विषयान्न गृह्णाति। अहो इति संबोधने। हे सखि, तत्तस्मान्मनसिजः अस्या हृदि उद्गतमिति शेषः। अभिनवां प्रेमरूपां लतिकां सेक्तुं प्रवृत्त इति वेद्मीत्यन्वयः। अभिनवेति सेकौचित्यसूचनम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥'

अत्र प्रेममात्रे लतिकात्वारोपः ।

अथ साङ्गस्यैव वैचित्र्यान्तरमाह—

**माला तु पूर्ववत् ॥ ८ ॥**

यथैकत्र बहूपमानयोगे मालोपमा तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः ।

यथा—

'सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मवचसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥'

**नियतारोपणोपायः स्यादारोपः परस्य यत् ।**
**तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ८ ॥**

नियतस्य मुख्यस्यारोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यामुख्यस्यारोपस्तत्परम्परितम् । रूपणानां कार्यकारणभावरूपा परम्परा संजाताऽत्रेति योगाविति केचित् । वस्तुतस्तु नियतमारोपणमुपायो यत्र । आरोपणं येना यदारोपण न संभवत्येवेति यावत् । एवंभूतः परस्यान्यस्यारोपः स तथा । एवं चैकरूपणानन्तरं परम्परितम् । कार्यकारणभावरूपा परम्परा संजातात्रेति व्युत्पत्तेः । श्लिष्ट इत्यादि । तदेतद्द्विविधम् । उपायभूते रूपके आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वाद्भिन्नरूपत्वाच्चेत्यर्थः । तत्राद्यं यथा—

'विद्वन्मानसहंसवैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर ।

---

च्छेदेनोपमापरामर्श इत्याह—**यथेति** । एतदेव सूत्रं सूत्रवृत्तिकृतोरेकत्वे ज्ञापकम् । मालोपमाया सूत्रानुक्ताया वृत्तावेव कथनादित्याहु. । **केचिदिति** । अत्र च सावयवरूपकस्यापि परम्परितत्वप्रसङ्गेऽस्वरस इत्यत स्वयं तदर्थमाह—**वस्तुतस्त्विति** । **एवं चेति** । एकरूपणानन्तरं रूपकमिति शेष । सावयवे तु ज्योत्स्नाभस्मेत्यादौ

१. 'सौन्दर्यस्येति । तरङ्गिणी नदी । सौन्दर्यस्य तरङ्गवत्त्वावगमेनोत्तरोत्तरविच्छेदलाभः । हर्षोद्गमश्च योग्यस्थानलाभात् । कार्मणकर्म वशीकरणम् । नर्मरहसा ( वचसा ) क्रीडारहस्यानामुल्लासनाया जृम्भणस्य वासस्थानम् । वक्रोक्तीना विद्या शिक्षाशास्त्रम् । विधेर्ब्रह्मणो निरवधिनिपुणताया साक्षात्कारः । सा प्रियेत्येकस्या प्रियाया बहूनामारोपान्मालारूपकम् । पञ्चशिलीमुख कामः ।' इत्युदाहरणचन्द्रिकासक्षेप . २. 'य आरोपः' क. ३ 'चैकरूपणहेतुक रूपणान्तर' ग. ४. 'रूपे' क. ५. 'विद्वदिति । हे वरवीर प्रभो, त्व वैरिवृन्दं माहृय वत्सरशतमुच्चैः साम्राज्य क्रिया इत्याख्यातपदम् । कीदृश ।

सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥'

अत्र विदुषां मानसं मानसं सरोविशेष इत्यारोपहेतुकं राज्ञो हंसत्वारोपणम्। तत्र चारोपविषयारोपणीययोर्हृदयसरोविशेषयोः श्लेषवता मानसशब्देनैवाभिधानम्। एवमग्रेऽपि। तत्र वैरिकमलायाः संकोच एव कमलानामसंकोचः। दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्। समितां स्वीकार एव समिधां स्वीकारः। सत्ये प्रीतिरेव सत्यामप्रीतिः। विजयः परपराभव एव विजयोऽर्जुनः। एवमारोपहेतुकं सूर्याद्यारोपणमिति। ननु श्लेषस्य शब्दपरिवृत्त्यसहतया शब्दालंकारत्वमित्युक्तं वक्ष्यते च। तथा च श्लेषपरम्परितमुभयालंकारो युज्यत इति तदवसर एव वक्तुमौचित्यात्किमित्यर्थालंकारमध्ये पठित इति चेत्, सत्यमेतत्। तथापि श्लेषापवादकं रूपकमित्यलंकारसर्वस्वकारादिप्रसिद्ध्यनुरोधेनोक्तः। तथा प्रसिद्धौ किं बीजमिति चेत्, मानसत्वादीनामार्थत्वम्। इदं हि तैरेकदेशविवर्ती-त्युच्यते। द्वितीयं यथा—

'आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।

---

ज्योत्स्नादिषु भस्माद्यारोपाभावेऽप्यनेकद्वीपभ्रमणादिप्रसिद्धसादृश्येन रात्रौ कापालिकीत्वारोपसम्भवान्न परम्परितत्वप्रसङ्ग इति भावः। उक्तं नवम इत्यर्थः। वक्ष्यते चाग्र इत्यर्थः। तदवसरे उभयालंकारप्रस्तावे। **मानसत्वादीनामिति**। सरोविशेषत्वादीनामित्यर्थः। आदिना कमलविकासित्वादिसंग्रहः। आर्थत्वमर्थगम्यत्वम्। खड्गलताया इव नायिकात्वमित्यर्थः। नन्वेकदेशविवर्तित्वं सावयवस्यैव भेदो न तु परम्परितस्येत्याशङ्क्याह—**इदं हीति**। मूले इदमपीत्यन्वयः। एकपदोपस्थितयोरन्तःकरणसरोविशेषयोरभेदाध्यवसायेऽपि नैकत्रापरारोपः। तस्य भेदेन विषयनिर्देशापेक्षत्वात्। अन्यथा विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात्। तस्मादार्थ एवायमारोप इत्येकदेशविवर्तित्वमत्रापि युक्तमिति। स्वमते त्वभिधामूलव्यञ्जनोपस्थि-

---

विदुषां मानसमेव मानसं सरस्तत्र हंसरूपेति हंसत्वारोपे श्लेषबलान्मनसि सरोविशेषारोपस्य हेतुत्वात्परम्परितरूपकम्। एवमग्रेऽपि। वैरिकमलायाः संकोच एव कमलानामसंकोचस्तेन दीप्तद्युते सूर्य। दुर्गाणाममार्गणमेव दुर्गाया मार्गणमन्वेषणं तेन नीललोहित शिव। समितां सङ्ग्रामाणां स्वीकार एव समिधां स्वीकारस्तेन वह्ने। सत्ये प्रीतिरेव सत्या दक्षकन्याया अप्रीतिस्तद्विधाने कुशल एव दक्षप्रजापतिरूप। विजयः परपराभव एव विजयोऽर्जुनस्तत्प्राग्भावः प्राक्सत्त्वमग्रजत्वं च तेन भीम भीषण भीमसेन चेति।' इत्युदाहरणचन्द्रिकासंक्षेपः।

१. 'आलानमिति। जय एव कुञ्जरो हस्ती तस्यालानं बन्धनस्तम्भ इति। भुजे आलानत्वारोपे जये कुञ्जरत्वारोपो हेतुः। एवमग्रेऽपि। विपद्रूपसमुद्रस्य पाषाणसेतुः। तदुत्तारणक्षमत्वात्। करवालः खड्ग एव चण्डमहाः सूर्यस्तस्य पूर्वाद्रिरुदयाचलः। लीला सुखस्वापस्तत्रोपधानं शिरोनिधानं तूलपटः। सङ्ग्राम एवामृतसागरः। वीराणां वैरिणां या वनितास्तासां वैधव्यपदः।' इत्युदाहरणचन्द्रिकासंक्षेपः।

सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥'

अत्र जयादेर्भिन्नशब्दवाच्यकुञ्जरत्वा(द्या)रोपे सति भुजे आलानत्वाद्यारोपो युज्यते । इदमुदाहृतभेदद्वयं परम्परितमालारूपम् । अमालारूपमपि तद्द्रष्टव्यम् । तत्र श्लिष्टवाचके यथा—

'अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्न न कैर्भवान् ॥'

अत्र वंशोऽन्ववाय एव वंशो वेणुरिति । भेदभाजि यथा—

'निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥'

अत्र लोकशब्दाद्भिन्नेन वल्लिपदेनारोप्यमाणमुक्तम् । परम्परिते चारोप्यारोपविषयानेकत्वेऽपि नालङ्कारानेकत्वम् । संभूय वैचित्र्यप्रकर्षाधायकत्वात् । एवं मालारशनयोरपि द्रष्टव्यम् । यद्यपि रशनारूपकमपि रूपकं संभवति । यथा—

'किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥'

---

तस्य सर प्रभृतेर्मन प्रभृतौ व्यञ्जनयैवारोपोऽन्यत्र तु खड्गलतादावार्थिक इति विशेषाच्छ्लेषाङ्गकमेवैतदिष्टम् । वेणुरितीत्यनन्तर श्लिष्टमिति शेष । **नालंकारानेकत्वमिति** । न रूपकालंकारानेकत्वमित्यर्थ । अलकारस्य चमत्कृतिजनकतारूपत्वात्तस्याश्च चमत्काररूपकार्यैक्येनैक्यादित्यर्थ । परम्परितेति च सावयवोपलक्षणम् । न्यायसाम्यात् । ननु सापेक्षानेकस्थलेऽलंकारभेदाभावेऽपि निरपेक्षानेकरूपकमालाया कथं नालंकारभेद इति चेत्, सत्यम् । जातावनपेक्षत्वेऽपि चमत्कृतिविशेषजनने सापेक्षत्वादेकत्वम् । लोकेऽपि मालारशनादीनामेकालंकारत्वमुक्तहेतुकमेव प्रसिद्धम् । **रशनेति** । पूर्वपूर्वमारोप्यमाणानामुत्तरत्रारोपविषयत्वरूपमित्यर्थः । यथा

---

१ 'अलौकिकेति । अलौकिकस्य महस्योत्सवस्यालोको दर्शन तेन प्रकाशित जगत्त्रय येनेति राजपक्षे । मुक्तामणिपक्षे तु—महालोको महादीप्ति· । सद्वशो महाकुलमेव महावेणुस्तत्र मुक्तारत्नम् । वशोद्भवमुक्ताया बहुमूल्यत्वाद्रत्नत्वोक्ति । भवान्कैर्न स्तूयत इत्यन्वयः । 'स्तूयसे' इत्यपपाठ· । 'युष्मद्युपपदे' इत्यत्रार्थग्रहणाभावात् ।' इत्युदाहरणचन्द्रिकासक्षेपः.
२. निरवधीति । स प्रथम आद्य कूर्ममूर्तिर्भवान् जयतीति विष्णु प्रति भक्तोक्ति· । यस्य स्थित स्थितिर्निरवधि कालपरिच्छेदशून्यम् । सर्वाध स्थितत्वादाश्रयशून्य च । अत एवानिवर्तितः कौतुकस्याश्चर्यस्य प्रपञ्चो विस्तारो येन तत् । कीदृश कूर्ममूर्ति । चतुर्दशश्लोकरूपा या वल्लिस्तस्याः कन्द·' ।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'किसलयेति । मदन कामिना मनो जयतीत्यन्वय· । कै: तत्राह—किसलयेत्यादि । लताना पल्लवरूपै· करै· करकमलैर्मुखेन्दुभिरित्युभयत्रापि योषितामन्वयः । अत्र पूर्वमारोप्यमाणस्य करादेरुत्तरत्रारोपविषयत्वाद्रशनारूपकम् ।' इत्युदाहरणचन्द्रिकासक्षेप·.

इत्यादि। तथापि न तादृशवैचित्र्यवदिति न पृथग्लक्षितम्।

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः।**

प्रकृतमुपमेयं निषिध्य असत्यतया व्यवस्थाप्य अन्यदप्रकृतमुपमानं यत्साध्यते सत्यतया व्यवस्थाप्यते सा अपह्नुतिः। सा च शाब्दी आर्थी चेति द्वेधा। तत्राद्या यथा—

'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि॥'

---

किसलयेष्वारोप्यमाणानां कराणां कमलारोपविषयत्वं कमलानां च मुखारोपविषयत्वमिति। अत्र करकमलैरिति मुखेन्दुभिरिति च योषितावित्यनेनान्वेतीति ज्ञेयम्। **न तादृशेति**। यथोपमायां भणितिरिवेत्यादौ राजसंबन्धितया वर्णनीयानां भणित्यादीनामुपमानोपमेयतया ग्रन्थनं प्रकृतोत्कर्षपर्यवसायितया वैचित्र्यहेतुस्तथा नेत्यर्थः। अथात्र शाब्दबोधप्रकारः कथ्यते—तत्र प्राचां मते विषयिवाचकपदेन विषयवृत्तिगुणवतो लक्षणया सारोपयोपस्थितस्याभेदेन विषयेऽन्वयान्मुखं चन्द्र इत्यादौ चन्द्रवृत्तिगुणवदभिन्नं मुखमित्यादिधीः। मुखचन्द्र इति विशेषणसमासे तु मुखाभिन्नं चन्द्रवृत्तिगुणवदिति साधारणगुणमात्रपुरस्कारेण तद्वति विषयपदस्य लक्षणेति मुख्यमते त्वाह्लादकं मुखमिति वाक्ये विशेषणसमासे तु मुखाभिन्नमाह्लादकमिति कान्त्या मुखं चन्द्र इत्यत्राभेदस्तृतीयार्थः तस्य चन्द्रवृत्तिगुणे पदार्थैकदेशेऽन्वयः तेन कान्त्यभिन्नचन्द्रवृत्तिगुणवदभिन्नं मुखमिति बोधः। लक्षणां विनैवोपमानोपमेययोः समानविभक्तिकपदोपस्थितयोराहार्याभेदबोधवादिनां नव्यानां मते तु मुखं चन्द्र इत्यादौ चन्द्राभिन्नं मुखमिति बोधः। मुखचन्द्र इति विशेषणसमासे तु मुखस्य विशेषणत्वात्तदभेदस्य चन्द्रेऽन्वयाद्यद्यपि मुखरूपकमापद्यते न पुनश्चन्द्ररूपकं चन्द्राभेदस्य मुखेऽनवगमात् तथापि स्वनिष्ठाभेदप्रतियोगित्वसंसर्गेण चन्द्रे मुखान्वयस्वीकाराच्चन्द्राभेदरूपकोपपत्तिः। स्वप्रतियोगिकाभेद एव विशेषणस्य संसर्गो न तु स्वानुयोगिक इति नियमे मानाभावादिति वदन्ति। एतन्मते कान्त्या मुखं चन्द्र इत्यादौ कथं बोध इति चेदत्राहुः—चन्द्राभिन्नमुखादेः कविप्रतिभाकल्पितत्वेन कान्त्यादिगुणानां तत्र प्रयोजकत्वात्कान्त्यादियोजकं चन्द्राभिन्नं मुखमिति बोधः। प्रयोज्यत्वस्य तृतीयार्थत्वादिति। इति रूपकम्॥ ६॥ **असत्यतयेति**। यथाश्रुते 'शिखा धूमस्येयं परिणमति रोमावलिवपुः' इत्यादावव्याप्तिः। संदेहालंकारव्यावृत्त्यर्थं सत्यतयेति। अन्य-

---

१. 'चार्थी' ख-ग. २. 'अवाप्त इति। परिणतरुचः पूर्णकान्तेः शशाङ्कस्य तत्त्वेन पराभिमतस्य वपुषि प्रागल्भ्यं प्रकटतां प्राप्तोऽयं कलङ्को नैव विलसतीत्यपह्नुतिः। तर्हि किं तत्राह—अमुष्य चन्द्रस्य विगलदमृतप्रवाहशीतले उरसि गाढं रतिश्रान्ता इयं रजनीरूपा रमणी शेत इति मन्य इति।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र कलङ्को नैवायमिति शाब्दोऽपह्नवः । आर्थस्तु बह्वीभिर्भङ्गीभिरालोच्यते । तत्क्वचित्कपटार्थशब्दोपादानात् । यथा—

'[१]बत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥'

अत्र च्छलशब्दबलान्न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाः शरा इति प्रतीयते । क्वचित्परिणामादिशब्दवशात् । यथा—

'[२]अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥'

अत्र धूमशिखा रोमावलिवपुः परिणमतीति परिणामशब्दार्थवशान्नेयं रोमावलिः किं तु धूमशिखेति प्रतीयते । एवं भङ्ग्यन्तरैरप्यूह्यम् । यथा 'इदं ते केनोक्तं' इत्यादौ ।

**श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत् ॥ १० ॥**

परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः । यथा—

---

त्साध्यत इत्येतावदुक्तौ रूपकातिव्याप्तेः प्रकृतमित्युक्तम् । तन्मात्रोक्तौ च निषेधालंकारे वक्ष्यमाणेऽतिव्याप्तिरत उभयोपादानम् । 'न पद्मं मुखमेवेदं' इत्यादावप्रकृतस्य निषेधो न तु प्रकृतस्य । तथा समारोपोऽप्यप्रकृतस्य नेति तद्व्युदासः । दण्डी तु— 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम् । न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥' इत्यपह्नुतिलक्षणं सोदाहरणं ब्रुवन्नुपमानोपमेयनियममपह्नुतौ नाङ्गीचक्रे । इत्यपह्नुतिः । **श्लेषः स इति** । अत्रार्थश्लेषस्यैवार्थालंकारत्वेन लक्ष्यत्वाच्छब्दश्लेषव्यावृत्त्यर्थमाह—**परिवृत्तीति** । 'योऽसकृत्परगोत्राणामित्यादौ तु गोत्रादिशब्दाना परिवृ-

---

१. 'बतेति । बत खेदे । अस्मिन्मादृशे रागिलोके अनुरक्तजने कियदपरिमितमेतद्वैरम् । अस्तीति शेषः । पश्येति तथाहीत्यनन्तरं योज्यम् । उपवनेषु सहकारा आम्रास्तेषूद्भासिनो भृङ्गा भ्रमरास्तद्व्याजेन प्रतिबाणमनेन स्मरेण कालकूटमुट्टङ्कितं प्रकाशितम् । लापितमिति यावत् ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अमुष्मिन्निति । शर्वेण हरेण प्लुष्टो दग्धः स्मरो लावण्यरूपामृतसरोवरभूते मृगदृशोऽस्मिन्महति जघनप्रदेशे नूनं निपतितः । यस्य कामस्याङ्गान्येवाङ्गारास्तेषां प्रशमस्य निर्वाणतायाः पिशुना सूचिका इयं धूमस्य शिखा नाभिबिले रोमावलिमूर्तिः परिणमति । नेयं रोमावलिः किं तु धूमशिखैवेयं तदाकारेण परिणतेत्यर्थगम्याया अपह्नुतेरुदाहरणद्वयं दर्शितम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।
रचयति तथा स्वैराचारप्रवर्तनखण्डनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः॥'

अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युभयार्थान्युदयमयते इत्यादीनि वाक्यानि। न चायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम्। संयोगादीनामभावेनाभिधाया अनियन्त्रणाद्द्वयोरपि वाच्यत्वात्।

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः**

परमप्रकृतम्। भेदकानि विशेषणानि। श्लिष्टान्यनेकार्थानि। तेन प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाप्रकृतार्थवचनं सा समासोक्तिः संक्षेपेणार्थद्वयोक्तिः। मात्रग्रहणाद्यत्र विशेष्यपदस्यापि श्लिष्टत्वं तन्निरासः। तस्य श्लेषत्वात्। उदाहरणम्—

'लहिऊण तुज्झ बाहुप्फंसं तीए स को वि उल्लासो।
जअलच्छी तुह विरहे ण हुज्जला दुव्वला णं सा॥'

अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमप्रकृतार्थकत्वं नास्ति। श्लिष्टत्वं चोपलक्षणम्। औपम्यगर्भादीनामपि संभवात्। यथा 'विलिखति कुचौ' इत्यादाविति प्राचीनः पन्थाः। अत्र नव्याः—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम्। तेन यत्राप्राकरणिकविशेषणसामर्थ्यात्प्राकरणिकमुच्यते तदपि संगृह्यते। तत्रापि वैचित्र्याविशेषात् अन्यत्रानन्तर्भावाच्च। यथा 'संप्राप्तसकलाङ्ग–' इत्यादि। अत्र ह्यप्रकृतस्य भृङ्गस्य विशेषणसामर्थ्यात्प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहुः। तन्न युक्तम्। अप्रस्तुतप्रशंसयैव तत्सं-

---

त्वयसहत्वान्नार्थश्लेष इति भावः। **लहिऊणेति**। 'लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः। जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा॥' **औपम्येति**। आदिपदेन साधारणविशेषणसारूप्यसग्रहः। तत्र साधारणविशेषणवशाद्यथा—'विलिखति कुचावुच्चैर्गाढं करोति कचग्रहं लिखति ललिते वक्त्रे पत्रावलीमसमञ्जसाम्। क्षितिप खदिरः श्रोणीबिम्बाद्विकर्षति चांशुकं मरुभुवि हठान्नश्यन्तीना तवा-

---

१. 'उदयमिति। विभाकरनामा राजविशेषः सूर्यश्च। उदयमुदयाचलं समृद्धिं च। अयते प्राप्नोति। दिशां मालिन्यमन्धकारस्तत्तद्दिग्गतदुष्टसामन्ताद्युपद्रवश्च। दिग्गतजनानां दारिद्र्येण कुवेषतेत्यन्ये। निद्रया मुद्रा मुद्रणं चक्षुषः निद्रामुद्रा निद्रासदृशी अवस्था आलस्यरूपा च। निधनं नाशम्। क्रिया अग्निहोत्राद्याः पक्षद्वयेऽपि। स्वैराचारप्रवर्तनमभिसारादि विधिनिषेधातिक्रमश्च। तत्खण्डनं निवृत्तिं रचयति। हर्षातिशयाद्बतबतेति द्विरुक्तिः। तेजःपुञ्जो रश्मिसमूहः कान्तिसमूहश्चेति श्लेषालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

२. 'लहिऊणेति। अत्र बाहुस्पर्शलाभप्रयुक्तोल्लासादिसाधारणविशेषणबलाज्जयलक्ष्मीवृत्तान्तो नायिकावृत्तान्तरूपतया गम्यत इति समासोक्तिरलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

ग्रहात् । 'येनास्याभ्युदितेन' इतिवत् । वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे । तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरम् ।

## निदर्शना ।

**अभवन्वस्तुसंबन्ध उपमापरिकल्पकः ॥ ११ ॥**

यथाश्रुतमात्रेणासंभवी वस्तुसंबन्धो यत्रोपमां कल्पयित्वा पर्यवस्यति सैका निदर्शना । दृष्टान्तकरणात्मकनिदर्शनरूपत्वात् । सा च द्विधा—अवान्तरवाक्यभेदे तदभेदे च । तयोराद्या यथा—

> 'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
> तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

---

रिमृगीदृशाम् ॥' अत्र कुचविलेखनकचग्रहादिविशेषणानां शब्दश्लेषं विना स्वत एव साधारण्यान्नायकवृत्तान्तस्फूर्तिरिति समासोक्ति । औपम्यगर्भविशेषणाद्यथा—'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥' अत्र नायिकाविशेषणत्वस्य दन्तप्रभा· पुष्पाणीवेत्याद्युपमितसमासेन सिद्धौ दन्तप्रभासदृशैः पुष्पैरिति समासान्तराश्रयणेन ललनावृत्तान्तस्य समासोक्तिः । सारूप्याद्यथा—'पुरा यत्र स्रोत –' इत्युत्तररामचरितनाटके प्रसङ्गात्कालान्तरे पुनर्दण्डकं गतवतो रामस्येयमुक्ति । अत्र वनसारूप्यात्कुटुम्बिषु धनसतानादिसमृद्ध्यसमृद्धिविपर्यास प्राप्तस्य ग्रामनगरादेर्वृत्तान्तस्य प्रतीते समासोक्ति । इयं चाप्पय्यदीक्षितैरेवोक्ता नान्यैरिति सक्षेप । अस्या च समासोक्तौ प्रकृतवृत्तान्तोऽभिधयैव प्रतीयते, अप्रस्तुतवृत्तान्तस्तु व्यञ्जनया । प्रकरणेनाभिधाया नियमनात् । तस्य च ताटस्थ्येन प्रतीतावसंबद्धार्थकत्वप्रसङ्गाच्चमत्कारानुपपत्तेश्च । प्रकृते समारोपो न त्वप्रकृतनायकादे प्रकृते राजादावारोप· । प्रमाणाभावात् । आरोपद्वयकल्पनागौरवाच्चेति प्राञ्चः । अप्रस्तुतस्य नायिकादेर्वृत्तान्तविशेषणत्वमवश्यं वाच्यम् । केवलवृत्तान्तस्य चारुत्वाभावात् । एवं चावश्यं व्यञ्जनयोपस्थितस्याभेदेन प्रकृतविशेषणत्वमेव युक्तं न तु वृत्तान्ते भेदेन । एवमप्रकृतवृत्तान्तस्यापि प्रकृतवृत्तान्त एव भेदेनारोप इति युक्तम् । वृत्तान्तद्वयस्यैकत्र द्वयमिति रीत्या बोधस्याननुभवपराहतत्वात् । तस्मादप्रकृतवृत्तान्ताभिन्नतयाध्यवसित प्रकृतवृत्तान्त स्वविशेष्ये तद्विशेष्याभिन्नतयावगते भासत इति तु नव्या । एवं च प्रकृतोदाहरणे नायकीयबाहुस्पर्शलाभप्रयुक्तोल्लासवती जयलक्ष्मीरित्याद्यपक्षे बोध । द्वितीये तु राजनायकबाहुस्पर्शलाभप्रयुक्तोल्लासवती जयलक्ष्मीनायिकेतीति सक्षेप । अत्र च बाहुस्पर्शेति साधारणं विशेषणं उल्लास इति श्लिष्ट इति ज्ञेयम् । विशेषणसामर्थ्यान्निन्दागमकविशेषणसामर्थ्यात् । **समासोक्तिपदमिति** । तुल्ये प्रस्तुते तुल्याभिधाने त्रय.प्रकारा· श्लेप. समासोक्ति सादृश्यं

---

१ 'सयोग·' ग. २. 'क्व सूर्येति । स्पष्टम् । अत्रोडुपेन सागरतरणवन्मदीयमत्या सूर्यवंशवर्णनमसभावितमित्युपमाया पर्यवसानान्निदर्शनालकारः ।' इत्युदाहरणचन्द्रिकासक्षेप..

अत्राहं सागरं तितीर्षुरस्मीत्यस्यासंबद्धार्थकतया उडुपेन सागरतरणवन्मदीयमत्या सूर्यवंशवर्णनमसंभावितमित्युपमायाः कल्पनम्।

अन्त्या यथा—

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥'

अत्रान्यलीलोद्वहनस्यान्येनासंभवाद्वारणेन्द्रलीलासदृशीं लीलामित्युपमायां पर्यवसानम्। एवं च 'पूर्वोदाहरणे वाक्यार्थ उपमाक्षेपकः इह तु पदार्थमात्रम्' इति व्याख्यानमनादेयम्। अत्रापि लीलापदार्थमात्रस्यानाक्षेपकत्वात्। एषा मालारूपापि दृश्यते। यथा—

'दोर्भ्यां तितीर्षति तरङ्गवतीभुजंग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम्।
मेरुं लिलङ्घयिषति ध्रुवमत्र देव
यस्ते गुणान्गदितुमुद्यममादधाति॥'

## स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सा परा।

यत्र क्रिययैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूपः ख्याप्यते सा परा निदर्शना। यथा—

'उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः॥'

---

चेति ग्रन्थे वक्ष्यमाणमित्यर्थः। इति समासोक्तिः। **वस्तुसंबन्ध इति**। वस्तुनोः पूर्वार्धापरार्धयोरित्यर्थः। संबन्धोऽन्वयः। अत्रोदाहरणयोः प्रथमे उडुपेन सागरतरणरूपमुपमानमप्रसिद्धं द्वितीये तु वारणेन्द्रलीलारूपं तत्प्रसिद्धमित्यपि भेदो द्रष्टव्यः। **लीलापदार्थमात्रस्येति**। किं तु तद्वहनरूपवाक्यार्थस्येत्यर्थः। क्रिययैवेत्येव-

१. 'उदयतीति। माघे रैवतकवर्णनम्। वितता विस्तृता ऊर्ध्वा रश्मय एव रज्जवो यस्य तादृशे अहिमरुचौ सूर्ये उदयति सति हिमधाम्नि चन्द्रे चास्तं याति सति अयं रैवतकगिरिरुभयतो विलम्बिघण्टाद्वयपरिवारितस्य वारणेन्द्रस्य गजश्रेष्ठस्य लीलां शोभां वहतीत्यन्वयः। अत्रान्यलीलाया अन्यत्रारोपो लीलासदृशीं लीलामित्युपमां गमयति। तत्र चन्द्रसूर्ययोर्घण्टयोश्च बिम्बप्रतिबिम्बभावस्तत्समर्थनाय च रश्मिषु रज्जुत्वारोप इति बोध्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'दोर्भ्यामिति। तरङ्गवतीभुजंगः समुद्रः। लिलङ्घयिषति लङ्घयितुमिच्छति। दोर्भ्यां सागरतरणादिवत्त्वद्गुणभाषणमशक्यमित्यनेकोपमाकल्पनान्मालारूपेयं निदर्शना।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'उन्नतमिति। दृषत्कणः पाषाणकणः। चारुणा मन्देनापि मारुतेन धुतः कम्पितोऽधः पतति। किं कुर्वन्। यो लघुः स उन्नतं पदमवाप्य हेलयैव पतेदिति ब्रुवन्स्वदृष्टान्तेन कथयन्। उन्नतं पदमुत्कर्षमुच्चस्थलं च। लघुरल्पबुद्धिरल्पपरिमाणश्च। पतनमुत्कर्षहानिरधःसंयोगश्च।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र पतेत्पदप्रतिपाद्यस्य पातस्य कार्यस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथा संबन्धः पततिपदप्रतिपाद्यया पातक्रियया प्रतिपाद्यते । तथा च लाघवे सत्युन्नतपदप्राप्तिः पाते हेतुर्यथा तृषत्कणस्येति दृष्टान्तपर्यवसानान्निदर्शनात्वमिति ।

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ १२ ॥**

प्रशंसा वर्णनम् । सैव अप्रस्तुतप्रशंसैवेत्यर्थः । प्रस्तुताश्रया प्रकृतप्रतिपत्तिहेतुः । एतच्चालंकारत्वबीजमतिप्रसक्तमिति निवारयति । अप्रकरणिकेन प्राकरणिकाक्षेपोऽप्रस्तुतप्रशंसा प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिरिति विवेकः । तां विभजते—

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति[1] च पञ्चधा ॥ १३ ॥**

सेत्यनुवर्तते । कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तुतस्य वर्णनमिति सा पञ्चधेत्यर्थः । तत्र कार्ये प्रस्तुते कारणस्य वर्णनं यथा—

'[2]याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥'

अत्र प्रस्थानात्किं निवृत्तोऽसीति कार्ये पृष्टे कारणस्य प्रियाया भाविमरणोत्साहस्य वचनम् । किंशब्दः प्रश्नार्थ इति न कारणप्रस्तावः ।

---

कारेण शब्दव्यवच्छेदः । ध्रुवन्पततीति पातक्रियाया एव हेतुहेतुमद्भावगमकत्वस्योक्तेः । तच्च दृष्टान्तविधयैवेत्याह—**तथा चेति** । इति निदर्शनाप्रकरणम् । **अप्रस्तुतप्रशंसेति** । अप्रस्तुतप्रशंसापदवाच्यैवेत्यर्थ । **एतच्चेति** । अन्यवृत्तान्तस्यान्यवृत्तान्ताक्षेपकत्वरूपमित्यर्थः । **अतिप्रसक्तमिति** । समासोक्तावपि सत्त्वादित्यर्थ । आक्षेपेणैवेत्येवकारेणाभिधाव्यवच्छेद· । ननु प्रकरणसहायस्य योगस्य

---

१. 'तुल्यस्यैव' ख  २. 'याता इति । याता प्रस्थिताः किं पुनर्न मिलन्ति अपि तु मिलन्त्येवेति काकुः । मत्कृते मदर्थम् । अतिकार्श्यदर्शनादनिष्टाशङ्कया सबाष्पत्वम् । मदीया गमनानिच्छा ज्ञातेति लज्जया मन्थरा स्तब्धा तारका कनीनिका यस्य तेन । तथा निपतत् पीतमशकुनभयात्सहृतमश्रु येन तादृशेन चक्षुषा । हसितेनेति । एव किलास्याभिप्रायो यदियं मद्विरहेऽपि प्राणान्धारयिष्यतीति प्रहासरूपेणेत्यर्थ । भाविन्यावश्यके मरणे उत्साह· । स च वियोगदु खशान्तिवाञ्छयेति ज्ञेयम् । इयं च प्रस्थाननिवृत्तिरूपे कार्ये प्रस्तुते कारणोक्तिरूपा अप्रस्तुतप्रशंसा ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

कारणप्रस्तावे कार्यवचनं यथा—

'राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते॥'

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः प्रपलाय्य गता इति शत्रु पलायने कारणे प्रस्तुते तस्याभाषणविशेषरूपं कार्यमुक्तम्।

सामान्ये प्रस्तुते विशेषवचनं यथा—

'एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा॥'

अत्र जडानामस्थल एव ममत्वसंभावना भवतीति सामान्ये प्रस्तुते पुरुषविशेषस्य स ममत्वविशेषोऽभिहितः। विशेषे प्रस्तुते सामान्यवचनं यथा—

'सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन यः।
स एव पूज्यः स पुमान्स नीतिमान्सुजीवितं तस्य स भाजनं श्रियः॥'

अत्र श्रीकृष्णं प्रति शत्रुं निहत्य नरकासुरवधूनां दुःखं यदि शमयसि तदा त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुक्तम्। तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य, श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वात्। आद्यो यथा—

---

१. 'राजन्निति। राज्ञः शत्रुभूतस्य शुकस्तवारिभवने शून्याया वलभौ भित्तौ चित्रस्थानवलोक्यैकैकं प्रतीत्थमाभाषते इत्यन्वयः। कीदृक्। तत्राह—राजन्नित्यादि। कुब्जे इति तादृश्या भोजिकायाः संबोधनम्। कुमारसहितैः सचिवैरद्यापि किं न भुज्यत इति काकुः। अत्र शत्रुपलायने कारणे प्रस्तुते तत्कार्यवचनरूपा।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'एतदिति। कस्यचिन्मूर्खस्य वृत्तान्तं कुतश्चिदाकर्ण्य विस्मयेन भाषमाणं कंचित्प्रति कस्यचिदुक्तिरियम्। मुखादित्यनन्तरं श्रुतमिति शेषः। तस्य मुखाच्छ्रुतमेतत्कियत्। अल्पमित्यर्थः। अपाये वा पञ्चमी। मुखादपगतमित्यर्थः। किं तदित्याह—स जडो मूर्खः कमलिनीपत्रे स्थितं वारिणः कणं बिन्दुं मुक्तामणिरित्यमंस्तेति यत्। अस्मादन्यदपि शृणु। शनैरादीयमाने गृह्यमाणे कणे अङ्गुल्यग्रस्य लघुक्रिययाल्पचेष्टया प्रविलयिनि विलीने सति मम मुक्तामणिः कुत्रोड्डीय गत इत्यनुदिनमन्तःशोकेन न निद्रातीति। अत्र जडसामान्यप्रस्तावे तद्विशेषाभिधानरूपा।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'सुहृदिति। श्रीकृष्णेन नरकासुरे हते तत्सुहृदं प्रति तन्मन्त्रिण इयमुक्तिः। प्रतियातनं प्रतिक्रिया। भाजनं पात्रम्। अत्र विशेषे प्रस्तुते सामान्याभिधानरूपा।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने न महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥'

अत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च श्लेषात्सत्पुरुषप्रतिपत्तिः। न च श्लेष एवायम्। 'अवयवशक्तेः समुदायशक्तिर्बलीयसी'ति न्यायात्प्राग्विष्णूपस्थितौ सत्पुरुषस्याक्षेपेणैवोपस्थितेः। श्लेषसत्त्वेऽप्यप्रस्तुतस्य प्रथमोपस्थित्यैवाप्रस्तुतप्रशंसात्वात्। द्वितीयो यथा—

'येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥'

अत्र विशेष्यवाचिचन्द्रपदं न श्लिष्टम्। तृतीयो यथा—

'आदाय वारि परितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन।
क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च ॥'

अत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेपः। यथा वा मम—

'कौटिल्यं नयने निवारयतरां शीघ्रां गतिं शीलय
व्यक्तार्थां कुरु भारतीं विहसितेऽप्यौद्धत्यमायोजय।

---

प्राबल्यादाक्षेपानुपयोग इत्यत आह—**श्लेषसत्त्वेऽपीति**। तथा चोभयत्राभिधाव्यापारसत्त्वेऽपि रूढ्यर्थस्याप्रस्तुतस्यापि प्रथमावगतिमात्रेणाप्रस्तुतप्रशंसालंकारत्वमित्यर्थः। वस्तुतस्त्वत्राप्रकृतदृष्टान्तेनाप्रकृतावबोधनं मुख्यं कवेस्तात्पर्यविषयः। श्लेषस्तु तदुपयोगितया गुण इति प्रधानेनैव व्यपदेशो युक्त इति ज्ञेयम्। **कौटिल्य-**

---

१. 'पुंस्त्वादिति। प्रणयने इति सप्तमी। पुरुषोत्तमेन विष्णुना दैत्यमोहने स्त्रीरूपतापत्त्या वाराहमूर्त्या पातालप्रवेशरूपाधोगमनेन बलिप्रणयने प्रार्थने वामनताप्राप्त्या च भुवनरक्षणादेवप्रकारेणापि विश्वोद्धरणं कर्तव्यमिति दिङ्मार्गः प्रकटित इत्यप्रस्तुतस्योपमानभूतस्य विष्णोरभिधानात्तत्तुल्यप्रकृतपुरुषश्रेष्ठप्रतीतिः। तत्र च पुंस्त्वात्प्रचलनं पुरुषार्थहानिः। अधोयानं स्वपदभ्रंशः। अमहत्त्वं गौरवहानिः। विश्वं सर्वजनमित्यर्थो बोध्यः। 'प्रणयनेनापूर्वोत्कर्षप्राप्त्या महान् त्रिविक्रमतया महाकाय उच्चपदस्थश्चेत्यर्थः।' इति चण्डीदासः। इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'न्यायेन' क. ३. 'येनेति। क्लान्तिं गमितः प्रापितोऽसीत्यन्वयः। क्लान्तिर्निष्प्रभता। तत्र रवौ विषये। पादो रश्मिश्चरणश्च। पुनरिति त्वर्थे। एतत्पादग्रहणम्। मनागीषत्। जडधामता शीतलप्रभता पक्षे भावप्राधान्यान्मूर्खत्वास्पदता। विस्फूर्जसे सगर्वमुदेषीत्यर्थः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'विस्फूर्जनम्' ख. ५. 'आदायेति। मुखं वदनं नदीसंगमस्थानं च। दुरर्णवेन दुष्टेनार्णवेन। वडवादहने वडवानले। पातालमेव कुक्षिकुहरमिति विग्रहः। अत्रापव्ययकारिपुरुषप्रतीतिः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ६. अयं श्लोक उदाहरणचन्द्रिकायां न व्याख्यातः.

कुग्रामप्रमदाविलासरसिकः कान्तस्त्वयासादितो
नायं नन्दिनि नागरीजनसमाचारैः समाकृष्यते ॥'

इयं च त्रिधा—काचिद्वाच्यार्थे प्रतीयमानार्थानध्यारोपमात्रेण। क्वचित्प्रतीयमानार्थाध्यारोपेण। क्वचित्त्वंशभेदेन तदध्यारोपानारोपाभ्याम्।

तत्राद्या यथा—

'अब्धेरर्णःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्रमन्ते।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥'

अत्र पुरुषेऽप्येतेऽर्था अबाधिता एवेति नेह प्रतीयमानार्थाध्यारोपः। द्वितीया यथा—

'कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥'

अत्र वाच्यशाखोटके संबोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः। तृतीया यथा—

---

**सिति**। नन्दिनीति सख्या नायिकाया संबोधनम्। निवारणप्रयत्नातिशयबोधनाय तरामिति। शीलयाभ्यस। अभ्यासं विना नैसर्गिकमन्दगतेर्निवर्तनासंभवात्। स्पष्टार्थी कुरु। वदेत्यर्थ । यत्नातिशयसूचनाय कुर्वित्युक्तम्। अत्र हेतुरुत्तरार्धम्। समाचारा व्यवहाराः। समाकृष्यते वशीक्रियते। अत्रैव दृष्टान्तेन मूर्खप्रभुसंगतः कविरुपदिश्यते। **अत्र पुरुषेऽपीति**। अब्धाविति शेष । प्रतीयमानस्य गम्यमानस्यार्थस्य

---

१. अब्धेरिति। अर्णो जल तेन स्थगित आच्छादितो भुवनाभोगस्य पातालरूपः कुक्षिर्येनेति विग्रहः। पोत उपायः साधन येषा तादृशाः पुरुषाः। यदीत्यर्थे आहोइत्यव्ययम्। कथमपीत्यस्य कल्प इति व्यवहितेनान्वयः। अवटो गर्तः। कुहर तस्यैव गम्भीरप्रदेशः। तदवलोकनेऽपि को नाम कथमपि कल्पः समर्थः स्यादित्यर्थः। लङ्घनस्य कैव कथेत्यपिशब्दार्थः। अत्र प्रभोः पूर्णत्वमेव वर न रिक्तत्वमिति तुल्यप्रतीतिः।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'समुद्रे' ग. ३. कस्त्वमिति। शाखोटकं भूतावासवृक्षविशेषं प्रति कस्यचित्प्रश्नः। कथयामीत्यादि तत्प्रतिवचनम्। वैराग्येत्यादि पुनः पूर्वस्य प्रश्नः। वक्षि वदसि। साध्विति पुनस्तरोर्वचनम्। कस्मादिति पुनः पूर्वस्य प्रश्नः। इद वैराग्यम्। कथ्यत इत्यारभ्य पुनः शाखोटकोक्तिः। वामेन वामपार्श्वेन लक्षितः प्रतिकूलाचरणेन च। सर्वात्मना छायोपसेवनादिना। शाखोटकच्छायानाश्रयणे भूतावासत्वं हेतु'। मार्गो रथ्या सदाचारश्चेति। अत्र प्रतीयमानपुरुषाध्यारोपेण शाखोटकस्य संबोध्यत्वादिसंगतिः।' इत्युदाहरणचन्द्रिकासक्षेपः.

'सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥'

अत्र हस्तिनो रसनाविपर्यासः शून्यकरत्वं मदश्च वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि न च तद्धेतवः । मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा । कर्णचापलं तु भ्रमरस्यासेवने हेतुरेवेति तदंशे नाध्यारोप इति ।

**निगीर्याध्यवसानं तु प्रकृतस्य समेन यत् ।**
**प्रकृतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ १४ ॥**
**कार्यकारणयोश्चैव पौर्वापर्यविपर्ययः ।**
**विज्ञेयातिशयोक्तिः सा**

प्रकृतस्योपमेयस्य समेनोपमानेन निगीर्याध्यवसानं द्रढीयसी बुद्धिः सैकातिशयोक्तिः । यच्च तदेव वस्त्वन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्यवसीयते सा द्वितीया । यच्च चेच्छब्देन यदिशब्देन वा यद्यर्थोक्तौ कल्पनमर्थादसंभविनोऽर्थस्य सा तृतीया । यश्च कार्यकारणयोः प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्यं कारणस्य शीघ्रकारिता प्रतीतये सा चतुर्थीति चतस्रोऽतिशयोक्तयः । तत्राद्या यथा—

'कमलमनम्भसि कमले कुवलये च तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥'

---

पुरुषविशेषस्य नाध्यारोप इत्यर्थ । **वाच्यानीति** । 'नपुंसकमनपुंसकेन' इत्येकशेष । इत्यप्रस्तुतप्रशंसाप्रकरणम् ॥ ११ ॥ समेनेति समभिव्याहारात्प्रकृतपदेनोपमेयं व्याचष्टे—**उपमेयस्येति** । उपमानेन निगीर्य पृथगनिर्दिश्याध्यवसानं स्वरूपेण निश्चय । स च द्रढीयसीत्यनेनोक्तः । **अर्थादिति** । कल्पनपदसामर्थ्यादित्यर्थः ।

---

१. 'सोऽपूर्व इति । रसनाविपर्ययोऽभिशापात्करिणा जिह्वापरिवृत्ति· अन्यत्र पूर्वविपरीताभिधानम् । कर्णयोश्चापल निरन्तरचालन परवचनप्रतार्यत्व च । मद· करिणा प्रसिद्धो गर्वश्च । तेन विस्मृता स्वपरयोर्दिग् मार्गः आप्तानाप्तविभागश्च यया तादृशी दृष्टिः । वारणो गजो वारकश्च । अन्तर्मध्ये शून्य सरन्ध्रो धनरहितश्च । कर· शुण्डा हस्तश्च । ग्रह आग्रह· । अत्र प्रतीयमानपुरुषाध्यारोपेण मदरसनाविपर्यययोर्भ्रमरस्य गजासेवने हेतुत्वसंगतिः ।' इत्युदाहरणचन्द्रिकासक्षेपः २. 'कमलमिति । अनम्भस्यनुदके । सुकुमारा मृद्वी चासौ सुभगा सुन्दरी । अत्र कमलकुवलयकनकलतिकापदैर्मुखनेत्रकामिनीना कमलत्वादिनाध्यवसानादतिशयोक्ति ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र मुखादि कमलादित्वेनाध्यवसितम् । यथा वा मम—

'कलशे परममहत्त्वं तिमिरस्तोमस्य सोमसहवासः ।
वियति च शैवलवल्ली शिव शिव कुसुमेषुसर्गसौभाग्यम् ॥'

द्वितीया यथा—

'[2]अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेह च्चिअ ण होई ॥'

स्पष्टम् । तृतीया यथा—

'[3]राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥'

चतुर्थी यथा—

'[4]हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥'

**प्रतिवस्तूपमा तु सा ॥ १५ ॥**

**सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।**

एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोर्यत्र द्विरवस्थितिः । अर्थाच्छब्दभेदेन । [5]अभिन्नपदस्य दुष्टत्वात् । सा प्रतिवस्तूपमा ।

---

तेन आयुरेवेदमित्यादौ नातिशयोक्तिरित्याशयः । **कलश इति** । अत्र कलशत्वेन स्तनयोरध्यवसानं, तिमिरसंघत्वेन केशपाशस्य, आकाशत्वेन मध्यस्य, वल्लीत्वेन रोमावल्या इति ज्ञेयम् । **अण्णं इति** । 'अन्यत्सौकुमार्यमन्यैव कापि वर्तनच्छाया । श्यामा सामान्यप्रजापते रेखैव न भवति ॥' वर्तनं गमनोपवेशनभाषणादिव्यवहारः । छाया शोभा । सामान्यः सर्वजनसाधारणः । रेखा चित्रलेखनजातिरिव मनुष्यनिर्माणजातिः । मालतीनाम काचिन्नायिका । इत्यतिशयोक्तिप्रकरणम् ॥ १२ ॥ **अभिन्नस्येति** । कथितस्येत्यर्थः । प्रतिवस्तु प्रतिवाक्यार्थमुपमासाधारणधर्मो यत्रेति

---

१. अयं श्लोक उदाहरणचन्द्रिकायां न व्याख्यातः. २. 'अण्णमिति । लडहशब्दः सौकुमार्ये देशी । वर्तते जीवतीति वर्तनं शरीरम् । तस्य च्छाया कान्तिः । श्यामा षोडशवर्षा स्त्री । सामान्यः सर्वसाधारणः । रेखैवेति । निर्माणपरिपाटी रेखामात्रेणापि नास्तीति भावः । इयमन्यत्ववर्णनरूपातिशयोक्तिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'राकायामिति । राका पूर्णचन्द्रा पूर्णिमा । साम्यमेव पराभवोऽपकर्षः । एषा यद्यर्थातिशयोक्तिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'हृदयमिति । मालतीनाम्नी काचिन्नायिका । अधिष्ठितमाक्रान्तम् । चरमं पश्चाल्लोचनविषयं तद्गोचरतां प्राप्तवता त्वयाधिष्ठितमित्यनुषङ्गः । इयं कार्यकारणयोः पौर्वापर्यविपर्ययरूपेति ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ५. 'अभिन्नस्य' ख.

वस्तुनो वाक्यार्थस्योपमानत्वात् । अत्र 'द्वि' 'द्वये' इत्यनेकोपलक्षके । मालानुरोधात् । सा च द्विधा—अमालारूपा मालारूपा च ।

तत्राद्या यथा—

'[१]देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥'

अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणयोग्यत्वमित्येके । 'कथं भजति' 'न खलु' इत्यनयोरेकार्थतया तथात्वमित्यपरे ।

अन्त्या यथा—

'[२]यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥'

अत्र किमद्भुतमित्यादिभिरद्भुताभावस्य वाक्यचतुष्टयेऽप्युपादानान्मालात्वम् । चतुर्थवाक्यं चोपमेयवाचि ।

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १६ ॥**

एतेषामुपमानोपमेयसाधर्म्याणां सर्वेषां प्रतिबिम्बनं दृष्टान्तः । दृष्टोऽन्तो निश्चय उपमानिर्वाहकोऽत्रालंकार इति व्युत्पत्तेः । स च द्विधा—साधर्म्यवैधर्म्यरूपाभ्याम् । तत्र साधर्म्येण यथा—

'[३]त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥'

---

व्युत्पत्तेः । वाक्यद्वय इत्यस्याभिप्रायमाह—**वस्तुन इति** । वाक्यार्थो हि वाक्यार्थं प्रत्येवोपमानम् । अतो वाक्यद्वये साधनधर्मोक्तिरित्यर्थः । **अत्रेति** । परिवारः पदमाश्रयो यस्य यथेष्टविनियोगयोग्यत्वस्य तत् । एवं परिभोगो भूषणादिविनियोगस्तद्योग्यमित्यर्थैकत्वमित्यर्थः । अथवानौचित्यस्यैकस्य धर्मस्योपादानादुदाहरणत्वमिति मतान्तरमाह—**कथमिति** । एवं च भिन्नशब्दोपात्तैकधर्मके वाक्यार्थयोरार्थिकमौपम्यं प्रतिवस्तूपमेति लक्षणं बोध्यम् । अत्र च दृष्टान्तालंकारे व्याप्तिवारणायाद्यं विशेषणम् । 'दिवि भाति यथा भानुस्तथा त्वं भ्राजसे भुवि' इति वाच्यवाक्यार्थोपमावारणार्थमिति । 'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् । भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥' इत्यादौ स्मरणालंकारवारणाय वाक्यार्थेत्युक्तमिति सक्षेपः । इति प्रतिवस्तूपमाप्रकरणम् ॥ १२ ॥ **प्रतिबिम्बनमिति** । बिम्बप्रतिबिम्बभावे-

---

१. 'देवीभावमिति । देवीभावं देवीत्वम् । 'देवी कृताभिषेकायाम्' इत्यमरः । गमिता प्रापिता । परिवार साधारणकलत्रम् । पद स्थानं शब्दो वा । परिभोगो भूषाद्यर्थमुपादानम् । दैवतरूपेणाङ्कितं चिह्नितम् । उल्लिखितदैवताकारमित्यर्थः । अत्र द्वयोर्वाक्यार्थयोरनौचित्यरूप एक एव साधारणधर्मः कथं न खल्विति भिन्नशब्दोपात्त इति प्रतिवस्तूपमालंकारः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'यदीति । सप्तमे व्याख्यातम् ।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'त्वयीति । निर्वाति शाम्यति । अत्र मन कुमुदयोर्विकासनिर्वाणयोश्च बिम्बप्रतिबिम्बभावेन दृष्टान्तालंकारः ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र साधर्म्यस्यापि प्रतिबिम्ब एवेति प्रतिवस्तूपमाभेदः। वैधर्म्येण यथा—

'तवाहवे साहसकर्मशर्मणः पाणिं कृपाणान्तिकमानिनीषतः।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः॥'

वैधर्म्ये विपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालंकारत्वम्।

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥ १७॥**

प्रकृताप्रकृतात्मनामर्थादुपमानोपमेयभूतानां धर्मिणां धर्मस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादानं यत्तदेकम्। एकस्थस्यैव सर्ववाक्यदीपकत्वेन प्रदीपसाम्यात्। कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयं दीपकम्। इतिशब्दः प्रकारे। तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थः। आद्यं यथा—

'किवणाणँ धणं णाआणँ फणमणी केसराइँ सीहाणं।
कुलवालिआणँ थणआ कुत्तो छिप्पन्ति अमुआणम्॥'

अत्र छिप्पन्तीति सकृदुपात्तम्। कुलपालिकानां स्तना उपमेयाः। अन्त्यं यथा—

---

नावस्थानमित्यर्थः। प्रतिवस्तूपमातो भेदकमाह—**अत्रेति**। यथा निर्वाति विकसतीति। निर्वाणविकसनयोर्भेदोऽपि सादृश्याद्बिम्बप्रतिबिम्बरूपता। प्रतिवस्तूपमायां तु शुद्धसमानधर्म एवेति भेद.। न च यथा हिमांशोरालोके कुमुदं विकसति तथा त्वयि दृष्टे तस्या मन. प्रसीदतीत्युपमां विना पूर्वोत्तरार्धयोरसंबन्धान्निदर्शनात्वमाशङ्कनीयम्। निदर्शनायां समानधर्मानुपादानेनासंभवमात्रप्रयुक्तत्वादुपकल्पनाया इह तु बिम्बप्रतिबिम्बभावापन्नधर्मवशेनेति भेदात्। **विपर्यय इति**। वाते तु नेति विपर्यय इत्यर्थः। इति दृष्टान्तप्रकरणम्॥ १४॥ **अर्थादिति**। प्रकृताप्रकृतधर्मैक्ये प्रकृतिसामर्थ्यादित्यर्थः। **प्रदीपसाम्यादिति**। तथा च दीप इवेतीवार्थे कन्। सैवेति व्याचष्टे—**सकृद्वृत्तिरेवेति**। **किवणाणँ इति**। 'कृपणानां धनं नागानां फणामणिः केसराणि सिंहानाम्। कुलपालिकाना स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥' स्पर्शाक्षमत्वं धर्मः सकृदुपात्त उपमाकल्पकः। चन्द्र इव मुखं मनोज्ञ-

---

१. 'तवेति। साहसकर्मणा शर्म सुखमस्येति विग्रहः। कृपाणान्तिकं खड्गसमीपम्। आनिनीषतो नेतुमिच्छतो न तु नीतवतः। तवाहवे रणे परेषां शत्रूणां भटा योद्धारो विशरारुतां विशीर्णतामगुः प्रापुः। विशरारुतामहिंसकतामित्यन्ये। हि यतः। अवाते वातशून्ये देशे इति वैधर्म्यदृष्टान्तः। वाते तु न दधतीति व्यतिरेके साधर्म्ये पर्यवसानात्।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'किवणाणमिति। केसराणि स्कन्धलोमानि कुलपालिकानां कुलवधूनाम्। अमृतानामिति सकलषष्ठ्यन्तविशेषणम्। अत्र वर्ण्यत्वेन प्रकृतानां कुलवधूस्तनानां तदुपमानत्वेनाप्रकृतानामन्येषां च कुतः संस्पृश्यन्त इति सकृद्धर्मोपादानाद्दीपकालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥'

अत्र वधूरिति कारकस्य सकृद्वृत्तिः ।

**मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।**

गुणावहमुपकारकम् । यथा—

'सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम् ।
कोदण्डेन शरा. शरैररिशिरस्तेनापि भूमण्डल
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥'

स्पष्टम् । मालोपमादीनां बहूपमानसंबन्धान्नापरो विशेष इति न ते लक्षिताः । इदं तु पृथग्लक्षितम् । उत्तरोत्तरमुपकार्योपकारकतया परस्परसंसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशादिति ।

---

मित्यादावुपमावारणीयोपमाकल्पकत्वं धर्मविशेषणं बोध्यम् । **स्विद्यतीति** । स्वेद. सात्त्विको भाव । कू(क)णत्यालिङ्गनोद्यते प्रिये मृदुशब्दविशेषं करोति । वेल्लत्यङ्गं संकोचयति । विवलति परिवृत्य शेते । निमिषति मृषा नेत्रे मुद्रयति । इच्छति न तु करोतीत्यर्थ । अत्र यद्यपि सर्वक्रियाणां प्रकृतत्वमेव न वा तासामुपमानोपमेयत्वावगम. । तदभ्युपगमे वा तुल्ययोगितैवोचिता न तु दीपकं तथाप्येतद्भिन्नमेव पूर्वस्माद्दीपकाद्विवक्षितम् । उभयानुगतमन्यतरत्वं चैकं लक्षणमिति तात्पर्यम् । केचित्तु—प्रकृताप्रकृताना सकृद्धर्मोक्तिर्दीपकमित्येव लक्षणम् । क्रियाणा प्रकृताप्रकृताना यत्रैककारकान्वयस्तत्राप्येतल्लक्षणान्तर्गतत्वमेव । यथा—'वसु दातुं यशो धातुं विधातुमरिमर्दनम् । त्रातुं च मादृशान् राजन्नतीव निपुणो भवान् ॥' अत्र वसुदानस्त्राणरूपयो. प्रकृतयो क्रिययोररिमर्दनयशआधानयोश्चाप्रकृतयोरेकस्य नृपरूपकारकस्यान्वय इति पूर्वलक्षणाक्रान्तत्वेन दीपकान्तरमङ्गीकर्तव्यम् । स्विद्यतीत्यादौ सर्वक्रियाणा प्रकृतत्वे तु तुल्ययोगितेत्याहु । **सङ्ग्रामेति** । सप्राप्त इत्यादिपाठान्तरकल्पनं सप्तमोक्तादोषवारणाय । अत्र कोदण्डस्य प्रक्षेपणाख्यशरोपकारहेतुत्वं शराणां चारिशिरसो भूमण्डलप्राप्तिरूपोपकारहेतुत्वं शिरसश्चोत्तमस्वामिलाभरूपभूमण्डलोपकारहेतुत्वं भूमण्डलेन कीर्तिमासादयता नृपोपकारकरणं नृपेण च कीर्तेर्लोक-

---

१. 'स्विद्यतीति । नवोढा वधू शयने तल्पे स्वेद भजते । कूणति सकोचमालम्बते । सवितर्क वीक्षत इति चण्डीदास' । वेल्लति परिवृत्य शेते । विवलति विशेषतश्चञ्चला भवति । निमिषति निद्राव्याजेन नेत्रे मुद्रयति । अन्तर्नन्दति हृष्यति । नवोढात्वेन बाह्यतो हर्षाप्रकाशनात् । अतएव चुम्बितुमिच्छति न तु चुम्बतीत्यनेकासु क्रियासु वधूरूपकर्तृकारकस्य सकृद्वृत्ति ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'सङ्ग्रामेति । सप्तमे व्याख्यातम् । अत्र कोदण्डादिभिः पूर्वपूर्वैरुत्तरोत्तरेषामासादनेन लोकत्रयव्यापिकीर्तिलाभानुकूल्यरूपोपकारसपादनान्मालादीपकम् ।' इत्युदाहरणचन्द्रिकासक्षेप..

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १८ ॥**

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा। धर्मं इत्यनन्तरं यदुपादीयत इति शेषः। सकृत्पदोपादानाद्यत्र प्रतिस्वं भिन्ना धर्मा एकस्यैव वा सर्वत्रोपादानं तत्र नातिप्रसङ्गः। तत्र प्राकरणिकानामेव यथा—

'पाण्डुक्षामं वदनं सरसं हृदयं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः॥'

अत्र प्रकृतानां विरहिणीवदनादीनामेव धर्मत्वेनावेदनाख्यो धर्म उपात्तः। न तूपमानरोगधर्मतया। अप्राकरणिकानामेव यथा—

'कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य॥'

अत्र कामिन्या वर्णनीयत्वादप्राकरणिकानां कुमुदादीनामेव धर्मतया पूर्वार्धे कापदव्यङ्ग्योऽधिक्षेप उत्तरार्धे प्रतिहतत्वं चोपात्तम्।

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः।**

अन्यस्योपमेयस्य। व्यतिरेको विशेषेणातिरेक आधिक्यम्। स एवेति व्यतिरेकः। कश्चित्तु—"यत्रोपमेयादुपमानस्य उपमानादुपमेयस्य वा आधिक्यं स व्यतिरेक इति लक्षणम्। कथमन्यथा—

---

त्रयव्यापनाख्योपकारजन(न)मित्यवगन्तव्यम्। इति दीपकप्रकरणम् ॥ १५ ॥ **नियतानामिति**। प्राकरणिकाप्राकरणिकोभयावृत्तिधर्मस्य सकृदनेकान्वयित्वं तुल्ययोगितेत्यर्थः। प्रतिस्वं प्रत्येकम्। यथा मुखं विकसितस्मितमित्यादौ। **एकस्यैव वेति**। यथा—'दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव। तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम्॥' इत्यादावित्यर्थः। रसः शृङ्गारोऽन्नरसश्च। क्षेत्रियोऽचिकित्स्यो राजयक्ष्माख्यः। **न तूपमानेति**। विप्रलम्भेऽपि (उप)मानभूतरोगधर्मतयेत्यर्थः। इति तुल्ययोगिताप्रकरणम् ॥ १६ ॥ **विशेषेणेति**। तेन मुखमिव चन्द्र इति प्रतीपे उपमानीकरणप्रयुक्तस्याधिक्यस्य गम्यत्वे विशेषतस्तद्बोधकशब्दाभावान्नातिव्याप्तिः। **स एवेति**। न तूपमेयादुपमानस्य व्यतिरेकोऽपीत्यर्थः। एतदेव दूषयितुमुपन्यस्यति—**कश्चित्त्विति**। **अत्रानुपादानेति**। श्लेषस्थलेऽनुपादानत्रयमित्यर्थः। साम्यस्य श्रौतत्वे आर्थत्वे आक्षि-

---

१. 'पाण्ड्विति। सप्तमे व्याख्यातम्। अत्र प्रकृतानामेव वनादीनामावेदनाख्य एको धर्म इति तुल्ययोगितालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'कुमुदेति। नीलं च तन्नीरजं च तेषामालिः पङ्क्तिरिति विग्रहः। का। कः पदार्थ इत्यर्थः। आननस्येत्यत्र पुर इत्यनुषङ्गः। एकपदे युगपत्। अत्र कामिनीनयनाननोपमानत्वेनाप्रकृतानामेव कुमुदादीनां पूर्वार्धे कापदद्योत्य आक्षेपः उत्तरार्धे प्रतिहतत्वं चैको धर्म उक्त इत्यपरो भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्धते नितराम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥'

इत्यादिसंग्रहः। अत्र ह्युपमानभूतस्य शशिन उत्कर्षः। क्षेण्येऽपि पुनर्वृद्धेः" इत्याह तन्न युक्तम्। अस्थैर्यं हि तस्योपमानता। तदाधिक्यं चोपमेये यौवन एवात्र विवक्षितम्। तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्तं वचः। एनं विभजते—

**हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १९ ॥**
**शब्दार्थाभ्यामथाक्षिप्ते श्लेषे तद्वत्रिरष्ट सः ।**

व्यतिरेकस्य द्वौ हेतू। उपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षनिमित्तं च। तयोर्द्वयोरप्युपादानमित्येकः प्रकारः। अनुपादाने तु त्रयो भेदाः। प्रथमस्यैव द्वितीयस्यैव उभयोरपि वा हेत्वोरनुपादानात्। तदेवं चत्वारो भेदाः। ते च प्रत्येकं त्रिधा। साधर्म्यस्य क्वचिदिवादिना शब्दशक्तेः प्रतिपादनात्। क्वचित्तुल्यादिशब्देनार्थशक्त्या। क्वचिदुभयाभावेऽप्याक्षेपेणेति द्वादशभेदाः। ते च प्रत्येकमश्लिष्टश्लिष्टशब्द इति चतुर्विंशतिभेदः स इत्यर्थः। तत्राश्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये यथा—

'असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महामतेः ॥'

अत्रोपमाने तुच्छत्वमुपमेये महाधृतित्वं च हेतू। इवशब्दसत्त्वाच्च शाब्दमौपम्यम्। अत्रैव तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानभेदत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम्। हेतुद्वयोपादान एवार्थसाम्ये यथा—

'असिमात्रसहायोऽयं प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥'

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम्। अत्र पूर्ववदनुपादानभेदत्रयं द्रष्टव्यम्। हेत्वोरुक्तावेवाक्षिप्ते साम्ये यथा—

'इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन निन्दतीन्दुं कलङ्किनम् ॥'

---

१. क्षीण इति। विरमेत्यस्य मानादिति शेषः। यातं गतं यौवनं त्वित्यन्वयः। अनिवर्ति अपरावृत्तिशीलम्। अत्र यौवनस्यास्थिरतायामुपमानाच्चन्द्रादाधिक्यमिति व्यतिरेकालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'असीति। प्रभूता बहवश्च तेऽरयश्च तेषां पराभवे सति। स्मयो गर्वः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'इयमिति। दासीकृता तामरसस्य ताम्रकाञ्चनस्य श्रीर्येनेत्याननविशेषणम्। 'स्मृतं तामरसं पद्मताम्रकाञ्चनयोरपि' इति विश्वः'। इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्राकलङ्कित्वकलङ्कित्वे हेतू समुपात्तौ। इवादीनां तुल्यादीनां वाभावादाक्षिप्तमौपम्यम्। अत्रैव हेत्वनुपादाने भेदत्रयं पूर्ववद्द्रष्टव्यम्। न चाक्षिप्तभेद उपमायां शङ्कनीयः। जयत्यादिशब्दस्यावश्यकतया व्यतिरेकेण विषयापहारात्। अथ श्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दमौपम्यं यथा—

'जितेन्द्रि[1]यतया सम्यग्विद्यावृद्धनिषेविणः।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥'

अत्र श्लिष्टो गुणशब्दः। तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्ते। इवार्थे वतिरिति शाब्दमौपम्यम्। अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम्। तत्रैवार्थे साम्ये यथा—

'अ[2]खण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः।
न निशाकरवज्जातु कलावैकल्यमागतः॥'

अत्र कलाशब्दः श्लिष्टः। कलावैकल्यतदभावौ हेतू शब्दोपात्तौ। तुल्यार्थे वतिरित्यार्थमौपम्यम्। अत्रानुपादानत्रयं चिन्त्यम्। अयमेव मालारूपो यथा—

'ह[3]रवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।
रविवन्न चापि दुःसहकरतापितभूः कदाचिदसि॥'

पूर्ववत्। तत्रैवाक्षिप्ते साम्ये यथा—

'नि[4]त्योदितप्रतापेन त्रियामामीलितप्रभः।
भास्वतानेन भूपेन भास्वानेष विनिर्जितः॥'

अत्र भास्वतेति प्रतापेति च श्लिष्टं पूर्वार्धोपात्तं हेतुद्वयम्। इवादेस्तुल्यादिशब्दानां चाभावादाक्षिप्तैवोपमा। अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम्। निर्जितजयत्यादिशब्दाभावेऽपि श्लिष्टविशेषणेनौपम्याक्षेपादप्ययं भेदः संभवति। यथा—

'स्व[5]च्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमगन्धहृद्यम्।

---

१. जितेन्द्रियतयेति अब्जवत्कमलस्येव। गुणाः पाण्डित्यादयस्तन्तवश्च।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अखण्डेति। मण्डलं राष्ट्रं बिम्बं च। श्रीः संपत् शोभा च। कला कौशलं चन्द्रषोडशांशश्च। जातु कदाचित्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. हरवदिति। हे विभो, हरवद्विषमदृष्टिः कदाचिन्नासीदित्याद्यन्वयः। विषमदृष्टिस्त्रिलोचनः सर्वाननुकूलदृष्टिश्च। विधूत· क्षिप्तो विततो वृषोऽसुरविशेषो धर्मश्च। करो राजग्राह्यधनं किरणश्च। तापिता उद्वेजिता संतापिता च। भूर्भूमिस्तद्गतजनश्च अय मालारूपो व्यतिरेकः।' इत्युदाहरणचन्द्रिकासंक्षेप.. ४. 'नित्योदितेति। प्रतापः पराक्रमः प्रकृष्टतापश्च। भास्वता दीप्तिमता। भास्वान् सूर्य·।' इत्युदारणचन्द्रिकासंक्षेपः ५. 'स्वच्छेति। आननपक्षे स्वच्छस्वरूपताख्यगुणेन समुल्लसित पूर्णमिन्दुबिम्बमिति रूपकम्। बिम्बप्रभोऽधरो यत्र तादृशम्। मधुपक्षे स्वच्छात्मना गुणेन समुल्लसितं प्रतिबिम्बितमिन्दुबिम्ब यत्र तादृशम्। आननपक्षेऽप्ययमेवार्थ इत्यन्ये। बिम्बप्रभामाधारकम्। जीर्णमधुनो रक्तत्वात्। यत्र नगर्याम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाननमङ्गनानाम् ॥'

स्पष्टम्। श्लिष्टोक्तियोग्यपदस्य पृथगुपादानेऽप्येवंजातीयका भेदाः संभवन्ति तेऽनयैव दिशा द्रष्टव्याः।

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ २० ॥**
**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः।**

वक्तुमिष्टस्य प्राकरणिकत्वाद्वचनार्हस्य यो निषेधः स आक्षेपः। निषेधो निषेध इवेत्यर्थः। शब्दगत्या निषेधेऽप्यर्थगत्या विधेरेव प्रतिपत्तेः। तत्प्रयोजनमाह—विशेषाभिधित्सयेति। वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वमुक्तविषयेऽतिप्रसिद्धत्वं चेति विशेषः। विभजते—वक्ष्यमाणेति। तत्र वक्ष्यमाणविषयो यथा—

'ए एहि किंपि कीएँवि कएण णिक्किव भणामि अलमहवा।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥'

अत्र विरहजनितदुर्दशातिशयो वक्ष्यमाणो निषिद्धः। उक्तविषयो यथा—

'ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।

---

भत्वे सति श्लेषे कथमुभयानुपादानम्। वैधर्म्यानुक्तौ श्लेषस्य निरालम्बनत्वापत्तेरित्याशयः। **पृथगुपादानेऽपीति**। उपमानोपमेययोर्विशेषणत्वेन पृथगुपादानेऽपीत्यर्थः। यथा—'अमृतममृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्। सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥' इत्यादौ। अत्र द्वितीयोऽमृतशब्दोऽतिमधुरार्थः। नान्यथा किं त्वतिमधुराणि। अत्रोपमानभूतेष्वमृतादिषूपमेये चाधरेऽतिमधुरत्वं पृथगुपात्तम्। प्रियादशनच्छदादन्यत्स्वादु स्यादिति भङ्ग्या तस्यातिस्वादुत्वप्रत्ययात्। इति व्यतिरेकप्रकरणम् ॥ १७ ॥ **निषेध इवेति**। निषेधाभास इत्यर्थः। **ए एहीति**। 'अये एहि किमपि कस्या अपि कृते निष्कृप भणाम्यलमथवा। अविचा-

१. 'ए एहीति। ए इत्यव्ययं सानुनयसंबोधने। एहि आगच्छ। 'एह्णिवि' इति पाठे इदानीमपीत्यर्थः। अथवेति पूर्वाक्षेपे। अलम्। न भणिष्यामीत्यर्थः। खेदातिशयात्पुनरुक्तिः। अलं व्यर्थमिति वा। अविचारितेति। स्वभावमनालोच्यानुरागवर्धनपरेत्यर्थः। अत्र विरहदुर्दशातिशयो वक्ष्यमाणो वक्तुमशक्यतया निषिद्ध इत्याक्षेपालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. ज्योत्स्नेति। शीतांशुकान्तद्रवश्चन्द्रकान्तद्रवः। मृणालस्य वलयानि कङ्कणानि। अन्तर्मानसं मानसाभ्यन्तरे। प्रभवता प्रकर्षेण स्थितवता त्वया हेतुभूतेन ज्योत्स्नादयस्तस्या नायिकायाः स्फुलिङ्गोत्करस्याग्निकणसमूहस्य व्यापारो दाहोत्पादनं तस्मै तदर्थं भवन्ति। आः इति प्रकोपेऽव्ययम्। हन्त विषादे। अनेनोक्तेन किम्। न ब्रूमहे। अतिप्रसिद्धत्वादित्याशयः। अयमुक्तविषयो निषेधः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥'

## क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥ २१ ॥

वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम् । वस्तुतस्तु कारणप्रतिषेधे कार्यवचनं विभावना । न च विरोधः । स्वाभाविकत्वस्य कारणान्तरस्य वा विभावनात् । उदाहरणम्—

'कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि ।
परिवर्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा ॥'

## विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।

अखण्डेषु मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनं विशेषोक्तिः । अत्राप्यप्रसिद्धे कार्याभावहेतौ पर्यवसानाद्विरोधाभावः । सा च त्रिधा—अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च । तत्राद्या यथा—

'निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषरसे भुजंगे चचाल नालिङ्गनतोऽङ्गना सा ॥'

---

रितकार्यारम्भकारिणी म्रियतां न भणिष्ये ॥' निषेधाभासवद्विध्याभासोऽप्यलंकारोऽन्यैरुक्तः । यथा—'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥' इत्यादौ । इत्याक्षेपप्रकरणम् ॥ १८ ॥ **क्रियैवेति** । द्रव्यगुणादेरप्यनभिव्यक्तस्याहेतुत्वादभिव्यक्तरूपक्रियायाः सर्वत्रोपेक्षेति । क्रियैव हेतुरित्याशयः । आत्मादेरपि हेतुत्वादाह—**वस्तुतस्त्विति** । तथा च क्रियतेऽनेनेति व्युत्पत्त्या क्रियाशब्द उक्त इति भावः । स्वाभाविकत्वस्य स्वभावविशेषजन्यत्वस्य । कुसुमितेत्यादौ सौकुमार्यातिशयरूपस्वभावजन्यत्वविभावनम् । 'पुष्पोद्गमैराभरणप्रयोगं प्रारेभिरे वामदृशा युवानः । ततो विना कार्मुककर्मसिद्धिं पुष्पायुधस्याभवदस्त्रमोक्षः ॥' इत्यादौ कारणान्तरं पुष्पाभरणमनुरागोद्दीपकं बोध्यम् । इति विभावनाप्रकरणम् ॥ १९ ॥ केचिदिहोक्तमुक्तनिमित्तभेदद्वयमाहुस्तन्मते उदाहृतपद्येऽनुक्तनिमित्तता द्वितीयोदाहरणे तूक्तनिमित्ततेति द्रष्टव्यम् । अचि-

---

१. 'कुसुमितेति । कुसुमानि सजातानि यासां ताः कुसुमिताः । रुजं पीडामधत्त धृतवती । परिवर्तते स्म परावृत्य वर्तते स्म । नलिनीयुक्ताभिर्लहरीभिः । नलिनीपरम्पराभिर्वा । नलिनीति नायिकाख्ये । अलोलिताप्यचालितापि । अत्राघातादिरूपकारणाभावेऽपि पीडादिरूपतत्कार्यकथनाद्विभावनालंकारः । सौकुमार्यातिशयस्याप्रसिद्धस्य हेतोर्विभावनात् । इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'निद्रेति । द्युरत्ने सूर्ये । भुजंग उपनायकः । अत्र सूर्योदयादिकारणसत्त्वेऽप्यालिङ्गनपरित्यागरूपकार्याभावोक्तेर्विशेषोक्तिः । सा च तन्निमित्तस्यानुरागातिशयस्यानुक्तेरनुक्तनिमित्ता । रतश्रमादक्षमत्वं निमित्तमिति चण्डीदासः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्रानुरागातिशयो निमित्तं चलनाभावे । स च विशिष्य वक्तुं शक्यत्वेऽपि नोक्त इत्यनुक्तनिमित्तेयम् । उक्तनिमित्ता यथा—

'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥'

'अत्र कर्पूरदाहमात्र उपमानं न तु शक्तिमत्त्वेऽपि' इति भास्करः । शक्तिमत्त्व इति परमार्थः । ईषद्दग्धस्य तस्य सौरभाद्यतिशयात् ।

'भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः ।
निजां यदप्लोषदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यतार्जि ॥'

इत्यादि नैषधदर्शनात् ।

अत्रावारवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः । अचिन्त्यनिमित्ता यथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥'

अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तुं न शक्यत इत्यचिन्त्यनिमित्तेयम् ।

**यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ २२ ॥**

---

न्त्यनिमित्ततो वैलक्षण्यमाह—**स च विशिष्येति** । **दाहमात्र इति** । यथा कर्पूरं निरवशेषं दह्यते तथेत्येतावन्मात्रं विवक्षित न तु तस्य शक्तिमत्त्वम् । अप्रसिद्धेरित्यर्थः । भ्रूभ्या भ्रूस्वरूपेण भवता । घनश्चासौ सारो दृढस्तत्ता कर्पूरता च । अप्लोषदशामदाहदशाम् । संप्रति दग्धदशायाम् । अत्राचिन्त्यत्वचिन्त्यत्वयोरनुक्तनिमित्तस्यैव भेदरूपत्वाद्भेदद्वयमेव प्राचीनैर्नवीनैश्च कैश्चिदुक्तं तदयुक्तम् । अनुक्तनिमित्तायां निद्रेत्यादौ चिन्त्यस्य निमित्तस्यानुरागातिशयत्वेन विशिष्य ज्ञानमचिन्त्यत्वमिति द्रष्टव्यम् । तद्यथा—'ण हु रूवं ण अ ऋद्धी णेअ कुलं ण अ गुणा ण विण्णाणम् । एमे अ तह वि कस्स वि कोवि जणो वल्लहो होइ ॥' 'न खलु रूप न च ऋद्धिर्नैव कुलं न च गुणा न विज्ञानम् । एवमेव तथापि कस्यचित्कोऽपि जनो वल्लभो भवति ॥' इति संस्कृतम् । अत्र रूपाद्यभावेऽपि वल्लभत्वस्य निमित्तमचिन्त्यमित्यूह्यम् । इति विशेषोक्तिप्रकरणम् ॥ २० ॥ **यथासंख्यमिति** । अकलिततपस्तेजोवीर्यप्रथिम्नीत्यादावित्रापि क्रमप्रक्रमभङ्गदोषात्तदभावरूपं यथासंख्यं नामा-

---

१. 'कर्पूर इवेति । शक्तिर्भ्राणस्य मनसश्चाकर्षकता । कर्पूरस्यापीषद्दग्धस्य सौरभातिशयादृष्टान्तत्वम् । तथा च श्रीहर्षः—'भ्रूभ्या प्रियाया-' (इत्यादि पद्यम्) इय चावार्यवीर्यत्वरूपोक्तनिमित्ता ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. नैषधीयकाव्ये सप्तमसर्गे २५ तमः श्लोकः. ३ 'स एक इति । त्रीणि जगन्ति भुवनानि । अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यमित्यचिन्त्यनिमित्तेति ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

यथा—

'एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च।
तापं च संमदरसं च रतिं च पुष्ण-
ञ्शौर्योष्मणा च विनयेन च लीलया च॥'[1]

स्पष्टम्।

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥ २२॥**

सामान्यं यद्विशेषेण समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः। द्वयोरपि प्रत्येकं समर्थनहेतुः। साधर्म्यं वैधर्म्यं चेति चतुःप्रकारोऽयमित्यर्थः। तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—

'निर्जदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्॥'[2]

सामान्येन विशेषसमर्थनं साधर्म्येण यथा—'सुसितवसना—'[3] इत्यादि।

विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

'गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥'[4]

अत्र धुर्य इत्यादिसाधारण्यात्सामान्यम्। गौर्गलिरिति विशेषः। वैधर्म्यं च स्फुटम्। वैधर्म्येण विशेषस्य सामान्येन समर्थनं यथा—

---

लंकार इति नव्याः। इति यथासंख्यालकारप्रकरणम्॥ २१॥ **विशेषो वा सामान्येनेति**। दृष्टान्तप्रतिवस्तूपमयोस्तु विशेषेण विशेषस्य समर्थनमिति ततो भेदः। काव्यलिङ्गे तु न सामान्यविशेषभाव इति तन्निरासः। इत्यर्थान्तरन्यासप्रकरणम्॥

---

१. 'एक इति। हे देव, एकस्त्वं द्विषां विदुषां मृगीदृशां च चेतसि त्रिधा त्रिभिः प्रकारैर्वससि अत्र विषये चित्रमाश्चर्यमित्यन्वयः। किं कुर्वन्। शौर्यस्य प्रतापस्योष्मणा विनयेन लीलया विलासेन च यथासंख्य तापं संमदस्य हर्षस्य रसं रतिं च पुष्णन्। इति प्रकारत्रयप्रदर्शनम्। सोऽयं यथासंख्यालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'निर्जेति। आवृतमाक्रान्तम्। एवकारोऽप्यर्थे। सुन्दरमपीत्यर्थः। अयं विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'सुसितेति। व्याख्यातं सप्तमे। अत्र क नास्ति शुभप्रद इति सामान्येन पूर्वोक्तविशेषसमर्थनरूपः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'गुणानामिति। दौरात्म्यादपराधात्। धुरि अनन्यसाध्यकार्यभारे। धुर्यस्तद्वहनक्षमः। संजातः किणो घर्षणचिह्नं यस्य स तथा पश्चान्नञ्समासेनाताद्दृशः स्कन्धो यस्य सः। गलिः कुत्सितगलो गौर्बलीवर्दः। गले बलादासञ्जितं युगं यः पातयति स गलिरिति केचित्। अत्र वैधर्म्येण सामान्यसमर्थनम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥'

सामान्यविशेषभाव उपपादनीयः ।

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुगत्या विरोधाभावेऽपि यद्द्वयोर्विरुद्धयोरिवाभिधानं स विरोधः । एवं विभजते—

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥ २४ ॥**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

जात्याद्यैरिति गुणक्रियाद्रव्यैः । त्रिभिरिति गुणक्रियाद्रव्यैः । द्वाभ्यामिति क्रियाद्रव्याभ्याम् । यद्यपि गुणानामपि जात्या विरोधः संभवत्येव तथापि जातेर्गुणविरोध एव प्रविष्टत्वात्त्रिभिरित्युक्तम् । एवं क्रिया द्वाभ्यामित्यपि द्रष्टव्यम् । तदयमर्थः—जातिनिरूपितो भेदश्चतुर्धा । गुणनिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा । एवमग्रेऽपि । तत्र जात्या जातेर्विरोधो यथा—

'अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।
सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥'

अत्र नलिनीत्वकिसलयत्वादिजातीनां दहनत्वजात्या विरोधः । वियोगातिशयेन गौणत्वात्तदाभासता । एवमग्रेऽप्यूह्यम् । जातेर्गुणेन यथा—

---

। २२ ॥ वस्तुगत्या विरोधस्य दोषत्वादविरोधेऽपीत्युक्तम् । तद्व्याचष्टे—**वस्तुगत्येति । अभिनवेति ।** ननु जात्योर्द्रव्ययोश्च न विरोधालंकारो भवितुमर्हति रूपकाक्रान्तत्वात् । अन्यथा मुखं चन्द्र इत्यादावपि विरोधालंकारप्रसङ्गात् । न च निरवकाशं रूपकं गुणादौ सावकाशस्य विरोधस्य बाधकमिति वाच्यम् । तथा सति मृणालवलयादिदवदहनराशिरित्यादाविष्टस्य विरोधालंकारस्यासिद्धिप्रसङ्गादिति चेत्, अद्धा । परं तु यत्र यस्य चमत्कारे प्राधान्यं स तत्रालंकार इत्युच्यते । एवं च मुखं चन्द्र इत्यादौ विद्यमानोऽपि विरोधो न चमत्कारितया विवक्षितः अपि तु चन्द्राभेद एवेति रूपकमेव । दवदहनराशिरित्यादौ तु विरहिण्याद्यवस्थाया अद्भुतत्वविवक्षावशाद्विरोध एवेति व्यवस्था । न च रूपके विरोधाविवक्षायामपि विरोधे

---

१. 'अहो इति । कश्चिदापन्नं सुहृदं प्रति तदवस्थोचितमप्रियं वक्तुकामः खेदातिशयात्स्वजीवितं निन्दति । हि विषादे । यद्यसादेवंविधस्याप्रियस्य कदाप्यनुक्तत्वात् । अहो इत्याश्चर्ये । त एव जगति धन्या इति सबन्धः । पराभव आपत्तिः । अत्र वैधर्म्येण विशेषसमर्थनम् ।' इत्युदाहरणचन्द्रिकासंक्षेप. २ 'अभिनवेति । हे सुभग, विधिवशतो दैववशतो वियोग एव पविर्वज्रं तस्य पाते सति नूननलिन्यादिकं दावानलराशिरूपम् । भवतीति शेषपूरणेनान्वयः । अत्र नलिनीत्वादिजातीना दहनत्वजात्या विरोधस्य विरहोद्दीपकतया दहनत्वोपचारेण परिहारात्तदाभासोऽलंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'गिरयो[1]ऽप्यनुन्नतियुजो मरुदप्यच(ब)लोऽब्धयोऽप्यगम्भीराः ।
विश्वंभराप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥'

अत्र गिरित्वादिजातीनामनुन्नतत्वादिगुणैर्विरोधः । वर्णनीयातिशयविवक्षया तु परिहारः । विश्वंभरेति तु न जात्युदाहरणम् । जातेः क्रियया यथा—

'येषां[2] कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां संगरसङ्गसक्तमनसां राज्ञां त्वया भूपते
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥'

अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः । लौहित्यचैक्कण्यार्थकत्वादविरोधः । एवमग्रेऽप्यविरोध ऊह्यः । तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्यानम् । अनुदाहरणत्वप्रसङ्गात् । जातेर्द्रव्येण यथा—

---

स्वानुगुण्येनाभेदस्य विवक्षितत्वाद्रूपकापत्तिरिति शङ्क्यम् । विरोधविवक्षाविरहवैशिष्ट्यस्यारूपकलक्षणे निवेशेनादोषात् । अभेदस्य विरोधाङ्गत्वेन प्राधान्येन विरोधस्यैव व्यपदेशौचित्याद्वा । एवं च मुखं चन्द्र इत्यादावपि विरोधविवक्षायां स एवालंकार इत्यवधेयम् । **गिरय इति** । अनुन्नतिरल्पोच्चता । अचलत्वमल्पवेगत्वम् । अगम्भीरा अल्पगम्भीराः । नञो ह्यल्पार्थत्वात् । तथा चोक्तम्—'तत्सादृश्यं तदल्पत्वं तदन्यत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति । तत्सादृश्यम्—अब्राह्मण इति । तदल्पत्वम्—अनुदरा कन्येति । तदन्यत्वम्—अघटः पट इति । विरोधित्वम्—असुरा इति । अप्राशस्त्यम्—अप्रशस्तो ब्राह्मणोऽब्राह्मण इति । अभावः—भूतले घटो नास्तीति । तेन जातिगुणविरोधोदाहरणत्वसंगतिरित्याहुः । वस्तुतस्त्वभावस्यापि जातिक्रियाद्रव्यातिरिक्तत्वेन गुणान्तर्भाव एवेति ग्रन्थकृद्वक्ष्यति । अतिलघुत्वमपकृष्टगुरुत्वम् । तस्य च विश्वंभराद्रव्येण विरोधः । प्रकृते तु तस्य नोदाहरणत्वम् । व्यक्त्यभेदेन विश्वंभरात्वस्य जातित्वाभावादित्याह— **विश्वंभरेति । अनुदाहरणत्वेति** । तीक्ष्णत्वस्य जातित्वाभावादिति भावः ।

---

१. 'गिरय इति । अनुन्नतिरुच्चत्वाभावः । अबलो बलशून्यः । अत्र गिरित्वादिजातीनामुच्चत्वाभावादिभिर्गुणैर्विरोधः । राजगतौन्नत्याद्यतिशयविवक्षया तत्परिहारः । एवमग्रिमोदाहरणेष्वपि विरोधतत्परिहारावूहनीयौ । यत्त्वभावस्य गुणत्वाभावादल्पार्थे नञ् इति व्याख्यानं तदयुक्तम् । चतुष्टयी शब्दाना प्रवृत्तिरिति नये जातिक्रियाद्रव्यातिरिक्तस्यैव गुणपदेनोपादानात् । अन्यथाभावादिविरोधस्यासंग्रहेण विभागन्यूनत्वापत्तेरिति ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'येषामिति । कण्ठपरिग्रहे या प्रणयिता प्रणयशीलता ताम् । धाराधरः खड्गः । तीक्ष्णस्तीक्ष्णधारः परुषश्च । अनुरज्यतेऽनुरक्तो भवति लोहितश्च । स्नेहं प्रीतिं चैक्कण्यं च । पराप्नोति प्राप्नोति । संगरस्य युद्धस्य सङ्गे सक्तं मनो येषा ते । पटलैः समूहैः । प्रसाधनविधिर्भूषाविधिः । कौतुकमिति क्रियाविशेषणम् । एतत्कौतुकमिति वा ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'[1]सृजति च महदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥'

अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः । गुणस्य गुणेन यथा—

'[2]सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥'

कठिनत्वसुकुमारत्वयोर्विरोधः । गुणस्य क्रियया यथा—

'[3]पेलवमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥'

अत्र पेलवपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोध । यथा वा मद्भ्रातुः श्रीहर्षस्य—

'[4]सर्वतः पुरत एव दृश्यते पात्रतां न पुनरेति चक्षुषोः ।
हृद्गतोऽपि भुजयोर्न भाजनं कोऽयमालि वनमालिनः क्रमः ॥'

अत्र दर्शनगमनक्रिययोर्गमनाभावभुजभाजनत्वाभावाभ्याम् । उक्तत्रयातिरिक्तस्यैव गुणशब्देन विवक्षणात् । 'गिरयः–' इत्यादि तथैवोदाहृतम् । गुणस्य द्रव्येण यथा—

'[5]क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥'

अत्राम्भोजदलाभिजातत्वस्य गुणस्य क्रौञ्चाद्रिणा द्रव्येण विरोधः । क्रियायाः क्रियया यथा—

---

जनार्दनस्य मत्स्यशरीरपरिग्रह आगमसिद्ध इति विरोध । शराभिघाततैक्ष्ण्यातिशयविवलनौपचारिकत्वं (?) च नवाम्भोजदलसौकुमार्यस्य विवक्षितत्वात्परिहार्यः । जडीकरणतापक्रिययो कालभेदेन वा क्रियाया जलनिधिना विरोधस्तपःप्रभावत्वातिशयेन परिह्रियते । एवं कालिन्दीपदस्य श्यामत्वेनौपचारिकतया विरोधपरिहार इति दिक् । इति विरोधप्रकरणम् ॥ २३ ॥ वर्णस्वभावोक्ति॰ प्रथममरुणच्छाय इत्यादौ बोध्या ।

---

१. 'सृजतीति । अवति रक्षति । हेल्या अनायासेन । सोऽपि जनार्दनोऽवसरवशाच्छफरः । जात इति शेष । अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'सततमिति । घटना सपादनं तेन कठिनाः कराः । भवति त्वयि सति सरोजवत्सुकुमाराः । जाता इति शेषः । अत्र कठिनत्वसुकुमारत्वयोर्गुणयोः परस्पर विरोध॰ ।' इत्युदाहरणचन्द्रिकासक्षेप ३. 'पेलवमिति । पेलव कोमलम् । सतत्त्वतत्त्वशब्दौ पर्यायौ । मलयजं चन्दनम् ।' इत्युदाहरणचन्द्रिकासक्षेप॰. ४. 'एतदुदाहरणमुदाहरणचन्द्रिकाया न व्याख्यातम्. ५. 'क्रौञ्चेति । उद्दामैरुद्भटैर्दृषद्भि॰ पाषाणैर्दृढो यस्य मार्गणाना बाणानामनर्गलेऽविच्छिन्ने शाते तीक्ष्णे पतने सति नवाम्भोजदलवदभिजात कोमलोऽभूत्स भार्गव॰ परशुरामोऽपूर्व सर्गः सृष्टिर्यस्य यत्कर्मको यत्कर्तृको वेति सत्यमित्यन्वयः ।' इत्युदाहरणचन्द्रिकासक्षेपः.

'[1]परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च तनुते॥'

अत्र जडयति च तापं च तनुत इति क्रिययोर्विरोधः। क्रियाया द्रव्येण यथा—

'[2]अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णाकवलितमनोभिर्जलनिधिः।
इदं को जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः॥'

अत्र पानक्रियायाः कर्मीभूतेन जलनिधिना विरोधः। यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहरणत्वमुचितं तथाप्येकलवणाम्बुधिपरतया समर्थनीयम्। द्रव्यस्य द्रव्येण यथा—

'[3]समदमतङ्गजमदजलनिष्यन्दतरङ्गिणीपरिष्वङ्गात्।
क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी॥'

अत्र गङ्गायमुनयोर्विरोधः।

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्॥ २५॥**

स्वत्वं च स्वमात्राश्रितत्वम्। न तु स्वाश्रितत्वमात्रम्। अतो न साधारणधर्मवर्णनेऽतिव्याप्तिः। रूपशब्देन वर्णः संस्थानं चोच्यते। उदाहरणम्—

'[4]पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय।

---

१. 'परीति। चतुर्थे व्याख्यातम्।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'अयमिति। वारां जलानां निलयः स्थानमिति हेतोस्तृष्णाक्रान्तमनोभिरस्माभिर्जलनिधिः श्रित आश्रितः। मुनिरगस्त्य एनं समुद्रं क्षणादासमन्तात्पास्यति इदं को जानीते इत्यन्वयः। कीदृशम्। निजा करपुटी करसंपुटं तदेव कोटर विलं तद्गतम्। ताम्यन्तो ग्लायन्तस्तिमयो मत्स्या मकराश्च यत्र। तादृशम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'समदेति। हे क्षितितिलक, त्वयि तटजुषि तीरगते सति शंकरस्य चूडा मस्तकं तद्गता आपगा नदी गङ्गापि कालिन्दी यमुना भवति। कुतस्तत्राह—समदेत्यादि। मतङ्गजा. करिणः तेषा मदजलनिष्यन्द एव तरङ्गिणी नदी तत्परिष्वङ्गात्संबन्धात्। मदजलस्य श्यामवर्णत्वं प्रसिद्धम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४ 'पश्चादिति। शयनादुत्थितस्तुरगोऽश्वः क्ष्मां भूमिं खुरेण विलिखति। उत्किरतीत्यन्वयः। अनवरत चलत्प्रोथो नासिका तुण्ड च यस्य सः। किं कृत्वेत्यत्राह—पश्चादित्यादि। अङ्घ्री चरणौ। त्रिकस्य पृष्ठवशाधरभागस्य नत्या नम्रतया विततं विस्तृतमङ्गं द्राघयित्वा दीर्घीकृत्य। आभुग्नो वक्रः कण्ठो यस्य तादृशः। मुखमुरसि आसज्येति संबन्धः। सटाः स्कन्धकेशावलिः। 'पृष्ठवशाधरे त्रिकम्' इत्यमरः। 'प्रोथोऽध्वगेऽश्वघोणायाम्' इति विश्वः। अत्राश्वजातिवर्णनात्स्वभावोक्तिरलकारः॥' इत्युदाहरणचन्द्रिकासक्षेपः.

घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरंगो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥'

अत्राश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनम्।

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा।**

मुखे निन्दावगतौ यत्स्तुतौ पर्यवसानं स्तुतेर्वा मुखेऽवगमो निन्दायां पर्यवसानं तद्व्याजस्तुतिवाच्यमित्यर्थः। कथमुभयोरनेनाभिधानमिति चेत्, आद्यस्य व्याजेन स्तुतिरिति ग्रहणात् अन्त्यस्य तु व्याजरूपा स्तुतिरिति। तत्राद्या यथा—

'हित्वा[1] त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥'

स्पष्टम्। अन्त्या यथा—

'हे[2] हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥'

अत्रोपकारवैमुख्ये पर्यवसानम्।

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥ २६ ॥**

तच्छब्दशक्त्या एकार्थाभिधायकं पदं यत्सहार्थान्वयबलादनेकार्थाभिधायकं सा

---

पश्चादित्युदाहरणेऽङ्घ्रिप्रसारणादिक्रियाप्रयुक्तं संस्थानं बोध्यम्। इति स्वभावोक्तिः ॥ २४ ॥ **रूढिरिति**। एतद्व्याचष्टे—**पर्यवसानमिति**। इति व्याजस्तुतिः ॥ २५ ॥ **शब्दशक्त्येति**। विशेषणपदस्य समानविभक्तिकनामार्थान्वयबोधकत्वसामर्थ्येन क्रियापदस्य च प्रथमान्तोपस्थाप्यान्वयबोधकत्वसामर्थ्येन चेत्यर्थः। **एकार्थेति**। उक्तैकार्थान्वयगमकमित्यर्थः। **सहार्थेति**। समानकालीनैकधर्मवत्त्व-

---

१. 'हित्वेति। हे राजन्, त्वा हित्वा परोऽन्य उपरोधेनानुरोधेन वन्ध्य शून्य मनो येषां तादृशाना मौलिः श्रेष्ठो नास्तीति मन्ये। तथा रमा लक्ष्मीमन्तरेण विनान्यत्र लज्जाया वर्जनमभावो न सदृश्यत इत्यन्वयः। कथम्। तत्राह—य इत्यादि। यो भवान्मुखशतैरुपायशतैरेत्यागलेत्यर्थः। त्यागकृतमवमानन प्राप्यापीति सबन्धः। इय निन्दापूर्विका व्याजस्तुतिः।' इत्युदाहरणचन्द्रिकासक्षेपः. २ 'हे इति। हेलया जिता बोधिसत्त्वा बौद्धा येन स। अतिकारुणिकेत्यर्थः। तोयधे समुद्र। परोऽन्यः। तृष्यता पान्थजनानामुपकारस्य घटनाया संपादने वैमुख्येन पराङ्मुखत्वेन लब्ध यदयशस्तद्भारस्य प्रोद्वहनेन मरोर्देशस्य कृपया साहायक करोपीति स्तुतिपूर्विकेय व्याजस्तुतिर्निन्दापर्यवसायिनी ॥' इत्युदाहरणचन्द्रिकासक्षेपः.।

सहोक्तिः। 'चैत्रमैत्रौ गच्छतः' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानम्। यथा—

'सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलएहिं बाहधारा गलन्ति।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुब्बला जीविदासा॥'

अत्र दीर्घत्वादीनां श्वासादिभिरन्वयः साक्षादेव शाब्दः। दिवसादिभिस्तु सहान्वयबलात्।

## विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः।

सन्न शोभनो न नेतरो नाशोभन इत्यर्थः। तेन केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्तिः। तत्राशोभनत्वं यथा—

'अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः॥'

शोभनत्वं यथा—

'मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥'

अत्र मृगलोचनया दुष्टसुहृद्विशेषं च विना नरेन्द्रसूनोर्विचित्रव्यवहारप्रगल्भत्वचन्द्रसुन्दराशयत्वरूपं शोभनत्वमुक्तम्।

---

रूपसाहित्यान्वयबलादित्यर्थः। **अनेकार्थेति**। अनेकार्थोचितस्वार्थबोधकमित्यर्थः। एतच्चोदाहरणे स्पष्टीकरिष्यते। **सहेति**। 'सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति। तव सुभग वियोगे तस्या उद्वेगशीलायाः सह च तनुलतया दुर्बला जीविताशा॥' अत्र यथा 'पुत्रेण सहागतः पिता' इत्यत्र पुत्रवृत्तिधर्मसमानकालीनधर्मवान्पिता। आगत इत्यागमनस्य पितर्येव शाब्दोऽन्वयः। पुत्रे तु सहार्थसाहित्यबलादागमनबोधः। आगमनरूपधर्मस्यैवागतपदसमभिव्याहारेण धर्मत्वेन बोधात्। (विरोधात्)। एवमिहापि श्वासदण्डेषु दीर्घत्वान्वयः शाब्दः विशेषतो

---

१. 'सह गच्छतः' ग. २. 'सहेति दूत्या नायकं प्रतीयमुक्तिः। श्वासानां घनप्रचुरतया दण्डत्वेन रूपणम्। कार्श्यान्मणिकङ्कणगलनम्। आशाया दुर्बलत्वं कादाचित्कत्वम्। अत्र सहोक्तिरलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'अरुचिरिति। अरुचिर्दीप्तिशून्यः। शशिना विना सापि निशापि महदुत्कटं तमोऽन्धकार इति रूपकम्। उभयेन चन्द्रनिशाभ्याम्। स्फुरितं विलसितम्। चकास्ति शोभते।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४ 'मृगेति। नरेन्द्रसूनू राजपुत्रो विचित्रेषु व्यवहारेषु या प्रतिभायाः स्फूर्तेः प्रभा प्रकाशस्तेन प्रगल्भः। मृगनयनासक्तस्तु नैवंभूत इत्यर्थः। अनेन दुष्टप्रकृतिना। अमृतद्युतिश्चन्द्रस्तद्वत्सुन्दरः। स्वच्छ आशयोऽन्तःकरणं यस्य। उदाहरणद्वये विनोक्तिरलंकारः। पूर्वत्रान्येन विना अशोभनत्वमिह तु शोभनत्वमिति भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥ २७ ॥**

परिवृत्तिरिति लक्ष्यालंकारनिर्देशः । पूर्वाचार्याणां तथैवोद्देशदर्शनात् । अतो न लक्ष्यलक्षणसंदेहः । समासमैरिति विभागः । विनिमयो हि केनचिद्वस्तुना दत्तेन कस्यचिदादानम् । तच्च क्वचित्समेन समस्य । क्वचिदसमेनासमस्य । अन्त्यमपि द्विधा—क्वचिन्न्यूनेनोत्तमस्य । क्वचिदुत्तमेन न्यूनस्येति त्रिविधय-मित्यर्थः । समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम् । तत्राद्यद्वयं यथा—

'[१]लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्वध्वन्यानामहह दृशमादाय सहसा
ददात्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥'

अत्र प्रथमार्धे लास्येनोपादेयतया समस्यामोदस्य, द्वितीयार्धे उपादेयतया उत्तमया दृशा आधिव्याधीनामतादृशतया न्यूनानां विनिमयः । अन्त्या यथा—

'[२]नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुंधरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥'

अत्रोत्तमया वसुंधरया न्यूनानां प्रहाराणां विनिमयः ।

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**
**तद्भाविकं**

---

दिवसनिशादौ साहित्यप्रतीत्या आर्थं इति लक्षणसगतिः । दीर्घादिपदं तु दिवसादा··· धर्मत्वेन दीर्घत्वादिबोधे तात्पर्यग्राहकतया हेतुरिति बोध्यम् । इति सहोक्तिप्रकरणम् ॥ २६ ॥ विनोक्तिरित्यादि स्पष्टम् । इति विनोक्तिप्रकरणम् ॥ २७ ॥ **न्यूनेनोत्तमस्येति** । न्यूनेन दत्तेनोत्तमस्यादानमित्यर्थ. । एवमुत्तमेन दत्तेन न्यूनस्योपादानमित्यर्थो ज्ञेय । अत्र समेन समस्येत्यस्यानुपादेयत्वेन समत्वविवक्षाया चतुर्थोऽपि भेद. कैश्चिदुदाहृत । यथा—'अस्थिमालामयी दत्त्वा मुण्डमालामयीं तनुम् । गृह्णता त्वत्पुरस्थाना को लाभ. स्मरशासन ॥' इति । एवं दानाद्यभावेऽपि धर्मिधर्मभावव्यत्यासे वा विपर्ययाख्योऽलंकार उक्तः । यथा—'काचो मणिर्मणिः

---

१. 'लतानामिति । अय मरुद्वायुर्लतानामसममनुपममामोद परिमलं श्रयतीत्यन्वयः । मतं मनोरम लास्य नृत्य दत्त्वा अर्थाल्लताभ्यः । अध्वन्याना पान्थानाम् । अहह खेदे । आधिर्मन.पीडा । व्याधि. प्रसिद्ध. । भ्रमिर्दिग्भ्रमणदर्शको विकार. । रुदितं रोदनम् । मोहो निश्चेष्टता । एषा व्यतिकर समूहम् ।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'नानेति । हे नृप, सम्प्रहारे युद्धे प्रहरणैरायुधैर्दारुणशब्दयुक्तान्प्रहारान्स्वीकृत्य दर्पयुक्तेनारिसमूहेनेय वसुधा वितीर्णा दत्ता । अर्थात्तुभ्यम् । कीदृक् । निर्विप्रलम्भो वियोगशून्यः परिरम्भस्यालिङ्गनस्य । स्वस्वामिभावसबन्धस्येति यावत् । विधिर्यस्यास्तादृशी । अत्रोदाहरणद्वयेऽपि यथायोगमुत्तममध्यमाधमानां विनिमयोक्तं परिवृत्तिरलकार. ।' इत्युदाहरणचन्द्रिकासक्षेपः.

भूतभाविन इति द्वन्द्वः, न कर्मधारय इत्यविरोधः । भूता भाविनो भावा यत्प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतयाभिधीयन्ते तद्भाविकम् । भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयकोऽत्रास्तीति व्युत्पत्तेरित्यर्थः । उदाहरणम्—

'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥'[1]

अत्र पूर्वार्धे भूतस्याञ्जनस्य उत्तरार्धे भाविनो भूषणसंभारस्य प्रत्यक्षतयाभिधानम् ।

## काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ २८ ॥

अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणम् । वाक्यपदार्थतेति विभागः । वाक्यार्थता पदार्थता चेत्यर्थः । तत्र वाक्यार्थता यथा—

'वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे नैवाहं क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमा-
न्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥'[2]

अत्र पुरा क्वचिदपि नाहं भवन्तं प्रणतवान् । अग्रेऽप्यहमनतिमानित्यवान्तरवाक्ययोरर्थोऽनमनमपराधे हेतुः । अनेकपदार्थता यथा—

---

काचो येषां तेऽन्ये हि देहिनः । सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥' अत्र काचस्य धर्मित्वं मणेर्धर्मत्वमुक्त्वा अनन्तरं मणेर्धर्मित्वं काचस्य धर्मत्वमुक्तमिति धर्मभावविपर्यासः । धर्मस्यासौ यथा—'यस्य न सविधे दयिता'—इति पद्ये । अत्र हि पूर्वार्धे तुहिनदीधितौ दवदहनत्वमुत्तरार्धे तु दवदहने तुहिनदीधितत्वमिति विपर्यासः । न तु धर्मधर्मिविपर्यासः । तस्य यथास्थितत्वेनैव विवक्षणात् । दयितविरहोपाधिना परस्परधर्मविपर्यासस्यैव च विवक्षणादित्यवधेयम् । इति परिवृत्तिप्रकरणम् ॥ २८ ॥ **अविरोध इति** । भूतानां भाविकस्याप्रतीतेरित्यर्थः । **निश्चयादीति** । अञ्जनादेः पूर्वकालीनसत्तानिश्चयसूचनेऽभिप्राय इत्यर्थः । आदिनाञ्जनादिकं विनापि तत्कृतशोभासत्त्वादिकं गृह्यते । इति भाविकप्रकरणम् ॥ २९ ॥ **अनमनमपराध इति** । अपराधोऽत्र दुरितं विवक्षितम् । तत्रानमनस्य हेतुत्वम् ।

---

१ 'आसिदिति । भावी भूषणानां संभारः समूहो यत्र तथाभूताम् । अत्र भूतभाविनोरञ्जनभूषणसंभारयोः प्रत्यक्षतयाभिधानाद्भाविक नामालंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.
२. 'वपुरिति । हे पुरारे शिव, पुरा पूर्वस्मिन् क्वचिदपि जन्मनि प्रायो भवन्तमहं न प्रणतवान् । इदं वपुषः प्रादुर्भावादनुमितम् । प्रणामे सति मुक्तिलाभेन तदसंभवात् । अत एवाह—संप्रति नमन्मुक्तः । अतनुः शरीरशून्योऽहमग्रेऽप्यनतिमान् नतिरहितः । तत्तस्मात्पूर्वापरकालीनानमनादिदमपराधद्वयं प्रत्यवायरूपं क्षन्तव्यमित्यपराधहेतोर्वाक्यार्थभूतस्यानमनस्योपादानात्काव्यलिङ्गालंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'[1]प्रणयिसखीसलीलपरिहासरताधिगतै-
लंलितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः । न चायं वाक्यार्थः । शस्त्रमुपक्षिपत तावन्मात्रस्यावाक्यार्थत्वात् । तत्र वपुषि वधाय शस्त्रमुपक्षिपत इत्यस्यापि वाक्यत्वम् । विशेषणत्वादिति तदर्थस्यापि हेतुत्वे न वाक्यार्थस्य हेतुत्वमेति । एकपदार्थता यथा—

'[2]भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥

अत्र महामोहत्वे सुखालोकोच्छेदिता हेतुः । तच्च समासादेकपदार्थ एव । अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम् । इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध इति ततो भेदः ।

## पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।

---

अपराधस्य क्षमणं च तत्फलानुत्पादन तन्नाशनं वेति नानुपपत्ति । तदिति चानमनद्वयजन्यं दुरितद्वयपरामर्शकम् । न त्वनमनद्वयस्य । हेतुत्वस्य शाब्दत्वेऽलंकारत्वस्यानिष्टत्वात् । **विशेषणत्वादिति** । तत्रेति षष्ठ्यन्तार्थे विशेषणत्वादित्यर्थ. । **अर्थान्तरन्यास इति** । अत्रेदं विचार्यम्—काव्यलिङ्गेऽपि सुखालोकोच्छेदितेत्युक्तोदाहरणेऽन्यत्र च बहुशो हेतुविभक्तितच्छब्दादिहेतुवाचकपदाभावात्कथं काव्यलिङ्गता । अर्थान्तरन्यासे निजदोषावृतमनसामित्यादावतिसुन्दरस्य विपरीतत्वेन भाने तादृशजनवृत्तित्वेन साक्षात्पित्तोपहतत्व हेतुर्नोच्यते किंतु शङ्खपीततादर्शनगतत्वेनेति तटस्थ्यम् । काव्यलिङ्गे तु मोक्षरूपे पक्षे साक्षादेव सुखालोकोच्छेदित्वमुच्यते इति भेद इत्युच्यते । तथापि हेतुविभक्त्यादिनेत्यसगतमेव । उक्तोदाहरणे तदभावात् । प्रत्युत पञ्चम्या हेत्वभिधाने 'अलमतिचपलत्वात्', 'प्रजाना विनयाधानात्' इत्यादौ काव्य-

---

१. 'प्रणयीति । मालतीमाधवे मालतीं हन्तुमुद्यतमघोरघण्ट कापालिक प्रति माधवस्योक्ति । तत्र तस्मिन्वपुपि शस्त्रमुपक्षिपतस्तव शिरसि अकाण्डेऽनवसरे यमदण्ड इवैष मद्भुज. पतत्वित्यन्वय' । तत्किम् । यद्वपु प्रणयिनीना सखीना ये सलील परिहासरसास्तैरधिगतै. प्राप्तैर्ललितशिरीषपुष्पताडनैरपि ताम्यति ग्लायति । अत्र भुजपाते शस्त्रमुपक्षिपत इत्यनेकपदार्थो हेतु ।' इत्युदाहरणचन्द्रिकासक्षेप . २. 'भस्मेति । गिरिसुताकान्तस्य शिवस्यालय प्रासादस्तदलकारभूता सोपानपङ्क्तिं शोचामीत्यर्थ । 'अभित —' इत्यादिना हाशब्दयोगे द्वितीया । युष्माक या सपर्या पूजा तत्सुखस्यालोकः प्रकाशस्तदुच्छेदके निधीयामहे । वयमिति शेष' । अत्र महामोहत्वे सुखालोकोच्छेदकत्व समस्तपदार्थो हेतुरिति ।' इत्युदाहरणचन्द्रिकासक्षेपः.

वाच्यवाचकभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधानं तत्पर्यायोक्तम्। पर्यायेण भङ्ग्यन्तरेणाभिधानात्। ध्वनेस्तु न वाच्य एवार्थो विषय इति ततो भेदः। उदाहरणम्—

'[1]यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः॥'

अत्रैक एवार्थ ऐरावतशक्रौ मदमानविमुक्तौ जाताविति व्यञ्जनया मदमानाभ्यां तयोरधिकरणयोर्निवासप्रीतिरुज्झितेत्यभिधया च प्रतिपाद्यते। तेन च यदेवोच्यते तदेव व्यङ्ग्यम्। न च प्रतिपन्नस्यैव प्रतिपत्तिरफलेति किं व्यापारद्वयेनेति वाच्यम्। यतो यथा व्यङ्ग्यं तथा नोच्यते। प्रकारयोर्भेदात्। एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत् यथा शुक्ले गवि चलति निर्विकल्पकसविकल्पकयोः एक एव ह्यर्थस्ताभ्यां विषयीक्रियते। न पुनर्यथा निर्विकल्पकविषयस्तथैव सविकल्पकेनापि विषयीक्रियते। भि[2]न्नत्वसंसृष्टत्वाविषयकं निर्विकल्पकं भिन्नत्वसंसृष्टत्वप्रकारकं तु सविकल्पकमिति।

## उदात्तं वस्तुनः संपत्

---

लिङ्गस्यानिष्टत्वात्। तस्मात्साक्षात्परम्परया वा यत्र कारकहेतुरर्थतोऽवगम्यते तत्काव्यलिङ्गम्। उक्तार्थदृढप्रत्ययाय यत्रार्थान्तरन्यसनं तत्रार्थान्तरन्यासः। किंचिदर्थज्ञापकतया हेतुकथनमनुमानमित्येव व्यवस्था युक्ता। तथा हि काव्यलिङ्गोदाहरणे-ध्वनमनस्यापराधे कारकहेतुत्वमेव। तथा भुजपाते शस्त्रोपक्षेपस्य, मुक्तेर्मोदरूपत्वे आलोकोच्छेदस्यापि कारणत्वं योगक्षेमसाधारणं विवक्षितम्। एवं निजदोषेत्यादौ दोषस्य भ्रमं प्रति कारकहेतुत्वोक्तेः पूर्वार्धे काव्यलिङ्गम्। तस्य तु दृढप्रत्ययार्थमुत्तरार्धे विशेषसहचारोपन्यासः। न तु विशेषरूपोऽर्थः। सामान्यार्थे कारकहेतुरिति न काव्यलिङ्गतेति। अनुमाने तु ज्ञापकहेतूपन्यास। अस्मादिदं गम्यत इति। तेन यत्र ज्ञापकहेतुनानुमितिः कवितात्पर्यविषया तत्रानुमानालंकार इति दिक्। इति काव्यलिङ्गम्॥ ३०॥ **अर्थादिति।** पर्यायोक्तपदसामर्थ्यादित्यर्थः। **यथा निर्विकल्पकविषय इति।** निर्विकल्पकविषयो यथा केवलस्तथा सविकल्पकेन न विषयीक्रियत इत्यर्थः। तथा चैकप्रकारत्वाभावेऽयं दृष्टान्त इति ज्ञेयम्। भिन्नप्रकारत्वे तु निर्विकल्पके प्रकाराभावादसंगतिः स्यादिति। अत एव निर्विकल्पकसविकल्पकप्रकारभावमेवाह—**भिन्नत्वेति।** भिन्नत्वं विशेषणगम्या अतद्व्यावृत्तिः। वृत्तौ चाभिन्नासंसृष्टत्वेनेत्यकारप्रश्लेषो बोध्यः। केचित्तु निर्विकल्पकेऽपि यत्किंचिदिदमिति किंचि-

---

१. 'यमिति। यं रावणं प्रेक्ष्य मदेनैरावणस्येन्द्रगजस्य मुखे मानेन च हरेरिन्द्रस्य हृदये चिरेण रूढा वृद्धिं प्राप्तापि निवासप्रीतिरुज्झिता त्यक्ता। इत्येवमैरावतेन्द्रौ मदमानशून्यौ जाताविल्यर्थस्य व्यङ्ग्यस्यैव भङ्ग्यन्तरेणाभिधानात्पर्यायोक्तमलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'भिन्नत्व' क.

संपत्समृद्धियोगः । न तु तस्यैवातिशयः । उदाहरणम्—

'[1]मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥'

अत्र विद्वद्भवनस्य मुक्तादिधनसमृद्धियोगः ।

**महतां चोपलक्षणम् ॥ २९ ॥**

महतां यदुपलक्षणमङ्गभावः अर्थाद्वर्णनीये तदप्युदात्तमित्यर्थः । उदाहरणम्—

'[2]तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥'

अत्रैतादृशो महान्रामो दण्डकाया वर्णनीयाया अङ्गम् । नन्वत्र रामगत उत्साहातिशय एव चमत्कारनिदानं तस्य प्रधानत्वाद्विच्छित्त्यन्तराभावाच्च किंविषयोऽयमलंकारव्यपदेश इति वाच्यम् । नह्यत्र वीरो रसः प्रधानम् । तस्येहाङ्गत्वात् ।

**तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् ।
समुच्चयोऽसौ**

तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके । समाधावतुल्यकक्षयोः कारणयोरुपादानमत्र तु तुल्यकक्षयोरिति विशेषः । उदाहरणम्—

'[3]दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽप्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।

---

त्वेन वस्तु भासत इति यथाश्रुतोपपत्तिमाहुः । इति पर्यायोक्तप्रकरणम् ॥ ३१ ॥ **न तु तस्यैवेति** । बदरामलकाम्रदाडिमानामित्यादौ पर्यायालंकारभेदेऽतिप्रसङ्गादिति भावः । उपलक्षणमिति भावप्रधानमित्याशयेनाह—**अङ्गभाव इति** । वर्णनीयाया इति तस्याः प्राधान्यसूचनायोक्तम् । इत्युदात्तप्रकरणम् ॥ ३१ ॥ **समाधाविति** ।

---

१. 'मुक्ता इति । विदुषां भवनेषु केलौ विसूत्राच्छिन्नसूत्राद्धाराद्गलिताः संमार्जनीभिर्हृता अपसारिता अङ्गणसीम्नि मन्थरं मन्दं चलन्तीनां बालानां वनितानां चरणलाक्षया अरुणा आरक्ता मुक्ताः कर्मभूताः दूराद्दाडिमबीजेषु शङ्किता धीर्येषां ते केलीशुकाः कर्तृभूताः कर्षन्ति यत्तद्भोजनृपतेर्दानलीलायितमित्यन्वयः । अत्रोत्कटसमृद्धिवर्णनादुदात्तालंकारः ॥' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'तदिदमिति । यस्मिन्नरण्ये निवसन्रामो बाहुमात्रसहायो रक्षसां क्षयं चकार तदिदमरण्यमिति महतः श्रीरामस्यारण्योत्कर्षकतया तदङ्गभावादपर उदात्तभेदः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'दुर्वारा इति । मार्गणाः शराः । मन्मथसुहृत्कालो वसन्तः । स एव कृतान्तोऽक्षमः क्षमाशून्यः । अथवा कृतान्तो

क्लीवं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥'

अत्र स्मरमार्गणा एव विरहासहत्वं कुर्वन्ति । ततोऽधिकं प्रियतमदूरस्थित्याद्युपात्तम्। एष एवोक्तलक्षणः समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति यत्केनचित्पृथग्लक्षितास्तदयुक्तम्। यथाहि—

'[1]कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥'

अत्र कुलादीनां समीचीनानामेव योगः। दुर्वारा इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम्।

'[2]शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।

---

'समाधिः सुकरं कार्यं कारणान्तरयोगत.' इति लक्षणात्समुच्चीयमानमपि कारण।

---

यमोऽक्षमः। अकाले प्राणानपहर्तुं समर्थ इत्यर्थः। चतुरा विरहविनोदने कुशलाः। इत्थं सति शठो मर्मभेदी विरहः कथ नु सोढव्य इत्यर्थ.। अत्र दुर्वारत्वेनाशोभनानां तादृशैरेव प्रियतमादिभिर्विरहासहत्वरूपकार्ये समुच्चय इति स एवालंकारः। नववयःप्रभृतीनां शोभनत्वेऽपि विरहोद्दीपकत्वेनात्राशोभनत्व वोध्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'कुलमिति। भद्रा शोभना। मूर्तिराकृति। श्रुतिः शास्त्रश्रवण वेदो वा। अल पर्याप्तम्। स्फीता विस्तृता। प्रकृत्या सुभगा. शोभनाः। अय दृश्यमानो जनः। अमीभिः कुलादिभिः सुतरा गर्व व्रजति। तव त्वङ्कुशाः। विनयहेतव इत्यर्थः। अत्र दर्पाख्ये कार्ये शोभनानामेव समुच्चयः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. शशीति। स्वाकृतेः शोभनाकृतेः। दुर्गतो दरिद्रः। अत्र शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन शोभनाशोभनरूपस्य तादृशैरेव कामिनीप्रभृतिभिः समुच्चयः। तदुक्त वृत्तिकृता—शशिनि धूसरे शल्ये शल्यान्तराणीति। सदसद्योग इत्यस्य सदसद्रूपाणामनेकेषा योग इत्यर्थः न तु सतोऽसता योग इति। तथा सति सहचराभिन्नत्वरूपार्थदोषेणालकारत्वासभवात्। अत एव नृपाङ्गणगतः खल इत्यत्र नृपाङ्गणगतत्वेन शोभनत्वं खलत्वेन चाशोभनत्वमिति समर्थनेऽपि सहचरभिन्नत्वात्तदंशमुपेक्ष्यैवालंकारोदाहरणता प्रामाणिकैरुक्ता। एव विशेष्यस्य शोभनत्वं विशेषणस्य त्वशोभनत्वमिति प्रक्रान्तम्। इह त्वन्यथेति प्रक्रमभङ्गोऽप्यत्र ज्ञेयः। ननु दुर्वारा इत्यसद्योगप्रसक्तिः। अत एवोदाहरणेऽपि कथ न सद्योग इति चेदत्रोच्यते। इह शोभनस्य सतोऽशोभनत्वमिति विवक्षा। तत्र त्वशोभनमेवैतदिति विवक्षित न तु शोभनत्वमपीति न सदसद्योगप्रसक्तिः। अत एवात्र मनसि शल्यानीत्युपसहृतम्। सुन्दरत्वेनान्तःप्रविष्टानामपि व्यथाहेतुत्वात्। तत्र तु सर्वथा दुष्टत्वाभिप्रायेण कथं सोढव्य इति निरवद्यम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥'

अत्र सदसतोर्योगः । दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वात् । एवञ्चिन्त्यम् । पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनात्राप्यसम्यक्त्वमिति ।

समुच्चयान्तरमाह—

**स त्वन्यो युगपद्या गुणक्रिया ॥ ३० ॥**

अत्र गुणाः क्रियाश्चेति विग्रहे संख्याविशेषस्याविवक्षणात् विशेषविवक्षाविरहेण व सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभात् गुणौ च क्रिये च गुणक्रिये च युगपद्भवतः स त्रिरूपः समुच्चयः । तत्र गुणयोर्यौगपद्यं यथा—

'विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥'

अत्र विमलत्वमलिनत्वयो. । क्रिययोर्यथा—

'अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥'

अत्रोपगतो भवितव्यं चेति क्रिययोः । गुणक्रिययोर्यथा—

---

न्तरं सौकुमार्यमात्रोपयोगि न त्वितरकारणतुल्यकक्षमित्यर्थ । चिन्त्यत्वे हेतुमाह—**पूर्वमिति** । दुर्वारा इत्युदाहरण इत्यर्थ । विशेषणे नासम्यक्त्वमित्यन्वय' । तत्रापि हि प्रयतमस्य सत्त्वमेव दूरस्थितिविशेषणेन परमसत्त्वम् । इहापि स्वत सुन्दरस्य शशिनो दिवसधूसरत्वेनेत्यसद्योग एवेत्यर्थ' । आदिपदेन गलितयौवनत्वादिपरिग्रह' । वस्तुतस्त्वत्र सदसद्योगपदे न द्वन्द्व कि तु कर्मधारय । संश्चासावसंश्च सदसन्नि-(दि)ति । तादृशानामनेकेषामेककार्यजनने समुच्चय इत्यर्थः । एवमपि दुर्वारा. शशीत्यनयोः कथं भेद इति चेत्, इत्थम्—दुर्वारा इत्यत्र विरहासहिष्णुतया प्रियतमादीना सतामप्यसत्त्वेन विवक्षा । इह तु शोभनस्य सतो धूसरत्वादिना अशोभनत्वमपीति विवक्षा । अत एव पूर्वं कथ (नु) सोढव्य इत्युपसंहारो दुष्टत्वाभिप्रायेण, अत्र तु मनसि सप्त शल्यानीत्युपसंहृतं सुन्दरत्वेनान्त प्रविष्टानामपि व्यथाहेतुत्वादित्यनवद्यम् । ननु गुणक्रिया इति बहुवचनाद्गुणा' क्रियाश्चेति विग्रहे बहूना गुणानां यौगपद्यमेव लभ्यते । एवं बह्वीना क्रियाणामेव तल्लभ्यते । न तु द्वयोर्गुणयोर्द्वयोश्च क्रिययोस्तथा द्वयोर्गुणक्रिययोरतस्तल्लाभोपायमाह—**अत्रेति** । सत्यम् ।

---

१ 'विदलितेति । विदलित खण्डित सकलानामरीणा कुल येन तद्बल सैन्यम् । प्रखलाः प्रकृष्टखला' । अत्र विमलत्वमलिनत्वयोर्गुणयोरतुल्यकालतारूप. समुच्चयश्चकारद्वयगम्य. ।' इत्युदाहरणचन्द्रिकासक्षेप. २. 'अयमिति । विक्रमोर्वशीये पुरूरवसो वचनम् । तया प्रियया उर्वश्या । एकपदे एककाले । भवितव्यमिति सबन्धः । निरातपत्वेनातपराहित्येन रम्यैरहोभिर्दिवसैः कर्तृभि. । अत्रोपगमभवनयो. क्रिययो' समुच्चयः ।' इत्युदाहरणचन्द्रिकासंक्षेप.

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥'

अत्र कलुषत्वपतनयोर्गुणक्रिययोः। अत्र कश्चिद्वैयधिकरण्य एव समुच्चय इत्याह तन्न युक्तम्। 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादौ सामानाधिकरण्येऽपि दर्शनात्। केचित्तु सामानाधिकरण्य एवायमित्याहुस्तदपि न सम्यक्। 'कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादौ वैयधिकरण्येऽपि तद्दर्शनात्।

## एवं क्रमेणानेकस्मिन्पर्यायः

एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन्भवति क्रियते वा स एकः पर्यायः। अत्र क्रमेणेति समुच्चयव्यावर्तनाय। प्रयोजकानिर्देशतन्निर्देशौ भवतिकरोत्यर्थौ न तु स्वाभाविकत्वास्वाभाविकत्वे। वृषलक्ष्मणः कण्ठे कालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः। तत्राद्यो यथा—

'नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।

---

बहुत्वविवक्षायामुक्तदोषः स्यात्। न चेह संख्याविशेषविवक्षा। एवं सजातीययौगपद्यस्यापि। एवं च गुणयोः क्रिययोश्च यौगपद्यस्येव गुणक्रिययोर्यौगपद्यस्यापि लाभादुक्तार्थलाभो निरवद्य इत्यर्थः। अन्ये तु गुणाश्च क्रियाश्चेति द्वन्द्वे बहूनामेव समुच्चयः स्यादतो गुणौ च क्रिये चेति द्वन्द्वोत्तरं गुणक्रियाश्च गुणक्रिये चेति गुणक्रिया इत्येकशेषाद्द्वयोर्द्वयोरेव समुच्चय इति त्रिविधः समुच्चयोऽयमित्याहु। एतन्मते द्विवचनान्तेनोत्सर्गतः समासाभावात्तत्कल्पनक्लेशः। द्वयोरेव समुच्चय इत्यप्ययुक्तम्। 'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः। रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डु॥' इत्यादौ बहूनामपि गुणानां समुच्चयस्येष्टत्वात्। तथा—'उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण। मुदितं च सकलललनाचूडामणिशासनेन मदनेन॥' इत्यादौ बह्वीनां क्रियाणां समुच्चयस्यासंग्रहप्रसङ्गात्। अतः स यथोक्त एव प्रकारः समीचीन इति संक्षेपः। इति समुच्चयप्रकरणम्॥ ३३॥ मतान्तरनिरासायाह—**प्रयोजकेति**। **तं इति**। 'तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकर-

---

१. 'कलुषमिति। तव चक्षुः प्रकृत्या श्वेतकमलसदृशकान्ति अहितेषु शत्रुषु कलुषं कोपेनारुणं च। तेषां शत्रूणां वपुष्यापदां कटाक्षैः कर्तृभिः पतितं चेति कलुषत्वपतनयोर्गुणक्रिययोः समुच्चयः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'नन्विति। हे कालकूट विष, उत्तरोत्तरं विशिष्टमुत्कृष्टं पदं यस्यां तादृशीयमाश्रयस्थितिस्तव केनोपदिष्टेत्यन्वयः। तदेव दर्शयति—प्रागिति। हृदयेऽभ्यन्तरे। अवस इति शेषः। अथानन्तरम्। वृषलक्ष्मणो हरस्य। अधुना पुनरिति संबन्धः। अत्रैकस्यैव कालकूटस्य क्रमेणानेकत्र स्थितिः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥'

अत्र कालकूटस्य वस्तुत एकस्यानेकत्र वासे प्रयोजकं किंचिदपि नोक्तम्। न केवलमयं वास्तविक एकत्वे किं त्वारोपितेऽपि । यथा—

'[1]विम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि दृश्यते ॥'

अत्र प्रयोजकानिर्देशः स्फुट एव । रागपदार्थस्य त्वोष्ठे लौहित्यात्मकतया हृदये तु स्नेहाद्यात्मकत्वेन भेदेऽप्यभेदकल्पस्याध्यवसानाद्गैकत्वविवक्षाविरोधः । द्वितीयो यथा—

'[2]तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम्।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥'

अत्र कुसुमबाणेनेति प्रयोजकनिर्देशः ।

अन्यस्ततोऽन्यथा ।

अनेकमेकस्मिन्क्रमेण यद्भवति क्रियते वा सोऽन्यः पर्याय इत्यर्थः । पूर्ववद्व्याख्येयम् । तत्र भवत्यर्थे यथा—

'[3]मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥'

अत्रैकस्मिन्खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकनिर्देशः । करोत्यर्थे यथा—

'[4]तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।

---

सम् । विम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' इति संस्कृतम् । तेषामिति । दैत्यानामित्यर्थः । पूर्ववदिति । भवति क्रियत इत्येतदित्यर्थः । इति पर्यायप्रक-

---

१ 'विम्बोष्ठ एवेति । विम्बसदृश ओष्ठो विम्बोष्ठ । 'ओत्वोष्ठयोः' इति पररूपम् । ओष्ठे रागो लौहित्य हृदये तु स्नेहः । अत्र श्लेषेणाभेदाध्यवसायादेको रागपदार्थ क्रमेणानेकत्रोक्तः ।' इत्युदाहरणचन्द्रिकासक्षेप २. 'त ताणेति । श्रीसहोदररत्न कौस्तुभ आभरण यस्य तस्मिन् श्रीविष्णौ । एकरसमेकतानम् । 'तत्तेषा पातालवासिनामसुराणा'मिति चण्डीदास. । हृदय कुसुमबाणेन प्रियाणा कान्ताना विम्बसदृशेऽधरे विनिवेशितमित्यनेकत्र स्थितौ प्रयोजकनिर्देशाद्भेदः ।' इत्युदाहरणचन्द्रिकासक्षेप. ३. 'मधुरिमेति । मधुरिम्णा रुचिर खलानां वचन प्रथमं पृथुबहुलममृत व्यनक्ति प्रकाशयति । अथ विचारानन्तर तदेव खलवचनं मोहहेतुभूतमन्तर्गत हालहलाख्यं विप कथयति । अहो आश्चर्यम् । अत्रैकस्मिन्खलवचने क्रमेणामृतविषयोः स्थितिरिति पूर्वविपरीतः पर्याय. ।' इत्युदाहरणचन्द्रिकासक्षेपः. ४. 'तदिति । अय द्विजो दिवसैः कर्तृभिरियतीं भूमिं समृद्धिसीमा समारोपित इत्याश्चर्यम् । तदेव

स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः॥'

अत्रैकस्मिन्द्विजे तद्गेहतन्मन्दिराद्यैरनेकैः दिवसैरिति प्रयोजकनिर्देशः। न चेयं परिवृत्तिः। हानोपादानयोरविवक्षितत्वात्।

**अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः॥ ३१॥**

पक्षे संबन्धः सपक्षवृत्तित्वं विपक्षावृत्तित्वं चेति रूपत्रयवान्हेतुः साधनम्। व्यापकत्वाभिमतस्य पक्षेऽयोगव्यवच्छेदो व्यापकसंबन्धपर्यवसन्नः साध्यम्। तदुभयवचनमनुमानालंकारः। यथा—

'यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः॥'

अत्र पूर्वार्धे साधनस्य उत्तरार्धे साध्यस्य वचनम्। प्रयोगश्चैवम्—एताश्चक्रीकृतचापं सदा पुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः सततनिपतन्मर्मभे-

---

रणम्॥ ३४॥ **पक्षे संबन्ध इति**। पक्षधर्मतेत्यर्थः। सपक्षवृत्तित्वेनान्यथा व्याप्तिप्रदर्शनं विपक्षवृत्तित्वेन व्यभिचारविरहप्रदर्शनम्। अयोगव्यवच्छेदोऽवश्यं संबन्धः। व्याप्यस्य व्यापकं विनानुपपत्ते। एतच्च हेतूत्प्रेक्षाव्यावृत्त्यर्थमुक्तम्। तत्र योगस्याप्यनुत्कटतया भानादिति। एता इति स्त्रियः पक्षभूता निर्दिष्टाः। चक्रीकृतचापं यथा स्यात्तथा सदा पुरो धावन्नञ्चिते धनुषि योजिते शरे प्रेङ्खन् चपलः करो यस्य सः। क्रोधन. क्रोधशीलः। शासनमाज्ञा तद्धारको मनोभवो यासा तथाभूता इति साध्यम्। सततं निपतन्तो मर्मभेदिनो वाणा यत्र तादृशं लसद्भ्रूव्यापारो यत्र तादृशं स्थानं युवजनरूपं यासां तत्त्वादिति हेतु.। स्वस्थाननियतनिपतन्मर्मभेदिवाणफलसद्भ्रूव्यापाराश्रयत्वादिति यावत्। तत्रैवेत्यनेन वाणनिपतनस्य भ्रूव्यापार-

---

दर्शयति—तद्गेहमिति। तत्पूर्वं दृष्टम्। नता' खर्वा भित्तयो यस्य तत्। दिवोऽन्तरिक्षात्। जरती जीर्णा। घनाभा मेघतुल्याः। घटाः श्रेणयः। कलं मधुरस्वरम्। अत्रैकस्मिन्द्विजे तद्गेहमन्दिरादीनामनेकेषां क्रमेण स्थितौ दिवसैरिति प्रयोजकनिर्देश इति भेदः।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'तन्मन्दिरादीनामनेकेषा' ग. २. 'यत्रैता इति। यत्र जने एताः कामिन्यः लहरीवच्चलाचलाश्चपला दृशो यासां ताः। अमी अनुभूयमानाः। मार्गणाः शराः। यद्यस्मात्। तत्तस्मात्। स्मर आसा कामिनीनामग्रत एव सदा मण्डलीकृतचापं यथा स्यात्तथा धावतीति सत्यम्। कीदृक् स्मरः। अञ्चिते योजिते शरे प्रेङ्खन् चपलः करो यस्य सः शासनमाज्ञा तद्धारक.। अत्र पूर्वार्धोक्तहेतुना अग्रतस्तादृशमदनधावनस्य साध्यस्य साधनादनुमानालंकारः। प्रयोगस्तु—एताः पुरोधावत्तथाविधमदना मर्मभेदिवाणपातव्याप्यभ्रूव्यापारकत्वादिति बोध्यः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

द्विबाणकलसङ्क्रन्यापारकस्थानत्वादिति । नन्वत्र पूर्वं साधनवत्साध्यस्यापि वचनं संभवति । यथा—'मधु तिष्ठति वाचि योषितां' इत्यादि । तत्कथं सामान्यत एतदुक्तं न तु विशेषत इति चेत्, साध्यस्य पूर्वभागे तादृशवैचित्र्याभावादिति ।

**विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।**

साकूतैः साभिप्रायैः । उक्तिरर्थाद्विशेष्यस्य । उदाहरणम्—

'महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भेदवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥'

अत्र महौजस्त्वादिविशेषणानि परानभिभवनीयत्वाद्यभिप्रायकाणि । न च वाच्यम्—अपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावमात्रतया कुतोऽलंकारमध्ये पठितोऽयमिति । एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि ह्यनुभवसिद्धं न तु दोषाभावमात्रमिति संप्रदायः । वयं त्वालोचयामः—तादृशैकविशेषणोपन्यासेऽप्यलंकारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाप्युपपत्तेरनुभवसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—'शुद्धे सद्मनि पल्लविन्युपवने' इत्यादौ ।

**व्याजोक्तिश्छद्मनोद्भिन्नरूपवस्तुनिगूहनम् ॥ ३२ ॥**

उद्भिन्नत्वमस्फुटस्य प्रकाशः । तथा चास्फुटमपि वस्तुस्वरूपं कथंचिद्व्यक्तमथ केनापि यदपह्नूयते सा व्याजोक्तिः । न चेयमपह्नुतिः । प्रकृताप्रकृतयोः साम्ये तत्स्वीकारात् । अत्र तु तदभावात् । न च प्रथमं गूढस्यानन्तरं प्रकाशस्यापह्नव इति सामग्रीभेदादेवापह्नुतिभेद इति वाच्यम् । एवंविधे विषये साम्यसंभवेऽप-

---

स्थाननियतत्वोक्ते । अत एव शासनधर इत्युक्तम् । **यथेति** । 'मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् । अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥' इति पद्यम् । **विशेषत इति** । उक्तप्रकारद्वयवत्तयेत्यर्थः । इत्यनुमानप्रकरणम् ॥ ३५ ॥ सप्रदायपदसूचितमस्वरस प्रकाशयन्स्वयं समाधत्ते—**वयं त्विति** । **अनुभवसिद्धत्वाभावादिति** । पुष्टार्थत्वस्येति शेष । इष्टापत्तिमाशङ्क्याह—**वैचित्र्यस्य चेति** । 'शुद्धे सद्मनि पल्लविन्युपवने वाप्या नवाम्भोरुहि क्रीडाद्रौ च सशाद्वले विचलितग्रीवैर्विमुक्ता दृश. ।' इत्यादावित्यर्थः । तथा च दोषाभावरूपस्यापि पुष्टार्थत्वस्य चमत्कृतिविशेषजनकत्वरूपमलंकारत्वमुपधेयसंकरेऽप्युपाधेरसकरान्निर्बाधमिति भाव. । इति परिकरप्रकरणम् ॥ ३६ ॥ **साम्यसंभव**

---

१. 'महौजस इति । धनुर्भृतो धनुर्धरा भटास्तस्य दुर्योधनस्य प्रियाण्यसुभिः प्राणैः समीहितु कर्तु वाञ्छन्तीत्यन्वय. । अत्र महौजःशालित्वेनानाक्रमणीयत्व मानधनत्वेन युद्धे पलायनाभावः धनपूजितत्वेनोपेक्षाराहित्य सङ्ग्रामे लब्धकीर्तित्वेनोत्साह. प्रतापशालित्व च असहतत्वेन सहायानपेक्षत्व अभेदवृत्तित्वेन प्रयोजनैकपरत्व च व्यज्यत इत्युक्तविशेषणाना साभिप्रायत्वात्परिकरालकार. ।' इत्युदाहरणचन्द्रिकासक्षेप .

ह्नुतेरेवोपगमात् । ननु यत्रापह्नवार्थं सादृश्योपक्षेपः सा व्याजोक्तिः सादृश्यार्थमेव तु यत्रापह्नवोपक्षेपः सापह्नुतिरिति चेत्, न । तत्रोभयत्राप्यपह्नुतेरेवोपगमात् । यदाहुः—

'साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः ।
अपह्नवाय सादृश्यं यस्मिन्नेषाप्यपह्नुतिः ॥' इति ॥

उदाहरणम्—

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'

अत्र पुलकवेपथू सात्त्विकैकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशनादपलपितस्वरूपाविति व्याजोक्तिं प्रकाशयतः । वयं तु—पुलकवेपथुभ्यां सात्त्विकाभ्यां प्रकाशिता गूढावगतिस्तयोः शैत्यकारणताप्रकाशनेनापह्नुतेति व्याजोक्तिरियम् ।

**किंचित्पृष्टमपृष्टं च कथितं यत्प्रकल्पते ।**
**तादृगन्यव्यपोहाय परिसंख्या तु सा मता ॥ ३३ ॥**

---

इति । (कुवलयानन्दे पद्यमिदम् ।) यथा 'सीत्कारं शिक्षयति' इत्यादौ गुप्तस्य नायकस्य सीत्कारेत्याद्युक्त्या व्यक्तस्य नहीत्यादिनापह्नवेऽप्यपह्नुतिरेवेत्यर्थः । **नन्विति** । उक्तोदाहरणे साम्यसत्त्वेऽपि तस्याङ्गत्वेनापह्नवप्राधान्याभावाद्व्याजोक्तिरेव अपह्नवप्राधान्ये त्वपह्नुतिरिति व्यवस्थेत्यर्थः । **यदाहुरिति** । उद्भटादिमतानुसारिण इत्यर्थः । **उभयत्रेति** । अपह्नवप्राधान्येऽङ्गत्वे च सति साम्य इत्यर्थः । तथा च सीत्कारमित्यादावप्यपह्नुतिरेव । प्रकृताप्रकृतसाम्याभावे तु व्याजोक्तिरिति व्यवस्थेत्यर्थः । तथैवोदाहरति—**शैलेति** । अत्र वृत्तौ शृङ्गारानुभावत्वेनाभिव्यक्तयोः कम्परोमाञ्चयोः शैत्यजन्यत्वप्रतिपादनेनापह्नवो व्याख्यातः । तत्र कम्परोमाञ्चयोः पूर्वं गूढत्वाभावादुद्भिन्नेत्यस्यासंगतेः स्वयमुदाहरणं संगमयति—**वयं त्विति** । 'गूढा रतिः' इत्येव पाठः । 'अवगतिः' इति त्वपपाठः । एवं च पूर्वं गूढस्यानुभावाभिव्यक्तस्य रतिभावस्यान्यप्रयुक्तत्वकथनेनापह्नुतिरिति लक्षणसंगतिः । इति व्याजोक्तिप्रकरणम् ॥ २७ ॥ **परिसंख्येति** । परिशब्दो वर्जनार्थः । संख्या

---

१. 'शैलेति । शिवो वो युष्मानवताद्रक्षतु । कीदृशः । शैलेन्द्रेण हिमवता प्रतिपाद्यमाना दीयमाना या गिरिजा तद्धस्तस्योपगूढमाश्लेषः । भावे क्त । तेनोल्लसन्ती रोमाञ्चादिभिर्विसंस्थुलो व्यग्रश्चासावखिलस्य विधिव्यासङ्गस्य भङ्गेनाकुल । ततश्च सात्त्विकभावगोपनाय तुहिनाचलस्य करयोर्हा शैत्यमित्यूचिवान् । हेति विस्मये । शैलान्तःपुर च मातृणां ब्राह्म्यादीनां मण्डल समूहश्च गणाश्च तैरिति विग्रहः । सस्मित दृष्ट' । अत्र सात्त्विकभावस्य रोमाञ्चादेर्हिमवत्करस्पर्शनिमित्तकत्वेन गोपनाद्व्याजोक्तिरलंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेप ।

तादृक्तुल्यम्। व्यपोहाय व्यवच्छेदाय। यत्किंचित्कथितं सत्स्वतुल्यस्यान्यस्य व्यवच्छेदाय यत्कल्पते सा परिसंख्या मतेति लक्षणम्। अन्यस्य कथनमन्यव्यपोहाय कथं कल्पत इति चेत्। प्रमाणान्तरेणावगतस्यैव वस्तुनः पुनःशब्देन प्रतिपादनस्य प्रयोजनान्तराभावात्। पृष्टमपृष्टं चेति तु विभागः। कथनं हि किंचित्प्रश्नपूर्वकं किंचित्तदभावपूर्वकमिति द्वैविध्यमित्यर्थः। ते च द्वे अपि विधे व्यवच्छेद्यस्य प्रतीयमानत्ववाच्यत्वाभ्यां प्रत्येकं द्विविधे। तत्र प्रश्नपूर्वके कथने व्यवच्छेद्यस्य प्रतीयमानता यथा—

'किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति॥'

अत्रान्यनदीसविधादिव्यवच्छेद्यं प्रतीयमानम्। तत्रैव वाच्यं व्यवच्छेद्यं यथा—

'कि[2] भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम्॥'

स्पष्टम्। अप्रश्नपूर्वके कथने व्यवच्छेद्यं प्रतीयमानं यथा—

'[3]कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥'

अप्रश्नपूर्वक एव कथने व्यवच्छेद्यं वाच्यं यथा—

'[4]भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥'

श्लेषेणाप्येषा संभवति—यथा—'चित्रेषु वर्णसंकराः' 'खलसंयोगः शालिषु' इत्यादि।

**यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता।**
**तदा कारणमाला स्यात्**

---

१ 'किमिति। आसेव्यं सेवनीयम्। द्युसरितो गङ्गाया। सविधं तीरम्। अनवद्यमुत्तमम्। येषु द्युसरित्सविधादिष्वासक्त्या। निरवधिर्या विमुक्तिः सायुज्यरूपा तदर्थम्। अत्र सेव्यत्वेनावगतस्य गङ्गासविधादेः पुनः कीर्तनमितरपरिसंख्यार्थमिति सैवालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. किमिति। अत्र लोके। आर्यैश्चरितमाचरितम्। सुकृतं पुण्यकर्म दोषो व्यभिचारादिः। धिषणा बुद्धिः। अभिमतोत्तरदानादाह—जानातीत्यादि। अत्र व्यवच्छेद्यं वाच्यमिति भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः ३. 'कौटिल्यमिति। कौटिल्यं कपटं कुञ्चितत्वं च। रागः पक्षपातो रक्तिमा च। काठिन्यं निर्दयत्वं दृढता च। तरलत्वमविचार्यकार्यकारित्वं चपलता च। अत्र हृदयादौ नेति व्यवच्छेदः प्रतीयते। प्रश्नाभावात्पूर्वस्माद्भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. भक्तिरिति 'भक्तिरासक्तिः। भवे शिवे। व्यसनं रुचिः। युवतिरेव कामास्त्रमिति विग्रहः। अत्र व्यवच्छेद्यं वाच्यमिति विशेषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

यथोत्तरमिति वीप्सायां यथाशब्दः। तेनोत्तरोत्तरं प्रतीत्यर्थः। उदाहरणम्—

'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते गुणानुरागप्रभवा हि संपदः॥'

नन्वत्र कार्यकारणभावालंकृतिप्रपञ्चनप्रसङ्गेन हेत्वलंकारोऽपि लक्षणार्हः। उक्तश्चायं भट्टोद्भटेन—'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति। तत्किं न लक्षित इति चेत्, आयुर्घृतमित्यादिरूपस्यास्य वैचित्र्याभावेनालंकारत्वस्यैवाभावात्। नन्वेवम्—

'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः॥'

इत्यादौ प्राचां काव्यरूपताभिधानं विरुध्येत अलंकाराभावादिति चेत्, न। कोमलानुप्रासेनैव तत्संभवात्। तत्किं हेत्वलंकारो नास्त्येव। क एवमाह। कीदृशस्तर्ह्यसाविति चेत्, पूर्वोक्तं काव्यलिङ्गमेवेति।

**क्रियया तु परस्परम्॥ ३४॥**

**वस्तुनोर्जननेऽन्योन्यम्**

वस्तुनोः परस्परं जन्यजनकभावोऽसंभवी। तस्य तं प्रत्येव पौर्वापर्ययोर्द्वयोरसंभवादित्यत उक्तं क्रिययेति। एकक्रियाजननद्वारेणेत्यर्थः। अविशिष्टं वस्तु तावदजातकल्पम्। तेन वैशिष्ट्यप्रयोजनक्रियाजनके जनकत्वोपचारः। तथा च मिथस्तादृशैकक्रियाजनकत्वमन्योन्यालंकार इति सारम्। उदाहरणम्—

'[3]हंसाणं सरेहिँ सिरी सारिज्जइ अह सराण हंसेहिं।
अण्णोण्णं विअ एए अप्पाणं णवरि गरुअन्ति॥'

अत्र श्रीसारणेन सरोहंसयोर्मिथो जनकता।

---

बुद्धिः। तेन वर्जनबुद्धिरित्यन्वर्था संज्ञा। इति परिसंख्याप्रकरणम्॥ ३८॥ **हेतुमतेति।** *हेतुमता कार्येण सहाभेदहेतोरभिधानमित्यन्वयः। इति कारणमालाप्रकरणम्*॥ ३९॥ अविशिष्ट शोभारहितम्। निष्कृष्टं लक्षणमाह—**तथा चेति।** परस्परं वैशिष्ट्यजनकैकक्रियाजनकत्वमित्यर्थः। **हंसाणं इति।** 'हंसानां सरोभिः श्रीः सार्यते(सारीक्रियते)थ सरसां हंसैः। अन्योन्यमेवैते आत्मानं केवलं गुरूकुर्वन्ति॥' इति। सार्यते प्रसार्यते। उत्कृष्टा क्रियत इति यावत्। इत्यन्योन्यालंकार

---

१ 'जितेन्द्रियत्वमिति। सप्तमे व्याख्यातम्। पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुत्वात्कारणमालालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'अविरलेति। *अविरलं निरन्तरं कमलानां* विकासरूप इत्यर्थः। आयुर्घृतमितिवत्कार्यकारणयोरभेदेनाभिधानम्। एवमग्रेऽपि। अयं च हेत्वलंकार इति भट्टोद्भटमतम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'हंसाणं इति। श्रीः शोभा। सारीकरणं श्रेष्ठतासंपादनम्। अत्र सरोहंसयोः परस्परं शोभासारीकरणरूपोपकारजनकत्वादन्योन्यं नामालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ ३५ ॥
असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ।

यत्रोत्तरश्रवणमात्रेणानुपात्तमपि प्रश्नवाक्यं परिकल्प्यते तदेकमुत्तरम् । प्रश्ने सति लोकातिक्रान्तगोचरतयासंभाव्यं यदसकृत्प्रतिवचनं तत्पुनरपरम् । अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्करोतीत्यसकृदित्युक्तम् । असंभाव्यं तु चमत्कारित्वमिति मान्याः । अप्रसिद्धत्वमिति तु वयम् । तच्च प्रमाणान्तरागोचरविषयत्वात् । अत एव प्रश्नपरिसंख्यातो भेदः । तत्र हि लोकसिद्धविषयस्योत्तरस्य प्रयोजनान्तराभावेनान्यव्यपोहे तात्पर्यम् । अत्र तु निगूढविषयतया वाच्य एव तात्पर्यविश्रामः । तत्राद्यं यथा—

'वाणिअहत्थिदन्ता कुत्तो अम्हाण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसप्पते सोह्णा ॥'

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी मूल्येन ताः प्रयच्छेति क्रेतृवचनमनेनोत्तरवाक्येनानुमीयते । सूत्रे च प्रश्नपदं पूर्ववाक्यमात्रपरमिति प्रश्नाभावेऽप्यदोषः । यद्वा हस्तिदन्तव्याघ्रकृत्तयस्तव सन्तीति प्रश्नवाक्यमिहोन्नेयम् । न च वाच्यमिदं काव्यलिङ्गविशेष एव उत्तरस्य प्रश्नं प्रति हेतुत्वादिति । उत्तरस्य तदनुत्पादकत्वात् काव्यलिङ्गस्य तदात्मकत्वात् । तर्हि ज्ञापकतयानुमानमेवेति चेत्, न । एकधर्मिगतत्वेन साध्यसाधननिर्देशो हि तत् । न चात्र तथा । तस्मादलंकारान्तरमेवोत्तरम् । द्वितीयं यथा—

'का विसमा देवगई किं लद्धं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥'

---

॥ ४० ॥ अत्रेति । द्वितीयभेद इत्यर्थ. । वाणिएति । 'वाणिजकहस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च । यावल्लुलितालकमुखी गृहे परिसर्पते स्नुषा ॥' इति । उत्तरं कारकहेतुत्वेनाभिमत ज्ञापकहेतुत्वेन वा । नाद्य इत्याह—उत्तरस्येति । किमतो यद्येवं तत्राह—काव्येति । तदात्मकत्वात्कारकरूपहेतुत्वात् । तस्मादिति । अर्थादनुमानेऽपि साधननिर्देशादित्यर्थः । का इति । 'का विषमा दैव-

१ 'वाणिएति । एषा हि क्रेतार वणिज प्रति जरद्व्याधस्योक्ति' । कृत्तयश्चर्माणि । लुलिता अलका यत्र तादृश मुख यस्या इति विग्रह । तथा च पुत्रस्य स्वकान्तायामासक्ततया हस्तिव्याघ्रहननपाटवाभावादस्मद्गृहे दन्तकृत्तिविरह इति भावः । अत्रोक्तरूपेणोत्तरेण त्वद्गृहे हस्तिदन्तव्याघ्रकृत्तय' सन्तीति क्रेतु' प्रश्नोन्नयनादुत्तरालकारः ।' इत्युदाहरणचन्द्रिकासंक्षेप २. 'का इति । अत्र चमत्कृतस्य लोकाप्रसिद्धस्यासकृदुक्तिर्द्वितीयो भेदः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र दैवगत्यादेर्वैषम्यादि लोकप्रसिद्धमेव प्रकाश्यते। 'किमासेव्यं पुंसां' इत्यादि प्रश्नपरिसंख्यायामन्यव्यवच्छेदे तात्पर्यम्। अत्र तु वाच्य एवेति ततो भेदः।

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥ ३६ ॥**
**धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते।**

कुतोऽपीति आकारादिङ्गिताद्वा। सूक्ष्मस्तीक्ष्णमतिसंवेद्यः। तत्र रूपादेरन्यथात्वमाकारः। ततो यथा—

'वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या पाणौ स्मित्वा खड्गलेखां लिलेख ॥'

अत्र कण्ठकुङ्कुमभेदलक्षणेनाकारेण लक्षितं पुरुषायितं सख्या सखीहस्ते खड्गलेखालेखनेन वैदग्ध्यादभिव्यञ्जितम्। पुंसामेव पाणौ कृपाणस्य योग्यत्वात्। चेष्टाविशेष इङ्गितम्। तेन यथा—

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

अत्र नेत्रोत्साहरूपेणेङ्गितेन लक्षितः कामिनः संकेतकालाभिलाषः कामिन्या निशासूचकेन पद्मसंमीलनेन लीलया प्रकाशितः।

**उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ ३७ ॥**

परावधिरिति परः पर्यन्तभागो गद्यस्य पद्यस्य वा अवधिरुत्कर्षसीमा यस्य।

---

गतिः किं लब्धं यज्जनो गुणग्राही। किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः ॥' अत्र पूर्वं सामान्यत उक्तमपि उदाहरणगतत्वेन विशेषतः पुनराह—अत्रेति। एवं च लोकातिक्रान्तगोचरतयेत्यस्य वृत्तिग्रन्थस्य प्रमाणान्तराविषयागोचरतयेत्येवार्थः न तु लोकोत्तरचमत्कारितयेति। प्रश्नपरिसंख्यायामपि तत्सत्त्वेन भेदानुपपत्तिरिति। इत्युत्तरालंकारः ॥ ४१ ॥ कुङ्कुमेति। कुङ्कुमेन भेदो मिश्रणम्। इति सूक्ष्मम्

---

१. वक्रेति। कण्ठे स्थितं कुङ्कुमं वक्रात्स्यन्दिभिर्गलद्भिः स्वेदबिन्दूनां प्रबन्धैः पङ्क्तिभिर्भिन्नं संभिन्नं दृष्ट्वा कापि वयस्या सखी स्मित्वा हसित्वा तन्व्याः पुंस्त्वं पुरुषायितं व्यञ्जयन्ती सती पाणौ खड्गलेखां लिखितवती। पुंसामेव पाणौ तस्या उचितत्वात्। अत्राकारेण लक्षितं सुबुद्धिवेद्यतया सूक्ष्मं पुरुषायितं पाणौ खड्गलेखनेन प्रकाशितमिति सूक्ष्मालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'संकेतेति। विटं जारम्। संकेतकाले मनो यस्य। तं जिज्ञासुमित्यर्थः। अत एव हसद्भ्यां नेत्राभ्यामर्पितं सूचितमाकूतं रहस्यं येन तादृशं ज्ञात्वा विदग्धया नायिकया लीलासंबन्धिपद्मं निमीलितमित्यन्वयः। अत्र नेत्रेङ्गितेन लक्षितः सूक्ष्मोऽभिप्रायः कामिन्या निशासूचकेन पद्मनिमीलनेन प्रकाशितः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः । धाराधिरोहितया तत्रैवोत्कर्षविश्रान्तेः ।

उदाहरणम्—

'राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'

**भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः ।**
**युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ ३८ ॥**

अत्रात्यन्तमिति देशभेदस्यैवोपकारकं न तु पृथगपि विवक्षितार्थम् । युगपदिति स्वरूपनिर्वचनम् । तेन कार्यकारणभूतयोर्धर्मयोर्यत्र भिन्नदेशतया संप्रतिपादनं सा असंगतिः । हेतुफलयोरग्निधूमाद्योरिव प्रसिद्धायाः समानदेशत्वरूपायाः संगतेः परित्यागात् । तथा प्रतिपादनं च कारणान्तरेभ्यो वैलक्षण्यात् ।

उदाहरणम्—

'जेस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअम् ।
दन्तक्खअं कवोले वहूएँ वेअणा सवत्तीणम् ॥'

स्पष्टम् । नन्वयं विरोधालंकार एव । हेतुफलयोर्वैयधिकरण्यस्य विरोधरूपत्वादिति चेत्, न । वैयधिकरण्यं ह्यसंगतिः । न च सैव विरोधः । किं तु तद्बोधिका । वैयधिकरण्येन तयोर्विरोधप्रतिभासनात् । नन्वेवमपि प्रतीयमानो विरोध एवालंकारोऽस्तु न तु तद्बोधिकासंगतिरपि साक्षात् । न च वाच्यं समा-

॥ ४२ ॥ सारश्च ॥ ४३ ॥ **अत्रात्यन्तमितीति** । देशभेदस्यात्यन्तिकत्वं चमत्कारोत्कर्षकतयोपकारकत्वेनोक्तमित्यर्थ । **स्वरूपेति** । द्वयोः कथनस्यान्यथा योगादिति भावः । संज्ञाया अन्वर्थता दर्शयति—**हेतुफलयोरिति** । वृत्तिस्थं केनाप्यतिशयेनेति व्याचष्टे—**तथेति** । **जस्सेति** । 'यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम् । दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥' अत्र शारीरमानसयोर्वेदनयोरेकत्वाध्यवसायो मूलम् । ननु व्यधिकरणत्वेन नियतयोः सामानाधिकरण्यवत्समानाधिकरणत्वेन नियतयोर्वैयधिकरण्यस्यापि विरुद्धत्वाद्विरुद्धालंकार एवेति शङ्कते—**नन्विति** । असंगतेर्विरोधाद्भेदान्न विरोधरूपतेत्यापाततः समाधत्ते—**वैयधिकरण्यं हीति** । विरोधस्फूर्तिं विना चमत्काराभावात्स एवालंकारः समुचित इति । पुनराशङ्कते—**नन्वेवमपीति** । असंगतिविरोधयोर्भेदेऽपीत्यर्थः । सिद्धान्त्यभिमता व्यवस्था प्रमाणाभावेन दूषयितुं शङ्कते—**न चेति** । समानाधि-

१. 'राज्य इति । सौध सुधागृहम् । अनङ्गसर्वस्वमिति रूपकम् । अत्र पूर्वपूर्वापेक्षयोत्तरोत्तरस्योत्कर्षश्चरमस्य सर्वोत्कृष्टत्वपर्यवसन्न' सारालंकार ।' इत्युदाहरणचन्द्रिकासंक्षेपः.
२. 'जस्सेअ इति । अत्र वेदनादन्तक्षतयोः कार्यकारणयोर्वैयधिकरण्यरूपासंगतिरलंकारः । इत्युदाहरणचन्द्रिकासंक्षेप'.

नाधिकरण एव विरोधो विरोधालंकारनिर्वाहको न तु व्यधिकरणोऽपीति । लक्षणे सामान्यत एव विरोधस्योक्तत्वादिति । मैवम् । सामान्येनोक्तस्यापि विशेष एव पर्यवसानात् । अपवादविनिर्मुक्त एव देशे उत्सर्गः प्रवर्तते । विरोधालंकारस्य चासंगत्यलंकारोऽपवादक इति । व्यधिकरणविरोधस्यापवादाक्रान्ततया तद्भिन्नविरोधे विरोधालंकार इति । अत एव तथैवोदाहृतम् ।

समाधिः सुकरं कार्यं कारणान्तरयोगतः ।

इष्टात्कारणादन्येन कारणेनोपकृतः कर्ता यदक्लेशेन कार्यं करोति स समाधिः । सम्यगाधिः समाधिरिति व्युत्पत्तेः । उदाहरणम्—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥'

तयोस्तुल्यकक्षताविरहान्न समुच्चयालंकारान्तर्भावः ।

समं योग्यतया योगो यदि संभावितः क्वचित् ॥ ३९ ॥

योग्यता आनुरूप्यम् । संभावितः सर्वसंमतः । तेनेदमनयोः समुचितमिति योग्यतया संबन्धस्य नियतविषयमध्यवसानं चेत्तदा समं नामालंकारः । योग्यता च प्रकर्षनिकर्षाभ्याम् । तत्र प्रकर्षेण यथा—

'धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः संगतं यत्तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥'

---

करण एव एकाधिकरणप्रतीयमान एव । व्यधिकरण भिन्नाधिकरण. प्रतीयमानः । तथा च सामानाधिकरण्यकृतविरोधभाने विरोधालंकारः । समानाधिकरणयोर्भिन्नाधिकरणत्वनिबन्धनविरोधभाने त्वसंगतिरिति व्यवस्थेत्यर्थः । **व्यधिकरणेति** । व्यधिकरणत्वप्रयुक्तस्येत्यर्थः । तथैव सामानाधिकरण्येनैव । उदाहृतं विरोधालंकार इति शेषः । इत्यसंगतिः ॥ ४४ ॥ **सम्यगाधिरिति** । सम्यगाधानकरणमित्यर्थः ।

---

१. 'मानमिति । दिष्ट्या भाग्येन । उदीर्णमुद्गतम् । अत्र घनगर्जितरूपकारणान्तरयोगेन मानापगमरूपकार्यस्य सुकरत्वात्समाधिरलंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'धातुरिति । शिल्प कौशल तदतिशयस्य निकषस्थान परीक्षास्थलमिति मृगाक्षीविशेषणम् । रूपे रूपविषये दत्तपत्र इति विजयायेत्यादिः । संगतमिति भावे क्त. । समागम इत्यर्थ. । दैवादित्यस्य वोपनतमित्यनेनान्वयः । अत्रोचितयोगवर्णनात्समालंकार. ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

निकर्षेण यथा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥'

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।**
**कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ ४० ॥**
**गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।**
**क्रमेण च विरुद्धे यत्स एव विषमो मतः ॥ ४१ ॥**

द्वयोरत्यन्तविलक्षणतया यत्क्वचिद्योगो घटनां नोपैति किं त्वनुपपद्यमानतयैव प्रतीयते स एको विषमः । यच्च क्वचित्कार्यमारभमाणः कर्ता बलवत्कारणान्तरेण विष्टम्भात्क्रियाफलं नाप्नोति प्रत्युतानिष्टं विषयमासादयेत्स द्वितीयः । यत्र क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतस्तौ तृतीयचतुर्थौ विषमौ । सर्वत्र समताया विपर्ययात् । तत्र प्रथमो यथा—

'शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निदुःसहो मलयानिलः ॥'

द्वितीयो यथा—

'सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥'

अत्र त्राणरूपफलाभावेऽन्येन ग्रासरूपोऽनर्थः । तृतीयो यथा—

---

इति समावि. ॥ ४५ ॥ **समसिति** । स्पष्टम् । इति समम् ॥ ४६ ॥ **विष्टम्भादिति** । प्रतिबन्धादित्यर्थः । कुक्षिशरीरयोरवयवावयविनोर्वैषम्यं पानकर्तृत्वपानकर्मत्वरूपं पानपदार्थभेदेऽप्यभेदोपचारेण बोध्यम् । इति विषमालंकारप्रकरणम्

---

१. 'चित्रमिति । अत्र चित्रबतशब्दयोर्वीप्सा विस्मयातिशयद्योतनाय । परिणतं पक्वम् । स्फीतिः समृद्धिः । एतस्याः फलसमृद्धेः कवलनकला भक्षणचातुरी तत्र कोविदः पण्डितः । अत्र द्वयोरपि निकृष्टयोरुचितयोर्योग इति भेदः ।' इत्युदाहरणचन्द्रिकासंक्षेप.
२. 'शिरीषेति । शिरीषात् शिरीषपुष्पात् । कुकूलाग्निः कुम्भकाररचितो घटादिपचनाग्निः । अत्र कशब्दोक्त द्वयोरत्यन्तवैलक्षण्यं विषमालंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेप.
३. 'सिंहिकेति । सिंहिका सिंही राहुमाता च । तत्सुतः सिंहो राहुश्च जग्रसे कवलितवान् । अत्रेष्टसाधने प्रवृत्तस्य विपरीतानर्थप्राप्तिरूपो विषमभेदः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.
६. 'साश्रयग्रासरूप.' ग.

'सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥'

चतुर्थो यथा—

'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

अत्रानन्ददानशरीरतापनक्रिये विरुद्धे। सूत्रे विभाग उपलक्षणपरः। तेन संबन्धिनोरानुरूप्याभावात्मकस्य विषमस्यान्येऽपि भेदा भवन्ति। तत्रावयवावयविनोर्वैषम्ये यथा—

'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥'

एवमन्यत्राप्यूह्यम्।

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥ ४२ ॥**

वर्णनीयोत्कर्षापेक्षया यन्महत्याश्रिते विषये तदपेक्षया तनुरप्याश्रयो महीयान्स्यात् महीयस्तया वर्ण्यते महत्याश्रये वा विषये आधेय एव तथा वर्ण्यते तदुभयमधिकालंकारः। तत्राद्यं यथा—

'अहो विशालं भूपाल भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥'

---

॥ ४७ ॥ **वर्णनीयेति**। वर्णनीयोत्कर्षविवक्षयेत्यर्थः। एतच्च महतीत्यत्रैव तनुरपीत्यत्राप्यन्वेति। विषये प्रतिपाद्ये। महत्याश्रये इत्यत्रापि वर्णनीयेत्यादेरन्वयः। आधेय एव तनुरपि तथा महीयस्तया वर्ण्यत इत्यर्थः। इत्यधिकप्रकरणम् ॥ ४८ ॥

---

१. 'सद्य इति। तमालवन्नीला कृपाणलेखा यस्य राज्ञः करस्पर्शमवाप्य सद्य...त्काल रणे रणे प्रतिसङ्ग्रामं शरदिन्दुवत्पाण्डु शुभ्र यशः प्रसूते एतच्चित्रमित्यन्वयः। अत्र कार्यकारणयोर्विरुद्धगुणत्वरूपो विषमः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'आनन्देति। अमन्दमनल्पम्। अत्र कार्यकारणयोरानन्ददानतापनक्रिये विरुद्धे इति चतुर्थो विषमः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'विपुलेति। सागरे शेत इति सागरशयस्तादृशस्य विष्णोर्विपुलेन विस्तृतेन कुक्षिणा युगक्षये भुवनानि पपिरे पीतानि। स पुनः। सोऽपीत्यर्थः। एकतमया कयाचिन्नगरकामिन्या मदेन विभ्रमो विलासो यस्यां सा चासावसकला असंपूर्णा च तथाभूतयैकया दृशा पपे सादरमवलोकित एव। पीत इत्यभेदाध्यवसानम्। अत्रावयवावयविनोः पानकर्तृकर्मतारूप वैषम्यमित्याद्यनन्तभेदोऽयं सुधीभिरूहनीयः। इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'अहो इति। मातीति अवकाश लभत इत्यर्थः। अत्र कविविवक्षावशेन महतो यशोराशेराधेयात्तनुरपि त्रिभुवनरूप आधारो महत्त्वेनोक्त इत्यधिकमलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्राश्रयस्य भुवनत्रितयस्य महत्तया वर्णनम्। द्वितीयं यथा—

'[१]युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः॥'

अत्राधेयभूताया मुदो महीयस्त्वं विवक्षितम्।

**प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥ ४२॥**

अपकारिणमपि विपक्षं साक्षादपकर्तुमक्षमेण केनापि तदीयस्य तिरस्करणं तमेवोत्कर्षयितुं [२]तदुच्यते प्रत्यनीकम्। प्रतिनिधितुल्यत्वात्। यथानीकेऽभियोज्येऽशक्तेन तत्प्रतिनिधिभूतः कश्चिन्निगूढमभियुज्यते तथेहापि प्रतियोगिनि विजेयेऽशक्तेन तदीयोऽन्यो विजीयत इत्यर्थ। तदीयत्वं च साक्षात्संबन्धेन परम्परासंबन्धेन चेति द्विविधमेतत्। तत्राद्यं यथा—

'[३]त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव कामः॥'

अत्र कामिन्याः कामिनश्च साक्षादेव स्वस्वामिभावः संबन्धः। द्वितीयं यथा—

'[४]यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृति कृती राहुरिन्दुमधुनापि बाधते॥'

अत्र यत्पदार्थेन मुखस्यावयवावयविभावः संबन्धस्तेन चन्द्रस्य सादृश्यलक्षण इति परम्परासंबन्धः।

---

उत्कर्षयितुमित्यनन्तरं यदिति शेष। कथं तत्प्रत्यनीकमुच्यते तत्राह—**अनीकेति**। प्रत्यनीकशब्देन सैन्यप्रतिनिधिरुच्यते। तत्साम्याच्च प्रकृतार्थे प्रयोग इत्यर्थ.। साम्यमेवोपपादयति—**यथेति**। तत्प्रतिनिधिभूतस्तन्मित्रादि सैन्यभयान्निगूढमभि-

---

१. 'युगान्तेति। युगान्तकाले प्रतिसंहृत आत्मा स्वात्मभूतः प्रपञ्चो येन तस्य कैटभद्विष· श्रीविष्णोर्यस्या तनौ जगन्ति भुवनानि सविकास सावकाशमासत उपविशन्ति स्म तत्र तस्या तनौ तपोधनस्य नारदस्याभ्यागमसंभवा मुद· प्रीतयो न ममुर्नावकाशं प्राप्तवत्य इत्यन्वय। अत्राधेयाना मुदां महत्त्वोक्तिरित्यपरो भेदः' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'यदुच्यते तत्प्रत्यनीकम्' ख. ३. 'त्वमिति। अनुशयाद्द्वेषात्। 'भवेदनुशयो द्वेषे' इति विश्व.। अत्र स्वशत्रुं नायकं जेतुमशक्तेन कामेन तत्प्रतिनिधित्वेन तदीयकामिनीपीडनात्प्रत्यनीकालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'यस्येति। यस्य श्रीकृष्णस्य। कायस्य निग्रहो वधस्तेन गृहीत· स्वीकृतो विग्रहो वैरं येन सः। कान्तेत्यत्र यस्येत्यनुषज्यते। कृती वैरनिर्यातने कुशलः। अत्र श्रीकृष्णचन्द्रयोः परम्परया संबन्धित्वमिति विशेषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते।
निजेनागन्तुकेनापि तन्मीलितमिति स्मृतम्॥ ४४॥

निजं स्वाभाविकं लक्ष्म निगूहनीयसाधारणं चिह्नं तद्द्वारेण केनचिद्वस्तुना बलवत्तया यत्किंचिद्वस्तु वस्तुगत्यैव तिरोधीयते तन्मीलितालंकारः। तच्च द्विधा—लक्ष्मणः क्वचित्स्वाभाविकत्वात्क्वचिदागन्तुकत्वाच्चेत्यर्थः। तत्र स्वाभाविकेन लक्ष्मणा मीलितं यथा—

'[1]अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते॥'

अत्र दृक्तरलतादि अङ्गस्य स्वाभविकं लिङ्गं समानं च तिरोधेयेन मदेन। तत्राप्येतदुपलम्भात्। आगन्तुकेन लक्ष्मणा यथा—

'[2]ये कंदरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः॥'

अत्र कम्पपुलके अङ्गस्य लिङ्गे हिमाद्रिकंदरनिवाससामर्थ्याधिगतशीतरूपकारणस्यागन्तुकत्वेन तत्कार्यभूतयोस्तयोरप्यागन्तुकत्वं भयैः समानता च। तेष्वपि तयोरुपलम्भात्।

स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा॥ ४५॥

स्थापनं विधिः। अपोहो निषेधः। यथापूर्वमिति वीप्सायामव्ययीभावः।

---

युज्यते। पीड्यत इत्यर्थः। इति प्रत्यनीकप्रकरणम्॥ ४९॥ **वस्तुगत्यैवेति।** एतच्चापह्नुतिसाम्यालंकारव्यावृत्त्यर्थम्। तत्र वस्तुतस्तिरोधानाभावात्। इति मीलित-

---

१. 'अपाङ्गेति। अपाङ्गस्तरलो ययोस्ते इति विग्रहः। मधुराश्च ते वक्रा वक्रोक्तिसमर्पका वर्णा यासु ता गिर उक्तयः। इति प्रकारेण मृगदृशामङ्गके लीलया कर्त्र्या स्वतः स्वभावतः स्फुरितम्। तत्तस्मादत्र कृतं पदं स्थानं येन तादृशोऽपि मदस्य मधुपानजन्यस्योदयो न लक्ष्यत इत्यन्वयः। अत्र मदसाधारणैरङ्गस्य स्वाभाविकैरपाङ्गतरलत्वादिचिह्नैर्मदस्य गोपनान्मीलितालंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'य इति। ते तव ये द्विपन्त्वत्पाते त्वदागमने शङ्किता धीर्येषां तादृशाः सन्तो हिमाद्रेः कंदरासु निवसन्ति उद्गतरोमाञ्चं कम्पसहितमङ्गमुद्वहतामपि तेषां भयानां बुधः पण्डितोऽपि नाभिज्ञ इत्यन्वयः। अत्र रोमाञ्चकम्पयोरागन्तुकयोर्भयशीतसाधारणचिह्नयोर्भयतिरोधायकत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः.

तेन पूर्वं पूर्वं वस्तु प्रति उत्तरस्य वस्तुनो यत्र विशेषणतया बाहुल्येन विधिर्यत्र वा तथा निषेधः सा द्विधैकावली । विशेषणतया विधिरित्यस्य विधेर्विशेषणत्वमित्यर्थः । एवं विशेषणतया निषेधोऽपि । कश्चित्तु 'पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्य कृत्वा यत्र स्थाप्यतेऽपोह्यते वा सैकावलीति सूत्रार्थः' इत्याह । 'तत्तु पूर्वं प्रति यथोत्तरस्य वस्तुन इत्यादिप्रकाशविरुद्धम् । तत्र विधौ यथा—

'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपरिष्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥'

अत्र पुराणामङ्गनास्तासामङ्गविशेषणक्रियामुखेन रूपं तस्य विलासास्तेषामस्त्रत्वमिति क्रमेण विशेषणतया विधिः । निषेधे यथा—

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥'

अत्र जले पङ्कजस्य तत्र षट्पदानां तत्र गुञ्जितस्य तत्रापि मनोहारितायाः विशेषणतया निषेधः ।

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**
**स्मरणं**

---

प्रकरणम् ॥ ५० ॥ **बाहुल्येनेति** । सकृत्तथोक्तौ चमत्काराभावात् । तथा बाहुल्ये तद्विशेषणतयेति । उत्तरोत्तरस्य विधि. सबन्धबोधनम् । तथा निषेधोऽभावबोधनम् । तत्र विशेषणतयेति तृतीयाया प्रकारार्थत्वे विशेषणत्वप्रकारेण विधिर्निषेधो वेत्यर्थः स्यात् । न चासौ संभवति । प्रकारत्वे प्रकारेण बोधस्योदाहरणेष्वभावात् । अत उपलक्षणे तृतीयेति विशेषणभूतयोर्विधिनिषेधयोरवगतिरित्याशयः । **कश्चित्त्विति ।** परमनन्तरं विशेष्यं कृत्वा यत्र स्थाप्यते अर्थाद्विशेषणेन स्वधर्मविशिष्टमुपपाद्यत इत्यर्थ. । अथवा अपोह्यते स्वव्यतिरेकेण विशेष्यतावच्छेदकनिषेधबुद्धिविषयीक्रियत इत्यर्थ. । अत्रोदाहरणम्—'स पण्डितो य. स्वहितार्थदर्शी हितं न तद्यत्र परानपक्रिया । परे च ते ये श्रितसाधुभावा' सा साधुता यत्र चकास्ति केशव. ॥' अत्र तच्छब्दार्थे विशेषणं पण्डित. पश्चात्स्वहितार्थदर्शित्वं प्रति विशेष्यस्तेन विशेषणेन पण्डितत्वेनोपपाद्यते । द्वितीयभेदस्य तु 'न तज्जलं यन्न सुचारुपङ्कजं' इति वक्ष्यमाणम् । अत्र हि सुचार्वित्यादिविशेषणेन स्वव्यतिरेकेण विशेष्यतावच्छेदकजलत्वनिषेधबुद्धिरिति । अत्र पुराणि यस्यामित्युदाहरणाव्याप्तिः सूत्राक्षराननुसारतश्चेति दोषः स्फुट एव । दोषान्तरमप्याह—**प्रकाशेति** । इत्येकावलीप्रकरणम् ॥ ५१ ॥

---

१. 'पुराणीति । यस्या दिशि । रूपेण परिष्कृत भूषितमङ्ग यासां ता. । विलासाः कुसुमायुधस्यास्त्रमिति रूपकम् । अत्र पूर्वपूर्वसंबन्धिन्युत्तरोत्तरविधानरूपैकावल्यलंकार. ।' इत्युदाहरणचन्द्रिकासंक्षेप.. २. 'नेति । न लीन. षट्पदो भ्रमरो यत्र तत् । कलं कलस्वरयुतं यथा स्यात् । अत्र तादृशनिषेधरूपैकावली ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्रार्थस्य स्मृतिः स्मरणालंकार इति लक्षणम्। यथानुभवमिति स्मृत्याकारदर्शनम्। दृष्टे तत्सदृश इति तद्धेतुसंस्कारोद्बोधे हेतुनिर्देशः। अदृष्टादेरप्युपलक्षणात्। यद्वा अन्यादृशस्मृतेश्चारुत्वाभावेनालंकारत्वाभावाद्व्यवच्छेदकतया लक्षणान्तर्गतमेवैतत्। तदयं वाक्यार्थः—केनचिदाकारेण नियतो यदाकदाचित्केनचित्प्रमाणेनानुभूतः स कालान्तरे संस्कारोद्बोधहेतौ तत्समानधर्मदर्शने सति यदनुभूतेन प्रकारेण स्मर्यते तत्स्मरणालंकारः। स द्विधा—एतज्जन्मनि जन्मान्तरे वानुभूतस्य स्मृतेः क्रमेणोदाहरणे।

'निम्ननाभिकुहरेषु[1] यदम्भः प्लावितं चलदृशां लहरीभिः।
तद्भवैः कुहुरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम्॥'
'करजुअगहिअजसोआथणमुहविणिवेसिआहरउडस्स[2]।
संभरिअपञ्चअण्णस्स णमह कण्हस्स रोमञ्चम्॥'

स्पष्टम्।

**भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने॥ ४६॥**

अत्राप्यन्यसंविदिति लक्षणम्। तत्तुल्यदर्शन इति हेतुनिर्देशः। अन्येति पदार्थं परामृशता तदित्यनेनाप्राकरणिकं निर्दिश्यते। तथा च तेन तुल्यमर्थादिह प्राकरणिकं लभ्यते। तेन प्राकरणिकस्याप्राकरणिकतुल्यस्य दर्शने सति यदप्राकरणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः। न च रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ चातिव्याप्तिः। तत्र वस्तुतो भ्रमाभावेऽप्यध्यवसानमात्रस्वीकारात्। इह त्वर्थानुगमेन संज्ञाप्रवृत्तेर्भ्रमोपगमस्य स्पष्टमेवोपगमात्। उदाहरणम्—

'कपाले[3] मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति।

---

**अन्यादृशेति**। सादृश्यामूलकेत्यर्थः। 'स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम्। ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासनः॥' इत्यादौ हि न स्मृतेश्चारुत्वमिति नालंकारत्वम्। **करजुएति**। 'करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य। संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम्॥' इति स्मृतिप्रकरणम्॥ ५२॥ **तत्र वस्तुत इति**। अनाहार्यतयेत्यर्थः। **अध्यवसानमात्रेति**। मात्रेत्यनाहार्यत्वव्यवच्छेदः। **अर्थानुगमेनेति**। अर्थश्चानाहार्य एवोत्सर्गसिद्धोऽत्र संज्ञाघटक इति

---

१. 'निम्नेति। चलदृशा गम्भीरनाभिबिलेषु लहरीभिर्जलक्रीडायां यदम्भः प्लावितं संचारितं तद्भवैः कुहुरुतैः कुहुकुहुशब्दैः सुरनार्योऽप्सरसः सुरतसंबन्धिकण्ठरुतानां सारिता इति कर्मणि षष्ठी। अत्र सदृशदर्शनजन्यं स्मरणमलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः। २. 'करेति। स्तनयोर्मुखमिति विग्रहः। पाञ्चजन्यः श्रीकृष्णशङ्खः। 'अत्र जन्मान्तरानुभूतस्मरणमिति भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः। ३. 'कपाल इति। सर्वत्रेति शब्दोत्तर बुद्धेति

रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥'

**आक्षेप उपमानस्य प्रतीपमुपमेयता ।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥ ४७ ॥**

अस्य प्रयोजनं निर्वाहयितुमुपमेय एवालमित्यप्रयोजकतयोपमानं यदाक्षिप्यते यच्चोपमानतया प्रसिद्धस्योपमेये तस्माद्विशेषविवक्षया अनादरार्थमुपमेयभावः कल्प्यते तदुभयरूपं प्रतीपम् । उपमेयस्योपमाने प्रतिकूलवर्तित्वात् । तत्राद्यं यथा—

'लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥'

अत्र यथासंख्यसत्त्वेऽपि आक्षेप एव चमत्कारीत्याक्षेपोदाहरणता । द्वितीये तु क्वचिदुपमित्यनिष्पत्त्या तिरस्कारः, क्वचित्तु निष्पन्ना सैव तद्धेतुः । क्रमेणोदाहरणम्—

'ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जम् ।
तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥'

अत्र मुखोपमानस्य शशिनः स्वल्पगुणत्वादुपमित्यनिष्पत्तिर्वअणिज्जमिति पदेन द्योत्यते । सैव च तिरस्कारहेतुः ।

---

भावः । यत्र भ्रमादिशब्देनेतिशब्दादिना वा भ्रमोपनिबन्धस्तत्र भ्रान्तिमानलंकार इति नातिप्रसङ्ग इत्यप्याहुः । इति भ्रान्तिप्रकरणम् ॥ ५३ ॥ प्रतीपपदप्रवृत्तिनिमित्तमाह—**उपमेयस्येति** । **ए एहीति** । 'अये एहि तावत्सुन्दरि कर्णं दत्त्वा शृणुष्व वचनीयम् । तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥' इति । **सैव चेति** ।

---

शेषो बोध्यः । कपाले स्थितानिति शेषः । लेढि आस्वादयति । तरूणां छिद्रेषु प्रोतान्प्रविष्टान् । सकलयति गृह्णाति । रतान्ते हरतीति सबन्धः । प्रभया मत्तस्तदतिशयशाली । अत्र सदृशदर्शनजन्या भ्रान्तिरलङ्कारः ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'लावण्येति । ओको गृहम् । गरिमा गौरवम् । त्यागिनां दातॄणामग्रेसरेऽग्रगण्ये । अवनीभरे क्षमः समर्थो भुजो यस्यैवभूते त्वयि वेधसा निष्पादिते सति । किं किमर्थमित्यर्थः । पूषा सूर्यः । चिन्तारत्नं चिन्तामणिः । मुधैव वृथैव । कुलक्ष्माभृतः कुलपर्वताः । अत्रोपमानाक्षेपरूपं प्रतीपमलङ्कारः । यथासंख्यसत्त्वेऽप्याक्षेपप्राधान्यात्तदुदाहरणत्वम् । इत्युदाहरणचन्द्रिकासक्षेपः. २. 'ए एहीति । वचनीयं निन्दितम् । अत्रोपमानस्योपमेयत्वकल्पनमपरं प्रतीपम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि॥'

अत्र नलिनानां लोचनोपमेयीकरणमेवानादरहेतुः। उपमेयस्य न्यूनगुणत्वस्थितेः। अनयैव रीत्या तदपि प्रतीपं द्रष्टव्यं यत्सामान्यगुणयोगाभावेनोपमानत्वाननुभवेऽप्यर्थस्योपमानत्वकल्पना। कथमिति चेत्। उपमानतिरस्कारस्यालंकारताबीजत्वात्। तच्च द्विधा संभवति। उपमानत्वेनैव प्रसिद्धस्योपमेयत्वकल्पनया असदृगत्वेन प्रसिद्धस्योपमानत्वकल्पनया वा। सूत्रं चोपलक्षणतया योज्यम्। उदाहरणम्—

'अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम्॥'

अत्र हालाहलस्य खलवचनोपमानत्वमसंभाव्यमानमेवोपनिबद्धं तिरस्कारहेतुः।

**प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।**
**ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम्॥ ४८॥**

अतादृशत्वेऽपि विवक्षितगुणसाम्यस्य प्रस्तुतस्यान्येनाप्रस्तुतेन गुणसाम्यविवक्षया ऐकात्म्यं बध्यते तत्सामान्यम्। समानगुणयोगात्। तत्रापरित्यक्तनिजगुणस्येत्यपि विशेषणं विवक्षितम्। अन्यथा तद्गुणालंकारेऽतिव्याप्तेः। बध्यत इत्यस्य प्रत्यायनमात्रमर्थो न तु शाब्दं प्रतिपादनम्। उदाहरणे 'अविभाव्यतां गताः' इत्यादावैकात्म्यस्याशाब्दत्वात्। उदाहरणम्—

---

व्यतिरेके तूपमितिनिष्पत्तिरस्तीति वैलक्षण्यमिति भाव। **न्यूनगुणत्वेति।** वस्तुतस्तूपमाने साधारणधर्मसंबन्धोऽनूद्यते उपमेये तु विधीयते। तेन प्रसिद्धसादृश्यतयोपमानस्याधिक्यं साध्यसादृश्यतया चोपमेयस्य न्यूनत्वं बोध्यम्। **सामान्यगुणयोगाभावेनेति।** स्वभिन्न इति शेष। इति प्रतीपप्रकरणम्॥ ५४॥ **ऐकात्म्यमिति।** अभेद इत्यर्थः। मीलितेऽग्रहणमेव अत्र तु भिन्नत्वेनाग्रहणमिति भेद। **तद्गुणेति।** यद्यपि तद्गुणालंकारेऽन्यगुणग्रहणमात्रं न तु धर्मिणोरभेदोपनिबन्धः प्रतीतिर्वा। 'विभिन्नवर्णा गरुडाग्रजेन—' इत्यादावरुणस्य सूर्याश्वाना चाभेदकथनात्तत्प्रतीत्योरभावात् तथापि तद्गुणविषयताया इह निरासे तात्पर्यं बोध्यम्। तद्गुणालंकारे सति तल्लक्षणस्यात्रातिव्याप्तेरिति च ग्रन्थार्थ.। इति सामान्यप्रकरणम्

---

१. 'गर्वमिति। असंवाह्यं संवहनायोग्यम्। अपरिमितमिति यावत्। भद्रे शोभने। पूर्वत्र वचनीयत्वोक्त्या उपमितेरपर्यवसानमिह तु निष्पन्ना सा तिरस्कारहेतुरिति भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः। २. 'अहमेवेति। तातेति सानुकम्पसंबोधने। 'ताातोऽनुकम्प्ये जनके' इति विश्वः। मा स्म दृप्यः गर्वं मा कृथा'। अत्र निरुपमत्वेन गर्वायमाणस्योपमानताकल्पनरूपं प्रतीपम्।' इत्युदाहरणचन्द्रिकासंक्षेपः।

'मलयजरसविलिप्ततनवो नवहारलताविभूषणाः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥'

अत्राभिसारिकाचन्द्रिकयोरेकात्मत्वप्रतीतिः । क्वचित्प्रस्तुताप्रस्तुतयोरुत्तरकालीनविवेकादिना तदुन्नयनम् । यथा—

'वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥'

अत्र भृङ्गपातानन्तरं भेदप्रत्ययो न तु पूर्वमेव प्रतीतिः । ननु भृङ्गपातेन भेदप्रत्ययात्कथमेकात्मत्वप्रतीतिरिति चेत् । अग्रे तथात्वेऽपि प्राथमिकाभेदप्रत्ययस्यानिरासात्तस्य वृत्तत्वात् ।

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ ४९ ॥**
**अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।**
**तथैव करणं चेति विशेषस्त्रिविधो मतः ॥ ५० ॥**

स एष त्रिधा । तत्र प्रसिद्धमाधारं विनाधेयस्य विशिष्टावस्थितिर्यदभिधीयते स एको विशेषः । तत्र प्रसिद्धमित्यनेनेदमुक्तं यदत्र वास्तवमाधारत्वं न विवक्षितं किं तु कविप्रसिद्धिमात्रसिद्धमिति । अत एव तथैवोदाहरणम्—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥'

---

॥ ५५ ॥ **सेति** । 'सा वसति तव हृदये सैवाक्ष्णोः सा च वचनेषु । अस्मादृशीनां

---

१. 'मलयजेति । मलयज चन्दनम् । सिततर दन्तपत्र दन्तनिर्मितं ताटङ्कम् । तेन कृता वक्त्रे रुग्दीप्तिर्याभि॰सा ता॰ । विस्तृत धाम तेजो यस्य तस्मिन् । धरा पृथ्वी धवलयति सति । अविभाव्यतामलक्ष्यताम् । अत्र प्रस्तुताप्रस्तुतयोरभिसारिकाचन्द्रिकयोर्वैवक्षिकगुणसाम्येनैकात्मतावर्णनात्सामान्यमलकार॰ ।' इत्युदाहरणचन्द्रिकासक्षेप॰. २ 'अत्र प्रस्तुताप्रस्तुतयोरभिसारिका' ख ३. 'वेत्रत्वचेति । वेत्रत्वच॰ पीतवर्णतयोपमानता । कर्णाग्रत॰ कर्णाग्रात् । गण्टतले आगतानीति नीलवर्णकेशसानिध्यप्रयुक्ताभिव्यक्तिवारणाय । भृङ्गा भ्रमरा॰ । कोऽवेदयिष्यदज्ञास्यत् । भृङ्गपातेन लक्षितानीत्यर्थः । अत्रोत्तरकाले विवेकेन पूर्वमेकात्मताप्रतीत्युन्नयनादुदाहरणत्वम् ।' इत्युदाहरणचन्द्रिकासक्षेप॰. ४. 'दिवमपीति । दिव स्वर्गम् । आकल्प कल्पपर्यन्तम् । अनल्पेति गिरा विशेषणम् । येषां गिरो जगन्ति रमयन्तीति सबन्धः । अत्र कविरूपप्रसिद्धाधार विनाधेयभूतानां गिरामवस्थितिवर्णनादेको विशेषालंकार॰ ।' इत्युदाहरणचन्द्रिकासक्षेपः.

अत्र कविरूपं प्रसिद्धमाधारं विना गिरां विशिष्टावस्थितिरुक्ता । एकस्य वस्तुनो युगपद्या एकात्मा अनेकवृत्तिः स द्वितीयो विशेषः । एकात्मेत्येकेन स्वभावेनेत्यर्थः । एतच्च विशेषणं 'एकस्त्रिधा वससि–' इत्यादि यथासंख्यव्यावर्तनाय । युगपदिति पर्यायनिवारणाय । उदाहरणम्—

'सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु ।
अम्हारिसाण सुन्दर ओआसो णत्थि पावाणम् ॥'

स्पष्टम् । रभसेनान्यत्कार्यं कुर्वतः कर्तुंयदशक्यस्यान्यस्यापि कार्यस्य तथैव करणं स तृतीयो विशेषः । अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः । एतच्च 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादि समुच्चयव्यावर्तनाय । उदाहरणम्—

'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥'

अत्रान्यस्य करणं शाब्दम् । क्वचित्तु व्यङ्ग्यम् । यथा—

'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥'

अत्र किं न मे हृतमिति सचिवादिसर्वहरणरूपकार्यकरणं व्यज्यते । नन्वाधारं विना वास्तवस्याधेयस्य व्यवस्थितिरनुपपन्नैव एवमन्ययोरप्यनुपपत्तिरिति चेत्, न । अतिशयोक्तिमालम्ब्य तथाभिधानात् । सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणायिता । तां विना प्रायशोऽलंकारत्वाभावात् । अत एवाहुः (यदाहुः)—

'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविभिः कार्यः कोऽलंकारोऽनया विना ॥' इति ।

---

सुन्दर अवकाशो नास्ति पापानाम् ॥' इति । **रभसेनेति** । एतच्चैकेनैव यत्नेन कार्यद्वयं करिष्यामीत्यभिसंधिव्यावृत्त्यर्थम् । स्फुरदित्यादौ यथासंख्यसत्त्वेऽपि विशेषालंकारस्यैव चमत्कारे प्राधान्यात्तदुदाहरणत्वम् । **यदाहुरिति** । काव्यादर्शकृतो

---

१. 'सेति । चोऽवधारणे । सैवेत्यर्थः । अत्रैकस्याः कामिन्या एकरूपेण युगपदनेकत्र स्थितिवर्णनादपरो भेदः ।' इत्युदाहरणचन्द्रिकासक्षेपः. २ 'स्फुरदिति । हे राजन्, त्वा सृजता विधिना भुवि नवो मनोभवादिः ससृज इति सत्यमित्यन्वयः । एतदेवोपपादयितु यथाक्रमं विशिनष्टि—स्फुरदित्यादि । अत्रैकं कार्यं कुर्वता तेनैव यत्नेनाशक्यकार्यान्तरकरणात्तृतीयो भेदः ।' इत्युदाहरणचन्द्रिकासक्षेपः. ३. 'गृहिणीति । इन्दुमती शोचतोऽजस्येयमुक्तिः । मिथो रहसि । ललिते कामकलाविधौ विषये । प्रियभूता शिष्या । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । अत्र सचिवादिसर्वहरणरूपकार्यान्तरकरणं व्यङ्ग्यमिति भेदः' इत्युदाहरणचन्द्रिकासक्षेपः.

विभाव्यत इति विशिष्टो भाव्यते । चमत्कारविशेषविषयः क्रियत इत्यर्थः ।

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥ ५१ ॥**

अत्युत्कृष्टगुणस्याप्रस्तुतस्य योगात्तद्गुणसंपदुपरागात्स्वकीयं रूपं तिरस्कृत्य प्रस्तुतं वस्तु यत्तदनुकारमेवासादयति स तद्गुणो भण्यते । तस्याप्रस्तुतस्य गुणोऽत्रेति व्युत्पत्तेः । मीलिते वस्त्वन्तरेणाच्छादितस्य तस्यैव वस्तुनः प्रतीतिः । अत्र त्वनाच्छादितस्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेदः । उदाहरणम्—

'[1]विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचिं स्वामानिन्यिरे वंशकरीरनीलैः ॥'

अत्र तद्गुणद्वयम् । रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रकृष्टगुणत्वात्तद्रूपतया प्रतीतेः । एतेन यत्केनचिद्व्याख्यातम् 'स्वगुणत्यागानन्तरं पुनस्तत्प्राप्तिस्तद्गुणः' इति, तदनादेयम् । तस्याप्रस्तुतस्य गुणोऽत्रास्तीति व्युत्पत्तिकथनप्रकाशविरोधात् । तत्र गुणद्वयकथनेन च तद्गुणद्वयव्युत्पादनात् । 'आत्ते सीमन्तरत्ने–' इत्यादौ वक्ष्यमाणे संकरोदाहरणे तद्गुणत्वाभावप्रसङ्गाच्च । नहि तत्र त्यक्तस्य स्वकीयरूपस्यावाप्तिः ।

**तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ।**

तदिति प्रकृतेत्यर्थः । अस्याप्रस्तुतस्य । अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति तदा अतद्गुणः । उदाहरणम्—

'[2]धवलोऽसि जहवि सुन्दर तहवि तुए मज्झ रञ्जिअं हिअअम् ।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोऽसि ॥'

अत्रातिरक्ते मनसि धृतस्याप्यरक्तत्ववचनादुत्तरार्धमेवोदाहरणम् । तत्र प्रकृतं हृदयं संबोध्यस्त्वप्रकृतः । स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वात् । एवं

---

दण्ड्युपाध्याया इत्यर्थः । इति विशेषप्रकरणम् ॥ **स्वमुत्सृज्य गुणमिति ।** स्पष्टम् । इति तद्गुण. ॥ ५७ ॥ **स्व(तद्)रूपाननुहारश्चेदिति । धवलोऽसीति ।** 'धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् । रागभरितेऽपि

---

१. 'विभिन्नेति । माघे रैवतकवर्णनम् । गरुडस्याग्रजेनारुणेन विभिन्नवर्णा सूर्यस्य रथ्या अश्वा यत्र रैवतकगिरौ वंशाङ्कुरवन्नीलै रत्नै. परित' स्फुरन्त्या रुचा कान्त्या स्वा रुचिं नीलद्युतिमानिन्यिरे आनीता इत्यन्वय. । गरुडाग्रजेन परितः स्फुरन्त्या रुचा विभिन्नवर्णा इति वा । अत्राश्वाना स्वीयगुणत्यागेनाप्रस्तुतारुणगुणानुहरणवर्णनात्तद्गुणालंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २ 'धवल इति । धवलो निर्मलः श्वेतश्च । रागो लौहित्यमनुरागश्च । धवलपदस्य वृषभपरत्वमपि केचिदाहु. । अत्रोत्तरार्धेऽप्रस्तुतेन गायकेन निवेदनीयवृत्तान्ततया प्रकृतस्य हृदयस्य गुणाननुहरणादतद्गुणोऽलंकारः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

चात्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते। तथास्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते। सामान्यमुखप्रवृत्तत्वात्। तथाचाप्रस्तुतेन प्रस्तुतरूपाननुहरणवत्प्रस्तुतेनाप्रस्तुतरूपाननुहारोऽन्यः प्रकारः। यथा—

'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते॥'

अत्रान्यापदेशपक्षे राजहंसस्याप्राकरणिकत्वं प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम्। वाच्यमात्रविश्रान्तौ तु न काचिदनुपपत्तिः।

**यद्यथा साधितं केनान्यपरेण तदन्यथा॥ ५२॥**
**तथैव तद्विधीयेत स व्याघात इति स्मृतः।**

यथा येनोपायेन तथा तेनोपायेनेत्यर्थः। तथा च केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तेनैवोपायेन ततोऽन्यथा चेत्साध्यते स व्याघात इत्यर्थः। प्रथमसाधितस्य वस्तुनो व्याहतिहेतुत्वात्। उदाहरणम्—

'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥'

अत्र दृशैव दाहो जीवनं च।

एवं शुद्धालंकारा दर्शिताः। अस्ति पुनः कश्चिद्विषयो यत्राङ्गदादिसंबद्धपद्मरागप्रमुखमणिमेलकवत्प्रोक्तानामलंकाराणां संवलन एव चमत्कारः। तस्मात्सोऽप्यलंकारः। तत्र द्वयी गतिः। परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च। तत्र प्रथमा संसृष्टिरुच्यते द्वितीया तु संकरः। स च त्रिधेति प्रकारचतुष्टयं लक्षयति—

**सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः॥ ५३॥**

भेदः स्वरूपतो विषयतो वा परस्परमनपेक्षत्वम्। यद्वा विषयभेदे सति

---

हृदये सुभग निहितो न रक्तोऽसि॥' इति। इत्यतद्गुणप्रकरणम्॥ ५८॥ **यद्यथा साधितमिति**। स्पष्टम्। इति व्याघातप्रकरणम्॥ ५९॥ इति शुद्धालंकारप्रकरणानि। **विषय इति**। काव्यविशेष इत्यर्थः। **विषयत इति**। विषयोऽलंकारप्रतिपादक आश्रयो वाशब्दः। एकवाचकानुप्रवेशेन संकरे स्पष्टोल्लसदित्यादौ रूपकानुप्रासयोर्विषयैक्येऽपि परस्परापेक्षाविरहादतिप्रसङ्गतादवस्थ्यादाह—**यद्वेति**।

---

१. 'गाङ्गमिति। यमुनासबन्धि यामुनम्। अम्बु जलम्। न चीयते न वर्धते। नापचीयते नापक्षीयते। अत्र प्रस्तुतेन हंसेनाप्रस्तुतगुणाननुहरणाद्भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः.
२. 'दृशेति। विरूपाक्षः शिवः। अत्र हरेण दृशा दग्धस्य कामस्य हरजिगीषुभिः कामिनीभिर्दाहहेतुभूतया दृशैव तद्विपरीतजीवनसंपादनाद्व्याघातोऽलंकारः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

परस्परानपेक्षत्वम् । स्थितिर्व्यवस्थितिः । एतेषामनन्तरमेवोक्तानामलंकाराणां भेदेन यत्स्थितिः सा संसृष्टिरिष्टा । संकरभेदास्तु नैवम् । अङ्गाङ्गिभावे स्वरूपतः सापेक्षत्वात् । अनिश्चये व्यवस्थितेरेवाभावात् । व्यवस्थिते विषयतः परापेक्षत्वाद्विषयाभेदाच्च । सेयं शब्दालंकारमात्रस्यार्थालंकारमात्रस्य शब्दार्थालंकारयोर्वेति त्रिप्रकारा । तत्राद्या यथा—

'वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
वनितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥'

अत्रानुप्रासयमकयोः परस्परमनपेक्ष्य व्यवस्थितिः । द्वितीया यथा—

'लिम्पतीव तमोऽङ्गानि किरतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥'

अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजयतः । अन्त्या यथा—

'सो[3] णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम् ।
तरुणाण हिअअलूडिं परिसप्पन्तिं णिवारेइ ॥'

अत्रानुप्रासरूपके शब्दार्थालंकारौ । नन्वनयोः शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकवाक्ये छन्दसि वा समवेतत्वात् ।

## अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः ।

तेषामेवालंकाराणां चारुत्वार्थं स्वरूपनिष्पत्तये वान्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां परस्परमनुग्राह्यानुग्राहकत्वं स तु संकरः । संकीर्यमाणस्वरूपत्वात् । उदाहरणम्—

---

एवं च तत्र विषयभेदाभावान्नातिव्याप्तिरिति भावः । **सो णत्थीति** । 'स नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् । तरुणानां हृदयलुण्ठनं परिसर्पन्तीं निवारयति ॥' अत्र पूर्वार्धेऽनुप्रासः उत्तरार्धे हृदयलुण्ठनमिति रूपकम् । इति संसृष्टिः ॥ ९० ॥ **चारुत्वार्थमिति** । चमत्कृतिजनकत्वं ह्युपमादेरलंकारत्वम् । अतो विशेषणांशे विशेष्यांशे वान्यापेक्षेति भावः । **संकीर्यमाणेति** । परस्परसापेक्षेत्यर्थः ।

---

१. 'वदनेति । माघे ऋतुवर्णने पद्यमिदम् । अन्यया कयापि वनितया चलितया कलस्वरो मेखलायाः काञ्च्याः कलकलः कोलाहलो विदधे । किंभूतया । वदनसौरभलोभेन परिभ्रमतां भ्रमराणां संभ्रमेण त्वराविशेषेण संभृता समृद्धा शोभा यस्याः सा । अलका लोला यस्याः तादृशी दृग्यस्यास्तथाभूतयेति । अत्रानुप्रासयमकयोः परस्परनिरपेक्षयोर्योगात्संसृष्टिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'लिम्पतीति । व्याख्यातं प्राक् । अत्रोत्प्रेक्षोपमयोः संसृष्टिः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ३. 'सो णत्थीति । हृदयलुण्ठनमिति रूपकम् । आयुर्घृतमितिवत् । पूर्वार्धे त्वनुप्रासः । एवं च शब्दार्थालंकारयोः संसृष्टिरियम् ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कयुग्मे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥'

अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य गुञ्जाफलानां स्रज इति भ्रान्तिमानात्मानं लभते। तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेषं करोति किं तु भ्रान्तिमदपेक्षयैवेति परस्परमनुग्राह्यानुग्राहकभावः। अत्र द्वयोरलंकारयोः संकरः। बहूनामपि यथा—

'जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।
परिप्रेङ्खत्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति॥'

अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा। कलङ्काक्षवलयेति तारापरिकरकपालेति च रूपकम्। वियोगिव्यापत्तेरिवेत्युत्प्रेक्षा। वैराग्यविशद इति श्लेषः। चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते। तत्रोत्प्रेक्षा श्लेषाङ्गम्। तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसंधानात्। श्लेषश्च रूपकोपमयोरङ्गम्। तद्वशादवगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च संगतेः। तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम्। तद्बीजं हि सादृश्यम्। न च श्मशाने व्योम्ना सह तत्साहजिकं किं तु रूपितकपाला-

---

१. 'आत्त इति। हे राजन्, अरण्ये इत्वरीणा भयादितस्ततो गमनशीलाना त्वदरिस्त्रीणां सीमन्तरत्ने शिरोभूषणे आत्ते गृहीते मरकतमणिशालिनि कर्णाभरणे हृते मेखलायां लुप्तायामाच्छिन्नायां मणिघटिते तुलाकोटियुग्मे नूपुरयुगले झटिति गृहीते च सति बिम्बसदृशौष्ठकान्त्या शोणमारक्तं मुक्ताहार गुञ्जाफलानां स्रज इति बुद्ध्या शबरा व्याधा नैव हरन्तीत्यन्वयः। अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणालंकारस्य गुञ्जाफलभ्रान्त्यलकाराङ्गत्वात्तयोरङ्गाङ्गिभावलक्षणः संकरः।' इत्युदाहरणचन्द्रिकासक्षेपः. २. 'जटेति। शशी पितृवने श्मशान इव व्योम्न्याकाशे चरति संचरतीत्यन्वयः। कीदृशः। जटाभाभिर्जटासदृशीभिर्भाभि. किरणैरुपलक्षितः। करे धृत कलङ्क एवाक्षवलय रुद्राक्षवलय येन स। करो रश्मि. पाणिश्च। वियोक्तुं शील येषा ते वियोगिनो विषया विरहिणश्च। तेषा व्यापत्तेर्नाशादिव कलितं स्वीकृत यद्वैराग्य प्रसिद्धं विगतरक्तिमत्व च तेन विशदः पाण्डुरः शुद्धचित्तश्च। भस्मेवापाण्डुर्भस्मना आपाण्डुश्च। कीदृशे व्योम्नि। परिप्रेङ्खन् चपलो यस्ताराणा समूहः स एव कपालानि तैरङ्कित चिह्नित तल यस्य तादृशे। तलपदं स्वरूपार्थकम्। 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः। अत्रोपमारूपकोत्प्रेक्षाश्लेषाणामङ्गाङ्गिभावः सुधीभिरूहनीयः। महाव्रतिवृत्तान्तस्य चन्द्रवृत्तान्ते समारोपात्समासोक्तिः प्रधानभूतेति ज्ञेयम्।' इत्युदाहरणचन्द्रिकासक्षेपः.

श्रयत्वेनैवेति । सर्वत्र चाङ्गिनां चारुत्वार्थमङ्गापेक्षा पूर्ववदूहनीया । सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्तिः । चन्द्रगतत्वेन महाव्रतिवृत्तान्तप्रतीतेः । सा च व्यक्तैवेति प्रकाशकृता नोक्तेत्यवधेयम् । ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकमुच्यते । उपमाया अपि संभवेन संदेहसंकरौचित्यादिति चेत्, न । रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमतः संदेहस्याभावात्कथमस्य साधकत्वमिति चेत्, इत्थम्—करधृतत्वरूपविशेषणस्याक्षवलय एव सार्वत्रिकी प्रसिद्धिः, न तु कलङ्के, अतः प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्या । सा च रूपकपरिग्रहेणैव संभवति । तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयावगम्यते । नन्वेवमपि विशेषणमिदमसम्यगेव । चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात् मूर्त्यैव तेन तद्धारणादिति चेत्, न । श्लेषच्छायया हि कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्य योज्यते । तथा सत्युपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन प्रतीतिः । न चास्य करधृतत्वं[1] तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् । मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयानिति रूपकमेवाश्रीयते । शब्दालंकारयोरप्येष संकरो दृश्यत इति प्राञ्चः । उदाहरन्ति च—

'[2]राजति तटीयमभिहतदानवरासातिपातिसारावनदा ।
गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥' इति ।

तत्र यद्यपि यमकानुलोमविलोमचित्रभेदयोर्न स्फुटं परस्परापेक्षित्वं तथापि यमकनिर्वाहप्रवृत्तस्य कवेरपृथक्प्रयत्ननिर्वृत्ततयानुलोमविलोमस्योत्पत्तौ यमकापेक्षा यमकस्य तु चारुतातिशये तदपेक्षता । तदाश्रयेणातिदु[3]ष्करतयातिशयेन विदग्धमनोनुरञ्जकत्वादिति तेषामाशयः । वस्तुतस्तु यमकनिर्वाह एव कविप्रवृत्तिरिति निश्चायकं नास्ति । अस्तु वा तथा । तथापि यमकं न चित्रहेतुः । किं तु तत्प्रयत्नः । तस्मादेकाश्रयानुप्रवेशेनैवायं संकरो न त्वनुग्राह्यानुग्राहकतयेत्येव युक्तम् ।

---

**एकान्तत इति** । निश्चित इत्यर्थः । **अमुख्योपचार एवेति** । गुणे त्वन्याय्यकल्पनेति न्यायादिति भावः । **तदाश्रयेणेति** । अनुलोमविलोमाश्रयेणेत्यर्थः । **न चित्रहेतुरिति** । नानुलोमविलोमरूपशब्दालंकारहेतुरित्यर्थः । **किं त्विति** । यमकप्रय-

---

१. 'मुख्यतो' क २. 'राजतीति । इयं तटी स्थली राजतीत्यन्वयः । किंभूता । अभिहतोऽभिघात प्राप्तो दानवाना रास सिंहनादो यस्या सा । अतिपाती वेगवान् सारावः सशब्दो नदो यस्या सा तथाभूता । एव सा प्रसिद्धा गजता गजसमूहश्च यूथं कुलमतिशयेन पाति रक्षति । कीदृशी । अविरतेन दानेन मदजलेन वरा श्रेष्ठा । सारा स्थिरा । वनदा वनखण्डिका । अत्र यमकानुलोमविलोमयोः संकरः ।' इत्युदाहरणचन्द्रिकासंक्षेपः ३. 'सुन्दरतया' क

एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ ५४ ॥

न्यायः साधकं प्रमाणसत्तादोषः प्रतिकूलसत्ता। ग्रहो व्यवस्थितिः। यत्र द्वयोर्बहूनां वालंकाराणामेकत्र योग्यत्वेऽपि विरोधान्नैकदा व्यवस्थितिः, न चैकैतरस्य परिग्रहे साधकं तदितरपरिग्रहे बाधकं येन तदेव व्यवतिष्ठेत सोऽप्यनिश्चयरूपो द्वितीयः संकरः। सूत्रस्थचकारेण संकरस्यैवाक्षेपात्। उदाहरणम्—

'जह गम्भीरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ।
ता किं विहिणा एसो सुरसवाणीओ जलणिही ण किओ॥'

अत्र किं समुद्रे प्रस्तुते श्लिष्टविशेषणमहिम्नाप्रस्तुतपुरुषविशेषप्रतीतेरियं समासोक्तिः किं वाब्धेरप्रस्तुतात्प्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतप्रशंसेति संदेहः। एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसंभवात्, न्यायदोषयोरसंभवाच्च। अयं द्वयोः संकरः। बहूनां यथा—

'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति।
अधुनापि निरुद्धाशमविशीर्णमिदं तमः॥'

अत्र किं कामोद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाभिधानात्पर्यायोक्तम्, किं वा एतदित्यस्य बिम्बपरामर्शकतया वदनस्येन्दुबिम्बेनाध्यवसानादतिशयोक्तिः, अथ वा एतदिति वक्त्रं निर्दिश्येन्दुबिम्बरूपणवशाद्रूपकम्, अथवा प्रसीदतीत्यस्योभयत्रान्वयविवक्षायामेकतरस्य प्रकृतत्वाद्दीपकम्। द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगिता किं वा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वे विशेषणसाम्यादाननप्रतीतौ समासोक्तिः आहोस्विन्मुखनैर्मल्यवर्णनप्रस्तावाच्चन्द्रस्याप्रस्तुतत्वेनाप्रस्तुतप्रशंसेति संदेहः। न्यायदोषयोरभावात्। यत्र तु तयोरन्यतरस्यावतारस्तत्रैकतरनिश्चयान्न संशयस्तत्र 'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः' इत्यत्र मुख्यत्वेन प्रतीयमाना हसितद्युतिर्वक्त्र एवानुकूल्यं

---

न्नाद्दि तदुत्पत्तिरिति नोत्पत्तौ यमकापेक्षेत्यर्थः। 'साधकप्रमाणसत्ता' इति पाठः। 'साधकप्रमाणता' इत्यपपाठ एव। एवं 'प्रतिकूलसत्ता' इत्येव पाठ इति ज्ञेयम्। समुच्चयेनेति वृत्तिग्रन्थं व्याचष्टे—**सूत्रस्थचकारेणेति**। **जह इति**। 'यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः। तत्किं विधिनैष सुरसपानीयो

---

१. 'साधकं प्रमाणम्, दोषः प्रतिकूलता' ख. २. 'एकतरपरिग्रहस्य' क. ३. 'क्षेपणात्' क. ४. 'रत्ननिर्भरो रत्नपूर्णः। अत्र समासोक्त्यप्रस्तुतप्रशंसयोः संदेहरूपः संकरः। एकसाधकापरबाधकप्रमाणाभावात्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ५. 'एकदैकस्य' ख. ६. 'नयनेति। नयनानामानन्ददानशीलमेतदिन्दोर्बिम्बं प्रसीदति प्रकटीभवति। निरुद्धा आशा दिशो येनेति तमसो विशेषणम्। अविशीर्णं न नष्टम्। अत्र रूपकातिशयोक्त्यादीनां बहूनां संदेह इति भेदः।' इत्युदाहरणचन्द्रिकासंक्षेपः. ७. 'किं वा' क.

भजते । तत्रैव मुख्यतस्तत्संभवात् । वक्रस्य प्राधान्येन स्थितिरुपमायामेवेत्युपमासाधिका शशिनि तु नानुकूला । मुख्यतस्तत्र हासद्युतेरभावात् । नापि प्रतिकूला । गौणत्वेनाप्युपपत्तेरिति । न रूपकं प्रति साधिका बाधिका वा 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते' इत्यत्रापरत्वमिन्दावनुगुणम् । मुखरूपेन्दौ सति किमपरेणेन्दुनेति प्रतीतेः । तथाप्रतीतिश्च रूपकेण विना नेति रूपकं प्रति साधकतां प्रतिपद्यते न पुनर्वक्त्रस्य प्रतिकूलम् । इन्दुसमानगुणे वक्त्रे सति किमपर इन्दुरुदित इति प्रतीतावत्रात्यन्तासंगत्यभावात् । अतो नोपमाबाधकम् । 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यत्रालिङ्गनमुपमाया बाधकम् । स्वामिसदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यानौचित्यात् । न तु रूपके साधकम् । 'पादाम्बुजं भवतु मे विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकायाः' इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम् । तत्रासंभवात् । अतो रूपके बाधकम् । नन्वेतदुपमासाधकमपि भवति । पादेऽनुकूलत्वात् । तत्कथं रूपकबाधकतामात्रत्वमस्योच्यते न तूपमासाधकत्वमपीति । एवमन्यत्रापि यदेकत्रानुकूलं तद्वाहुल्येन परत्र प्रतिकूलम्, यच्चैकत्र प्रतिकूलं तत्तत एवान्यत्रानुकूलम् । अन्यथा तत्त्वस्यैवासंभवादिति चेत्, सत्यम् । किं तु यस्य यथात्वमुत्कटं प्रतीयते तत्र तस्य तथात्वव्यपदेशः । अत्र तु विध्युपमर्दिबाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः । तदेतदुक्तं विध्युपमर्दिबाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेरिति । अन्ये तु तदन्यथा व्याचक्षते—विधीयतेऽनेनेति विधिः साधकं तदुपमर्दि तस्माद्बलीयः । एतदुक्तं भवति—मञ्जीरशिञ्जितस्य पादे संभवमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते । तथा च तद्वाचकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेशः । एवमन्यत्रापि साधकबाधकसत्त्वं सुधीभिः परिभावनीयम् ।

**स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम् ।**
**व्यवस्थितं च**

विषयः पदम् । तेनैकत्र पदे यदुभौ शब्दार्थालंकारौ स्फुटं व्यवस्थितौ भवतः सोऽप्यपरः संकरः । उदाहरणम्—

---

जलनिधिर्न कृत' ॥' इति संस्कृतम् । न पुनर्वक्त्रस्य प्रतिकूलमित्यत्रापरत्वमित्यस्यानुषङ्गः । **न तु रूपके साधकमिति** । उपमाबाधकमुखेन साधकत्वं तूपमाबाधकत्व एव पर्यवस्यतीति भाव' । **विध्युपमर्दीति** । स्वविरोधिकोट्युपमर्दीत्यर्थः । **साधकापेक्षयेति** । साधकं हि यथोपामायां तथा रूपकेऽपि किञ्चिद्भवेदिति

---

१. 'अवगति' ख. २. 'अभ्युद्यतः' ख. ३. 'रूपकेणेति' ग. ४. 'प्रतीत्या तत्र' क. ५. 'बाधकत्व ख.

'स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापसुखावतार-[2]
बद्धान्धकारमधुपावलि संचुकोच ॥'

अत्र पादत्रये प्रत्येकं रूपकानुप्रासौ प्रविष्टौ । शब्दार्थालंकृतीति प्रायोवादः । शब्दालंकारयोरप्येतद्दर्शनात् । यथा—'कलकलोऽलकलोलदृशान्यया' इत्यादावनुप्रासयमकयोः ।

तेनासौ त्रिरूपः परिकीर्तितः ॥ ५५ ॥

तस्मादनुग्राह्यानुग्राहकतया संदेहेनैकपदप्रतिपाद्यतया व्यवस्थितत्वाच्च त्रिप्र[3]कारोऽयं संकरः कथितः । प्रकारान्तरेण तु न शक्यो[4] व्याकर्तुम् । भेदानामनन्तत्वात् ।

इति प्रतिपादिताः शब्दार्थतदुभयगतत्वेन त्रिविधा अलंकाराः । ननु त्रिविधानामप्येषां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एष प्रतिनियमः यत्कश्चिच्छब्दस्य कश्चिदर्थस्य कश्चिच्छब्दार्थयोरिति चेत्, उक्तमत्र प्रागेव । दोषगुणालंकाराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः । निमित्तान्तराभावात् । ततश्च योऽलंकारः शब्दार्थयोर्मध्ये यस्यान्वयव्यतिरेकावनुविधत्ते स तदलंकार इति व्यवस्थाप्यते । शब्दान्वयव्यतिरेकानुविधायित्वं चैतदेव यच्छब्दपरिवृत्त्यसहत्वम् । नन्वेवं यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयभावाभावानुविधायित्वेनोभयालंकारस्तथार्थशब्दहेतुकार्थान्तरन्यासप्रभृतयोऽप्यु-

---

शङ्कया नेतरव्यवच्छेदसिद्धिः बाधकेन तु सद्यस्तत्सिद्धिरिति तदेव बलवदित्याशयः । अन्ये त्विति मतमुक्तार्थम् । **एकपदप्रतिपाद्यतयेति** । एकपदाश्रितत्वेन गम्यमानतयेत्यर्थः । यथाश्रुते शब्दालंकारे पदप्रतिपाद्यत्वस्यासंभवात् । **प्रकारान्तरेणेति** । तत्तदलंकारगतत्वेनेत्यर्थः । **नन्वेवमिति** । योऽलंकारः इत्याद्युक्तरीत्या शब्दार्थालंकारत्वव्यवस्थाभ्युपगम इत्यर्थः । तनुवपुरित्यादिपुनरुक्तवदाभासे तनुशब्दस्य परिवृत्त्यसहत्वाच्छब्दान्वयव्यतिरेकौ वपुःशब्दस्य परिवृत्तिसहतया चार्थान्वयव्यतिरेकावित्युभयालंकारत्वम् । तथा विद्वन्मानसेत्यादि परम्परितरूपके मानसपदस्य

---

१. 'स्पष्टेति । अथोऽनन्तरं दिवसरूपमरविन्दं कमलं सचुकोच संकोचं प्राप्तवदित्यन्वयः । कीदृशम् । स्पष्टमुल्लसन्तः किरणा एव केसराणि यस्यास्तथाभूता सूर्यबिम्बमेव विस्तीर्णा कर्णिका वराटो यस्य तत् । तथा श्लिष्टाः प्रकाशाभावेन परस्परं मिलिता अष्ट दिश एव दलानां कलापः समूहस्तत्र सुखेनावतारो यस्य स चासौ बद्धान्धकारश्च स एव मधुपावलिर्यत्र तादृशम् । अत्र रूपकानुप्रासयोरेकपदानुप्रवेशरूपः संकरः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'कलापमुपावतार' इति हरविजयस्थः पाठः. तत्र 'उपावतारः प्रदोषः' इति टीका. ३. 'त्रिप्रकारकः' क. ४. 'शक्यते' क.

भयालंकारा भवेयुरिति चेत्, न। इष्टापत्तेः। एवं तर्हि कथमुभयालंकारप्रस्तावमुलङ्घयार्थमात्रालंकारप्रस्तावे पठिता इति चेत्, तत्रार्थवैचित्र्यस्य प्रकटतया प्रतिभासात्। अथ योऽलंकारो यदाश्रितः स तदीय इत्येव किं न विभाग इति चेत्[1], तथा कल्पनायामप्यन्वयव्यतिरेकावेव समाश्रयितव्यौ। तद्व्यतिरेकेण विशिष्टस्याश्रयाश्रयिभावस्याभावात्। तस्मादलंकाराणामन्वयव्यतिरेकनिबन्धन एव परस्परं भेद इत्येव ज्यायः।

नन्वलंकाराणां दोषाः प्राचीनैरभिहितास्ते किं न सन्त्येव आहोस्वित्संभविनोऽप्युपेक्षिताः। आद्येऽनुभवविरोधः, अन्त्ये न्यूनतेत्यत आह—

**एषां दोषा यथायोगं संभवन्तोऽपि केचन।**
**उक्तेष्वन्तः पतन्तीति न पृथक्प्रतिपादिताः॥ ५६॥**

तथा हि अनुप्रासस्य तावत्त्रयो दोषाः, प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च। ते च यथाक्रमं प्रसिद्धिविरोधापुष्टार्थत्वप्रतिकूलवर्णत्वेभ्यो नातिरिच्यन्ते। तत्स्वभावत्वात्। तत्र प्रसिद्ध्यभावो यथा—

'चक्री[2] चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजाग्रा-[3]
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥'

---

श्लिष्टतया परिवृत्त्यसहत्वाद्धंसादिपदानां च तत्सहत्वादुभयालंकारता। एवं क्षणदा सा च क्षणदा इत्यर्थान्तरन्यासेऽपि श्लेषमूलकतया शब्दान्वयव्यतिरेकानुविधानम्, उत्तरार्धे त्वर्थस्येत्युभयालकारत्वं स्यादित्यर्थ। **नेति**। इदमनिष्टापादनं नेत्यर्थः। अलंकारसर्वस्वकारमतमाशङ्कते—**अथेति**। दूषयति—**तथेति**। तथा हि क्वचिद्गद्ये पद्ये वा गद्यपद्यान्तरनिरूपितोपमाया शब्दाश्रितत्वेन शब्दालंकारत्वापत्ति। न चेष्टापत्ति.। अपसिद्धान्तदोषात्। एवमलंकारान्तराणामपि शब्दगतत्वसभवात्तत्राप्यतिप्रसङ्गो ज्ञेय। **विशिष्टस्येति**। उक्तविषयव्यावृत्तस्येत्यर्थ। **अलंकाराणामिति**। शब्दार्थालंकाराणामित्यर्थ। इति संकरप्रकरणम्॥ ६१॥ **चक्रीति**।

---

१. 'चेत् उच्यते' ख. २ 'चक्रीति। सोऽहिमरुचेः सूर्यस्य स्यन्दनो रथो वोऽवताद्रक्षतु। स कः। जगतामुपकृतये नित्ययुक्तस्य यस्य चक्रारपङ्क्तिं चक्रगतानामराणा कीलानां पङ्क्तिं चक्री विष्णुरन्वह प्रतिदिनं प्रीत्या प्रसन्नः सन्स्तौति। एवमग्रेऽपि कर्तृकर्मभावेनान्वयो बोध्यः. ३. हरिरिन्द्र। हरीनश्वान्। धू रथमुख तद्गतान्ध्वजाग्रान्। 'धू स्त्री क्लीबे यानमुखम्' इत्यमरः। अक्ष चक्रम्। नक्षत्रनाथश्चन्द्रः। अरुण सारथिम्। कूबराग्रं युगंधराग्रम्। रहो वेग सुराणा सङ्घ इत्यन्वयः। अत्र चक्र्यादीना कर्तृकर्मणां नियततया निबद्धस्य स्तव्यस्तावकभावस्येतिहासादिषु प्रसिद्ध्यभावोऽनुप्रासदोषः' इत्युदाहरणचन्द्रिकासंक्षेपः.

अत्र चक्रिप्रभृतीनां कर्तॄणां चकारपङ्क्त्यादीनां प्रति नियमेन स्तुतिरनुप्रासानुरोधेनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः । सोऽयं प्रसिद्धिविरोध एव । वैफल्यं यथा—

'भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥'

यथा वा ।

'अनणु रणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥'

अत्र वाच्यस्यार्थस्य विविच्यमानं न किंचिच्चारुत्वं प्रतीयत इत्यपुष्टार्थत्वमेवानुप्रासस्य वैफल्यमुच्यते । वृत्तिविरोधो यथा—'अकुण्ठोत्कण्ठया—' इत्यादि । अत्र शृङ्गारे परुषवर्णाडम्बरो गुणविवेचनप्रस्तावोक्तरीत्या विरुद्ध इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते ।

यमकस्य तु पादत्रयगतत्वेन यमनमप्रयुक्तत्वमेव । कविभिस्तथाप्रयोगात् यथा—

---

अत्र स्तोत्रस्तुत्युपन्यासे न किंचिदनौचित्यम् । अन्यत्र कवेरनुप्रासकुतूहलभङ्गादि त्याह—अत्रेति । चक्री कर्ता चकारपङ्क्तिमेव कर्मभूतां स्तौति नान्यत्र इत्येवंरूपेण स्तुतिरनुप्रासानुरोधेनैव कृता न पुराणाद्यनुरोधान्नाप्यर्थौचित्यादतः प्रसिद्धिविरोधो दोष इत्यर्थः । द्वितीयमुदाहरति—भणेति । अत्र यदनुप्रासस्य वैफल्यं तदर्थस्यापरिपोषे तिष्ठति । तादृगनुप्रासप्रसाधितवाचकनिवेशेऽपि वाच्यस्य तद्द्वारा वाक्यार्थीभूतपरस्य वाच्यत्वासिद्धेरित्याह—अत्र वाच्यस्येति । तृतीयमुदाहरति—अकुण्ठेति । अत्रोपनागरिकां विमुच्य परुषाया अङ्गीकाराद्यो वृत्तिविरोधः स वर्णप्रातिकूल्यान्नातिरिच्यत इत्याह—शृङ्गारे इति । यमकविषयं दोषं दोषप्रयुक्तत्वेऽन्तर्भाव

---

१. 'भणेति पद्यद्वयात्मकं युग्मम् । हे तरुणि, यदि रमणस्य मन्दिरं गच्छसि तत्तदा त्वदीयं परिसरणं गमनं मे ममाकारणं निमित्तं विना रणरणकमुत्कण्ठां किं कुतः कुरुते तद्भण वदेत्यन्वयः । रमणमन्दिरं रतिमन्दिरमिति वार्थः । आनन्दस्यन्दी सुन्दरो य इन्दुः स एव मुखं यस्यास्तथाभूते । सतीं लीलां उल्लासयितुं शीलं यस्याः । 'उल्लापिनि' इति पाठे सतीभिर्लीलाभिरुल्लपितुं शीलं यस्या इत्यर्थः । अरुणौ रक्तौ चरणौ यस्यास्तथाभूते । कीदृक्परिसरणम् । अनणु अनल्पम् । रणन्ती मेखला यत्र तत् । अविरतं शिञ्जानं शब्दायमानं मञ्जु सुन्दरं मञ्जीरं नूपुरं यत्र तादृशम् । अत्रार्थस्याचमत्कृतत्वाद्वैफल्यमनुप्रासदोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. २. 'अकुण्ठेति । सप्तमे व्याख्यातम् । अत्र माधुर्यव्यञ्जकवृत्तिविरोधोऽनुप्रासदोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः.

'[1]भुजंगमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रमुखे सदम्भाः ॥'

उपमायां तु यौ न्यूनाधिकोपमानत्वे दोषौ तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्न्यूनत्वमधिकता वा तदनुचितार्थम् । धर्मगते [2]न्यूनत्वाधिकत्वे यथाक्रमं न्यूनपदत्वाधिकपदत्वे । तत्र जातिगतं न्यूनत्वं यथा—'चण्डालैरिव युष्माभिः साहसं परमं कृतम्' । अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् ।

प्रमाणगतं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति' इति । जातिगतमधिकत्वं यथा—

'[3]अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्स्रष्टा विनिर्मित्सुरिव प्रजाः ॥'

ब्रह्मणः कल्पभेदेन भेदाद्ब्रह्मत्वं जातिः । प्रमाणगतमधिकत्वं यथा—

'[4]पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपतिसंनिभः ॥'

एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः । निन्दोपमाप्रतीतेरित्यनुचितार्थता । धर्मगतं न्यूनत्वं यथा—

'[5]स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागश्लिष्ट इवांशुमान् ॥'

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः । न चाक्षेपादिनापि स्पष्टं प्रतीयते । अविनाभावाद्यभावादिति न्यूनपदत्वमेवैतत् । धर्मगतमधिकत्वं यथा—

'[6]सपीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥'

---

१ 'भुजगमेति । सदम्भा दम्भयुक्ता· खला स्त्रीया दुरन्तता परिणामदुष्टता निश्चितवतोऽपि जन्तोश्चेत· प्रमुखे आपातत· कर्षन्तीत्यन्वय· । 'प्रसभ' इति वा पाठ· । क इव । ..धमानमम्भस्तेजोविशेषो यत्र तादृशो भुजगमस्य मणिरिव । तथा ग्राहैरवकीर्णा व्याप्ता ..मीचीनमम्भ उदक यस्यास्तथाभूता नदीवेत्युपमाद्वयम् । अत्र यमकस्य पादत्रयमात्रगतत्व दोष । तथा कविभिरप्रयुक्तत्वात् ।' इत्युदाहरणचन्द्रिकासक्षेप·. २ 'न्यूनाधिकत्वे' ख. ३. 'अयमिति । पद्ममेवासन तत्रासीन उपविष्टो युगादौ प्रजा विनिर्मित्सुर्निर्मातुमिच्छुर्भगवान्स्रष्टा ब्रह्मेवेति जात्या उपमानमधिकम् ।' इत्युदाहरणचन्द्रिकासक्षेप·. ४. 'पातालमिति । कालिन्दीपातो यमुनाप्रवाह· । अत्र परिमाणत उपमानाधिक्यम्' इत्युदाहरणचन्द्रिकासक्षेपः. ५. 'स मुनिरिति । मौञ्ज्या लाञ्छितश्चिह्नितः कृष्णाजिनरूप पटं वहन् स मुनिर्नारदो नीलेन जीमूतभागेन मेघखण्डेनाश्लिष्टोंऽशुमानिव व्यराजदित्यन्वयः । अत्र मौञ्जीस्थानीयस्तडिद्रूपो धर्मो नोक्त इति धर्मन्यूनता दोषः ।' इत्युदाहरणचन्द्रिकासंक्षेपः. ६. 'स इति । पीतवर्णं वासो वस्त्रं यस्य, प्रगृहीत शार्ङ्ग धनुर्येन स श्रीकृष्णो मनोज्ञ सुन्दर च तद्भीमं वपुराप

अत्रोपमेये शङ्काद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वमेवैतत्।

भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषातिरेकिणौ। तथा हि लिङ्गवचनयोर्भेदे यद्यप्युपमानोपमेययोः साधारणधर्मवाचकं पदमन्यतरघटितलिङ्गं कुर्यात्, तदेकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः। अथ प्रतीयमानं साधर्म्यमाश्रित्येयं स्यात्, तथाप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयेत। न च तथा प्रस्तुतम्। अतः प्रक्रान्तस्याभावाद्भग्नप्रक्रमत्वमेव दोषः। यथा—'चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे।' अत्र च्युत इत्युपमेयमात्रेणान्वीयते। पुंलिङ्गत्वात्। वचनभेदे यथा—'सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव'। अत्र शुद्धा इत्युपमेयमात्रेणान्वीयते। लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम्। उपमानस्य बहुत्वे लिङ्गभेदेऽप्युभयान्वयसंभवात्। यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याभिधायिपदमुपात्तरूपभेदं नापद्यते किं तूपात्तेनैव रूपेणोभयत्रान्वेति तत्र दोषत्वमेव नास्ति। उभयत्राप्यस्यानुगमयोग्यस्वभावत्वात्। तत्र लिङ्गभेदे यथा—'गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः'। अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद्दोषत्वाभावः। वचनभेदे यथा—

'तद्वेषो दृदृशेऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव॥'

---

यति—यमकस्य त्विति। उदाहरति—यथेति। अथ प्रतीयमानेति। इवादिवोध्येनेत्यर्थः। तथापीति। इवादिवोधेनोपमानिर्वाहेऽपीत्यर्थः। एवमुपात्तधर्मविशिष्टत्वमुपमानोपमेययोरन्यतरस्य भवेत्, तथा च प्रक्रमभङ्ग इत्याह— न च तथेति। अन्यतरस्य सविशेषणत्वं प्रक्रान्तविरुद्धमित्यर्थः। पुंलिङ्गत्वादिति। पुंस्त्वान्वितत्वादित्यर्थः। तथा चोपमाने चिन्तारत्ने बाधेनान्वयादिति भावः। न चेवशब्देनोपमाने साधारणधर्मबोधे बाधकाभाव इति शङ्कनीयम्। उपात्तधर्मस्यैव तेन बोधनस्य व्युत्पत्तेः। तस्य च पुंस्त्वान्वितस्योपमाने बाधस्योक्तत्वात्। लिङ्गभेद इति। सक्तुशब्दस्य पुंलिङ्गत्वादित्यर्थः। लिङ्गभेदेऽपीति। पुंस्त्वस्येव स्त्रीत्वस्यापि प्रतीतौ यथायोगमन्वयसंभव इत्यर्थः। उभयत्रापीति। विशेषाभावेन लिङ्गा-

---

प्राप। क इव। शतह्रदा विद्युत् इन्द्रायुधमिन्द्रधनुश्च तद्वान् निशायां शशिना ससृज्यमानो मेघ इव। अत्रोपमेये शङ्खस्यानुक्तेस्तत्स्थानीयस्य चन्द्रस्योपमाने ग्रहणमधिकमिति धर्माधिक्यदोषः।' इत्युदाहरणचन्द्रिकासंक्षेपः.

१. 'अतिरिक्त' ख. २. 'उचित' ख. ३. 'चिन्तारत्नमित्यादिपद्यखण्डानि स्पष्टार्थानि। तत्राद्यद्वये क्रमेण लिङ्गवचनभेदो दोषः। अन्त्ये लिङ्गभेदस्यादोषत्वम्।' इत्युदाहरणचन्द्रिकासंक्षेपः. ४. 'पुलिङ्ग' ख. ५. 'रूपभेदरूप' ख. ६. 'स्वरूपेण' ख. ७. 'एकवचनं' ख. ८. 'तद्वेष' इति। तस्याः प्रकृतनायिकाया वेषो भूषणाम्बरादिधारणपरिपाटी

अत्र वचनभेदेऽपि मधुरताभृत इत्यस्योभयान्वयाविशेषान्न दोषत्वम् । एवं कालपुरुषविध्यादिभेदेऽपि भग्नप्रक्रम एव दोषः । तथाप्रतीतेरस्खलितरूपतया विश्रान्त्यभावात् । तत्र कालभेदे यथा—

'अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥'

अत्र चेतना प्रसादमाप्नोतीति प्रकृतं न तु तमापेति कालभेदे प्रक्रमभेद एव । पुरुषभेदे यथा—

'प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा लतेव ॥'

अत्र लता विभ्राजत इति प्रस्तुतं न तु सा विभ्राजस इति तस्मात्पुरुषभेदः । संबोध्यनिष्ठस्य भ्राजनस्यासंबोध्यविषयतया अप्रतीतेः ।

विधिभेदो यथा—'गङ्गेव प्रवहतु ते सदैव कीर्तिः' इत्यादावप्रवृत्तप्रवर्तनात्मनो विधेर्भेदः । यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहत्विति । एवंविधस्यान्यस्यार्थस्योपमानगतस्यासंभवाद्विध्यादिभेदो द्रष्टव्यः । ननूदाहृतेषु कथं दुष्टता । भिन्नकालसंभिन्नाद्धर्मादतिरिक्तमुपात्तं प्रतीतं वा कंचित्साधारणं धर्ममुपादायोपमापर्यवसाने पश्चाद्भिन्नकालादिसंभिन्नधर्मान्वयात् । तथा हि विभ्राजस इत्यत्र विविक्तमूर्तत्वादिना लतानायिकयोरुपमापर्यवसाने पश्चाद्विभ्राजस इत्यस्य नायिकामात्रान्वयेऽपि को दोष. । अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाहः

---

विवक्षणादिति । **वचनभेदेऽपीति** । प्रथमैकवचनतद्बहुवचनयोरदन्तहलन्तत्वाभ्या भेदेऽपीत्यर्थ. । **अतिथिं नामेति** । अत्र यथा चेतना प्रसादं प्राप्नोति तथा सा पुत्रमापेति कालभेददोष· । विध्यादीत्यादिपदार्थमाह—**एवंविधस्येति** ।

---

तदीया विभ्रमा विलासा इव परा शोभा दधते स । कीदृश । अन्याभिः स्त्रीभिरसदृश· ।' विभ्रमपक्षे सदृक्शब्दस्य बहुवचनम् । मधुरताभृत पूर्णः । पक्षे मधुरत्ता बिभ्रतीति तथाभूता । दधत इत्यप्येकवचनबहुवचनसाधारणमतो नात्र वचनभेदो दोष ।' इत्युदाहरणचन्द्रिकासक्षेपः.

१. 'अतिथिमिति । काकुत्स्थाद्राज्ञ· कुमुद्वती तत्पत्नी अतिथिं नाम पुत्रमाप प्राप्तवती । का कस्मात्कमिव । पश्चिमाच्चरमाद्यामिन्या निशाया यामाच्चेतना चैतन्य प्रसादमुद्बोधमिवेत्यर्थः । अत्र यथा चेतना प्रसाद प्राप्नोति तथा सा पुत्रमापेति कालभेददोष· ।' इत्युदाहरणचन्द्रिकासक्षेपः.

२ 'प्रत्यग्रेति । प्रत्यग्रमचिरकृत मज्जन स्नानमासेचन च तेन विशेषतो विविक्ता शुद्धा मूर्तिः शरीर यस्या सा । कौसुम्भेन रागेण रुचिर· स्फुरन्नंशुकस्यान्तः प्रान्तो यस्यास्तादृशी । पक्षे कुसुम्भमेव कौसुम्भ पुष्पम् । स्वार्थेऽण्प्रत्यय । तद्वद्रागो लौहित्यं तेन रुचिरा चासौ स्फुरद्भिरंशुभिः पुष्पधूलिभि· कान्ता रमणीया । मकरकेतन काममर्चयन्ती त्व बाला प्रवालाः पल्लवा यस्य तादृशो विटप· शाखा प्रभव उत्पत्तिस्थान यस्या· सा लतेव विभ्राजसे शोभसे इत्यन्वय· । अत्र लता विभ्राजते त्व विभ्राजसे इति. प्रथममध्यमरूपपुरुषभेद· । इत्युदाहरणचन्द्रिकासंक्षेप .

